वर्ष २ | Vol. 2
संख्या १ | Number 1

ओ३म्

काश्मीर प्रदेशस्थ श्रीनगरस्थायाः

# संस्कृत साहित्य परिषदः

त्रैमासिकं पत्रम्

# 'श्रीः'

Quarterly Journal of the

# SANSKRIT SAHITYA PARISHAD

SRINAGAR, KASHMIR.

श्रीनगर आषाढ़ १९९०

*Srinagar July 1933*

सम्पादकौ

पं० नित्यानन्दः शास्त्री    पं० कुलभूषणः

वार्षिक मूल्य १।) एक रुपया चार आने ।

# विषय सूची

लेखानामुत्तरदायिनौ न सम्पादकौ। सर्वेषां लेखाः तेषामेव भाषया तन्मतानुसारेणैव प्रकाश्यन्ते।



---


भीमसेन विद्यालंकार के अधिकार से नवयुग प्रिंटिंग प्रैस, १७, मोहनलाल रोड में मुद्रित।

# भक्तभावना

पं० धर्मदेवः सिद्धान्तालङ्कारो विद्यावाचस्पतिः कल्याणपुरम् ( बंगलौर )

अयि देव देव दयाकर, क्रियतां दया सुफलोदया ।
तव धन्यवादततिर्हिता, वितरिष्यते सततं मया ॥

तव शक्तिरत्र महाप्रभो, निखिलं बिभर्ति जगत् त्रयम् ।
करुणां विधेहि विधे! वयं, सुखिनो भवेम सदा यथा ॥

महिमा तवैव हि दृश्यते, सकलासु दिक्षु जगत्पते ।
प्रतिवस्तु ते स्मरणं वयं, विदधीमहि त्वयि तन्मयाः ॥

इह सर्वमङ्गलकारणं, दुरितौघदुःख निवारणम् ।
तव वीक्ष्य संसृति धारणं, विजयामहे अकुतोभयाः ॥

पीत्वेह भक्तिसुधांबुधामनिशं मुदामतिदायिनीम् ।
सुख शान्ति कान्तियुताः सुता नितरां भवेयुरनामयाः ॥

ध्रुव धर्म कर्म रताः पितः, प्रयता नता अपराजिताः ।
अनवद्य विद्याराजिताः, सततं भवेम तव प्रियाः ॥

## संस्कृत साहित्य परिषद् श्रीनगर

# परिषद् वृत्तम्

### चैत्र मासः

२५ यां तिथौ सभा मन्दिरे मासेऽस्मिन् परिषदधिवेशनमभूत्। शरदृतोः वशात् पौषमाघफाल्गुनमासेषु सम्मेलनस्याविकाश एव नासीत्। हिमशीतप्रधानावसरेऽस्मिन् प्रायशः मनुष्याः निजकार्येषु संलग्नाः न तु स्थानात् स्थानं गमनागमनक्रियावहाः भवन्ति। त्रिमासान् परिषदपि शमं प्राप।

यद्यपि सभासदां संख्या पूर्वस्मिन् सम्मेलनेऽस्मिन् १५ एवासीत तथापि निद्रानन्तरं जागरूकाआसन् महानुभावाः सदस्याः। निम्न-निर्दिष्टैः सभासद्भिः निबंधाः पठिताः।

(१) पं० गोविंद राजानकः शास्त्री।

(२) पं० विश्वदेवः शास्त्री।

(३) कुलभूषणः।

पूर्वलिखिताभ्यां द्वाभ्यां महाशयाभ्यां प्राचीनराज्यस्थितिवेद विनियोगयोः निबंधौ अपाठिषाताम् तृतीयेन तु काश्मीरेषु वसन्ततौ विषयमवलम्ब्य लेखोऽपाठि। यथासमयं लेखाः त्रयः एतेश्रियः पृष्ठेषु मुद्रापिताः भविष्यन्ति।

निबंधपठनपूर्वं सभामन्त्रिणा प्रथमदिवसात सभास्थापनात अद्यावधि सर्वायव्ययस्य विवरणं परिषदि समुपस्थापितम्। उपस्थितैः सर्वैः सम्यक् निरीक्ष्य स्वीकृतम् श्रियः पृष्टेषु मुद्रापणार्थ-श्चाज्ञप्तम्। मुद्रापणात्प्राक् पं० ज्ञानीराम प्रोफैसरः समीक्षण मपि कुर्यात सर्वस्यास्य कर्मण इति।

———




वर्ष २ | आषाढ़ सम्वत् १९९० वि० | पूर्ण संख्या ५
तदनुसार जून १९३३ | संख्या १

# संस्कृत वाङ्मयपरिचयः

( श्री० स्वामी वेदानन्द तीर्थः )

( ४ )

६. इह त्वष्टारमग्रियं विश्वरूपमुपह्वये । अस्माकमस्तु केवलः ॥
ऋ० १ । १३ । १० अत्र 'त्वष्टा' आहूतः ।

७. अव सृजा वनस्पते देव देवेभ्यो हविः । प्रदातुरस्तु चेतनम् ॥
ऋ० १ । १३ । ११ अत्र 'वनस्पतिः' देवो कामितः ।

८. सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ॥
ऋ० १ । १८ । १ अत्र 'ब्रह्मणस्पतिः'

९. सदसस्पति मद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ॥
ऋ० १ । १८ । ६ अत्र 'सदसस्पतिः'

१०. हिरण्यपाणिमूतये सवितारमुपह्वये । स चेत्ता देवतापदम् ॥

ऋ० १ । २२ । ५ । अत्र हिरण्यपाणिः सविता,

११. तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णुर्यत्परमं पदम् ॥
ऋ० १ । २२ । २१ अत्र 'विष्णुमहत्त्वं'

१२. तीव्राः सोमास आ गह्याशीर्वन्तः सुता इमे । वायो तान् प्रस्थितान् पिब ॥ ऋ० १ । २३ । १ अत्र वायु नाधितः

१३. अपो देवीरुपह्वये यत्र गावः पिबन्ति नः । सिन्धुभ्यः कर्त्वं हविः ॥
ऋ० १ । २३ । १८ अत्र 'आपः' हूताः ।

१४. तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः ॥
ऋ० १ । २४ । ११ अत्र वरुणो याचितः

१५. कथा राधाम सखायः स्तोमं मित्रस्यार्यम्णः । महि प्सरो वरुणस्य ॥ ऋ० १ । ४१ । ७ अत्र मित्रस्यार्यम्णः राधनाप्रकारो जिज्ञासितः ।

१६. सं पूषन्नध्वनस्तिर व्यंहो विमुचो नपात् । सक्ष्वा देव प्रणस्पुरः ॥
ऋ० १ । ४२ । १ अत्र 'पूषा' संबोधितः ।

१७. कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शन्तमं हृदे ॥
ऋ० १ । ४३ । १ अत्र रुद्रस्य स्तवनं कमितम् ।

१८. अस्मे सोम श्रियमधि निधेहि शतस्य नृणाम् । महि श्रवस्तुविनृम्णम् ॥ ऋ० १ । ४३ । ७ अत्र सोमात् धनकामना कृता ।

१९. अश्वावतीर्गोमतीर्विश्वसुविदो भूरि च्यवन्त वस्तवे ।
उदीरय प्रति मा सूनृता उषश्चोद राधो मघोनाम् ॥
ऋ० १ । ४८ । ३ उषा देवी प्रार्थिता ।

२०. यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनाम् । मरुतः शृणुता हवम् ॥
ऋ० १ । ८६ । २ अत्र मरुतः हूताः ॥

किं बहुभिः मन्त्रैः संकलितैः । जगति विद्यमानं समस्तं चेतनाचेतनपदार्थजातं देवपदेन वेदे स्तुतम्, स च देवः स्तावकेनावश्यं किंचित् तस्यकृते कर्तुं प्रार्थितः । पक्षपातशून्यैः सर्वं पदार्थजातं तर्कनिकषनिक-

विनापर्यायमार्गं प्रयोगस्य नायं प्रदेशः । +



धर्मस्वभावैः पाश्चात्यैः वेदाभ्यासतत्परैः सुमहद्भिः पण्डितप्रकाण्डैरपि बहोःकालादनन्तरममेवार्थः परिगृहीतः। ते वैदिकान् ऋषीन् Pantheist बहुदेववादिनो नानादेवतापूजकाँश्चाख्यापयन्ति । अस्मद्देशीयानां विद्वदग्रेसराणां सकलवेदभाष्यकाराणां श्रीमतां सायणाचार्य्याणां भाष्येष्वपि सम्यक् प्रतिपादितमिदं तत्त्वम् । भारतं वर्षं वेदानुयायिजन प्रधानम्, अत्रापि नानादेवतानां पूजा प्रचलति । कश्चिच्छिवमाराधयति । स्तौत्यन्योविष्णुं, ब्रह्माणं शरणं प्रपन्नोऽपरः । एकैकस्य देवविशिष्टस्य पूजया साकं पंचायतन पूजापि सुनरूढमूला । अस्य सर्वस्याधारो वेदः । अपरं च यथा विष्णुभक्ताः स्वेष्टदेवतास्तवने विष्णुमेव परां कोटिमधिरोहयन्ति, अन्यान् देवान् तस्य दासीभूतान् दर्शयन्ति, शैवाश्च शिवमेव सर्वदेवाधिनायकं ब्रुवते, एवमेव वेदेष्वपि तत्तद्देवताकसूक्ते 'स एव देवः सर्वम्' इति स्तुतम् । सत्सु परःसहस्रेषु वैदिकेषु वचःसु को नामावसरः तर्कवितर्काणाम् । अतः साटोपमुच्चैर्घोष्यते 'वेदानां नानादेवतावादे तात्पर्य्यम्' । इति । ( प्रचलति )

---

## भगवन्तो वेदाः स्त्रीणां स्थितिश्च

( श्री० पं० प्रियव्रतो वेदवाचस्पतिः )

आर्यमिश्राः ! नाविज्ञातं श्रीमतां भवेद् यद् वर्षाणां शतकात् प्राक् सर्वत्रापि भुवो वलये नारीणां कीदृशी दीना गर्हणीया च स्थितिरासीत् । पुरुषस्य भोग्यवस्तुनोधिकं किमपि भोग्यं नार्या नाभवत् । गृहस्वामिनो गृहे यथान्ये गोमहिष्यजाप्रभृतयः पशव स्तदुपकार सिद्ध्यं समभूवन् नार्य्यपि तथैव स्वामिन स्तत्तदिच्छापूर्तीनामुपकरणमन्तरेण नाकलयत् कांचिदन्यां कमनीयां स्थितिम् । सा हि सर्वथा स्वामिनः स्वम् आसीत् । स्वामी स्वस्य स्वेन यंकमप्युपयोगमादातुमिच्छेत्, यथा कथा च तया व्यवहरेत्, यस्यां कस्यांचिच्चावस्थायां तामवस्थापयेदिति नाशक्नोत् काचित् स्वामिनं विसर्गमात्रमपि किंचित् वक्तुम् । मयि प्रयस आदित्सा समुदेति गां वा महिषीं वाऽहं क्रीत्वा

वेश्मनि वेशयामि, यथाभिलषितं च तां दुग्धं दुहे। एवमेव मयि बह्व्योऽन्या अपि कामना आवश्यकताश्च समुदयन्ति तासां परिपूर्त्त्यै, स्त्रियमहं काँचिदुद्वहामि यथाभिलषितं च तया व्यवहरामि, किमत्र कस्यचिदाच्छिन्नं भवति यत्स मामागत्य किंचिदुच्यात् ? यद्येकया स्त्रिया सन्तुष्यामि एकां परिणयामि, यदि बह्व्यो रोचन्ते बह्वी रुद्वहामि। यथाऽऽवश्यकतानुसार मेकां बह्वीर्वा गा क्रीणामि। अरोचमानाया स्तस्याः परित्यागविधावप्यनवरुद्धो मेऽधिकारः। आत्मने न रोचमानां गां महिषीं वा यथाहं त्यजामि विक्रीणामि वा। एषासीत् विचारसरणिः तत्कालीनपुंसां मनःसु। पाश्चात्येषु तु देशेषु फ्रांस देशीय राज्यक्रान्ति मन्वारभ्य सा स्थितिः परिवृत्तिमारंभे। गत शताब्द्यां पाश्चात्य नारीभि स्तत्रत्य पुरुषैः संघर्षमेत्याऽऽत्मस्वातन्त्र्यवृत्तिः स्वीकारिता। And thy desire shall be to thy husband, and he shall rule over thee "बाइबल" स्यायमादेशः अद्य पाश्चात्यदेशेषु न कुत्राप्यूरीक्रियते। अद्य पाश्चात्य नारी सर्वतोमुखीनं स्वातन्त्र्यमनुभवति। स्त्रियाः पुंसश्च तत्र समानोधिकारोऽङ्गीक्रियते। तत्रत्य नार्य्यः पुमांस इव स्वशक्तीनां विकाशस्य सर्वक्षेत्रेषु पदमादधाना दृश्यन्ते। किं बहुना, यद् यत् पुरुषः करोति तत्तत्सर्वं पाश्चात्य नारी करोति चिकीर्षति वा।

परं भारते तु जगदर्चनीयचरणस्य स्वामिनो दयानन्दर्षेरवतरणात् प्राक् स्त्रीणां पुरुषैः समाना स्थितिर्न केनापि स्मृतिकारेण धर्मसूत्रनिर्मात्रा वा कदाचिदङ्गीकृता। दैनंदिनजीवने तु ताभिः सार्धं यथा व्यवाह्रियत तस्य संस्मृत्य कस्य न हृदयवतो रोमाण्युद्गच्छेयुः। "स्त्री शूद्रौ नाधीयाताम्" मित्यादि मनःकल्पित वाक्यानां प्रामाण्यमाश्रित्य ताः सर्वथाप्यज्ञानान्धतामिस्रेऽक्षिप्यन्त। तस्याः पतिरन्धः काणो वा बधिरो मूको वा पङ्गुरपांगो वा किन्न भवेत्, व्यवायामिषमद्यासक्तः सर्वागुणगुम्फितो नरककीटोपि वा किन्न स्यात्, येन सा पितृवशवर्तिनी वराका उपयेमे स तस्याः कृते परमा देवता,

भूषणाच्छादनाभिरात्मान मलंकृत्य गृहकर्मसु दासीभूताया स्तस्याः तस्य समाराधनमेव परमोधर्मः। पुरुषस्तु शतेनापि नारीणा मुपयन्तुम भूत् प्रभुः परं नारी वराकी आजन्मैकस्मिन्नेव पुंसि बद्धरतिरस्थात् कीदृशोपि किन्न भवेत् स पुमान्। दिवंगतपत्नीकः पुमान् यद्यभिलषेत् सहस्रवारमपि पुनः पुनरुद्वोढुमभवत्प्रभुः कामं स वर्षाणां सप्ततिमप्यतियातो भवेत्। परं नारीतूत्फुल्लयौवना षोडष्यपि विधवा सती नादिश्यत पूनरुपयन्तुम्। आजन्म सा मृतमेव पतिं ध्यायन्ती स्थास्यति। भूयांसः पितरो द्रविणाऽऽदित्सया षष्टिमितैरपि मृत्युपदारो पितपद्भिः स्थविरैर्नवनीतकोमला बाला उद्वाह्यन्। पुरुषसमाजः पशुसमाज इव सन् तान् नावारुणत्। देवभूयमिते च तस्मिन् शीर्णदति स्थविरस्थाणौ सा किमप्यजानती वराका बाला तज्ज्ञातीयै स्तच्चिता मारुह्य सतीप्रथा माचरितु मबाध्यत। सतीमात्मानं कर्तुमनिच्छन्ती बहुत्र ज्ञातिभिर्दण्डैरप्याहत्य तत्कर्माकार्यत। हन्त भोः परमात्मनः परम सुन्दरसृष्टौ नार्याः कीदृशी निस्त्रिंशदारुणा अत्याचारपरम्परा। नात्रैव शाम्यति कथा। तासां चारित्र्यमपि सदा सन्देह दृशाऽदृश्यत। प्रायः पुंसां मनःसु स्त्रीणां चरित्रविषयेऽधोलिखित पंचतन्त्र पद्य संवादिनोऽभूवन् भावाः

शम्बरस्य च या माया या माया नमुचेरपि
बलेः कुम्भीनसेश्चैव सर्वास्ता योषितो विदुः॥

आवर्तः संशयाना मविनयभवनं पत्तनं साहसानां
दोषाणां संनिधानं कपटशतगृहं क्षेत्रमप्रत्ययानाम्
दुर्ग्रहयं यन्महद्भिर्नरवृषभैः सर्वमाया करण्डं
स्त्रीयन्त्रं केन लोके विषममृतयुतं धर्मनाशाय सृष्टम्॥

अनृतं साहसं माया मूर्खत्वमतिलोभता।
अशौचं निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः॥

तुलसीदासस्य प्रसिद्धं पद्यन्तु लोकोक्ति रूपेण जना उदाहरन्ति—
"ढोल गंवार शूद्र पशू नारी, ये सब ताडन के अधिकारी"। किं बहुना,

स्त्रीणामुपरि पुरुषाणां सार्वकालिकं सर्वप्रकारकं च प्रभुत्वमासीत् । द्वयमासीत् तासां गृहस्थजीवनस्य दशा सामाजिकन्तु तासां जीवनमभूदेव न । गृहस्य चतसृभ्यो भित्तिभ्यो बहिरपि जगदस्तीति वा आजन्म नाऽज्ञानन्त । सम्प्रति तु ऋषिदयानन्द, राममोहनराय, रानडे प्रभृतीनां समाजसुधारकाणामान्दोलनेन पाश्चात्यप्रभाव वशतश्च भारतेऽपि पुरुषैः समानं स्त्रीणामधिकारं जनता शनैः शनै रंगीकुर्वाणा-वलोक्यते, इति कस्य न प्रवहेच्चेतसि हर्षसिन्धुपूर उत्ताल तरङ्गैः ।

परं महाभारतादर्वाचीनयुगेषु पुरुषैः स्त्रीणामधिकारेषु कथं चरणाक्षेपो विहितः—न केवलं भारतीयै रपि तु यावन्महीमण्डलाधि-वासिभिः—इति विचारणावसरे तत्कालं प्रचलितानि तत्तद्धर्मशास्त्राण्येव कारण मुत्पश्यामि । स्थालीपुलाक न्यायेन बाइबल-कुरान-मनुस्मृतिभ्यः कानिचिद् वाक्यानि उद्धरामि—

And thy desire shall be to thy husbond, and he shall rule over thee.

The Bible, Genesis 3. XVI.

अर्थात् 'तव पत्युरिच्छैव तवेच्छा भविष्यति, असौच त्वयि शासनं करिष्यति ।" ( क्रमशः )

---

## वेदेतिहाससमीक्षा

( पं० गोविंदराजनकः एम. ए.. शास्त्री )

भवत्तया योऽद्य समीक्ष्यते भवे,
स एव भूतो भविता परे दिवि ।
विभाव्यते येन नमामि तं परं,
त्रैकालिकं वेदरविं पुरातनम् ॥

मान्याः सदस्याः ! विदितचरमेव तत्रभवतां यदतिक्रान्ते सरस्वती सम्मेलने पण्डितविश्वदेवशास्त्रिणा निरर्गलं सोपपत्तिकं 'वेदेषु इतिहासस्यान्तर्भावो नास्ती' ति सर्वजन समक्षमुपपादि तत्र दुर्विगाढेऽ

तिगहनेऽस्मिन् विषये सन्दोहदोलामधिरोहति सर्वथा चेतोवृत्तिः। विविधज्ञान विज्ञानविशुद्धान्तःकरणानां साहित्यायुर्वेददर्शनादिपारावारपारङ्गतानां तत्रभवतां नास्त्येतदविदितं यत् 'सर्वं वेदे प्रतिष्ठितं भूतं भव्यं भविष्यच्च सर्वं वेदात् प्रसिद्ध्यति'। इति वचनात् प्राचीनं सवमप्यैतिह्यं वेदमूलकमेव। तस्मान् मन्त्रब्राह्मणात्मके वेदराशौ कीदृशं कुत्र-कुत्र च ऐतिह्यमिति चेत् तस्य पूर्वकल्पानुगतत्वात् सुस्पष्टमेव तत् यतो हि "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्"। वेदेषु ऐतिह्यसद्भावे तेषामनादित्वापौरुषेयत्वप्रसङ्गः स्यात् तथाच पुराणवेदप्रतिष्ठितानामैतिह्यानां वेदाननुगतत्वादप्रामाण्यमेव भवेदिति शङ्कां समाधातुं निबन्धोऽयं दिङ्दर्शनमात्रप्रदर्शनपुरःसरं प्रस्तूयते यथामति।

इतिहासपदनिर्वचन प्रकरणे भगवद्दुर्गाचार्य निरुक्तविवरणमङ्गीकृत्य 'निदानभूत इति ह एवमासीत्—इति य उच्यते" स इतिहासो भूतकालोद्बोधको 'यथापूर्वमकल्पय' दिति ऋग्वेदीयमन्त्रानुगत एव लक्ष्यते। एतामेव सरणिमनुसरन्तो मीमांसका "आख्याःप्रवचनात्" इति सूत्र यथापूर्वमेवोपपादयन्ति।

तथा च मनुः—"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥
नामरूपे च भूतानां कर्मणाञ्च प्रवर्तनम्।
वेदशब्देभ्य एवासौ निर्ममे स महेश्वरः॥
ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः।
शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः॥"

एवमेव "समाननामरूपत्वाच्चावृत्तावपि अविरोधो दर्शनात् स्मृतेश्च' इत्येतस्मिन् सूत्रे श्रीमद्भगवच्छंकरपादैः सुस्पष्टमेवोपवर्णितम्।

दैवदुर्विपाकाद्विलुप्तप्राये वेदानां स्वाध्याये ज्ञानाञ्जनशलाकया भगवान् यास्को वेदेषु ऐतिह्यसद्भावं वेदशब्द निर्वचनावसरे द्योतयन् तारस्वरं "तत्र ब्रह्म इतिहासमिश्रं ऋङ्मिश्रं गाथामिश्रं च भवतीति'

उद्घोषयति । दुर्गाचार्यश्च विवरणमस्य "स पुनरितिहासः ऋग्बद्धो गाथाबद्धश्च भवति । ऋक्प्रकार एव कश्चिद् गाथेत्युच्यते । इतिहास-सम्बद्धान्यापि सूक्तानि भवन्ति" एवं करोति । यास्कोऽपि सडिण्डिमघोषं "तदभिवादिनी एषा ऋग् भवति—'यद्देवापिः शन्तनवे पुरोहित' इति" उपन्यस्यन् ऐतिह्यं वेदमूलकमेव उपपादयति ।

यत्तु पण्डितविश्वदेवः 'चेतनाचेतनयोः पदार्थयोः सम्बोधनेन स्त्रीवत् पुल्लिङ्गवत् निर्देश्यन्ते तथा चेतनावत् तेषामारोपो भवतीति" दर्शयति नहि तेन वेदेषु ऐतिह्यहानिः सिद्ध्यति । यदा 'सर्वभाषासु प्रचलितास्वप्रचलितासु चोदाहरणानि उपलभ्यन्त' इति यत् तस्य कथन न तेन एतिह्याभावो वेदे भवितुमर्हति । भगवान् यास्कस्तु 'चेतनावदचेतनावच्च ताः ( मन्त्रोक्तलिङ्गा देवताः ) ऋचश्च भवन्ती' ति वदन् ऐतिह्यं समर्थयति । यदपि विश्वदेवपण्डितः 'प्राणवाचका विश्वामित्रादिशब्दा' इति वदति तत्र शब्दानामनेकार्थत्वात् ऋषिवाचकानां विश्वामित्रादिशब्दानां प्राणाद्यर्थकरणं मृगतृष्णिका भ्रम एव मन्त्रदर्शकानामृषीणां तत्तन्नामधेयत्वात् ।

"अत्र एव शब्दानामयमर्थो दृढीक्रियते यद्वेदेभ्य एव सर्वेषां नामानि सकलान्यपि कर्माणि सर्वकलाविज्ञानं च समभून्नान्यतः ।" इति "इत्थमेव अतिप्राचीने भारते कालेऽपि वेदगतनामानि एतद्भिन्नार्थं प्रतिपादकानि मनुवसिष्ठवामदेवादीनि वैदिकधर्मस्यैव प्रचरितत्वात् रक्षितानि ।

अथ तावत् श्रुतिस्मृतिपुराणैक्योपपादका मन्त्रा ब्राह्मणभागास्तदर्थवादिनोऽपि पुराणान्तर्वर्तिनः श्लोका ऐतिह्यमूलका दिङ्मात्रं प्रदर्श्यन्ते:—

आथर्वणे—"ऋचः सामानि छन्दांसि पुराणं यजुषा सह ।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा अधिश्रताः" ॥

एवमेव—"स वृहंती दिशमनुव्यचलत् तमितिहासश्च पुराणं च गाथाश्चनाराशंसी श्चानुव्यचलन् ।"

तथा च—"अस्य महतोभूतस्य निःश्वसितमेतत् । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषद्" इति ।

गोपथीया अपि—"सदिशोऽन्वैक्षत—प्राचीं दक्षिणां प्रतीचीमुदीचीं ध्रुवामूर्ध्वामिति । ताभ्यः पञ्चवेदान्निरमिमीत—सर्पवेदं पिशाचवेदं असुरवेदं इतिहासवेदं पुराणवेदं चे" ति पुराणेतिहासवेदानामेकेश्वर निःश्वसितमेव नान्यत्किञ्चित् ॥

तत्र ऋग्वेदे वृत्रासुरवधरूपस्तावदितिहासः—

अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहतं शरीरम् ।
वृत्रस्य निण्यं विचरन्त्यापो दीर्घं तम अशयदिन्द्रशत्रुः ॥

मन्त्रेऽस्मिन् वृत्रासुरवर्णन पर मैतिह्यं समुपलभ्ते । अत्र यास्कः "तत् को वृत्र" इति प्रश्ने" त्वाष्ट्रोऽसुर इत्यैतिहासिकाः" इतिवदन् ऐतिह्यमेव द्रढयति ।

"वृत्रहणं पुरन्दरम्" इति यजुर्वेदे ११ । ३३ ।

"इन्द्रो दधीचो, अस्थिभिः" इत्यपि तत्रैव २ । ६ ।

शतपथेऽपि १ । ६ । २ । १ ॥ १ । ६ । २ । १०

"त्वष्टुर्हवै पुत्र स्त्रिशीर्षा आस । तस्य त्रीण्येव शीर्षाण्यासुः । तद् यदेवंरूप आस तस्माद्विश्वरूपो नाम । अथ यदब्रवीदिन्द्रशत्रु विवर्द्धस्वेति तस्माद्ध एनं इन्द्र एव जघान ।" इदमेवैतिह्यबीजं पुराणवेदेन सविस्तरं प्रदर्श्यते ।

तथाहि—श्रीमद्भागवते षष्टस्कन्धे नवमे अध्याये:—

"तस्यासन् विश्वरूपस्य त्रीणि शीर्षाणि भारत ।
सोमपीथं सुरापीथमन्नादमिति शुश्रुम ॥"

चित्रकेतुर्नामा कश्चिद्गन्धर्वराजा श्रीपार्वतीशापेन वृत्रोऽभूदिति—स्कन्धपुराणे एवंविधाः पुराणान्तर्गता इतिहासा मन्त्रब्राह्मणात्मकेन

वेदेन सर्वत्र बीजरूपेण उपवर्ण्यन्ते । सार्वत्रिको हि सर्वज्ञो वेदराशिर्नहि कथञ्चिदपि ऐतिह्येन हीनः, अपितु 'नासदासीन्नो सदासीत्तदानीमि' त्यादिभिः श्रुतिभिः सृष्टेः प्रारम्भादेव ऐतिह्यमुपपादयति । तत्रान्यथार्थविधानाद्बुद्धिमान्द्यादाधुनिको लोकस्तदभावमेव वदति । यथार्थ प्रदर्शनपुरः सरं ब्रह्मपुत्रीगमनविषयकमैतिह्यं तावद् ऋग्वेदे—दृष्टान्तरूपेण लिख्यतेः—

उत्तानयोश्चम्बोर्योनिरन्तरत्रा पिता दुहितुर्गर्भमधात् । २।३।२०।३

पिता यत्सां दुहितरमधिष्ठन् । ८ । १ । २७

अत्र कोऽयं पिता ब्रह्मेत्युच्यते ? का तस्य पुत्री ? कीदृशो वा गर्भः ? कीदृग्विधं वा पितुः पुत्रीगमनम् ? इति शङ्कां निवारयितु मथर्ववेदे २० । १०७ । १६

उत्तरमाह भगवान्वेदराशिः—

"सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात् ।

यत्रा नरो देवयन्तो युगानि वितन्वते प्रतिभद्राय भद्रम् ॥" इति

तथा च शतपथे—"प्रजापतिर्ह वै स्वांदुहितरं अभिदध्यौ, दिवं वा उषसं वा । मिथुन्यनया स्यामिति तां सम्बभूव । तद्ध देवानामाग आस । य इत्थं स्वां दुहितरं स्वसारं करोति । ते ह देवा ऊचुः । योयं देवः पशूना मीष्टे अतिसन्धं वा अयञ्चरति य इत्थं वा स्वां दुहितरमस्माकं करोति" इत्यादि ।

एतदेव श्रीमद्भागवते तृतीयस्कन्धे १२ अध्याये व्यावृणोति भगवान्—

"वाचं दुहितरं तन्वीं स्वयम्भूर्हरतीं मनः ।
अकामां चकमे क्षत्तः सकाम इति नः श्रुतम् ॥
तमधर्मे कृतमतिं विलोक्य पितरं सुताः ।
मरीचिमुख्या मुनयो विश्रम्भात्प्रत्यबोधयन् ॥
नैतत्पूर्वैः कृतं त्वद्य न करिष्यन्ति चापरे ।
यत्त्वं दुहितरं गच्छेरनिगृह्याङ्गजं प्रभुः ॥

स इत्थं गृणतः पुत्रान् पुरो दृष्ट्वा प्रजापतीन् ।
प्रजापतिपतिस्तन्वं तत्याज व्रीडितस्तदा ॥"

अत्र यज्ञः प्रजापतिः । रेतो घृतम् । पृथवीसंस्थावेदिरेव पुत्री । वैदिकमिदमैतिह्यं रूपान्तरेण श्लोकेषूपनिबद्धम् । तत्र—ब्रह्मा देवानां प्रथमो वेदात्मिकां वाचं स्वतः प्रजातां पुत्रीरूपां साङ्गोपाङ्ग भावमप्राप्तां तन्वीं यच्चकमे–इत्याशयः । एवं पुराणान्तर्गतेनैतिह्येन वेदेष्वन्तर्गत मैतिह्यमेवानूद्यते—तत्सविस्तरं प्रदर्शयिष्यतेऽन्यस्मिन्नागामिनि पत्रे ।

---

## वेदेतिहासभ्रमनिरासः ।

( श्री रमानाथ शास्त्री )

हृदयं दक्षिणञ्चाक्षि मण्डलञ्चाधिरूह्य यः । चेष्टते तमहन्नौमि ऋग्यजुःसाम विग्रहम् ॥

अयि वेदवेदाङ्गऽविदः ! अतिरोहित मेतद्धि यद्भगवन्तो वेदाः सेतिहासाः—अतः वेदेति हास विधायक म्वैधमर्थं मेवाङ्गी कुर्वन्तो वेदेष्वितिहासा न सन्तीति केषाञ्चिद् भ्रममपास्यन्तो वयम्भवन्नयन-चञ्चरीका भवामः ।"

किन्नामवेदत्वम् मन्त्रब्राह्मणात्मकः शब्दराशिर्वेदः इति सायणः । मन्त्रब्राह्मणयोर्वेदनामधेय मित्यापस्तम्बः—वेद विस्तृतीं वर्णयन्ती भगवती–अथर्व संहिता मिद मुच्चै रूचे ।

स वृहतीं दिश मनुव्यचलत् । तमितिहासश्च पुराणञ्च गाथा शंस्यश्चानुव्यचलन् । अयम्भावः—वरीयान् वेदो वृहतीं दिशं गतः कथं तत्राह इतिहासेन गाथया पुराणादिना च श्रुतं श्रीलै रत्र खलु वेदः स्वकीयं स्वरूपमितिमूलक मेवाह ।

मन्त्र मिमं समर्थयन्—गोपथ ब्राह्मणं स्पष्ट माह, सर्वे वेदा निर्मिताः सेतिहासाः सकल्पाः सगाथाः सनाराशंस्य सेतिहासा–इतिहासेन सह वर्तमाना इत्यर्थः—अर्थमिम मादरयन्—यास्को निरुक्ते-ऽब्रवीदत्—तत्राहि तत्र ब्रह्मेतिहास मिश्रं ऋङ्मिश्रं गाथा मिश्रञ्च भवति

ऋतञ्च सत्य मित्यादौ चन्द्रसूर्य्यसमुद्रादीनां स्पष्टतयाऽभिधानात्प्रवाहरूपेण सृष्टे रपि नित्यत्वा त्परमेष्ठिनो ब्रह्मणः सर्वज्ञाखण्ड ज्ञान त्वात् भूतभव्यभविष्या दीनां वर्तमानान्तर्भूत त्वाच्च वैदिक मितिहास तत्वं न केनापि निगूहितं शेशक्यतेतराम्, भूतम्भव्यम्भविष्यञ्च सर्वं वेदात्प्रतिष्ठितमिति मनुः। श्रुतिबोधित कर्तव्यताकपताकाः ?

ब्राह्मणेषु प्रतिपदमितिहासस्य प्रचुर प्रचारोऽक्षिलक्षीभवति, तथापि विदुषां विनोदाय मन्त्रभाग मेव प्रमाणत्वमातिष्टे।............ अथर्व संहितायाम् कण्वः कक्षीवान् पुरमीढो अगस्त्यः श्यावाश्वः सोभर्यर्चनाना।

(२) विश्वामित्रोऽयं जमदग्नि रत्रि रवन्तु न कश्यपो वामदेवः

(३) विश्वामित्रो जमदग्नि वसिष्ट भारद्वाज गौतमो वामदेवः
शर्दिनोऽत्रिरग्रभीन्नमोमिः सुशंसः पितरोमृड़तां नः

(४) ये अत्रियो अङ्गिरसो नवग्वा इष्टावन्तो रातिषाचौदधानाः
दक्षिणावन्तः सुकृतो उस्था सद्यास्मिन् वर्हिषि मादयध्वम्

(५) उपहूता नः पितरो सोम्यासो वर्हिष्येषु निधिषु प्रियेषु ते—
आगमन्तु ते इह श्रुवन्त्यधि ब्रुवन्तु—तेऽवन्त्वस्मान् ॥
मन्त्रेष्वेषु वामदेव विश्वामित्र भारद्वाज कश्यपाद्यः पितर उपहूता दृश्यन्तेऽत्राऽऽशङ्क्यते।

प्राणो वै वसिष्टः ऋषिः मनो वै भारद्वाज, श्रोत्रं वै विश्वमित्र इति शतपथ ब्राह्मणवचनात्प्राणादिनामभिधानं न चानित्यानां ऋषीणा मत्राभिधान मिति सर्वमबोधविजम्भितम्। भोसत्यमेतद्—प्राणादिना मप्यभिधान मस्ति किञ्चप्रकरण मपि—अवलोकनीयम्भवति नहि प्रकरण मन्तराऽन्योऽर्थः कल्पनीयः स्यात्। यदिनामानित्यानां चक्षुरादिना मत्रास्ति प्रकरणञ्चेद्वाढम्। किन्तु भोः। अत्रतु प्रियेषु वर्हिष्येषु आगमन्तु—श्रुवन्तु, ब्रुवन्तु, इत्यादि क्रिया गुण कारकै स्तत्र ऋषीणा मेवाभिधानं सिध्यति। प्राणः कुतः कथञ्चागमिष्यति नेत्रयोः कथं श्रवणशक्तिः ... ... चास्माकं

कथोपकथनं शृण्वन्ति अचेतनाना मिन्द्रियाणां प्रार्थनया कीदृशः कश्च लाभः स्यात्–युक्त्याच कथं सिध्यति—अतः प्रकरणमन्तरेणान्योऽर्थः मा कल्पनीयः।—वामदैव्य मित्यत्र स्फुटं दयानन्द स्वामिना वामदेवेन प्रोक्तं वामदैव्यं सामेत्यभाणि।

यास्काऽऽचार्य्येण स्पष्टतया वेदेषु—ऐतिहासिकं तत्वं स्वीकृतम् अथ ऋक् संहिताया मितिहासपरकाः केचन मन्त्राः। त्रितः कूपेऽवहितो देवान् हवत ऊतये-तच्छुश्राव बृहस्पतिः कृण्वन्तं हूरणा दुरु वित्तमं अस्य रोदति। अयम्भावः अवहितः कूपे पतितः त्रितः-एतत्संज्ञः ऋषिः—ऊतये रक्षणाय-देवान् हवते स्तुतिभिराकारयति—यदेदत् त्रितस्या-ह्वानं बृहस्पतिः एतत्संज्ञको ऋषिः शुश्राव। किं कुर्वन्अहूंरणात्-पापरूपा दस्मात्कूपादुत्तीर्य्य—उरु शोभनं कुर्वन्।

अत्राह यास्कः। त्रितः कूपेऽवहितमेतत्सूक्तंप्रतिवभाविति।

द्वितीया

उद्वन्दनमैरत दंसनाभि रुद्रेभं दस्रा वृषणा शचिभिः निष्टौग्र्यं पारयथः समुद्रात् पुनश्चवानं चक्रथु युवानम्। अयम्भावः हे ! अश्विनौ वंदन मेतत्संज्ञं ऋषिं दंसनाभि रात्मीयैः कर्मभिः कूपादुदैरतं-उदैरयतं उदगमयत मित्यर्थः। हे दस्रौ दर्शनीयौ ? शचिभिः कर्म्मभिः, रेभ मेतत्सज्ञं ऋषिं, दश रात्री नवाहनिचं कूपे निवसंतं, तस्मादुदैरयतम्, तथा तौग्र्यं तुग्रस्य पुत्रस्य भुज्युं संज्ञं समुद्रे निमग्नं आत्मीयै नौभिः समुद्रान्निष्पारयथः तीर देशं प्रापितवन्तौ, तथाच्यवानं ऋषिं जीर्णं पुनः युवानं चक्रथुः॥

तृतीया

प्रियमेधवदत्रिवज्जातवेदो विरूपवत्। अङ्गिरस्वत्-महिव्रत प्रस्कण्वस्य श्रुधिहवम्—अयस्मावः हे महि व्रत ? जातवेदो ? प्रस्कण्वस्य हवं श्रुधि। तत्र चत्वारो दृष्टान्ताः। प्रियमेधात्रि विरूपानिरसश्च-त्वारो ऋषयः तेषां यथाऽऽह्वानं शृणोषि तद्वत्। प्रस्कण्वस्य कण्वपुत्र-स्येति यास्कः।

चतुर्थी

रमध्वंमेवचसे—सौम्याय ऋतावरी रूपमहूर्तमेवैः प्रसिन्धुमद्धा बृहती मनीषा वस्युरह्वे कुशकस्य सूनुः । अत्राह यास्कः तत्रेति हास-माचक्षते विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो बभूव, स विश्वामित्रो नदीस्तुष्टाव-गाधाभवतेति हे उदकवत्यः न मेवचसे—उपरमध्वं गाधाभवतेति, कुशकस्य सूनुः—कुशको राजा बभूव-इतियास्कः ।

( पञ्चमी )

परिविष्ट' जाहुषं विश्वतः सीं सुगेभिर्नक्त मुहथू रजोभिः विभिन्दु नामा सत्यारथेन विपर्वता अजयु' अयातम्—अयम्भावः जाहुषोनाम कश्चिद्राजा इतियास्कः, विश्वतः सर्वतः परिविष्ट' शत्रुभिः परिवृतं तं राजानं—हे नासत्यौ ? अजरयु जरारहितौ विभिन्दु सर्वस्यभेदकेन रथेन सुगेभिः सुष्टु गन्तुं शक्यै रजोभि मार्गैः—ऊहथुः—

( षष्ठी )

सामवेदसंहितायाम् । प्रयुनानाय वेधसे सोमाय वच उच्यते भूतिन्नभरामतिभिजुजोषते । अयम्भावः अत्राह सायणः । द्वितोनाम कश्चिद् ऋषिः, स्वात्मानं प्राह । प्रनानाय पवित्रेण पूयमानाय वेधसे कर्मणो विधात्रे सोमाय मतिभिः स्तुतिभि र्जुजोषते प्रियमाणाय स्तुतिं प्रभर, इत्यादि ।

( सप्तमी )

स्तुहि स्तुहि देवे घाते मंहिष्ठा सोमघोनाम् । निन्दिताश्वः प्रपथी परमज्या मघस्य मेध्यातिथमे । अत्राह सायणः । असङ्गोनाम राज ऋषि—मेध्यातिथये वहुधनं दत्वा तमृषिः दत्तदानस्य स्वस्य स्तुतौ प्रेरयति—हे मेध्यातिथये ! स्तुहीत २ एते घ एते खलु वयं मघोनां मघवतां मध्ये तुभ्यं धनस्य मंहिष्ठासो दातृतमाः कासौ स्तुतिरित्याह



निन्दिताश्वः प्रपथी उत्कृष्टज्यः " इति—

( अष्टमी )

आघाता गच्छा नुत्तरा युगानि यत्र जामयः कृणवन्न जामि—उप—बबृ हि वृषभाय बाहु मन्य मिच्छस्व सुभगे पतिम्' अयम्भावः अत्रास्मिन् सूक्ते यमयम्योः सम्वादः उच्यते—यमी यमं मैथुनाय कामयते—सप्रत्याह—यत्र येषु कालेषु जामयो भगिन्यः—अजामि अभ्रातरं पतिं कृण्वन्–करिष्यन्तिताउत्तराणि युगानि काल विशेषा आगच्छान्—आगमिष्यन्ति घेति पूरणार्थकः, तस्मात्, हे सुभगे-त्व मिदानीं मत्तोऽन्यंपति भर्तार मिच्छस्व—कामयस्व, तदनन्तरं वृषभाय-रेतः सेके पुरुषाय—आत्मीयं बाहुं उप बर्बृहि, शयन कालेउपबर्हणं कुरु इति।

नवमी—

ह ये जाए मनसा तिष्ट घोरे वचांसि मिश्र कृणवावहै-नुननौ मन्त्रा अनुहितास एते मयस्करम्—परहरेच नाहन्। अत्रेति हास माचक्षते, उर्वशी पूरूरवा पूर्वो षितात्कामात् पुनरासाध्या वरोद्ध मैच्छत—सातमनिच्छन्तीति द्वयोर्मिथः सम्वादः। पुरूरवसो वाक्यम्, हये-हे घोरे—यो अस्माकं दुःख जनकत्वाद् धोर कारिणि—जाये मनसा युक्ता सती-तिष्ट, किङ्कुर्वन्—तत्राह वचांसि मिश्राणि उक्ति—प्रत्युक्ति रूपाणि नु, अद्य कृणवावहै,

अथतं—उर्वशी प्रत्याचष्टे

किमेतया वाचा कृणवा तवाहं प्राक्रमिष मुषसा मग्रियेव पुरूरवा पुनरस्तं परेहि दुरापा ना वातइव तवाह मस्मि। अयम्भावः? एतया वाचा केवलया सम्भोगरहिताय—किं कृणवन्—अहन्तु—इदानीं त्वत्सकाशात्प्राक्रमिपं, अतिक्रान्तवत्यस्मि अतिक्रमे दृष्टान्तः—उषसा—मग्रियेव बह्वीना मुषसां मध्ये, अग्रेभवा, तस्मात् हे पुरुरवः! त्वमस्मत्सकाशादस्तं गृहं परेहि—अहं वातइवदुरापा दुष्प्रापा—

अथ शत पन्थीय-च्यवन ऋषेः कथा

यत्रवै भृगवो वा अङ्गिरसो वा स्वर्गलोकं समाश्नुवत—तच्चवनो

वाभार्गव श्चवनो वा अङ्गिरसस्तदैव जीर्णि कृत्या रूपो जहे शर्य्यातो ह वा इदं मानवोग्रामेण चचार-सतदैव प्रतिवेशो निविविशे तस्य कुमारः क्रीडन्त इमं जीर्णि कृत्यारूपमनर्घ्यं मन्यमानः लोष्टै निपिपिषु स शर्य्यातिभ्य श्चुक्रोध-तेभ्यो असंज्ञा चकार पितैव पुत्रेण युपुधे भ्राता भ्रात्रा तदनन्तरं स स्वकन्यां शार्य्याती मादाय यत्र से ऋषिरास तत्र जगाम ऋषे नमस्ते यन्नावेदिषं तेनाहिंसिषं—इयं सुकन्या गृहाण इत्यादि—तया प्रार्थितावश्विनौ च्यवनं युवानं चक्रथुः—तदेवाह ऋक्, पुनश्च्यवनं चक्रथु युर्वानम् एवं हि ऋग्वेदीयैतरेय ब्राह्मणस्य सप्तम पञ्चिकायां शुनः शेप हरिश्चन्द्रादीना माचूल माख्यानं वरीवर्ति।

इतिशम्

अयि विदित वेदित वेदितव्याः ? वेदेतिहास विषये किमस्माभिर्वक्तव्यं विषमोऽयं विषयोऽल्पीयसी च नो मति स्तथापि वागस्तीति वक्तव्यमिति न्याय माश्रित्य पूर्वाचार्य्याणां सम्मतिरेव समासेन प्रकटिता—"गत मासे विद्वत्परिषदि—वेदेतिहास इति निबन्ध श्रवण जनित कौतुहलाकर्षप्रकर्षितान्तःकरणाःसन्देहदोलाधिरूढाः किङ्कर्तव्यताविमूढा वयं वेदा हीदानीं शरणमितिमत्वाऽशरणा स्तच्चरणंगताः ततो यदधिगतन्तदुपायनी कृतं कृतमधिकपल्लवितेन।

———

## सम्पादक दृष्टिः

### श्रियो वर्षग्रन्थिः।

श्री विक्रमस्य सौरवर्षस्य १९८९ मिते आषाढ़मासे श्रियः पत्रिकायाः प्रथमोऽङ्कः प्रादुरभूत्। १९९० मिते आषाढ़मासेऽस्मिन् द्वितीय संख्यायाः प्रथमोऽङ्क इदानीं पाठकानां दृष्टिगोचरोऽस्ति। यद्यपि गूढ़पाण्डित्याभावात् श्रियः पृष्ठेषु नानाविधाः साहित्यदर्शनेतिहासविषयकाःलेखाः बाहुल्येन प्रकाशनेऽक्षमायैव, तथापि यथाशक्ति यथा-

सम्भवं विदुषः प्रार्थयित्वा वेदस्मृतीतिहासपुराणरूपा लेखाः पाठकेभ्यः समर्पिता एव । प्रायशः संस्कृतसाहित्यपरिषदः श्रीनगरस्थपरिषदि पठितॄणां पण्डितमहोदयानां सर्वे लेखाः प्रकाशिताः । परिषदमन्तरा पण्डितैर्यैर्लेखप्रेषणेन सहायता प्रदत्ता सर्वेते धन्यवादार्हाः ।

## श्रियः ग्राहकराशिः ।

शोकास्पदं त्विदं यत् श्रियः ग्राहकाणां संख्या गणनायोग्यैव नास्ति । श्रीनगरस्थाः सभासदस्तु ५० संख्यां भजन्ते । बहिःस्थितानां मूल्यदातॄणां संख्या विंशतिभ्योऽधिका न विद्यते । अहोऽतिमहानयं प्रयत्नोऽति क्षुद्रश्चास्य परिणामः । २८ पृष्ठानां पत्रिकायाः शतद्वयप्रतीनां मुद्रापणालयस्य व्ययः गतवर्षस्य डाकव्ययसमेतस्य प्रायः २५०) रूप्यकाणामभूत् परन्तु संस्कृत प्रणयिनां श्रियोऽर्थे शुल्करूपेण सहायतारूपेण वा दानं यत् सर्वं, तत् १५०) रूप्यकाणामासीत् । इति

## संस्कृतप्रणयिनामुदारता ।

मृतप्रायायाः भाषाया अस्याः स्नेहः संस्कृतज्ञानां धनाढ्यानां मनांस्यपि न प्रेरयति चेत्, व्यजनान्नजलदानेन मूर्छिताकृतेरस्याः पुत्र-पौत्रैश्चापि न चेतनां लभेत तर्हि कस्यदोषः प्राणत्यागेऽस्याः । २०० प्रतयः श्रियो मुद्राप्यन्ते । गताङ्कस्य पत्रिका प्रेषणावसरे सर्वेभ्यो महानुभावेभ्यः ( शतादधिकेभ्यः संस्कृतज्ञेभ्यः ) कार्डपत्रमेकं प्रेष्य शुल्करूपा सहायतारूपा च प्रार्थना विहिता । सप्ताष्टमहानुभावेभ्य ऋते शतात् मध्ये न कश्चिदुत्तरदानेऽपि समर्थोऽभूत् । एतेभ्यःसप्ताष्टभ्योऽपि कैश्चिद विचित्रमेवोत्तरं प्रेषितम् ।

## शिक्षाचार्याणां मतम्—

ऋषिकुल-गुरुकुल प्रभृतयः संस्कृतविद्यापीठा एव संस्कृतभाषा समुद्धारकेंद्राः । यदि नाम पञ्चदश प्रतीरपि संस्कृत पत्रस्यास्य प्रति विद्यालयमुपाध्यायाः मुख्यच्छात्राश्च क्रीणीयुः पुस्तकालयाध्यक्षाश्च

वाचनालयान् श्रियः कान्त्यालङ्कुर्युस्तर्हि ५० प्रतयस्तस्याः सततं लग्नाः स्युः । प्रकाशनात् पूर्वं बुद्ध्यानयैव स्थितमस्माभिः परन्तु इदानीं तु उपाध्यायवर्यैः विना मूल्येनैव पठ्यते पत्रिकेयम् । संस्कृतविद्यालयस्य संगृहीतधनस्य संस्कृत पत्र क्रयणार्थे स्वल्प व्यय आवश्यक एव, यतो प्रबंधकर्तॄणांसाहित्यमुत्साहवर्धनार्थं साहाय्यं विना मूल्येन न भविष्यन्ति । बह्वयः संस्कृतभाषायाः पत्रिकाः पूर्वमुपेक्षया, धनाभावेन च संस्कृत प्रणयिनां स्वर्गं प्राप्ताः ।

## धनाढ्यानां कर्तव्यम्—

लवपुरात् पण्डितमहाशयाणामेकेषां लक्षपतीनां विचित्रं पत्रं प्राप्य विस्मयसम्पन्ना अभूम । संस्कृतज्ञाः संस्कृतप्रेमिणः प्रसिद्धाः धार्मिकाः महानुभावा एते १॥) प्रेषणदुःखेन पीड़िताः लिखन्ति कार्यालयात् 'बहूनि पत्राणि परिवर्तन रूपेण प्राप्यन्तेऽस्माभिरतो मूल्येन न गृह्णीमः श्रीपत्रिकां भवताम्' इति एतेभ्योऽस्माकं नितान्तमाशासीत् यत् परिषत्सहायार्थे पत्रिकाचालनार्थे च प्रचुरं धनं दास्यन्ति । यदि एतादृशानां कर्तव्यं नास्ति, संस्कृत प्रचारस्य साहाय्यंकर्तुं तर्हि क अन्ये हस्ताक्षेपमस्मिन् कर्मणि करिष्यन्ति ।

## विदुषां कर्तव्यम् श्रिय आशाश्वतेभ्यः—

यद्यपि श्रियः पृष्टेपु श्रीनगरस्य परिषदो निबंधाः प्रकाश्यन्ते प्रायशः, तथापि बहिं स्थतानां विदुषां लेखा अपि सदृशंस्थानं लभन्ते । अतः साहित्याचार्याः कवयः विद्वांसोऽपि च नतितर्तिपुरः सरमस्माभिः प्रार्थ्यन्ते यत् स्वलेख स्वविचार स्वकविता दानेनालङ्कुर्युः श्रियः पत्राणि । तेषां लेखैः श्रियः शोभायश्च आकर्षणशक्तिरस्याः निस्संदेहमुपबृह्यंत ।

कुलभूषणः

# महात्मा गान्धीमहोदयः

(पं० धर्मदेवो विद्यावाचस्पतिः बंगलौर)

सुनिर्मलं जीवितमेव सर्वं,
समर्पितं लोकहिते हि येन ।
सत्यव्रताग्रेसरधीरवर्यो,
गान्धीमहात्मा सकलैः प्रणम्यः ॥

अस्पृश्यतावारणदत्तचित्तः,
प्राणान् परित्यक्तुमपि प्रवृत्तः ।
तदर्थमास्थाय मुदोपवासं,
योऽसौ महात्मा सकलैः प्रणम्यः ॥

अहिंसकाग्र्यो मनसा च वाचा,
कायेन नित्यं विमलो नितान्तम् ।
दैन्यव्रतं येन धृतं परार्थं,
गान्धी महात्मा सहि लोकवन्द्यः ॥

संप्रार्थ्यते लोकपतिः समस्तै-
रपीह सम्भूय दिवानिशं सः ।
प्राणप्रियोऽसौ हृदयाधिपो नः,
जीव्यान्महात्मा स सदा कृतार्थः ॥

अस्पृश्यता पाप निवारणं स्यात्,
सौहार्दसद्भाव विधारणं स्यात् ।
अन्योन्य भेदस्य न कारणं स्यात्,
तथा यतध्वं सततं समस्ताः ॥

———

# अस्माकं मातापितरौ

( पं० विष्णुमित्र: गुरुकुल कुरुक्षेत्रम् )

शारदानन्दः अहो ! कथं सुहृद् हरिनन्दनः ? आगच्छतु प्रियवयस्यः। बहोः कालान्नाह मुपलब्धवान् दर्शनम् भवतः। आर्य सर्वतो मंगलं प्रियसखस्य।

हरिनन्दनः--आम्, सकरुणावलोकनेन भवदादीनां सर्वमनामयम्। एषुदिनेषु पाठशालायाः परीक्षावसर इत्यध्यापनैकतानो न दृष्टवान् प्रियवयस्यम्।

शारदा०—सत्यम्। नूनमध्यापनादिना शालायाः साधिता भवता भूयस्युन्नतिरिति बहुशः श्रुतम्। परं यदि न भवान् प्रतीपं मन्यते तर्हि वदामि किञ्चिदात्मगतम्।

हरिनं०—बोधयतु भवान्निःशङ्कम्।

शारदा०—गतेष्वहःसु भवतः पितृमहाशया मिलन्तिस्म। तन्मुखादाकर्णितवानस्मि यद् भवान् सान्तःपुरः पृथगेव निवसतीति। तत्किमिदमुचितमाचरितं भवता ?

हरिनन्दनः—इदन्तु सत्यमेव। परमिद मपि विदितं स्याद् भवतो यत्पृथग् भूतोऽपि न पितृचरणानां काकिणीमात्र मपि गृहीतवानस्मि। स्वविद्यावलेन यदुपार्जयामि तेनैव गृहं निर्वहन् पृथक् सानन्दं वसामि। किमत्राक्षेप्यम्।

शारदा०—आर्य प्रियसुहृद् ? किंतु सा विद्या न पितृप्रदत्ता ? यदि भवतः पितृचरणो न भवन्तमध्यापयिष्यत् तर्हि कथं कारं नाम भवान् पाठशालामपाठयिष्यत्। कथंच भवान् किमप्युपार्जयिष्यत्। अयन्तुभवतो वृत्तान्तः स्मारयतिकथामिमाम्। तद्यथाआसीत् कस्मिँश्चन निवेशने शास्त्रविज्ञानसम्पन्नः कश्चन ब्राह्मणः। एष हि वाललीलानिविडलीन मप्यात्मनस्तनयंमहताप्रयत्नेन विद्यामध्यापयाञ्चकार समुपकारिणीम्। द्विजनयनतनयोऽपि चायं कियता कालेन

वभूवशास्त्रधरः सुमहान् विद्वत्प्रवरः । वहुतरासुच सभासु प्रकटयां— वभूवायं साधरणेतरमात्मनः शास्त्रपरिचयम् । आरोपितवाँश्चस्थले स्थले विजयवैजयन्तीमात्मनः । परमेकमेवास्य समभूद् वलीयान् दोषो यच्छास्त्रवलावलिप्तोऽयमात्मानं नरकुलशेखरमिवमन्यतेस्म । किम्बहुनाविजयकुञ्जरोऽह मिति पित्रोरपि अनृण इति भूयसाऽऽत्मानं समभावयत् । निभृतमिद मुपलभ्य शिक्षयितु कामो मार्मिकोऽस्य पिता समाजावस्थितमेनमेकदा अप्राक्षीत् वत्स ! कोऽयं वृक्षमधितिष्ठन् कटु वाशयते । वा वाश्यते, वाश्रू —

पुत्रः—काकः

पिता—किन्नु काकः ?

पुत्रः—आम् काकः

पिता—किंसु काकः ?

नितरा मुत्तेजितप्रकृतिर्द्विजतनयोऽयं प्रोवाच किमर्थंवृथा वहुवार मारटयन्ति भवन्तः ।

पिता—अलं वत्स । अलम् । त्रिवार भाषणेनैव भवानेक वार मेवैतावदाकुलोऽभूत् । अहं तु वाल्येभवन्तं श्रीगणेशायनमः—इति शतवार मध्यपाठयम् । तथापिभवता छिरिगनेच्छाय नमः—इत्युक्तिर्न त्यक्ता । अहो सत्यं भवान् पितुॠणादनृणः । विवेचकस्तु द्विजात्मजः सर्वमनेनैव समवुध्यत । अवागच्छच्चायं सम्यक् प्रकारेण पित्रो रप्रतीकार्य्यं प्रयत्नातिरेकम् ।

वाल्येकृतं मातुः प्रयत्नमपि पूर्वमेवासौ गजनिमीलिकया पश्यतिस्म । तत्रापि साधुशिक्षितोऽयं जनन्या ।

कदाचिन् माताऽस्य न्यगादीदमुम् । अद्यरात्रौ मदीये शयनीय एव सहमयाभवान् शयिष्यते । निकामं विस्मितोऽप्यसौ मातु राज्ञा मनुलङ्घ्यांमन्यमानस्तथैय व्यधात् । एकशयनमधिशयानया जनन्या त्वस्य रात्रौ कदाचनपादावस्य शिरसिप्रक्षिप्तौ, कदाचित् पदाङ्गुष्ठ घातेन मुखमण्डलमस्य समाघट्टितम् । कदाचिच्च जानुप्रहारेण जठर-

मस्य विक्षोभितम्। ब्राह्मणतनूजस्त्वयं यथा कथंचन मुद्रितमुखः सर्वमिदमर्पयत्। उत्तररात्रेतु सुदुर्लभदर्शना निद्रादेवी यावदस्य लोचने चुम्बति तावदेव जनन्या समुत्थाय घटिकातः पातितं नितान्तं शीतलं जलं शयनीये। नेदानीं सोढुमपायत वराकेण। क्रोधाध्मातोऽयं निजगाद-हन्त-हन्त भवत्यपि वदति जननी तेऽहमस्मि, परमद्य रात्रौ त्वया क्लेशसागरे पातितोऽहं किमेतदेव जनन्याः कर्म।

जननी०—कथमेकरात्र एव सहशयनेन दर्शिता प्रकृतिर्भवता। अहंतु शिशुं भवन्तमन्तिके निदधतीपरःशतास्तावत् अत्यवाहयं रात्रीः। यत्रहि भवताकदाचन मे जठरे, कदाचन मुखे, कदाचिच्चशिरसि, गाढमाहत मासीत्। भवांस्तु जलैनैवा कुलोऽभूत्। परं स्मरतु भवान् यत्रहेमन्ते कथं कथंचनाऽपि लब्ध निद्राया ममोपरि विण्मूत्रोत्सर्गं भवानकृत। तदापि तु मया प्रसन्नेन चेतसा सर्व मिदं विसोढम्। किं भवाननयैव क्षमयामातुरऋणादुत्तीर्णो भविष्यति ? इति।

तदहं ब्रवीमि न मनुष्यः कथंचनापि माता पित्रोः कृतनिष्कृतिर्भवति। भवांस्तु शास्त्रज्ञोविद्वान्। शास्त्रेषु बहुधा दृष्टवानस्ति मन्ये द्रक्ष्यतिच। अहंतु सिद्धान्त मिममेव जाने—

यं माता पितरौ क्लेशं सहेते सम्भवे नृणाम्।
न तस्य निष्कृतिः शक्या कर्तुं वर्षशतै रपि।

———

## जीवेश्वरयोर्भिन्नत्व वर्णनम्

द्वैत मण्डने विवक्षु रहं—त्रुटि श्चेद्भवेत्—अयं जनः क्षन्तु मर्हः, अस्यां संस्कृत साहित्य परिषदि गीर्वाणवाणीरसिक विद्वद्भिः, अन्यच्च—यदि भवन्तः शिक्षाप्रदानेन वक्तुकामाः स्युः तदप्यऽतिवरं, नास्ति काचिद्धानिः प्रत्युत महाननुकम्पायुक्तो प्रसादःस्यात्—पुनश्च—यद्यपमान एव भवेत्—तदप्यतिवरं उक्तंच मनुस्मृत्यां—सम्मानाद्ब्राह्मणोनित्य मुद्विजेत् विषादिव। अमृतस्येवचाकांक्षेदवमानस्य सर्वदा। अपरं चोक्तं भर्तृहरिणा निंदन्तु नीतिनिपुणा यदिवा स्तुवन्तु,

लक्ष्मीसमाविशतु गच्छतु वा यथेष्टम्—अद्यैव वा मरणमस्तु युगान्तरे वा, न्यायात्पथः प्रविचलन्ति पदं न धीराः—अस्तु—यदस्माभिरवश्यं वक्तव्यं तत्तु वक्तव्य मेव अधुना भवन्तः प्रमाणम्—प्रश्नोत्तरेण सम्पादित मिदं पत्रम्—

भोः भोः सभारसिक—श्रावकगणाः सरस्वती मुख मण्डितगुण श्रेष्ठाः पण्डितजनाः शृण्वन्तु भवन्तस्तावत्प्रश्नम् ।

प्र०—प्रथमं तावज्जीवेश्वरयोर्गुणकर्म्मस्वभावश्चकीदृशः—

उ०—उभौ चेतनस्वरूपौ स्वाभाविकपवित्राववविनाशकौ धार्म्मिकावनादी—परन्तु—परमेश्वरस्य सृष्ट्योत्पत्ति स्थिति प्रलयानि सर्वेषां नियमे स्थापना—जीवानां पाप पुण्यादीनां फल दानादिनि धर्म्म युक्तानि कर्म्माणि—पुनश्च—जीवस्य सन्तानोत्पत्तिः तेषां पालनं शिल्प विद्यादि सुष्ठ दुष्ट कर्माणि—ईश्वरस्य नित्य ज्ञानानन्दानन्तबलादीनि गुणानि पुनश्चजीवस्य—इच्छा द्वेष प्रयत्न सुख दुःख ज्ञानान्यात्मनो-लिंगमिति—न्या० सू० अपिच—प्राणापान निमेषोन्मेष मनोगतीन्द्रि-यान्तर विकारः सुख दुःखेच्छा द्वेषौ प्रयत्नाश्चात्मनोलिंगानि—वै० सू० इत्यादिनी गुणानि जीवात्मनः—परमात्मनो भिन्नत्वात्

प्र०—परमेश्वरो त्रिकालदर्शी अनेन भविष्यद्वाक्यं जानाति स यथानिश्चिनोति तथा करिष्यति जीवः, अनेन स्वतन्त्रो न जीवः—पुनश्च जीवस्येश्वरो न दण्डयति, यतः स्वकीयेन ज्ञानेन ईश्वरेण निश्चितं तथैव करोति जीवः—

उ०—ईश्वरस्य त्रिकालदर्शी कथनं मूर्खताऽभिधीयते—यतः यद्भूत्वा न तिष्ठति स भूतकालः— न भूत्वा तिष्ठति यत् तत् भविष्यत्-कालः—एतेन—किं ईश्वरस्य कोपि ज्ञानं भूत्वा न तिष्ठति—तथा न भूत्वा भवति—अतएव परमेश्वरस्य ज्ञानं सदैकरसं अखण्डितवर्तमानं तिष्ठति—भूतो भविष्यच्च जीवाय भवति—बाढ़ ! जीवस्य कर्म्मापेक्षायाऽस्त्रिकालज्ञता ईश्वरे भवति—नैवस्वतः—यथा स्वतंत्रतया जीवः करोति तथैव सर्वज्ञतया ईश्वरोजानाति—यथा ईश्वरो जानाति तथैव जीवः

करोति—अर्थात्—भूत भविष्यद्वर्तमानस्य ज्ञाने तथा फलदाने चेश्वरः स्वतंत्रः—जीवश्च किंचिद्वर्तमान कर्म्मकरणे स्वतंत्र एव—ईश्वरस्याऽनादि ज्ञानेन यथा कर्म्मज्ञानं भवति तथा दण्डदानस्यापि ज्ञान मनादित्वमेव—

प्र०—जीवः शरीरे भिन्नविभुर्वा परिच्छिन्नः

उ०—परिच्छिन्नस्तु यदि स्यात्तर्हि—जाग्रत्स्वप्नसुषप्ति-मरण-जन्म-संयोगागमनगमनानि कदापि न स्युः—अतएव जीवस्य स्वरूपं सूक्ष्म मल्पज्ञत्वंच—परमात्मनोऽतीव सूक्ष्म सूक्ष्मान्तरमनन्तं सर्वज्ञत्वं सर्वव्यापकत्वंचास्य स्वरूपं—अतएव जीवात्मपरमात्मनो-व्याप्यव्यापक सम्बन्धः।

प्र०—यदि जीवात्मपरमात्मनो पृथक्त्व मेव स्यात्तर्हि कथं—प्रज्ञानं ब्रह्म १ अहं ब्रह्मास्मि २ तत्त्वमसि ३ अयमात्मा ब्रह्म ४ वेदानाम्महावाक्याना मेतेषां कोऽर्थः।

उ०—एतानि वेदवाक्यानि नैव किंतु ब्राह्मणग्रंथानां वचनानि—नैवेतेषां महावाक्याऽभिधानं सत् शास्त्रेषु लिखितं—एतेषामर्थमपि प्रतिपादयामि—अहं ब्रह्म—ब्रह्मस्थमेवास्मि—अत्र तात्स्थ्योपाधि र्भवति (यथा मंचाः क्रोशन्ति) मंचाआह्वयति—मंचास्तु जडाः—तेषा माह्वयने तात्पर्यंनास्ति—अतएव मंचस्थाः पुरुषा आह्वयंति—इत्थमेवात्र विज्ञातव्यम्

प्र०—ब्रह्मणः सच्चिदानन्देन—जीवस्य चाऽस्ति भाति प्रिय रूपेण एकता भवतीव कथं खण्डयति भवान्।

उ०—किंचित्साधर्म्यमेलने एकता भवितुं नार्हति—यथा पृथिवी-जडदृश्यमेव—तथा जलाग्न्यादयोपि जडदृश्याः—एतावतैकता न सिद्ध्याति—एतेषु वैधर्म्यं—यथा गन्ध-रूक्षता काठिन्यादिगुणाः पृथिव्या—रस द्रवत्व कोमलत्वादि धर्मासन्ति जलस्य—रूपदाहकत्वादि अग्नेस्सम्भूतेन एकता नैव सिद्ध्याति—यथाच—मनुष्य कीटादयः अक्षिभ्यां पश्यन्ति—मुखेन खादन्ति—पद्भ्यां गच्छन्ति तथापि

मनुष्यस्याकृतिः द्वौ पादौ कीटस्याकृति रनेक पाद संभूतेन एकता नैवास्ति—तथा परमेश्वरस्य अनन्त ज्ञानानन्द बल क्रिया निर्भ्रान्तित्वं व्यापकता च जीवात्—जीवस्याऽल्पज्ञानाऽल्पबलाऽल्पस्वरूप सर्वं भ्रांतित्व परिच्छिन्नादि गुणत्वं ब्रह्मणः संभूतेन एकता नैव भवति—यतः एतयोः स्वरूपंच—परमेश्वरोऽति सूक्ष्मः—जीवश्च तस्माद् स्थूल भूतेन भिन्नः—

प्र०—जीवस्तु यदा मुक्तिदशायामेव ब्रह्मणा साकं लीयते-तर्हि ऐक्यत्व कथने दोषः कः ?

उ०—अय मेव दोषः—यन्मुक्ति दशायां जीवो न लीयते—प्रत्युत तद्गुण प्रापकत्वेन पुनश्चाल्पज्ञ जीवो जीवमात्रमेव तिष्ठति यथा अयोगोलकं हुतभुजि स्थापनेन तद्गुणं प्राप्य अर्थादग्निकणोभूत्वा—पुनश्चायोगोलक मात्रमेव कृपीटयोनेः भिन्नं भवति—एवमेवाल्पज्ञ जीवोऽपि पश्चाज्जीवमात्र मेवेश्वरा द्भिन्नो भवति इत्थमेव सर्वत्र प्रतिपादितम्महर्षिभिः । अन्यच्च–दधि मधुरं मधु मधुरं, द्राक्षा मधुरा सितापि मधुरैव, तस्य तदेवहि मधुरं, यस्य मनो यत्र संलग्नम् ।

---

## श्रुति स्मृत्योर्वैभवः

( पूर्वतोऽनुवृत्तम् )

विष्णुः

अथ ब्राह्मणस्य वर्णानुक्रमेण चतस्रो भार्या भवन्ति तिस्रः क्षत्रियस्य । द्वे वैश्यस्य । एका शूद्रस्य । समानवर्णासु पुत्राः सवर्णा भवन्ति अनुलोमासु मातृवर्णाः । न सगोत्रां न समानर्षिप्रवरां भार्यां विन्देत । मातृतस्त्वापञ्चमात् पुरुषात् पितृतश्चासप्तमात् ।

अथाष्टौ विवाहा भवन्ति । एतेष्वाद्याश्चत्वारो धर्म्याः गन्धर्वोऽपिराजन्यानाम् ।

अत्र विष्णोर्मते चतस्रस् तिस्रो द्वे वा या भार्याः प्रकीर्तिता-श्चान्यैरपि विद्वद्भिस्तत्र प्राहिताः । पारस्कर गृह्यसूत्रेषु ब्राह्मणस्य तिस्रः

क्षत्रियस्य द्वे वैश्यस्यैका भार्या शूद्रस्याप्येका मन्त्रवर्जम्। न जाने स्मृतिकारै वेंदानुयायिभि वेंदविरुद्धोऽयं राद्धान्तः कथं स्वीकृतः। कथञ्चनास्य वेदप्रामाण्येनेदृशी व्याख्या कृता, यद्ब्राह्मणश्चतुर्भार्यां विन्देत, क्षत्रियस्त्रिषु वैश्यो द्वयोः शूद्र एकस्मिन्नेव। विष्णुना स्त्रीणां पुनर्विवाहोऽपि समाज्ञप्तः पुनर्भूः वधूः प्रकीर्तिता।

**बौधायनः**

(१) बलाच्चेत्प्रहृता कन्या मन्त्रैर्यदि न संस्कृता।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा॥

**पुनर्विवाहः**

(२) निसृष्टायां हुते वापि यस्या भर्ता म्रियेत च।
सा चेदक्षतयोनिः स्यादूगतप्रत्यागता सती।
पौनर्भवेन विधिना पुनः संस्कारमर्हति॥

**वशिष्टः**

(१) अद्भिर्वाचा च दत्तायां म्रियेताथ वरो यदि।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा॥

(२) बलाच्चेत्प्रहृता कन्या मन्त्रैर्यदि न संस्कृता।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा॥

(३) पाणिग्राहे मृते बाला केवलं मन्त्रसंस्कृता।
सा चेदक्षतयोनिः स्यात् पुनः संस्कारमर्हति॥

(४) या कौमारं भर्तारमुत्सृज्यान्यैः सह चरित्वा तस्यैव कुटुम्बमाश्रयति सापुनर्भूर्भवति। या च क्लीवं पतितमुन्मत्तं वा भर्तारमुत्सृज्यान्यं पतिं विन्दते मृते वा सा पुनर्भूर्भवति।

**माधवरघुनन्दनादिधृत वशिष्ठवचनम्।—**

कुलशील विहीनस्य पण्ढादि पतितस्य च।
अपस्मार विधर्मस्य रोगिणां वेशधारिणाम्।
दत्तामपि हरेत्कन्यां सगोत्रोढां तथैव च॥

एतेभ्य उदाहरणेभ्यो भवद्भिर्ज्ञातुं शक्यते यत्स्त्रीणां पुनर्विवाहा स्मृतिकाराणां मते समाज्ञप्ताः आसन् । केवलं भगवता मनुना नारीणां कृते पुनर्विवाहो निषिद्धः । अन्यैश्च स्मृतिकारैः क्वचिद् क्वचिद् निषिद्धोऽपि अन्येषु स्थानेषु आवश्यकतानुसारेणाज्ञप्तः, यथा कन्यानां बलात्कारहरणे, अक्षतयोनीनां मृते पतौ, क्लीबे, प्रव्रजिते चेत्यादौ ।

संक्षेपतया मया प्राचीनकालीना वैदिक धर्माधारेण विवाहपद्धतिर्व्याख्याता अनया आचारव्यवहारस्यैका रीतिर्ज्ञायते । अन्या रीतयो नियमाश्चावलोक्यन्ताम् ।

## स्त्रीणामधिकारः स्त्रीधनञ्च

अस्मिन् विषयेऽपि द्विप्रकारकौ नियमौ दृश्येते । बृहस्पतिना स्त्रीणामर्थे भूषणानि एवंविधानि धनानि च नियतानि यतः सा मृते पतौ-पश्चाद्धनानां स्वामिनीस्यात् । केनचित्स्मृतिकारेणाथवा टीकाकारेण गृहाणि भूमयश्च तस्या अधिकारे निर्दिष्टाः ।

## दायभाग नियमाः—

न चैते केवलं भिन्नभिन्नस्मृतिकारमतेन भिन्ना भिन्ना दृश्यन्ते, परञ्च पञ्चनदे ये नियमाः स्वीकृताः न च वङ्गप्रदेशे दक्षिणप्रदेशे च त एवाङ्गीकृताः । भारतवर्षस्य भिन्नभिन्नप्रान्तेषु स्वे स्वे नियमा नियमिताः ।

## दत्त्रिमः पुत्रः

एवं दत्त्रिमः पुत्रः किं किं गृह्णीयात् कोऽस्याधिकारः । दत्तक्रीतानांपुत्राणां ग्रहणे का रीतिः किं किं तेभ्यो दातव्यमिति स्मृतिकारैर्न-सर्वथा एकेनैव स्वरेण व्याख्यातम् । न च सर्वेषु प्रान्तेषु एकैवरीति-र्विज्ञायते । एतेभ्य उदाहरणेभ्यो भवन्तः इदानीं जानन्ति यदद्यतने भारतवर्षे न प्राचीन वैदिकमर्यादा विद्यते । स्मृतिकाराणां मध्ये-मनो र्याज्ञवल्कस्य च समयः पाश्चात्यानां मते खृस्ताब्दात् एका

शताब्दिःपश्चादस्ति। अन्ये स्मृतिकाराः, तेषां समयस्तु अस्मादपि पश्चात् कथयन्ति प्रायेण वहुमतानुसारेण केचिदाधुनिकाः स्मृतिकाराः केचन च प्राचीनाः। उपरि ये ऋषयो व्याख्यातास्तेषां स्मृतयस्तु प्राचीना एव ज्ञायन्ते। पौराणिकसमयेऽथवा भगवतो बुद्धस्य जन्मनः केचन पूर्वा अन्ये तु उत्तरा दृश्यन्ते, प्रायेण पूर्वं एव।

इदानीं भवन्तः स्वयमेव निर्णयं कुर्वन्तु, यदि स्मृतिकाराणां भेदो वर्तते तर्हिकिं कर्तव्यम्? वैदिकधर्ममर्यादायां सर्वे नियमाः आचारव्यवहारलक्षणा धर्मानुसारेणेव समुपन्यस्ताः। वर्णाश्रमधर्म व्याख्यानपूर्वकं सर्वं यन्मनुष्याः कुर्वन्ति, सर्वं जन्मैव धर्मार्पितं प्रकीर्तितम्, सदाचारव्यवहारसम्बन्धिनो नियमाश्च धर्मेणैव व्याख्याताः। धर्म एव वैदिकधर्मस्य मूलम्। धर्मं हि पुरुषो रक्षेत्, धर्मं हि कुर्यात् धर्मेणैव सदा जीवेत्। मनुष्यजीवनस्योपद्देश्यः धर्म एव प्रतिपादितो भवति। दृश्यताम् तर्हि! काः काः स्मृतयो धर्मानुसारेण नियमिताः, अन्याः काः सन्ति यासां धर्मेण विरोधो दृश्यते।

## कोऽयं धर्मस्तल्लक्षणानि च

(१) अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते।
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः॥

(२) यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥

(३) श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्॥

(४) वेदोऽखिलो धर्ममूलं श्रुतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥

(५) श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रन्तु वै स्मृतिः।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ॥

(६) वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्॥ (मनुः)

वेदो धर्ममूलं तद्विदाञ्च स्मृतिशीले। (गौतमः)

श्रुतिस्मृतिविहितो धर्मः। तदलाभे शिष्टाचारः प्रमाणम् ॥
(वशिष्ठः)

उपदिष्टो धर्मः प्रतिवेदम्। स्मार्तो द्वितीयः तृतीयः शिष्टागमः शिष्टा खलु विगतमत्सरा निरहङ्कारा: कुम्भीधान्या अलोलुपा दम्भदर्पलोभमोहक्रोधविवर्जिता। तदभावे दशावरा परिषत्। (बौधायनः)

धर्मज्ञसमयः प्रमाणं वेदाश्च। श्रुतिर्हि बलीयस्यानुमानिकादाचारात् ॥ (आपस्तम्बः)

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मानः।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥
श्रुत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः।
अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥ (याज्ञवल्कः)
श्रुतिस्मृतिविरुद्धं यद्भूतानामहितञ्च यत्।
न तत्प्रवर्तयेद्राजा प्रवृत्तं च निवर्तयेत् ॥ ( नारदः )

धर्मसारस्तु अस्मिन् आगच्छति " भूतानामहितश्चयत् "।

महाभारतेऽपि धर्मस्य लक्षणमेकमेव निर्दिष्टम् ' सर्वभूतहिते रतः ' धर्मज्ञः कथ्यते। उपरिलिखितानि प्रमाणानि स्पष्टं प्रदर्शयन्ति यत् सर्वत्र वेदस्यैव प्रामाण्यं मन्यते। परन्तु न च सर्वे आचारव्यवहार धर्माः वेदेषु निर्दिष्टाः। तत्र च स्मृतिप्रमाणं श्रुतिस्मृत्योर्भेदे न्यायः तथा शिष्टाचार एव धर्मः।

" यतोभ्युदयनिःश्रेयस सिद्धिः स धर्मः " (वैशेषिक दर्शनम्)

" धर्मः श्रेयः समुद्दिष्टः श्रेयोऽभ्युदयलक्षणम्।
अस्य सम्यगनुष्ठानात् स्वर्गो मोक्षश्च जायते ॥ " (हारीतः)

" अथातो धर्मजिज्ञासा "वेदप्रतिपाद्यः प्रयोजनवदर्थः धर्मः"
(ब्रह्मसूत्रम्)

अतो वैदिकधर्मावलम्बिनामावश्यकमिदं मतम् ग्रहणीयमङ्गीकर्तव्यंयत् आचारव्यवहारधर्माः समये समये परिवर्तन्ते, स्मृतिधर्माः

परिवर्तनशीलाश्च समयस्यावश्यकतानुसारेण स्मृतिधर्माः परिवर्तन्ते ।

स्मृतीनां पदं न च श्रुतिपदं स्वीकर्तव्यम् । अतो ये ये कृतयुगे, त्रेतायां द्वापरे च नियमिताः सर्वे ते न च कलियुगे प्रतिपाद्याः । युगाधारेणसमयानुसारेण जातेरावश्यकतानुसारेण च गौणधर्मा एते परिवर्तनयोग्याः अद्यशो याः समस्याः आर्यान् दुःखयन्ति पीडयन्ति च तासां सर्वासां नूतनयुगस्यावश्यकतानुसारेण प्रतिकारः कर्तव्यः । अक्षतयोनीनामन्यप्रकारैः पीडितानां कन्यानां विवाहः कार्यः । तास्ता विदेशविधर्मविजातीयेभ्यो रक्षितव्याः । एषा समस्या अद्यशः सम्मुखमेव सर्वदा दृश्यते । न चास्मिन्नौदासीन्यं प्रकटनीयं, परञ्च स्मृतिबलन्यायबलानुसारेण प्रतिकारो विधेयः । अस्पृश्या जातयो न च बहिः कर्तव्या न चार्यजातेः संख्यमौख्र्येण न्यूनतां नेया, परञ्च तेषामधिकाराः स्वयमेव तेभ्योदातव्याः । नोचेत्ते शत्रवो भविष्यन्ति । आर्याणां संख्या ३३ कोटितः २२ कोटिसंख्यां समवतीर्णा । किमिदं पाण्डित्यं, दाक्षिण्यं वा । का वा जातेरधिकता, कथं वा देशस्योद्धारः स्यात् । हन्त ! कोऽयं नूतनोन्यायः । एतादृशा व्यवहारा वेदविरुद्धाः स्मृतिकाराणां मतेन च निषिद्धाः । केवलं स्वार्थपराणामभिमानिनां पण्डितंमन्यमानानां मतेनैव प्रतिपादिताः । श्रौतस्मार्तधर्मविरुद्धाः सिद्धान्ताः हा ! कथं स्वीक्रियन्ते ।

कुलभूषणः

स० सम्पादक.

---

# संस्कृत साहित्य परिषदः श्रीनगरस्य श्रियश्च नियमाः

**उद्देश्यः—**

परिषदोऽस्याः केवलमेकएवउद्देश्यः संस्कृतभाषार्यसभ्यता रक्षार्थं प्रचारः ।

**नियमः—**

सभासदस्तु न्यूनान्न्यूनं आणकानां चतुर्णां प्रतिवर्षं दानेन सर्वे भवितुमर्हन्ति उपरिनिर्दिष्टमुद्देश्यमुररीकृत्य ।

**श्रीः पत्रिका**

एतत् प्राप्त्यर्थं १।) श्रीनगरात् भिन्न नगरस्थेभ्यः । १) श्रीनगरस्थेभ्यश्च शुल्करूपेण धनमपेक्ष्यते । अनेनैव पत्रिकापि लभेत सभासत्त्वमपि च भवेत् ।

**सहायता**

परिषदो व्ययः पत्रिकाया अस्याः कृते शुल्कादधिकं भवति यदि शुल्कं सर्वेभ्योऽपि आगच्छेत् । परन्तु धनाभावात् बहवः संस्कृतज्ञाः छात्राः ब्राह्मणाश्च विनामूल्येनैव लभन्ते पत्रम् । अतः सहायतारूपेण किञ्चिद् धनमस्यै अवश्यमेव संस्कृतोद्धारप्रणयिभिः दातव्यम् ।

**पत्रप्रकाशनसमयः**

त्रैमासिकं पत्रमिदं सौरवर्षस्य चैत्र, आषाढ़, आश्विन, पौष, मासेषु निर्गमिष्यति । पत्रप्रकाशनमासानन्तरमपि पत्रस्यानुपलब्धौ सूचनाप्रेषणेन पुनरपि प्रेषयिष्यते पत्रम् । मासादनन्तरं तु पत्रं न प्राप्यते ।

**पत्रव्यवहारः**

लेखप्रेषणाय पत्रप्रबंधाय च निम्नाङ्कितेन प्रत्ययेन पत्रव्यवहारो विधेयः

आषाढ़ १९९०<br>
जोलाई १९३३

**कुलभूषणः**

परिषन्मन्त्री<br>
श्रियः सञ्चालकः<br>
स. सम्पादकश्च<br>
सुन्वार बाग़, श्रीनगर,<br>
( काश्मीर )

279

वर्ष ५
संख्या १

Vol. 5
Number 1

* ओ३म् *

कश्मीर प्रदेशस्थ श्रीनगरस्थायाः

# संस्कृत साहित्य परिषदः

त्रैमासिकं पत्रम्

# श्रीः

Quarterly Journal of the

# SANSKRIT SAHITYA PARISHAD

SRINAGAR, KASHMIR.

श्रीनगर आषाढ़ १९९३

*Srinagar July 1936*

वार्षिकं मूल्यम् १)

प्राप्ति स्थानम्—पं० कुलभूषणः सुन्वारबाग् श्रीनगर कश्मीर

# विषय सूची



सर्वे लेखा लेखकमहानुभावानां भाषामतानुसारेणैव प्रकाश्यन्ते । तेषामुत्तरदायिनो लेखका एव न च सम्पादकाः ।








वर्ष ५ संख्या १ | आषाढ़ संवत् १९९३ वि० जुलाई १९३६ ईसवी | पूर्ण संख्या १७

# काश्मीरिक-भट्ट-शिवस्वामिनः महाकाव्यं कप्फणाभ्युदयनामधेयम्।

( पं० जगद्धर ज़ाडू शास्त्री एम. ए. )

श्रीमन्तो मान्या विद्वत्पुंगवाः, श्रीशिवस्वामिनिर्मितं कप्फणाभ्युदयं महाकाव्यं कदाचित् भवत्कर्णगोचरीभूतं स्यात्, यदधिकृत्य श्रीमतामग्रतः किंचिन्मया वाक्-चापल्यं क्रियतेऽधुना। कल्हण पण्डितविरचितायां राजतरङ्गिण्यां कृतनामनिर्देशस्य श्रीराजराजेश्वरस्य महाराज-अवन्तिवर्मणो राज्यकाले भूस्वर्गोऽयं सर्वलोकविश्रुतः काश्मीरदेशः भूयांसं समृद्धिपथं समवागाहत। अस्य पुण्यश्लोकस्य महामहिमशालिनो नृपपुंगवस्य निजगौरवगरिम्णाऽमरपुरमप्युपहसन्ती राजधानी आधुनिकं 'वन्तीपुर'-प्रदेशं समधिष्ठित्य चिरराजतराम्। काश्मीरान् विहायाऽन्यानि समृद्धानि राज्यानि अपि असौ स्वबाहुपराक्रमेण देवगुरुसदृशानां निजामात्यानां अतुलितबुद्धिप्राबल्येन च स्वायत्तीचकार। अस्य महावीरस्य राज्यकालः षट्पंचाशद्वर्षाधिकं क्रैष्टाष्ट शतकं (856 A. D.), यस्मिन् बहवः कवयः

रत्नाकर-मुक्ताकणादयः शूरातिशायिनः शूरनाम्नो महामात्यात् संलब्धसंमानाः निजकविताकमनीयकिरणजालैर्दिग्वनितामुखान्यलंकृत्य परां ख्यातिमधिजग्मुः। यथा च राजतरङ्गिण्यां कल्हणपण्डितेन वर्णितम् :—

१. विच्छिन्नप्रसरा विद्या भूयः शूरेण मन्त्रिणा।
सत्कृत्य विदुषः सभ्यान् देशेऽस्मिन्नवतारिता:॥
( R. T. v. 32 )

२. युग्यैः क्षितिभुजां योग्यैरुह्यमानाः महर्द्धयः।
बुधाः प्रवृद्धसत्काराः विविशुर्भूपतेः सभाम्॥
( R. T. v. 33 )

३. मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः॥
( R. T. v. 39 )

४. अनुग्रहाय लोकानां भट्ट श्रीकल्लटादयः।
अवन्तिवर्मणः काले सिद्धा भुवमवातरन्॥
( R. T. v. 66 )

५. अवन्तिवर्मणः पुण्यैर्जन्तून् जीवयितुं ततः।
स्वयमन्नपतिः श्रीमान् सुय्यः क्षितिमवातरत्॥
( R. T. v. 72 )

ध्वनिकाव्यविमर्शनविचक्षणस्य श्रीमतो विद्वच्छिरोमणेरानन्दवर्धनाचार्यस्य ध्वनिकारिकाः सर्वलोकविश्रुताः। याः श्रीमदभिनवगुप्ताचार्यवर्यैः 'आलोकेन' व्याख्याताः प्रसिद्धिं भजन्ते। रत्नाकरमहाकवेः पंचाशत्सर्गात्मकं हरविजयाख्यं महाकाव्यं काव्य-लोकेऽद्वितीयम्। श्रीमतो मुक्ताकणपण्डितस्य कृतिरद्यपर्यन्तं न क्वापि लभ्यते। केवलं तस्य सुभाषितमुक्ताकणाः यत्र तत्र विप्रकीर्णाः सुभाषितग्रन्थेषु समधिगम्यन्ते। श्रीशेषगिरिशास्त्रिगवेषणा-लब्ध-कफ्फिणाभ्युदयमहाकाव्याध्ययनेन श्रीकाश्मीरिकभट्टशिवस्वामिनः किञ्चित् समाचारादिकं साम्प्रतमुपलभ्यते। यथा च—भट्टाचार्यस्वामी श्रीशिवस्वा-

मिनः पूज्यः पिता; अस्य बौद्धधर्मगुरुः चन्द्रमित्रः, यस्यादेशेन राज्ञः कफ्फिणस्य अवदानमसौ कफ्फिणाभ्युदये महाकाव्ये सूक्तिभिर्निबबंध। असौ शैवधर्मावलम्बी शैवसंप्रदायानुवर्ती च अभवत्" इत्यादि।

अस्य महाकाव्यस्य सर्वोत्कृष्टतायां ऐक्यमस्यं सर्वेषां विदुषां काव्यकलामर्मज्ञानाम्। कोशकाराः, वैयाकरणा अन्ये च सुभाषितसंगृहीतारः कविताकुञ्जकोकिलाः सहर्षं अस्य महत्त्वं स्वीकुर्वन्ति। क्रैस्टीयैकादशशतकवर्तिना कवीन्द्रवचन - समुच्चयकारेण - काव्य प्रकाशकर्त्रा मम्मटभट्टेन च श्रीशिवस्वामिनिर्मिताः श्लोकाः तत्तत्कृतिभ्यः उद्धृताः लभ्यन्ते। येषां पठनेन 'असौ महाकविः सहजसुन्दरां अलौकिकीं वाक्पटुतां, अपूर्वं काव्यकलाचातुर्यं, विस्मापयित्रीं प्राकृतिकदृश्यवर्णनाशक्तिं चावहत्' इति सुतरामनुमीयते।'

इत्थं संस्कृतसाहित्ये विशेषतः काश्मीरीय-काव्यसाहित्य-संसारे उत्कृष्टतमं स्थानमवलम्बमानं श्रीशिवस्वामिना निर्मितमिदं महाकाव्यं धार्मिकेतिहासग्रन्थानां भूयसीं पुष्टिं वितनोति। काव्येऽस्मिन् बौद्ध-शैव वैष्णवधर्माणां समालोचनां कुर्वन् कविः तेषां विरोधवादान् स्वमतिपर्यालोचनया समीकृत्य, तत्तद्धर्मावलम्बिषु प्रेमबुद्धिं संजनय्य, परस्परं तान् स्नेहपूर्वकं व्यवहाराचारधर्मे प्रेरयति।

अथ कोऽसौ कफ्फिणः? कफ्फिणो बुद्धसमकालीनः राजाऽभवत्। भगवतो बुद्धस्योपदेश-सुधा-रसप्लावितस्वान्तोऽसौ तत्प्रेरणया बौद्धधर्मं स्वीचकार। तथागतस्य मुख्येषु द्वादशशिष्येषु गण्यतेऽसौ। सिद्धार्थस्य जीवनकाले एव 'अर्हन्' इति संम्मानपदं समधिगम्य परां ख्यातिमसौ संप्राप्तवान्। 'जावा' द्वीपे बौद्धमन्दिरभित्तिषु श्रावकमध्येऽस्य नामोट्टङ्कितं लोकैरधुनापि दरीदृश्यते। बुद्धावदानेषु गाथासु च प्रसिद्धचरितं पुण्यश्लोकमेवंविधं महाराजं कफ्फिणं निजकाव्यं निर्माय हिमगिरिधवलेन यशसा समाच्छाद्य चैनं अमरतां निन्ये महाकविः श्रीभट्ट शिवस्वामी।

( अन्यदग्रे )

# पाणिनिराचार्यः

( पं० गोविंदराजदान शास्त्री एम० ए० )

संस्कृतसाहित्यसंसारे गौरवपूर्णं प्रधानतमं पदं भगवत आचार्यपाणिनेरेव सर्वत्र प्रसिद्धम्। महान्तं पारावारपरिमाणरहितं व्याकरणार्णवं केवलं ३९६३ वह्निरसनन्दाग्निपरिमितैः सूत्रप्रवाहैरल्पतमं घटमिव अष्टाध्यायीं सम्पूरयांचक्रे। अनन्यसदृशीं तां तथाविधां प्रतिभामाचार्यवर्यस्यास्य निरीक्ष्य को न भवेऽस्मिन्न् चकितः स्यात्? क्वासौ मुनिपुङ्गवः पाणिनिः क्व च शब्दसागरः यं सम्यक् तर्तुं पाणिनिं विना सर्वोऽपि देववर्गः कान्दिशीक इव निर्धैर्यो निरालम्बो निरवग्रहो निष्परिग्रहः सर्वदा सर्वथा सर्वत्र सर्वतोऽपि बिभयाम्बभूव तत्र का कथा परिमितवयसोऽचिरंजीविनो मनुष्यस्य। तथाच—बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच न चान्तं जगाम। बृहस्पतिश्च वक्ता, इन्द्रश्चाध्येता, दिव्यं वर्ष सहस्रमध्ययनकालः, न चान्तं जगाम, किं पुनरद्यत्वे? यः सर्वथा जीवति स वर्षशतं जीवति। चतुर्भिश्च प्रकारैः विद्योपयुक्ता भवति—आगमकालेन; स्वाध्यायकालेन, प्रवचनकालेन व्यवहारकालेनेति। तत्र चागमकालेनैव कृत्स्नमायुः पर्युपभुक्तं भवति। तस्मादनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः। कथं तर्हीमे शब्दाः प्रतिपत्तव्याः? किंचित् सामान्यविशेषवल्लक्षणं प्रवर्त्यं येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरनिति महाभाष्यकारस्य पतञ्जलेरुक्तिः। तस्मादाचार्यपाणिनेरेवायं प्रभावो येनाष्टभिरेव केवलमध्यायैर्निखिलोऽपि शब्दनिधिः पारं नीत्वाकण्टकितो मार्गः परोपकाराय प्रदिष्टः।

कदासौ पाणिनिरभूत् कंचकुलं जन्मनालंकृतवान् कथं वा जीवनं व्यतीयायेति निश्चयो वाह्यैराभ्यन्तरिकैश्च निरीक्षणविवेचना विषयैरनुसंधातव्योऽपि अतलस्पर्शसागरवद्दुरधिगमो दुः-

साध्यश्च दरीदृश्यते तथापि यथाशास्त्रं यथापूर्वं यथाविधि यथा पाश्चात्यविद्वज्जननिर्दिष्टं यथाशिष्टादेशं प्रयतिष्यायामहे—

Indian wisdom इण्डियन विज़डमनाम्नि पुस्तके होरेस हेमन विल्सनमहाशयो लिखति यदयमाचार्यो गान्धारदेशान्तर्गते शलातुरग्रामे जन्म प्रपेदे येनासौ शालातुरीयः कथ्यते एतस्य जननी दाक्षी देवी तथाच भाष्यकारः—'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः। एकदेशविकारे हि नित्यत्वं नोपपद्यते' इति तस्माद्दाक्षेयोऽप्यसौ। पाणिनिऋषेर्गोत्रजत्वात्पाणिनिरयम्। पितामहस्तस्य स्मृतिकारो देवलो व्यासादपि पूर्वतमो यतो हि महाभारते 'असितो देवलो व्यासः' इत्यन्यत्रापि देवलस्य नामसंकीर्तनं व्यासात् पूर्वमेव सर्वत्र दृश्यते।

कदासौ अभूदिति तु न निश्चयेनोदाह्रियत अपित्वनुमान-प्रमाणाभ्यामेव सिद्ध्यति।

प्रो० गोल्डस्टकरस्तु बौद्धमतप्रचारकस्य शाक्यमुनेरपि पूर्वमेव पाणिनिसमयं निश्चिनोति। बुद्धस्तु ६६३–४१३ कालीनः। अतः पाणिनिः खितस्तात्पूर्वं षष्ट्यामेव शताब्द्यामासीत्। परन्तु कतिपये विद्वांसस्तं खिस्तात्पूर्वं तुर्ये एव शतके समुत्पन्नं वदन्ति तन्निखिलमप्यसम्मतमेव।

'गवियुधिभ्यां स्थिरः'(८।३।९६) 'वासुदेवार्जुनाभ्यां वुन्'-इति द्वाभ्यामेव सूत्राभ्यां प्रतीयते यत् पाणिनिः कृष्णेन पाण्डवैश्च सह परिचित आसीत् 'बाह्वादिभ्यश्चेति सूत्रान्तर्गतगणपाठे कृष्णयुधिष्ठिरार्जुनप्रद्युम्नरामादयः शब्दाः श्रूयन्ते तथा 'एजेः खश्' इत्यस्मिन् सूत्रे 'अरुर्द्विषदजन्तस्य मुम्,—इत्यनेन मुमागमे जनमेजय इति साधनात् जनमेजयपरिचितः पाणिनिरिति सर्वेषां मतम्। पाण्डव-कालीन एव व्यासस्तस्य च पिता ऋषिः पराशरः सोपि पाणिनि-परिचितः 'अतएव पराशर्यशिलालिभ्यां भिक्षुनटसूत्रयो' इत्यनेन पारा-शर्यशब्दव्युत्पत्तौ 'गर्गादिभ्यो यञ्' इति यञ् करणात् पाराशर्यशब्देन

x अन्तरमिति नित्यं नपुंसकम् ।

व्याससंज्ञकऋषिज्ञानम् । गर्गादिगणे पराशरशब्दान्तर्भावता ब्रह्मसूत्रकर्तुर्व्यासस्यानुमानं तदानीन्तनेनेहसि ब्रह्मसूत्राणां भिक्षुसूत्र-व्यपदेश आसीत् यतोहि संन्यासिजना एव तदा तानि सूत्राण्यपठन् सूत्रे च भिक्षुसूत्रपदग्रहणेन व्यासेन वेदान्त दर्शनं पाणिनिकाला-त्पूर्वमेव रचितमासीदित्यपि निःसन्देहास्पदम् । व्यासस्य पाणिनेश्च पञ्चाशद्वर्षात्मकोन्तरो निकटवर्तित्वं वा पाणिनेः भिक्षुसूत्रज्ञानात् ज्ञायतेऽपि ।

कथं पाणिनिः पाण्डवसमकालीन एव कथं नार्वाचीन इति प्रश्ने सुधातुर कङ् चे–त्यनेन सुधातृ ग्रहणान् अकङ् इञ् च विधा-नात् "सौधातकि" रिति सिद्धयति अप्रसिद्धस्य सुधातृनामकस्य मुनेर्ग्रहणात् कथं प्रसिद्धस्य व्यासस्य ग्रहणं न भवेत्—परं वरुड-निषादचण्डालबिम्बानां चेति वक्तव्यमिति कात्यायनकृतप्रथक वार्तिकेन वैयासकि ( शुकः ) पद सिद्धावनुमीयते पाणिनिसमये व्यासस्य पुत्र एव नासीत्—यदि चासीत् तर्हि बालत्वादप्रसिद्ध एव स्यादित्यपि अनुमीयते यः पश्चात्परीक्षितकथापण्डितो भूत्वा कात्यायनसमये परां ख्यातिमापेदे ।

जनमेजयपरिचितः पाणिनिः कथं न शुकदेवपरिचित इति प्रश्ने तु महाभारतकाले अभिमन्युमृत्युसमये परीक्षितस्य मातुरेव-गर्भे सम्भवात् पश्चाच्च जननकालादेव भाविक्षत्रियकुलावतंसकार-णात्प्रसिद्धिं जनमेजयो यथावाप न तथा शुकेन ख्यातिर्लब्धा स्या-दित्यपि निश्चेतुं शक्यते ।

पाणिनिः पाण्डवकालीन एवेत्यत्रान्यदपि कारणम् । कात्यायन वार्तिककालस्तु पाणिनेः पश्चादेवेति निर्विवादम् । पाणिनिकाले यः शब्दोऽसाधुः स कात्यायनसमये भाषापरिवर्तनेन साधुतां गतः स्यात—इत्यदपि—धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुति प्रत्यक्षहेतव' इत्यत्र—मनूद्दिष्टलक्षणे (एत-स्मिन्नार्यावर्ते निवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्य-

माणकारणाः किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः तत्रभवन्तः शिष्टाः ।६।३।३। इत्यनेन कात्यायन कथनेनार्यावर्तदेशीयत्वेनैव शिष्टत्वम्—एवमेव आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात्। तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः इति मनुनोक्तम्। कात्यायनस्तु प्राक् आदर्शात् प्रत्यक् यवनात् उत्तरेण हिमवन्तं दक्षिणेन परियात्रमित्यत्र कात्यायनोक्तौ महदन्तरं मनुसमयादपि मनुसमयः खिस्तात्पूर्वं ३०७ तस्मात्पूर्वं कात्यायनः ३०० ४०० वा तस्मादपि पूर्वं पाणिनिर्वर्षसहस्रमिति सिद्धम्। शतेषु षट्सु सार्धेषु त्र्यधिकेषु च भूतले कलेर्गतेषु वर्षाणामभूवन् कुरुपाण्डवा इति कल्हणो क्त पाण्डवसमयसमकालीनोयं तस्मात्पाणिनिरिति निर्विवादमेव—

पाणिनेर्गुरुर्वर्षः तथा च कथासरित्सगरान्तर्गतप्रथमकथापीठस्य चतुर्थे तरङ्गे—

अथ कालेन वर्षस्य शिष्यवर्गो महानभूत्
तत्रैकः पाणिनिर्नाम जडबुद्धितरोऽभवत्॥ जडतरा बुद्धिरस्येति विग्रहः।
स शुश्रूषा परिक्लिष्टः प्रेषितो वर्षभार्यया।
आगच्छत्तपसे खिन्नो विद्याकामो हिमालयम्।
तत्र तीव्रेण तपसा तोषितादिन्दुशेखरात्॥
सर्वविद्यामुखं तेन प्राप्तं व्याकरणं नवम्।

जयादित्यकृत काशिकायां च—

नृत्यावसाने नटराज राजो ननादढक्कां नवपञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्॥
कथं च परलोकं गत इति—
सिंहो व्याकरणस्य कर्तुरहरत्प्राणान्प्रियान् पाणिनेः—इति

शि
नन्दिकेश्वरका।रिकायामिति वक्तव्यम्

# सरस्वती यात्रा

गत चैत्रमासस्य श्रियः चतुर्थवर्षीय तुरीय संख्यायां 'सरस्वती यात्रा' शीर्षकः स्वल्पलेखो मदीयः प्रकाशित आसीत्। यस्मिन् सरस्वती यात्रा मध्ये १९३६ ई० वर्षस्यारम्भे दृग्विषयीभूतानां नगराणां नाम वर्णनमात्रमेव परिचयोऽभूत्, विस्तारस्य काचित् प्रतिज्ञा च। अद्याहं स्वप्रतिज्ञां पूरयितुं किञ्चित् पाठकानामुपहारी करोमि।

## भारतवर्षस्य प्राचीनेतिहासः ( कलिकाताया महत्त्वम् )

कलिकाता नगरी भारतवर्षस्य १५० वर्षेभ्यो राज्याधिकारिणामाङ्गलदेशप्रसूतमहाभागशालिराज्ञां प्रतिनिधीनां (Viceroys') राज्यधानी विचित्राद्भुतैव। इदानीं २५ वर्षेभ्यो मुगल सम्राजां प्राचीनार्यराज्ञाञ्च राज्यधानी इन्द्रप्रस्थाभिधाना—देहलीति (Delhi) आङ्गलैरपि पुनः स्वीकृता। १४,१५ लक्ष परिमित स्त्री-पुरुषाणां निवास स्थानं भारत वर्षस्य प्राचीन काले महाराज चन्द्रगुप्तस्य मगधराजस्य निकटवर्ति संस्कृतशिक्षार्यसभ्यताया प्राचीन केन्द्रं महम्मदीय सम्राजां हस्तगतमाङ्गलविद्या प्रचारस्याग्रसरो वङ्गदेशोऽयं यस्य महत् नगरं कलिकाताभिधानम्। कथमाङ्गलैः प्राप्तं भारतीयैः दत्तम् किञ्चिदस्य वृत्तं अर्वाचीन भारतवर्षस्येतिवृत्तपृष्टेभ्य उद्धृयते।

भारतवर्षस्य बौद्धराज्ञां कालो विशेषतया सम्राट् चन्द्रगुप्तस्याशोकस्य च(३२७B.C.—२२६)कतिपय शताब्दीषु भारतंपूर्वदेशेभ्यः सर्वेभ्य उच्चतमं देशमुद्घोषयत्। यावत् बौद्धानां राज्यंन्यूनतामागात् गुप्तहिन्दूराज्ञां राज्यं भारत वर्षे गौरवं प्राप। अष्टम्यां शताब्द्यां यावत् निरन्तरं भारतीयानामेव स्वराज्यं सर्वत्र भारतेऽऽसीत्।

## यवन राज्ञां भारताक्रमणम्—

भारतवर्षस्यावनतेः नक्षत्रं तु खृष्टवर्षस्याष्टम्यां शताब्द्यां महमदीय राज्ञां महमदस्य कासिम पुत्रस्य अरबतः प्रेषणेन सिंधु प्रदेशस्यच स्वायत्तीकरणेन निस्तेजतां गतमासीत्। महमदेन (कासिम पुत्रेण) सिंधु प्रान्तस्य बौद्ध प्रजायाः साहाय्येनार्य राज्ञो विजित्य सिंधु प्रदेशे स्वराज्यं (मुस्लिम राज्यं) स्थापितम्। यद्यपि महमूद ग़ज़नवी अभिधानः कश्चिद् महमदीयः ग़ज़नीत आगत्य १००० ई० शताब्द्यां भारतवर्षं स्वाधीनं चकार तथापि तस्मात् पूर्वं महमदेन (कासिम पुत्रेण) ८०१ ई० शताब्द्यां सिंधू देशस्य बहुभागं विजित्य प्रचुरं धनं अरब देशे प्रेषितमासीत्। १००० ई० तः १७०० ई० यावत् भारते नितान्तं मुस्लिम राज्यमासीत्। दक्षिण भारते १८ शताब्द्यां महाराष्ट्र ललामभूतेन शिवाजी महाराजेन बहुत्र पुनरार्य-राज्य स्थापनाय महान् प्रयत्नः कृत आसीत्। उत्तर भारते तु गुरो र्गोविन्दसिंहस्य शिष्यैः (सिक्खैरिति) सिक्खराज्यं स्थापितम्।

## पाश्चात्यजातीनां भारत आगमनम्—

१५०० ई० यावत् भारतवर्षो दृढं मुस्लिमराज्याधीन आसीत्। यद्यपि मुग़लानां राज्यस्य गौरवं १६, १७ शताब्द्यां उच्च-शिखर आसीत् तथापि १७ शताब्द्यामेव दैवयोगेनन्यशक्तेः प्रादुर्भा-वोऽपि भारते निश्चयेना ऽभूत्। भारतस्य सर्वं वाणिज्यं कतिपय शताब्दीषु तु केवलं महमदीयानां हस्त आसीत्। विशेषतो यस्मात् समयात् (७ मयां शताब्द्यां) महमदीयैः मिस्रदेशः स्वाधीनता मानीतः तस्मात् कालात् पाश्चात्यजातीनां मिस्रदेशात् भारतवर्ष-मागन्तुं पन्थानमेव महमदीया अरुन्धन्। प्रथमो देशः पाश्चात्येषु पुरतगालित्यासीत् यस्य शूरैः समुद्रयात्रिकैः वैज्ञानिकैश्च पूर्वं देशेषु विशेषतो भारते स्वकीयं वाणिज्यं वर्धयितुं वाणिज्यगृहादिकमधिष्ठा-पितम्। पुरतगाल प्रदेशीयाः मिस्रप्रदेशस्य पन्थानमवरुद्धं दृष्ट्वा

अफ़रीका प्रदीपस्य दक्षिण समुद्रे केप आफ़ गुड होप (Cape of Good Hope नाम्ना पथा भारते आगतवन्तः। त्रिमासपरिमितां दुष्करां यात्रामपि पुर्चगोज़जातीयैर्मानवैस्तृणीकृत्य दक्षिण भारते कतिपय देशेषु स्ववाणिज्यं प्रसारितम्। कालीकट गवा प्रभृति देशेषु भारत वर्षस्यार्यराज्याज्ञया स्वकार्यालयान्यपि निर्मितानि। लङ्कादेश मपि स्वाधीनतामानीतम्। १६ शताब्द्यां विजयनगरेन (हिन्दुराज्य-धान्याः सह) सह प्रभूतं वाणिज्यं चक्रुः।

## पाश्चात्यानां परस्परं संघर्षणमाङ्गलानां विजयश्च—

१७ शताब्द्यां डच (Holland) देशीयैरपि पूर्व देशेषु व्यापारार्थं संघ एकः स्थापितः—'ईस्ट इण्डिया ट्रेडिंग कम्पनी' (East India Trading Co.)। शताब्द्यां १६ मयां त, भारतस्य सर्वः सामुद्रिकव्यापारः पुर्चगीज़ानां हस्त आसीत्। परन्तु १७ म्यां शताब्द्यां हालैंड प्रदेशीयै डचाभिधानैरपि बहुषु स्थलेषु स्वकीयानि वाणिज्यालयानि पुर्चगीज़ान् विजित्य स्थापितानि। १७ म्यामेव शताब्द्यां कतिपयवर्षान् डेनिशजातीयैरपि भारते पदारोपः कृतः परन्त्वेतेषां भागदेयमदिष्टावहमेव वरिवर्तिस्य। डचजातीयाः प्रबला आसन्। अस्यामेव शताब्द्यामांगम देशीयानां सामुद्रिक वणिजशूराणां डच जातीयैः सहात्यन्तं कलहः सञ्जातो येनाङ्गलजातीयाः डच प्रभृतीन् सर्वान् समुद्रे विजित्य भारतवर्षे स्वकीयं सम्बन्धं प्रत्यष्ठापयन्। प्रथमत आङ्गल वसतिः (Settlement) १६०८ ईस्वीयाब्दे सूरत देशे निर्मिता।

मुग़ल सम्राजां राज्ये चांगलाः भारते वसतिं स्थापयितुमाज्ञप्ताः। वाणिज्यमिषेणै तैरात्मानं स्थिरीकृत्य कलहं कुर्वतां केषाञ्चिद् भारतीयराज्ञां पक्षमवालम्बयन् येनाङ्गलाः स्वाधिकारं कतिपय भारतीय प्रान्तेषु संवर्ध्य भारतवर्षस्य सर्वं राज्यमेवावन्ते ग्रजहुः। सूरत प्रदेशे व्यापारं संवर्ध्य दक्षिण भारते मोहमय्यां (Bombay Presidency) अन्यत्र च पश्चिमदक्षिण खण्डेषु स्वव्यापारगृहान्य-

स्थापयन्। बम्बे प्रेज़ीडेंसी पूर्वं पुर्चगीज़ानामासीत्। मोहमयी (Bombay) नाम्ना नगरी पुर्चगीज़ैरांगलेभ्यः पुर्चगीज़राज्यकुमार्या आंगलराज्ञा चार्लसाभिधानेन सहोद्वाह काले दायभागरुपेण वितीर्णा। मद्र (Madras) प्रदेशेऽपि स्थानानि क्रीत्वा स्वप्रभावमवर्धयन्।

## कलिकाता नगरी—

पश्चिम दक्षिण भारतेऽप्यांगलाः सौवं महिमानं सम्यक् पुपोष्य वहुषु स्थलेषु स्वराज्यं (आंगलराज्यं) प्रतिष्ठाप्य पूर्वं तटेष्वपि वाणिज्य-कार्यालयानि संस्थापयामासुः। १६५१ ईस्वीयाब्दे हुगली नद्यां वसतिं कारयामासुः। १६६० ई० वर्षे सम्राजावरंगज़ेबस्याज्ञया कलिकाता नगरेऽप्यापणान्युद्घाटयामासुः। प्रथमं सूतानुति ग्रामं प्राप्तम्। तद-नन्तरं बहूनि स्थानानि स्वाधीनानि कृत्वा महत् दुर्गं—फ़ोर्ट विलियम नाम्ना कलिकातायामेव निर्ममुः। १७०० ई० वर्षे पूर्वं देश व्यापार संघेन (East India Co.) सूतानुति कलिकाता गोविंदपुर ग्रामानि च क्रीतानि यत् महत् कलिकाता नगरं विद्यते। तस्मादेव कालात् शनैः २ कलिकाता नगरी उन्नतिं प्राप्यांगलराज्ये द्वितीयं ब्रहत् स्थानं लेभे, यस्य कीर्तिर्यशः सर्वत्र संसारे श्रूयते।

१७४२ ई० वर्षे महाराष्ट्रदेशीयराज्ञां भाग्यमुदयमगात् तैस्तु किञ्चित् कालमांगलानां प्रभावोऽपि स्थगितः। परं १७५६ ईस्वीयाब्दे ब्लेकहोल (Black hole) नामोपद्रवानन्तरं पलासी युद्धे आँगल-विजयेन च सर्वेषामन्येषां भारतराज्यार्थं युयुत्सूनामुत्साहो ममन्द। तदनन्तरं कलिकाता नगरस्येतिहासः भारते बृटिश ( British ) राज्येतिहासकल्प एव। तेषाञ्च राज्य चमत्कारो राज्यगौरवं राज्य-वृद्धिः कलिकातायाश्च महत्युन्नतिः समकालीनैव। कलिकाता नगरी भारतवर्षस्य राज्यधानी १७७४ ई० तः १९१२ ई० यावतासीत्। १९१२ ईस्वीयाब्दे तु महाराज जार्ज पञ्चमेन। युनर्देहलो नगरी भारत-स्य राज्यधानीति स्वीकृता।

## आधुनिक कलिकाता नगर्यां सरस्वती मन्दिराणि कलाकौशलञ्च—

कलिकाता नगरे दिदृक्षोरामोद प्रमोदार्थं बहूनि स्थानानि विद्यन्ते ।

### होड़ा प्रतरं ( Howra Bridge )—

दिदृक्षोचक्षुषी पूर्वं हूगली नद्याः महति होरा प्रतरे पततः । होड़ा रेलवे स्टेशनतः (Railway station) (यत्र वाष्पयशकटानां विराम-स्थानं) कलिकातायामागमनाय महती प्रतोलिरियं यस्यां मोटरशक-टादीनि चलन्ति, नीचैस्तु यावदावश्यकं समुद्रे वाष्पनावः (Steam ships) वहन्ति ! महानद्भुतः प्रबंधोऽयं येन निश्चित वेलायां प्रत्यहं प्रतरोऽयंद्विधा विभिन्नो भवति उच्चैश्च गच्छति । तस्मिन्नेव काले सामुद्रिकवाष्पनावः प्रतरस्य परं पारं गच्छन्ति । हुगलि नद्या ब्रहत् पाटं यस्मिनदूर एव वाष्पनावः समुद्रयात्रार्थं चलन्ति । कलिकातातः ५ योजन मात्रं (४० मील पर्यन्तं) हुगली नदी तदनन्तरं बृहत् सगमं यत्र हुगली समुद्रेण मिलति । तस्मात् स्थानात् यात्रिणः समुद्रना-विकासु ब्रह्मदेशेषु (Burma) गच्छन्ति अन्यत्र च पूर्व समुद्रे लङ्का-देशादीना यात्रायां पन्यानो विद्यन्ते । हुगली नद्याः कलिकाता पार्श्वं एव आस्रमघाट (Osram Ghats) नाम्ना स्थानं वर्तते यदतीव रमनीयं दृश्यम् । तस्मादेव स्थानात् सामुद्रिक नाविकायां समुद्र यात्रार्थं यात्रिण आरोहन्ति अवरोहन्ति च ।

### चौरङ्गी—

...... नाम्ना बृहत् पन्था विद्यते यत्र धनाढ्यानां वणिजानामापणानि बहूनि रङ्गग्रहाणि पाकशाला सिनेमा होटलेत्यादयः वर्तन्ते । सर्वसंसा-रस्य यात्रीणां भ्रमणस्थानमेव तत् । पाश्चात्यानां कार्यालयान्यप्य-त्रैव । वङ्गदेशशासकस्य ( गवर्नर महोदयस्य ) राज्यग्रहस्थानमपि तन्निकटमेव । कतिपययोजन पर्यन्तं चौरङ्गी पन्था गच्छति । पार्श्वे-ऽस्यानेनैव मार्गेण कलिकाता ट्रेम ( Tram ) त्र्यद्यतशकटमीति वहति ।

## मैदान

सम्मुखे चौरङ्गेः महान् विशाल मैदान ( Maidan ) भूमिखण्ड इति वर्तते यः कलिकातायाः श्वासस्थानमस्ति। हुगली नद्याः कतिपय योजनानि (४-५ मील पर्यन्तं) महान्तः पन्थानः प्रारभन्ते येषु एस्प्लेननेड चौरंगी इत्यादयः पंथानः आगच्छन्ति। सर्वेषां तेषां सन्मुखे मैदानोयं दृष्टिगोचरो भवति। कलिकातायाः रमणीयता मैदानेन विना विलुप्ता स्यात्। कलिकाता नगरी मैदानेनानेन सुशोभिता मनोरञ्जिका सहस्रशः नारीपुरुषाणामामोदाय वर्तते। वंगशासकस्य निकट एव रमणीयमुपवनं एस्प्लेनेड गार्डेन ( Esplanade garden ) इति तदनन्तरं विशालमुद्यानं ईडन गार्डेन ( Eden garden इति चक्षुषी आनन्दयति। अति सुन्दरं सरः कमलपुष्पैः सुशोभितं ईडन गर्डेन मध्ये वर्तते। अस्मिन्नेव मैदान मध्ये कतिपयांगलमहापुरुषाणां शिलामूर्तयः सन्ति। केषाञ्चिद् भारतराज्याङ्गल प्रतिनिधीनां ( Viceroy ) आंगलमहानुभावानाञ्च शिलाकृतयः मैदानस्य विशेष स्थानेषु वर्तन्ते।

## फ़ोर्ट विलियम

अस्मिन्नेव भूमिखण्डे फ़ोर्ट विलियम नाम्ना प्रसिद्धं दुर्गं (Fort william) हुगली समीपे मैदानस्य पार्श्वे एकस्मिन्नस्ति। पूर्वस्मिन् काले आंगलैः यदा कलिकाता नगरे वसतिः स्थापिता बलञ्च किञ्चिद् प्राप्तं दुर्गमिदं निर्मितं यत्रांगल बलादिकमस्ति। तस्मादेव कालात् फ़ोर्ट विलयमांगलानां वृहत् स्थानं यस्याग्रे सर्वदिक्षु परिकरोऽस्ति। इदानीमपि अत्रैवांगलबलानि निवसन्ति। मैदान मध्ये क्रीड़ा व्यायामार्थमागच्छन्ति। मैदानस्यास्यैकस्य पार्श्वे प्रतिवर्षं प्रथम जनवरी दिवसे ( New Years parade ) आंगबलानां युद्ध क्रीड़ा भवति। प्रतिवर्षञ्च राज्यप्रतिनिधिः ( Viceroy ) सर्वसेनानां नमस्कृति सन्ततोः स्वीकरोति।

बृहत् मैदानस्यास्य फ़ोर्ट विलयमस्याग्रे अतिरमणीयं त्रितीय-मुपवनं वरिवर्ति ।

## महाराणी विक्टोरियाया स्मारकम्

यस्मिन् महाराज्ञाः विक्टोरियायाः स्मारकं स्थापितमस्ति विक्टोरिया मेमोरियल इति प्रसिद्धं स्थानम् । विक्टोरिया मेमोरियल भवनं महत् विशालं सुन्दरञ्च विद्यते रिक्ते । नयनान्ददायिने महावृक्ष-गुल्मगुच्छपुष्पलता युक्ते उद्यने विक्टोरिया मेमोरियल भवनस्य बृहत् स्थानमपि शोभनतमं दरिदृश्यते । चित्र कलाकौशल युक्तानि बहूनि आगाराणि विशेष चित्रैः विक्टोरिया कालात् पूर्वं तत्कालीनानि च महाराणी विक्टोरिया बाल्यकालात् मरण पर्यन्तं चित्राणि शोभ-नानि दृग्पथमायान्ति । बृहदागारे एकस्मिन् आंगलानां भारतीयैः सह दक्षिण भारते उत्तर भारते च युद्धानि चित्रितानि सन्ति । कर्ना-टक मैसूर टीपू सुलतानस्य युद्धानि सिक्ख वीराणां पञ्चनदरक्षण चित्राणि महाराष्ट्रीयाणां स्वगौरवरक्षण चित्राणि सर्वान्या-लेखितानि ।

## अन्यास्मिनागारे

मुग़लराजभिः सहांगलशासकानां भारतराज्यप्रतिनिधीनां पत्र व्यवहाराः पारसी भाषायामांगल भाषायाञ्च हस्त लिखिताः सुरक्षिताः । बहूनि चित्राणि शिलामूर्तयो बहूमूल्यान्या सामग्री च । पुस्तकालयोऽपि एको महान् विद्यते । न च सर्वं वस्तूजातस्य भवने संग्रहीतस्य नामान्यपि स्मर्तुं शक्यते ।

## कालिकाता कौतकागारः ( Calcutta Museum)

भारतवर्षे प्रायशः महानयम् । प्राचीन भारतस्य गौरव दर्शकानि बौद्धकालीनानि तक्षशिला नालेंदेत्यादि देशविशेषेभ्यः आनीतानि बहूनिवस्तूनि शिलामूर्तयश्च चित्राणि पुस्तकानि प्रचीनभारतीय कला-कौशल दर्शकानि पटवस्त्रजजातानि मृतभाडानि सहस्रप्रकारकानि

वस्तूजातानि मध्येऽस्मिन् कौतुकागारे विद्यन्ते। पशुपक्षीणामस्थीनि सामुद्रिक महा जन्तूनां मत्स्यकच्छप कूर्मानां महत् पञ्जराणि तेषामाकृतयश्च मृदङ्गवादित्रादीनि संख्यातीतानि संग्रहीतानि। सम्यक् निरीक्षणायास्य बहूनां दिनानामावश्यकता भवति। [क्रमशः]

कुलभूषणः

---

## परमावश्यकी सन्ध्या

(ले० पं० मुकुन्दराम शास्त्री उपदेशकः, कथावाचक-श्री प्रताप सभा, मुख्याध्यापकः स० ध० पाठशाला श्रीनगर)

"अहरहः सन्ध्यामुपासीत" इति भगवतो वेदस्यानुशासनात् सन्ध्योपासनं हि समस्तनित्यनैमित्तिककर्मणां मूलभूतं निखिलाधि-व्याधिविध्वंसकं बाह्याभ्यन्तरमलनिर्मोचनं स्वास्थ्यवर्धकमायुष्यं च परमावश्यकं कर्म। यदाचरणं परमो धर्मः। धर्ममूलस्य वेदस्य निखिलधर्मानुशासनं मनुष्यमात्रस्याभ्युदयनिःश्रेयससि-द्ध्यै। "यतोऽभ्युदयनिः श्रेयससिद्धिः स धर्मः" इत्युक्तम्। प्रभुस-म्मितस्य वेदस्याज्ञानुलङ्घनीया यतः। अतोऽस्य कर्मण अपि प्रति दिनमुपासनं परमं कर्तव्यम्।

समस्तशुभकर्मणां मूलभूतस्य मुख्यस्यास्य कर्मण आवश्य-कता युक्तिप्रमाणाभ्यां निरूप्यतेः—संसरणशीलेऽस्मिन्संसारे नानायोनिषु परिभ्रमन्नयं जीवः सत्कर्मवशात् कदाचिदाप्नोति मानुष्यं जन्म। यस्मिन् वेदोदितकर्माचरणे नान्तःशुद्धौ स्वात्मज्ञानस्फु-रणादूगमनागमनाभ्यां विप्रमुच्यते। तेष्वखिलेषु कर्मसु "सन्ध्योपा-सनं" प्रधानं कर्म येन चतुर्वग सिद्धिः।

सम्यग् ध्यायते परब्रह्मानयेति सन्ध्या। अहोरात्रसंयोगः सन्ध्या। इति परब्रह्मध्यानात्मकस्य कर्मणः प्रत्यूष-रजनीमुखका-लस्यास्य चोक्तत्वात्स एव संध्योपासनस्य कालः। यदुक्तम्—"अहो

रात्रस्य योगे सन्ध्यामुपासीत" उभयोः संध्ययोर्नैसर्गिकी शान्तिर्भवति। अतः स्ववसरोऽयं ब्रह्मध्यानस्य।

सन्ध्योपासनालाभः। "उद्यन्तमस्तं यान्तमादित्यमभि—
ध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमाश्नु॥ (तै० आ०)
यदह्ना कुरुते पापं तदह्ना प्रतिमुच्यते।
यद् रात्र्यात्कुरुते पापं तद्रात्र्यात्प्रतिमुच्यते॥ (तै० आ०)
पूर्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति।
पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम्॥ (मनु० २। १०२)

अस्मिन्नित्यकर्मणि यानि प्राणायामाचमनोपस्थानजपादीनि कर्माणि विहितानि तानि सर्वथा प्रत्यक्षलाभदायकानि।

तत्र प्राणायामेन—पूरकावस्थायां शुद्धस्य वायोः (oxygan) अन्तः पूरणात् रेचकेनान्तर्गतस्य दूषितस्य वायो (Carbonic acid gas) र्बहिर्निर्गमनाद्रक्तशुद्धिः पार्श्वबलवृद्धिश्च जायते। रक्तशुद्ध्या तद्विकारोद्भवा रोगा नश्यन्ति। पार्श्वबलवृद्ध्या च पार्श्वशूल (Neumonia) राजयक्ष्मादयो (Thisis) घातका रोगा नाभिभवन्ति।

आचमनेन—परिमितस्य निर्मलजलस्य प्रातः पानं कफ-वात-पित्त वैषम्यदोषानपाकरोति। कोष्ठबद्धता (कब्ज़ी) मुन्मोचयति मनः प्रसन्नतां च जनयति। यदायुर्वेद (उषापान) इति नाम्ना प्रसिद्धम्।

उपस्थानेन—सूर्योपस्थित्या (Sun Bath) स्नाननिर्मलीभूत शरीरान्तवर्तिरोमकूपमार्गेण रविकिरणप्रवेशाद् रक्तशुद्धिरस्थिस्थैर्यं रोगोत्पादक किटाणु (germs) नाशश्च भवति।

जपेन तु—भगवत्स्मरणेनान्तः शुद्धिः परमसुखलाभश्च। किं बहुना सन्ध्योपासनयैहिकामुष्मिकसुखलाभः। अतोहि प्राणायामादिकर्मस्वेतान् गुणान् विमृशद्भिः पाश्चात्यैर्भिषग्वरैस्तेषामुपयोगोऽत्यावश्यकः स्वास्थ्यहेतुश्च निर्णीतः। ये तु प्रमादादालस्यादश्रद्धया वा शरीराधार भूतंमुख्यं नित्यकर्मोपेक्षन्ते ते बहुभिः प्रत्यवायैः

प्रबाध्यन्ते। "नित्यस्याकरणे प्रत्यवायः" इत्युक्तत्वात्। सन्ध्योपासनाहीनस्य द्विजकर्माचरणे नाधिकारः, यदुक्तं मनुना—

नानुतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः॥ (२।१०म)

तथा च श्रीदक्षः—

सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु।
यदन्यत् कुरुते कर्म न तस्य फलभाग्भवेत्॥

इत्याद्युक्तत्वादिदमत्यावश्यकं कर्म सदोपास्यम्। वेदविहित कर्माचरणे शैथिल्यादेवास्माकमीदृशी शोचनीयावस्था सञ्जाता। अतोऽस्य प्रथमावश्यककर्मणो यथापूर्वं प्रचारो भविष्यति, तथा धर्मधुरन्धरैः कृपया वा देशोन्नत्यै वा पूर्वाचार्यधर्ममर्यादापरिरक्षणाय वा दोषारोपभयेन वा प्रयतितव्यम्।

अत्र जम्बूकाश्मीरराजकीय-धर्मार्थविभागाध्यक्षमहानुभावैः स्वकीये विभागे प्रतिप्रान्तं प्रतिस्थानं तदधीनकार्यकर्तॄणां कृते संध्योपासनमत्यावश्यकमाज्ञप्तं, येनात्र चत्वारिंशद्वर्षदेशीया अपि सन्ध्योपासनामन्त्रान् पठित्वा कण्ठस्थीकृत्य च सन्ध्योपासनं कर्तुं प्रवृत्ताः। धर्मार्थविभागाधिकारिणामिदं कर्मातिप्रशंसनीयमस्ति। यद्येवं सर्वे धर्मानुरागिणः प्रयतेयुस्तर्ह्यचिरादेवास्माकं पुनरभ्युदयो भवेदिति शम्।

भद्रं पश्येम प्रचरेम भद्रं भद्रं वदेम शृणुयाम भद्रम्। तन्नो मित्रो वरुणो मामहान्ता मदितिः सिन्धुः पृथिवी उत द्यौः।

———

# धर्मे सर्वं प्रतिष्ठितम्

ले० पं० शिवनाथ शर्मा शास्त्री साहित्यभूषण: साहित्यमणि: श्रीनगर काश्मीर

खलु जगति सर्वो भूतसंघात उभयलोक संसिद्ध्यै यं कञ्चिद्धर्ममवलम्ब्य जगत्यां दरीदृश्यते। किञ्च—"ज्योतींषि यद्दिवि चरन्ति यदन्तरिक्षे सूते पयांसि यदहिर्धरणीं च धत्ते। यद्वाति वायुरनलो यदुदर्चिरास्ते तत्सर्वमेव हि सदा किल धर्मनिष्ठम्॥" सत्येवं? मर्त्या धर्मभाजो धर्मनिष्ठा वा किं न भवेयुः। तत्र मुनीनां धर्मतत्त्वप्रदर्शकानां बहुत्वात्तन्निर्दिष्टधर्मस्यापि वेदान्त-न्याय-सांख्य-योग शैव-शाक्त-पाशुपतादि मतनामान्तराद्बहुविध्यमस्ति। तत्तन्मतानुयायिनस्तत्तन्मतसरणिमुररीकृत्य तत्तद् धर्मेण धृता विध्यन्ते। धर्ममार्गप्रवर्तकानां मध्ये श्रेष्ठकक्ष्यावर्तमानो धर्मधुरन्धरो मीमांसा दीपप्रकाशप्रकाशस्तत्र भगवाञ्जैमिनिरपि स्वमतानुभूतं मीमांसाधर्ममुपदिदेश। तस्य सकलस्य यथा गतार्थभूतं स्वल्पकर्गलपत्र व्ययेन मीमांसासारं पाठकमहाशयानां पुरस्तादुपढौकयामि।

## अथातो धर्म जिज्ञासा।

'अथ' शब्दो वेदाध्ययनानन्तर्य वचनः, 'अतः' शब्दो वेदाध्ययनस्य दृष्टार्थत्वं ब्रूते "स्वाध्यायोऽध्येतव्यः" अर्थज्ञानरूपफलत्वाज्जिज्ञासा कार्या। अथ को धर्मः? अत आह—"वेदप्रतिपाद्यप्रयोजनवदर्थो धर्मः यागादिः, यजेत स्वर्ग कामः। यजेतेति गम्यतेऽत्र धातुप्रत्ययौ तस्य द्वावंशौ लिङ्गमाख्यातत्वमुभाभ्यां, भावना भवितुर्भावनानुकूलो भावयितुर्व्यापारविशेषः।

सा द्विधा शब्दभावना आर्थी च। पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषोऽलिङ्गांशेनोच्यते, सा चांशत्रयमपेक्षते साध्यं साधनमिति कर्तव्यता किं भावयेत् केन भावयेत् कथं भावयेत्। प्रयोजनेच्छाजनितक्रियाविषयव्यापार आर्थी भावना। साध्यं स्वर्गादि, साधनं यागादि इति, कर्तव्यता प्रयाजादि। अपौरुषेयं वाक्यं वेदः

विधिमन्त्रनामधेयनिषेधार्थवादभेदात्पञ्च विधः। अज्ञातज्ञापको वेदभागो विधिः, यजेत स्वर्गकामः। यत्र कर्ममानान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्रं विधत्ते, दध्ना जुहोति। यत्र तूभयं प्राप्तं तत्र विशिष्टं विधत्ते, सोमेन यजेत सोमविशिष्टयागविधानम्। विधिश्चतुर्विधः—उत्पत्तिविधिर्विनियोगविधिरधिकारविधिः, प्रयोगविधिः। कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः अग्निहोत्रं जुहोति। अङ्गप्रधानसम्बन्ध बोधको विधिर्विनियोगविधिः, दध्ना जुहोति। एतस्य विधेः सहकारिभूतानि षट् प्रमाणानि श्रुतिलिङ्गवाक्यप्रकरण समाख्यानि। निरपेक्षो रवः श्रुतिः, सा त्रिविधा विधात्री अभिधात्री विनियोक्त्री। आद्या लिङाद्यात्मिका, द्वितीया व्रीह्यादि श्रुतिः। यस्य च शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते सा विनियोक्त्री। सा त्रिधा विभक्तिरूपा, एकाभिधानरूपा,एकपदरूपा। विभक्तिश्रुत्या यागाङ्गत्वं, व्रीहिभिर्यजेत। द्वितीया पशुना यजेत। एकत्वपुंस्त्वयोरेकाभिधानेनाङ्गत्वं यागस्य। ऐन्द्र्या गार्हस्पत्यमुपतिष्ठेतेति। द्वितीयश्रुत्या गार्हस्पत्योपस्थानम्। शब्द सामर्थ्यं लिङ्गम्। यथाहुः—सामर्थ्यं सैव शब्दानां लिङ्गमित्यभिधीयते।" इति सामर्थ्यं रूढिरेव नतु समाख्या, अतो नाभेदः। बर्हिर्देवसदनं, दामि कुशलवणाङ्गत्वं न तूलपाद्यङ्गत्वं, एवमन्यत्रापि विनियोगो ज्ञेयः। समभिव्याहारो वाक्यम्। समभिव्याहारश्च साध्यत्वादि वाचकद्वितीयाद्यभावेऽपि शेषशेषिवाचकयोः सहोच्चारणात्। यस्य पर्णमयी जुहूर्भवति, न स पापं शोकं शृणोति। पर्णता जुह्वो समभिव्यहारादेव पर्णताया जुह्वङ्गत्वम्। यत्र समग्राङ्गोपदेशः सा प्रकृतिः। दर्शपूर्णमासादि, तत्प्रकरणे सर्वाङ्गपाठात्। यत्र न समग्राङ्गोपदेशः सा विकृतिः। सौर्यादिः, तत्र कतिपयाङ्गानामतिदेशेन प्राप्तत्वात् अनारभ्यविधिः सामान्यविधिः। इन्द्राग्नी इदं हविः, एकवाक्यत्वाद्दर्शाङ्गत्वम्। उभयाकाङ्क्षा प्रकरणम्। उपकार्यो दर्शपूर्णमासादि, उपकारकाकाङ्क्षास्वर्गादि, समिदो यजति। शब्दभावनाफलयोरनिर्देशात्। प्रकरणं

द्विविधं, महाप्रकरणमवान्तरप्रकरणम्। मुख्यभावना सम्बन्धि प्रकरणं महाप्रकरणम्। प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम्। अङ्गभावना सम्बन्धि प्रकरणमवान्तरप्रकरणम् । अभिक्रमणादीनां प्रयाजाङ्गत्वं सन्दंशेन ज्ञायते। एकाङ्गानुवादेन विधीयमानयोरप्यङ्गयोरन्तराले विहितत्वं सन्दंशः। यथा अभिक्रमणादीनाम्। अङ्ग इति प्रसिद्धः। देशसामान्यं स्थानम् । तद् द्विविधम्, पाठसादेश्यं-अनुष्ठानसादेश्यम् । आद्यं द्विविधम्, यथासंख्यपाठः सन्निधिपाठश्चेति। ऐन्द्राग्नमेकादशकपालं निर्वपेत् । वैश्वानरं द्वादशकपालं निर्वपेत् यथासंख्यस्थानेन वाक्यम् । सन्निधिपाठश्च दार्शपौर्णमासादि, तत्र सर्वकर्मणा अन्यापेक्षा। प्रकृतिवद्विकृतिकार्येत्यतिदेशेन। समाख्या यौगिकः शब्दः। सा द्विविधा लौकिकी वैदिकी, यथा होतृचमसः होतुश्चमसः । आध्वर्यवम् अध्वर्योरिदमाध्वर्यवम् । एवं संक्षेपतो निरूपितानि षट् प्रमाणानि। दर्शपूर्णमासाभ्यां यजेतेत्यङ्गानि द्विविधानि, सिद्धरूपाणि क्रियारूपाणि, जातिद्रव्यसंख्यादीनि क्रियारूपाणि, द्विविधानि गुणकर्माणि प्रधानकर्माणि तच्च दृष्टार्थमदृष्टार्थं मवघातादि, प्रोक्षणादि पशुपुरोडाशादि संक्षेपतो विनियोगविधिः।

प्रयोगप्राशुभाव सम्बन्धबोधको विधिः प्रयोगविधिः। अङ्गानां क्रमबोधको विधिः प्रयोगविधिरित्यपि लक्षणम्। क्रमो नाम विततिविशेषः पौर्वापर्यरूपो वा, तत्र षट् प्रमाणानि श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यानि, क्रमपरं वचनं श्रुतिः तद् द्विविधं केवल क्रमपरं, तद्विशिष्टपदार्थपरं, वेदं कृत्वा वेदिं करोति। यत्र प्रयोजनवशेन क्रमनिर्णयः स अर्थक्रमः, अग्निहोत्रं जुहोति, यवागूं पचति। यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन क्रमः। पदार्थबोधकवाक्यानां क्रमः पाठक्रमः। यथाप्रत्ययं च पदार्थानामनुष्ठानम्। सच द्विधा मन्त्रपाठो ब्राह्मणपाठः। आग्नेयाग्निषोमेयं प्रयोगाद्बहिर्वेदं कार्यम्। स्थानं नामोपस्थितिः। ज्योतिष्टोमे त्रयः पशुयागाः। अग्नीषोमेयः, सवनीयः, आनुबन्ध्य इति। प्रधानक्रमेण योऽङ्गानां क्रमः

स मुख्यक्रमः। द्वितीयादिपरार्थानां प्रथमानुष्ठितपदार्थक्रमाद्यः क्रमः स प्रवृत्तिक्रमः निरूपितः षड्विधकर्मनिरूपणेन प्रयोगविधिः।

कर्मजन्यफलसाम्यबोधको विधिरधिकारविधिः—यजेत स्वर्गकामः। स्वर्गमुद्दिश्य यागं विदधतानेन स्वर्गकामस्य यागजन्य फलभोक्तृत्वं प्रतिपाद्यते। प्रयोगसमवेतार्थस्मारकाः मन्त्राः। नानासाधनसाध्यक्रियायामेकसाधनप्राप्तौ अप्राप्तस्यापरसाधनस्य प्रापको विधिर्नियमविधिः। यथाहुः—

"विधिरन्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्रा चान्यत्र चाप्राप्तौ परिसंख्येति गीयते॥१॥

प्रमाणान्तरेणाप्राप्तस्य प्रापको विधिरपूर्वविधिः—यजेत स्वर्गकामः। पक्षे प्राप्तस्य प्रापको विधिर्नियमविधिः—व्रीहीनवहन्ति, अपूर्वार्थे विधिः। उभयोश्च युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसंख्याविधिः। पञ्च पञ्चनखा भक्ष्याः, रागप्राप्तनियमप्राप्ता पञ्चनखभक्षण निवृत्तिपरा। सा द्विधा श्रौती लाक्षिणिकी। पञ्च पञ्चनखा भक्ष्याः प्रसिद्धा श्रौती, लाक्षिणिकी अत्रैवेतरनिवृत्तिवाचकपदाभावात्। एषा त्रिदोषग्रस्ता। श्रुतहानिरश्रुतकल्पना प्राप्तबाधः। श्रुतपञ्चनखभक्षणहानाद् अश्रुतपञ्चनखभक्षणनिवृत्तिकल्पनात् प्राप्तस्य पञ्चनखभक्षणस्य बाधात्। नामधेयं च निमित्तचतुष्टयात्। उद्भिदा यजेत पशुकामः, उद्भिद्वता यागेन मत्वर्थलक्षणाभावात्। चित्रया यजेत पशुकामः, कर्मनामधेयत्वं वाक्यभेदभयात्। अग्निहोत्रं जुहोति, कर्मनामधेयत्वं तत्प्रख्यशास्त्रात्, श्येनाभिचरन्यजेत, श्येनशब्दस्य कर्मनामधेयत्वं तद्व्यपदेशात्। तद्बाधकं द्विविधं, तस्य व्रतमित्युपक्रमो यथा—नेक्षेतोद्यन्तमादित्यम्। विकल्पप्रसक्तिः याजतिषु येयजामहं करोमि नानुयाजेषु। प्राशस्त्यनिन्दान्यतरपरं वाक्यमर्थवादः। स्वर्गकामो यजेत, सद्विविधः—विधिशेषो निषिशेषश्चेति। वायव्यं श्वेतमालभेत भूतिकामः। वायुर्वै क्षेपिष्टो देवता। बर्हिषि रजतं न देयमिति विधिनिषिशेषे नार्थवादः। सत्रेधा—विरोधो गुणवादः

स्यादनुवादेऽवधारिते । भूतार्थवादस्तद्ध्यानादर्थवादस्त्रिधा मतः। आदित्यो यूपः, यूपे आदित्याभेदस्य प्रत्यक्षबाधितत्वादादित्यवदुज्ज्वलत्वरूपगुणोऽनेन लक्षणया प्रतिपद्यते। प्रमाणान्तरावगतोऽर्थं बोधकोऽनुवादः। "अग्निर्हिमस्य भेषज"मिति हिमविरोधित्वस्याग्नौ प्रत्यक्षावगत्वात्। प्रमाणान्तरविधि तत्प्राप्तिरहितार्थबोधकोऽर्थवादो भूतार्थवादः। यथेन्द्रो वृत्राय वज्रमुदयच्छत्। यजेत स्वर्गकामः इति। सोऽयं धर्मो यदुद्दिश्य विहितस्तदुद्देशेन क्रियमाणस्तद्धेतरेश्वरार्पणबुध्या क्रियमाणस्तु निश्रेयसहेतुरिति शिवम्।

---

# अन्त्यजानां मन्दिर प्रवेशेऽनधिकारः

२

( पूर्वतोऽनुवर्तते )

( श्री दीनानाथ शर्मा शास्त्री, स० ध० कालेज, अध्यापकः मुलतानस्थः )

'सूतम्' यजुः ३०।६ क्षत्रियाद् ब्राह्मण्यां जातं परासुव। 'अन्तकाय श्वनिनम्' ३०।७ हिंसक तथा कुत्ते के पालने वाले चाण्डालादि को दूर बसावें, इति दयानन्दभाष्यम्। अत्र श्वनिनमितिपदेन चाण्डालस्य ग्रहणं समूलकम्, तथा च मनुः—( चाण्डालश्वपचानान्तु बहिर्ग्रामात् प्रतिश्रयः। अपपात्राश्च कर्त्तव्या धनमेषां श्वगर्द्दभम्, १०।५१ 'न तैः समयमन्विच्छेत् पुरुषो धर्म्ममाचरन्, मनु० १०।५३। यद्येवं वेदेन तदनुसारिणा मनुना च चाण्डालादीनां बहिर्निवासनं प्रोक्तम्, सुधारकाऽग्रणीः स्वा० दयानन्दोऽपि यमर्थं स्वयमनुवदति, तर्हि तत्रैवं कथनं यद्—वेदे न क्वाऽपि भेदवाद, इति महलाऽऽटोपेन लेखनञ्च वक्तुर्लेखकस्य च साहसं वेदाऽदर्शनञ्चोपोद्बलयति। एवन्तु भवन्तो यत् किमपि कुर्वन्तु—भवत ः को रुणद्धि; परन्त्वत्र वेदानां स्मृतीनां पुराणानां वा नाम न मलिनयन्तु, यत्—तत्राऽभेदवादो लिखित इति। अस्पृश्येष्वपीदृश्यो जातयो या मिथः स्पर्शं न कुर्वन्ति, तर्ह्यस्मास्वेव स कलङ्कः कथमारोप्यते ?

अत्र विषये स्वा० दयानन्दस्याऽपि स्पष्टशब्दाः श्रोतव्याः—

'जैसे अन्त्यजों की दुर्गन्ध के सहवास से पृथक् रहने वाले बहुत अच्छे हैं; जैसे अन्त्यजों की दुर्गन्ध के सहवास से निर्मल बुद्धि नहीं होती, वैसे तुम और तुम्हारे संगियों की भी बुद्धि नहीं बढ़ती, सत्यार्थप्रकाश १२ पृ० ५७८ (गु०) स्वाम्यनुयायिनः सावधानं पठन्त्विदं वचनम्। केचिच्च महाशया अभेदवादस्योद्घोषणं कृत्वा तैस्सह सहभोजादिकमपि चिकीर्षन्ति, अकुर्वंश्च अजमेरादिके; तेऽपि स्वस्वामिनः स्पष्टं वचनं शृण्वन्तु—

(प्रश्न) कहो जी, मनुष्य-मात्र के हाथ की की हुई रसोई के खाने में क्या दोष है; क्योंकि—ब्राह्मण से लेके चाण्डालपर्य्यन्त के शरीर हाड़मांस चमड़े के हैं, और जैसा रुधिर ब्राह्मण के शरीर में है, वैसा ही चाण्डालादि के, पुनः मनुष्यमात्र के हाथ की पकी हुई रसोई के खाने में क्या दोष है?

(उत्तर) दोष है, क्योंकि—जिन उत्तम पदार्थों के खाने-पीने से ब्राह्मण और ब्राह्मणी के शरीर में दुर्गन्धादि दोष रहित रजवीर्य उत्पन्न होता हैं, वैसा चाण्डाल का शरीर दुर्गन्ध के परमाणुओं से भरा हुआ होता हैं, वैसा ब्राह्मणादि वर्णों का नहीं, इसलिये ब्राह्मणादि उत्तम वर्णों के हाथ का खाना, और चाण्डालादि नीच भंगी चमार आदि का न खाना। भला जब कोई तुम से पूछेगा कि—जैसा चमड़े का शरीर माता, सास, बहिन, कन्या, पुत्रवधू का है, वैसा ही अपनी स्त्री का भी है, तो क्या माता आदि स्त्रियों के साथ भी स्वस्त्री के समान वर्तोगे? तब तुम को संकुचित होकर चुप ही रहना पड़ेगा। जैसे उत्तम अन्न हाथ और मुख से खाया जाता है, वैसे दुर्गन्ध भी खाया जा सकता है, तो क्या मल आदि भी खाओगे? क्या ऐसा भी कोई हो सकता है, पृ० ३३५ (गु०)।

'शूद्र के पात्र तथा उसके घर का पका हुआ अन्न आपत्काल

के बिना न खावें।''''''आर्य्यों के घर जब (शूद्र) रसोई बनावें, तब मुख बांध के बनावें, क्योंकि—उनके मुख से उच्छिष्ट और निकला हुआ श्वास भी अन्न में न पड़े, पृ० ३२८ (गु०)। इयं श्वासाऽपवित्रताया × कथाऽस्ति शूद्रस्य; तदा चाण्डालादिकस्य तु का कथा?

'(इन्होंने) अंगरेज़, यवन, अन्त्यजादि से भी खाने पीने का भेद नहीं रक्खा। इन्होंने यही समझा होगा कि—खाने-पीने और जाति भेद तोड़ने से हम और हमारा देश सुधर जायगा; परन्तु ऐसी बातों से सुधार तो कहां, उलटा बिगाड़ होता है। पृ० ४८० (गु०)।

कीदृशाः स्पष्टशब्दाः, सुधारकैः स्वनेतुरिमे शब्दा अवधेयाः।

'(प्रश्न) देखो—युरोपियन लोग''' ''होटल में सब के हाथ का खाते हैं—इसीलिये अपनी बढ़ती करते जाते हैं।

(उत्तर)—यह तुम्हारी भूल है, क्योंकि—मुसलमान, अन्त्यज लोग सब के हाथ का खाते हैं, पुनः उनकी उन्नति क्यों नहीं होती?' पृ० ४८१ गु०।

अन्यान्यपि स्वा० दयानन्दस्यैतद्विषये बहून्युद्धरणानि; यान्युपस्थापयितुं शक्यन्ते। स्वा० दयानन्द आधुनिकयुगस्य वैदिक× प्राचीनतापरिष्कर्त्ता च मन्यते तदनुयायिभिः; तर्ह्यस्त्वे कथं तदनुयायिनस्तद्वचनान्युपेक्षन्ते? कथं वा स्वयं निन्दितानां विषसम्पृक्ताऽन्नसदृशत्वेन च व्यपदिष्टानां पुराणादीनां स्वयमाश्रयं ग्रहीतुं तेऽद्यत्वे उत्कलिकाकुला दृश्यन्ते? स्वा० दयानन्दो द्विजबालकानां शूद्रबालकानाञ्च पाठशालामपि भिन्नां भिन्नां मन्यते, किम्पुनश्चाण्डालादिबालकानां द्विजबालकैस्सह पठनं रोचयेत? हन्त? कीदृक्षमिदं वैषम्यम्? तस्य शब्दा अमी—

'९ वें वर्ष के आरम्भ में द्विज अपने सन्तानों का उपनयन करके आचार्यकुल में'''''भेज दें और शूद्रादिवर्ण उपनयन किये बिना, विद्याभ्यास के लिये गुरुकुल में भेज दें, पृ० ३४ गुटका।

अत्र स्वा० दयानन्दो द्विजसन्तानानां पठनाय 'आचार्य्यकुलम्' आज्ञापयति, शूद्रसन्तानांश्च गुरुकुले पठनाय प्रेरयति। हंहों! कीदृशो भेदभावः स्वामिनाऽप्याज्ञप्तः। न जाने! तदनुयायिनस्तदाचरणं कुर्व्वन्ति नो वा?

वेदाऽनुसारिणी मनुस्मृतिश्चाण्डालादीनां स्पर्शमपि निषेधति, तदुक्तम्—'घ्राणेन सूकरो हन्ति पक्षघातेन कुक्कुटः। श्वा तु दृष्टिनिपातेन, स्पर्शेनाऽवरवर्णजः' मनु० ३। २४१ अवरवर्णजश्चाण्डालादिरित्यर्थः, स्पर्शेन हन्ति। कीदृशाः स्पष्टशब्दाः। कथं वेदानुसारिणी सा स्मृतिर्वैषम्यवादं वदति? तत्रेदमेव कारणम्, यद्—वेदे साम्यवादो नाऽस्ति, अथवेदमेव वाच्यम्—भिन्न-भिन्न जातीनां मिथः साम्यवादोऽवैदिकः। मनुना केवलं जीवन एव न, मरणेऽपि शूद्रस्पर्शो निषिद्धः। तथा च—'न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण नाययेत्। अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता' मनु० ५।१०४। गोभिलगृह्यसूत्रे शूद्रगृहाद् अग्न्यानयनमपि नादिष्टम्; तथा च—'आगाराद् ब्राह्मणस्य वा, राजन्यस्य वा, वैश्यस्य वा, १।१।६ एतदेवाऽभिलक्ष्य स्वा० दयानन्देनाऽपि 'संस्कारविधौ' पृ० २४ ब्राह्मण क्षत्रिय वा वैश्य के घर से अग्नि ला……अग्न्याधान करे, इति लिखितम्, इतोऽधिको भेदवाद: कोऽन्यो भवेत्? 'यथेमाम्' यजुः २६।२ इति मन्त्रे स्वा० दयानन्देन 'अरणाय—अन्त्यज के लिये इत्यर्थं कृत्वा सोऽन्त्यजश्शूद्रादपि भिन्नो मतः; तर्हि तस्य भेदवादे का नाम कथा? अतएव—'दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकां तथा। शवं तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुध्यति, मनु० ५।८५ दिवाकीर्त्तिः—चाण्डालः, तत्स्पर्शे सति स्नानेन शुद्धिरुक्ता। इत्थं शीतकालेऽपि वयं स्नानकष्टं स्वयमेव कुर्म्मः; चाण्डालेभ्यस्तत्-कष्टं न प्रदद्मः; परंत्वात्मनोऽस्पृश्यानां हितैषिणो मन्यमानाः सुधारका: परमचतुराः; ते स्वयं तु तत्स्पर्शेन शीते स्नानादिकष्टं नेच्छन्ति; परं तानादिशन्ति यद्—भवन्तः स्नानादिकं कृत्वाऽस्माभिस्सह स्पृशन्तु? धन्येयं तद्धितैषिता!

'पञ्चजना मम होत्रं जुषध्वम्' ऋ० १०।५३।४ इतिमन्त्रमुपन्यस्य श्रीविश्वदेवशास्त्रि-महोदयेन तस्य स्पष्टता न कृता, तत्र निरुक्ते ३।८।१ पञ्चजनाः— इत्यस्य 'गन्धर्व्वाः पितरो देवा असुरा रक्षांसी' त्येके—इति बहुसम्मतोऽर्थो लिखितः। किं श्रीमान् इममर्थं मनुते? यदि न—तत्र किं कारणम्? 'चत्वारो वर्णा निषादः पञ्चमः इत्यौपमन्यवस्यैकाकिनो मतम्' नामग्रहणादरुचिः सूच्यते। तर्हि कथमेकस्याऽर्थो मन्येत? अथवा मन्येताऽपि; तर्ह्यत्र किं नश्छिद्यते— निषादश्चाण्डालो न भवति—'ऋक्षीकाभ्यो नैषादम्' यजुः ३०।८ वायवे चाण्डालम्' यजुः ३०।२९ इति। 'कुलालवरुडकर्म्मारनिषादचाण्डालमित्रामित्रेभ्यश्छन्दसि' इति ५।४।३६ सूत्रस्थवार्त्तिकेन स्वार्थिकाऽण्प्रत्ययान्तयोः, निषादचाण्डालयोः पार्थक्येन ग्रहणम्। निषादोऽनुलोमजो भवति, चाण्डालस्तु प्रतिलोमजः। 'तस्माद् बीजं प्रशस्यते' मनु० १०।७२। 'बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते। सर्व्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता, मनु० ९।३५, 'यादृशं तूप्यते बीजं क्षेत्रे कालोपपादिते। तादृग् रोहति तत्तस्मिन् बीजं स्वैर्व्यञ्जितं गुणैः, ९।३६ 'इयं भूमिर्हि भूतानां शाश्वती योनिरुच्यते। न च योनिगुणान् कांश्चिद् बीजं पुष्यति पुष्टिषु॥ ९।३७ 'अन्यदुप्तं जातमन्यदित्येतन्नोपपद्यते। उप्यते यद्धि यद् बीजं तत् तदेव प्ररोहति, मनु० ९।४० —इत्युच्चवर्णपितुर्हीनवर्णा-मातर्युत्पन्नस्याऽनुलोमजस्य, हीनवर्णबीजाद् उच्चवर्णक्षेत्रे जातस्य प्रतिलोमजस्याऽपेक्षया श्रेयस्त्वं भवति। प्रतिलोमजः, तत्राऽपि चाण्डालस्तु अत्यन्ताऽधमो मतः, तथाच— 'चण्डालश्चाधमो नृणाम्, मनु० १०।१२, १०।१६ 'चाण्डालश्च नराऽधमः' १०।२६ 'यथैव शूद्रो ब्राह्मण्यां बाह्यञ्जन्तुं प्रसूयते' मनु० १०।३०। तेन चाण्डालादिकानां यज्ञसेवनेऽनधिकारः, यतस्ते 'शूद्राणां च सधर्म्माणः' मनु० १०।४१। परन्त्वनुलोमजास्तु तथा न निषिद्धाः, अत उक्तम्—'सजातिजाऽनन्तरजाः षट् सुता द्विजधर्म्मिणः' मनु० १०।४१। केवलं ते "स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्।

सदृशानेव तानाहुर्मातृ—दोषविगर्हितान्॥ मनु० १०।६ इत्यादिना मातृदोषमात्रविगर्हिताः, अतएव तेषां सर्व्वविधास्वधिकारा न भवन्ति, परन्तु यज्ञाऽऽगमनमात्रं न निषिद्धम्, अतएव—'तावुभावप्यसंस्कार्य्याविति धर्म्मो व्यवस्थितः। वैगुण्याज्जन्मनः पूर्व्व उत्तरः प्रतिलोमतः'॥ मनु० १०।६८ इति तस्योपनयनादिकं निषिद्धम्, तेन यज्ञादिकरणस्य नाऽधिकारः, परं तत्राऽऽगमनमात्रं न निषिद्धम्। एवं शूद्रस्याऽपि; तैस्तु स्वस्वनियत-सेवामात्रमेव कर्त्तव्यम्भवति. 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' कृष्णयजुर्व्वेदे। न वै देवाः सर्व्वेण संवदन्ते। ब्राह्मणेन वा क्षत्रियेण वा वैश्येन वा, ते हि यज्ञियाः, शत० ३।१।१।१० इत्यादिना पूर्व्वोक्तं सिद्ध्यति। यत्तु निरुक्ते—निषादस्य निषण्णमस्मिन् पापकमिति निर्व्वचनं कृतम्, तस्याऽयं भावः यद्—'उभयं तु समं यत्र सा प्रसूतिः प्रशस्यते'। मनु० ९।३४ 'सुबीजञ्चैव सुक्षेत्रे जातं सम्पद्यते यथा। तथाऽऽर्य्याज्जात आर्य्यायां सर्व्वं संस्कारमर्हति. मनु० १०।६९ 'सर्व्ववर्णेषु तुल्येषु पत्नीष्वक्षतयोनिषु। आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते॥ मनु० १०।५ सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्म्मणि। कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः॥ मनु० ३।१२—इति कामतः प्रवृत्तत्वान्निषादे सवर्णाऽपेक्षया न्यूनाऽऽदरणीयता। तेनोक्तमन्त्रेण न काऽपि भ्रान्तिः, नच चाण्डालादिकानां तत्र साम्यवादः! प्रेमवादोऽन्यो भवति, शास्त्रीयव्यवहारोऽन्यो भवति, किं पुरुषस्य स्वस्त्रिया सह प्रेम न भवति, परं नैमित्तिकाऽस्पृश्यत्वे (रजस्वलात्वे) स स्वस्त्रियाऽपि न व्यवहरति, स्वा० दयानन्देन त्वेतत्पर्य्यन्तं संस्कारविधौ लिखितम्—'रजस्वला के हाथ का छुआ पानी भी न पीवे। पृ० ३५। तर्हि वंशपरम्पराप्राप्ताऽस्पृश्यताकैर्यदि न व्यवह्रियते; तर्ह्यत्र का नाम घृणा? घृणा तु सुधारकाणां सनातनधर्म्मिब्राह्मणेभ्य एव भविष्यति, चाण्डालादिके कथं स्यात्?

स्वार्थपरम्परया पश्चाज्जन्मप्राधान्यमेव मत्वा भेदबीजमवापुः,

लिखत्यग्रे विश्वदेवमहोदयः। सोऽस्मासुस्वार्थाक्षेपं न करोतु, किन्तु वेदादिके तदनुसारि-मनुस्मृतौ, परमात्मनि वा। न जाने परमात्मनि कः स्वार्थं ईदृशः प्रापप्तत्, यो ब्राह्मणं मुखादुदपादयत्, शूद्रञ्च पादाज्जनितवान्। भवन्तश्च पादं शिरसि स्थापयितुमीहन्ते, शिरश्च छित्त्वा पादस्थाने सन्धित्सन्ति। सन्दधतु, परं तादृक्त्वे विराड्-रूपपुरुषस्य गतिरपि द्रष्टव्या भविष्यति, या मरुत्तरादिकमप्यतिक्रा-म्यन्ती भवेत्। प्रथमतो निजबाबूमण्डल एव शूद्रो निर्म्मेयो भविष्यति, यो विदेशीय-भाषाराश-प्रवणो वेदं पश्यत्येव न, पठनस्य तज्ज्ञानस्य तु कैव कथाऽऽस्ताम्। किं स (बाबूमण्डलः) एतत्स्वीकरिष्यति ?

वैदिक काले यदि मन्दिरनिर्माणपद्धतिर्मूर्त्तिकल्पना वा नाऽऽसीदित्युच्यते, तर्हि पूनर्वेदविरुद्धानि पुराणप्रमाणानि समुपस्था-प्य श्रीविश्वदेवशास्त्रिणा कथं स्वात्महननम् कृतम्?। किं श्रीमतीयो वेदविश्वासोऽधुना व्यपगतः?। यदि व्यपगतः, पुराणानि च प्रमाणानि मन्यन्ते; तर्हि श्रीमतेतावल्लेखं लिखित्वा एकं पृष्ठं कथं कलुषितम्?

हन्त ! कथयन्ति—वेदे मन्दिरनिर्माणकल्पना नाऽस्ति, कृपया वेदे दृष्टिपातन्तु विदधतु। इष्टापूर्त्ते सᳯ सृजेथाम्' यजुः १५।५४ इति मन्त्रे इष्टापूर्त्तनिर्म्माणं विहितम्। तत्र पूर्त्तस्य च लक्षणमत्र स्मृतौ श्रोतव्यम्—वापीकूपतडागादि देवतायतनानि च। अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते' अत्रि० ४५। 'इष्टापूर्त्तेन' इत्यथर्व्ववेदे १८।३।५८ पूर्तं—स्मृतिपुराणागमचोदितं वापी-कूप-तटाक-देवागारनिर्माणादि—इति सायणः। 'पूर्तं सुरालयाऽराम-कूपाजीव्यादिलक्षणम्' भागवतपुराणे ७।१५।४६ इति भवत्प्रमा-णिते पुराणे, यदवश्यमन्तव्यं भविष्यति पुराणप्रमाणपक्षपातित्वात् अतः 'यत् पूर्त्तं याश्च दक्षिणाः तदग्निर्वैश्वकर्म्मणः स्वर्देवेषु नो दधत्' यजुः १८। ६४ इति पूर्त्तस्य देवपूजोपयोगित्वमुक्तम्। अत एव योनिष्टे इन्द्र ! सदने अकारि' सामवे० ३।९।२ अत्र इन्द्रस्य सदने-मन्दिरे योनिः-स्थितिरुपलभ्यते। 'कार्याणि देवतायतनानि च

म० ८ । २४८ देवतागारभेदकान् हन्यादेवाऽविचारयन्' मनु० ९ । २८० 'प्रतिमानाञ्च भेदकः, प्रतिकुर्य्याच्च तत्सर्व्वं पञ्च दद्याच्छतानि च' ६ । २८५ इति वेदाऽनुसारि-मनुस्मृतौ, ( यां स्वा० दयानन्दः— 'क्योंकि—यह मनुस्मृति जो सृष्टि की आदि में हुई है—उसका प्रमाण है' सत्यार्थप्र० एकादशसमुल्लासारम्भे ३४१ पृष्ठे ( गु० ) इति वैदिककाले प्रणीतामाचक्षौ सुबहु-प्राचीनाञ्च मेने )—देवमन्दिर-निर्म्माण-मूर्त्ति-पूजासत्ता सिद्ध्यति; तेन श्रीविश्वदेवस्याऽऽक्षेपो निर्म्मूलः।

अधुना मूर्त्तिपूजाबीजमपि वेदे श्रूयताम्—

'नमो मात्रे पृथिव्यै' यजुः ९ । २२ इति पृथिवीपूजा। 'शिला भूमिरश्मा पांसुः सा भूमिः, ...तस्यै...पृथिव्या अकरं नमः' अथर्व० १२ । १ । २६ * इत्यश्मादिकस्य, तदात्मक पृथिव्याश्च पूजा। 'नमोऽस्तु दैवाय प्रस्तराय' अ० १६ । २ । ६ इति देवसम्बन्धि-प्रस्तर-पूजा। 'ग्रावाणो! अपदुच्छुनामपसेधत दुर्म्मतिम्' ऋ० १० । १७५ । २ इति ग्रावभ्यो दुर्म्मत्यपसरण प्रार्थना। 'ते वा एतेऽश्ममया ग्रावाणो भवन्ति' शत० ३ । ९ । ४ । २ । स्वा० दयानन्देन यजुः १ । १५ 'बृहद्-ग्रावाऽसि' इत्यस्याऽर्थः 'बड़े पत्थर हैं' इति कृतः। इत्यादि प्रमाणानि आधिक्येन मम मूर्तिपूजा-निबन्धे द्रष्टव्यानि। अधुनाऽप्येतत्साहसिक्यं भवितुं शक्नोति? यद्देवमन्दिरनिर्म्माणप-द्धतिर्मूर्त्तिकल्पना च वैदिककाले नाऽऽसीत्? सूर्य्यदेव-मूर्त्तिपूजा तु सृष्ट्यारम्भादेव, प्रत्युत वैदिककालादेव भवद्भिरपि मन्तव्यो भविष्यति; यामपह्नोतुं न कोऽपि शक्तः, वेदः स्पष्टमाचष्टे—"योऽसा-दित्ये पुरुषः सोऽसावहम्' इति यजुर्व्वेदस्याऽन्तिमो मन्त्रः। उद्यते नम उदायते नम उदिताय नमः' अ० १७ । १ । २२ 'अस्तं यते नमोऽस्तमेष्यते नमोऽस्तमिताय नमः' अ० १७ । १ । २३ इत्यादि।

---

*अत्र २६ इति पङ्क्तिः, विवाहविषयके मम गतलेखे बहुत्र पङ्क्तिस्थाने नवाङ्को मुद्रितः। एवमन्यत्राऽपि प्रमादा दृश्यन्ते प्रूफ शोधकानां शैथिल्यात्। ते स्वयं ज्ञेयाः।

अधुना पुराणश्लोकानां व्यवस्था श्रूयताम्—श्रीमत्सम्प्रदायका जनाः प्राग् लिङ्गपूजनदर्शनस्योपहासं कुर्व्वन्ति स्म; अधुना त एव लिङ्गदर्शनाऽर्थं प्रेरयन्तीत्याश्चर्य्य-विषयः। अन्त्यजानां लिङ्गदर्शने सनातनधर्म्मो न विरोधं समाचरति, परं नियमोऽयम्, यत्—तल्लिङ्गं गर्भगृहस्थं वेदमन्त्रप्रतिष्ठापितञ्च न स्यात्। सनातनधर्म्मस्य मूर्त्ति-पूजनमपि रहस्यमयम्, यदज्ञात्वा बहवो भ्रान्ता भवन्ति। काश्चि-न्मूर्त्तयो ब्राह्मणादिभिः प्राणप्रतिष्ठाद्वारा प्रतिष्ठाप्यन्ते। कासु चिच्च प्राणप्रतिष्ठा न भवति, यथा च ज्योतिर्लिङ्गानि स्वयं दिव्यशक्तिमन्ति। काश्चिच्चलमूर्त्तयः, तासां यात्रा भवति, पुनस्संस्कारश्च। या मूर्त्तयः प्रतिष्ठापिता भवन्ति, ता यदि मूर्तीः प्रतिष्ठापकपुरुषादुच्चपदवीकाः प्रणमेयुः, यथा परमहंसा दण्डिस्वामिनः, तदाऽपि तत्र देवत्वं न तिष्ठति (एतदर्थं पूजाविधि-प्रतिपादक-पुस्तकानां दर्शनमपेक्ष्यते) अत-एव दण्डिस्वामिनस्ताभिः सह दण्डस्पर्शमात्रं कुर्व्वन्ति, न ताः प्रणमन्ति। एवं तमोजन्माश्चाण्डालादयोऽमूः पश्येयुस्तदाऽपि तत्र देवत्वं न तिष्ठति, अतएव तासां मूर्तीनां पुनश्शोधनं प्रतिष्ठा च क्रियते, तदैव तत्र पूज्यत्वम्भवति। एवं यदि चाण्डालादयः काश्चिन्मूर्त्तिं प्रतिष्ठापयेयुः, तर्हि तत्रोच्चपदवीको ब्राह्मणादिस्तां मूर्त्तिं न नमस्क-रोति। परं या दिव्यज्योर्लिङ्गादिमूर्त्तयो भवन्ति, ता एतदपवाद-स्वरूपाः, तामुच्चकोटिका नीचकोटिका वा द्रष्टुं शक्ताः, परं चाण्डा-लादीनां गर्भगृह प्रवेशनिषेधाद् मन्दिरस्यैकतः किञ्चिद् विशिष्ट-स्थानं नियती-क्रियते, छिद्रादिकं वा तत्र किञ्चित् स्थाप्यते, येनाऽ-न्त्यजादयोऽपि तद्दर्शनं कर्त्तुं शक्नुयुः, एवञ्च चलमूर्त्तयोऽपि भवन्ति, तासां यात्रासमये सर्व्व एवाऽन्त्यजपर्य्यन्तास्तद्-दर्शनं कर्त्तुं शक्ताः। यानि च ज्योतिर्लिङ्गानि वटादिवृक्षाणामधस्तात् स्थापितानि भवन्ति, तानि सर्व्वे द्रष्टुं शक्ताः। यास्तु प्रतिष्ठापितसंस्कृतमूर्त्तयस्तत्र तासां चाण्डालादि-कर्तृकदर्शनं सर्व्वथा निषिद्धम्भवति, अतएव मन्दिर-स्योपरितनशिखरे तत्सदृशी मूर्त्तिः स्थाप्यते, येन दिदृक्षवोऽनधि

कारिणश्चाऽपि तद्-दर्शनं न कुर्य्युः । तद्-दर्शनेनाऽपि अन्त्यजानां तादृशं फलं मूर्त्तिपूजाविधि-प्रतिपादकपुस्तकेषु दृश्यते—,प्रतिलोमाऽन्त्यजातीनां स्तूपिं दृष्ट्वा समाचरेत्, अर्चनानवनीत० १० । 'दर्शनं गेहचूड़ाया दर्शनं गोपुरस्य च । अन्त्यजानां तथाऽन्त्यानां विज्ञेयं देवदर्शनम्' ॥ शैवसिद्धान्तरहस्ये । चाण्डालादयस्तु दूरे—मरणाद्यशौचाऽवस्थायां वयमपि देवमन्दिरं गन्तुं न शक्नुमः, तर्हि येषामशुद्धता जन्ममूलिका, प्राक्तनकर्म्ममूलिका, तादृशपितृवीर्य्यमूलिका च, या स्नानादिभिरपि न द्रवयितुं शक्या, तर्हि तेषां तत्र प्रवेशः कथं सम्भवेत् । यद्येतदादिविषये शास्त्रवचनं प्रमाणं न मन्यते, यन्मन्दिरशिखरादिदर्शनमेव तेषां पुण्यप्रदम्, तर्हि मन्दिरे प्रविश्यैवोपासनया तेषां पुण्यम्—इत्येव कथनं कथं प्रमाणभूतं तेषाम्? अविश्वासो यदि सुधारकाणां जीवनम्, तर्ह्युभयत्रैवाऽविश्वासः कार्य्यस्तैः ।

अथ च श्रीयुतशास्त्रिमहोदयेनेदं विचिन्त्यम्, यत्सनातनधर्म्माणः कथं मन्दिर-प्रवेशाय निषेधन्तु ? । तेषान्तु स्वधार्म्मिकसिद्धान्त-प्रसरणेन महती प्रसन्नता भवेत्, स्वसिद्धान्तस्य विश्वव्यापितया कस्य प्रसन्नता न भवति ? ये आर्य्यसामाजिका मूर्त्तिपूजाखण्डका आसन्, यैश्चैतद्विषयक-शास्त्रार्थेषु परस्सहस्राणां रूप्यकाणां व्ययः कृतः, त एव यदाऽन्त्यजानपि मूर्त्तिदर्शनाय प्रेरयन्ति, प्रत्युत स्वयमप्यधुना मन्दिराणि गन्तुं सन्त्युद्यताः, ये च मूर्त्तिपूजां वेदविरुद्धां मन्यन्तेस्म, तेऽपि तत्पुष्टौ गुप्तरूपेण लेखनीं प्रचारयन्ति इति स्पष्टं सनातनधर्म्म-सिद्धान्त-विजयः, तर्हि कथं सनातनधर्म्माणोऽत्र निषेधन्तु । तथाऽपि यदा ते निषेधन्ति, तत्र कारणम्, यत्—तेन तेषां सिद्धान्तमर्य्यादायां भङ्गः समापतति । अन्त्यजाः स्वयं मूर्त्तिं स्वगृहे स्थापयन्तु—तान् को निषेधति ? चित्ते भक्तिः, भावो वेष्यते, सर्व्वकार्य्याणि सिद्ध्यन्ति ।

शास्त्रिमहाशयेन ये श्लोका उपस्थापिताः, तत्र प्रथम एव

श्लोके एतल्लिखितम्—'लिङ्गानि ज्योतिषाञ्चाऽत्र विद्यते मुनिसत्तमाः। तान्यहं कथयाम्यद्य श्रुत्वा पापं व्यपोहति' । १७ । किं शास्त्रिमहोदय एतच्छ्लोकं प्रमाणं मन्यते ? अत्र लिखितम् यज्ज्योतिर्लिङ्गनाममात्रमेव श्रुत्वा पापं नश्यतीति । यदि सनातन-धर्म्मिणो मन्दिर-प्रवेशं विरुन्धन्त्यपि; तर्हि श्रीमन्त उक्तज्योतिर्लि-ङ्गानां नाममात्रमेव श्रावयन्तु, येनाऽन्त्यजानां पापक्षयः स्यात्। यदि भवन्तः 'श्रुत्वा पापं व्यपोहति' इति न मन्यन्ते; तर्हि तस्माच्च दर्शनं चरेत्, इत्यस्य श्लोकस्याऽपि तदेव मूल्यम् । भवद्भिः २१-२२ २३-२४-२५-२६-२७ श्लोकाः कथं त्यक्ताः ? तस्मिन्नेव पुराणे शिवो-ऽष्टमूर्त्तिर्दर्शितो जल-वह्नि-यजमान-सूर्य्य-चन्द्र-भूम्याकाश-वायु-प्रभृतिभेदेन; तद्-द्वाराऽपीश्वरोपासना मता, इमां पूजान्तु न कोऽपि-रुणद्धि। रोद्धुं वा शक्तः, भवन्त आसामेव मूर्त्तीनां-याः सनातनधर्म्मि-णोऽपि पूजयन्ति-पूजनकृतेऽन्त्यजान् कुतो न प्रेरयन्ति ? मनसि यदि श्रद्धा, शास्त्रविश्वासो भक्तिश्च, तदा त्वेतद् द्वाराऽपि पूजा शास्त्रे दर्शिता, यदि श्रद्धा न, तर्हि मन्दिराऽभ्यन्तरे प्रविश्याऽपि पूजा न भवितुमर्हति । वस्तुतस्तु मन्दिराऽभ्यन्तरे प्रवेशाऽऽग्रहोऽप्येका राजनीतिः; यदेषां परस्परं-विरोधो भवतु सनातनधर्म्मिणाञ्च जगति निन्दा स्यात्। अद्य यदि सर्व्वे सनातनधर्म्मिणोऽन्त्यजानां मन्दिर-प्रवेशविरोधं त्यजन्तु; तर्हि तदीयमन्दिर-प्रवेशाऽऽग्रहं न कोऽपि कुर्य्यादित्यस्माकं विश्वासः ।

तस्माद् यत्र पुस्तके लिङ्गादिदर्शनस्याऽपि वार्त्ता, तत्रेदमेव तात्पर्य्यम्, यद् अन्त्यजाः स्वप्रतिष्ठापितमूर्त्तिं द्रष्टुं नन्तुञ्च शक्ताः नाऽत्र कश्चित् सनातनधर्म्मस्य विरोधः। यः खलु—'सर्व्वे लिङ्गा-ऽर्चनं देव देवा दैत्याश्च मानवाः' इति श्लोक उद्धृता, तत्रेदं पृच्छ्यते किं देवा दैत्या अस्माकमेव मन्दिरेषु समागच्छन्ति लिङ्गार्चनं कर्त्तुम् ? नहि-सर्वे स्वयमेव लिङ्गं प्रतिष्ठापयन्ति, स्वयञ्च पूजयन्ति । त्रैवर्णिकप्रतिष्ठापितं लिङ्गं त्रैवर्णिकानां कृते, अन्त्यजप्रतिष्ठापित

श्चाऽन्त्यजानां कृते । प्रागस्माभिर्व्वेदप्रमाणैस्त्रैवर्णिकानां शूद्राऽन्त्यजादीनाञ्च वैषम्यं साधितम् अत्राऽपि तदेव ज्ञेयम् ।

'अपि वा यश्चाण्डालः शिव इति वाचं वदेत्, तेन सह संवदेत, तेन सह भुञ्जीत' इति श्रुतिरुद्धृता श्रीमता; परन्न लिखितम्, यत्–सा कस्मिन् पुस्तके वर्त्तते; केवलं कस्यचिट्टीकाकारस्य श्रुतिनामग्रहणेनैव सा श्रुतिर्न मन्तव्या भवति । केचिदीदृशा अप्येकदेशिक-सम्प्रदाया भवन्ति, येषां परिभाषा व्यवहाराश्च ऐकदेशिका भवन्ति, महाभाष्ये च एतादृशानां नाम—'पारिषदकृतिः' इति प्रसिद्धम् । सार्व्वलौकिक-व्यवहारास्ताननुसृत्य न भवन्ति, अत्र न्यायदर्शनस्य प्रमाणं सदा स्मरन्तु—'यज्ञो मन्त्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य, लोकव्यवहार-व्यवस्थापनं-धर्मशास्त्रस्य विषयः' न्यायदर्शन० ४ । १ । ६२ । अथ चाऽस्मद्दक्षाणि वचनान्यर्थवादरूपाणि, विधेयस्तुतिमात्रतायां पर्यवस्यन्ति, न तु अक्षराऽर्थमात्रपर्य्यवसायीनि भवन्ति 'अपशवो वाऽन्ये गो-अश्वेभ्यः' इत्यादिवत् । यथाऽस्यैकमुदाहरणं गृह्यताम्—'नाऽहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवं-विधो द्रष्टुं दृष्टवानसि मां यथा' ॥ गीता० ११ । ५३ अस्मिन् श्लोके विराड्-रूपदर्शन-समये श्रीकृष्णेनाऽर्ज्जुन ॠ प्रोच्यते । तदिदं पद्यं भक्तिप्रशंसामात्रतात्पर्य्ये विश्रान्तम्, न तु वेद-तपो-दानयज्ञादि-निन्दापरम्, अन्यथा वेदादिकास्त्यक्तव्याः स्युः, वेदादिकैश्च परमात्मप्राप्तिरपि न मन्येत । परं नैवम्-एव पूर्व्वोक्त-श्रुतावपि शिवनाम-कीर्त्तनमात्रतायामेव तात्पर्य्यम्, न तु चाण्डालेन भोजनादिकेऽपि, तस्य परश्शतग्रन्थेषु विरोधात् । अत्र प्रकरणे, सति सम्भवेऽवसरान्तरे प्रकाश ॠ पात्येत । अस्माभिरन्त्यजानां विषये नैतिकरूपेण धार्म्मिक-रूपेण च पर्य्याप्तं चिन्तितम्, एतदादिकं द्रष्टुं 'सूर्य्योदये' ८ । ५ । ९ । १. ९ । ५ । ६ । ७, १० । ८ । ९ । १० पश्यन्तु । 'वेद पुराणयोरेक वाक्य-तायाञ्च' ४० पृष्ठे निबद्धम् 'अस्पृश्यताविज्ञानम्' अपि पश्यन्तु ।

अन्ते श्रीविश्वदेवशास्त्रिमहाशयेन व्यवस्था याचिता, सा चेत्थमस्माभि ॠ प्रदीयते—

'न बुद्धिभेदं जनयेद् अज्ञानां कर्म्मसङ्गिनाम्। जोषयेत् सर्व्वकर्म्माणि विद्वान् युक्तः समाचरन्' गीता० ३। २६ 'श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात्। स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः' गी० ३। ३५। श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात्। स्वभाव-नियतं कर्म्म कुर्व्वन् नाप्नोति किल्बिषम्' गी० १८। ४७ 'सहजं कर्म्म कौन्तेय ! सदोषमपि न त्यजेत्। सर्व्वारम्भा हि दोषेण धूमेनाग्निरिवाऽऽवृताः' गी० १८। ४८ 'स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः। स्वकर्म्म-निरतः सिद्धिं यथा विन्दति तच्छृणु' गी० १८। ४५ यतः प्रवृत्तिर्भूतानां येन सर्व्वमिदं ततम्। स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' गी० १८। ४६।

वरं स्वधर्म्मो विगुणो न पारक्यः स्वनुष्ठितः। परधर्म्मेण जीवन् हि सद्यः पतति जातितः' मनु० १०। ६७ 'स्वानि कर्म्माणि कुर्व्वाणाः दूरे ( व्यवहारादिति भावः ) सन्तोऽपि मानवाः। प्रिया भवन्ति लोकस्य स्वे स्वे कर्म्मण्युपस्थिताः' अत्रि० १२। 'ये व्यपेताः स्वधर्म्मात् ते परधर्म्मे व्यवस्थिताः'। तेषां शास्तिकरो राजा स्वर्गे लोके महीयते' अत्रि० १७। आत्मीये संस्थितो धर्म्मे शूद्रोऽपि स्वर्गमश्नुते। परधर्म्मो भवेत् त्याज्यः सुरूप-परदारवत्' अत्रि०। 'येनाऽस्य पितरो याता येन याताः पितामहाः। तेन यायात् सतां मार्ग्गं तेन गच्छन्न रिष्यते' मनु० ४। १७८। 'यः शास्त्र-विधिमुत्सृज्य वर्त्तते कामकारतः। न स सिद्धिमवाप्नोति न सुखं न परां गतिम्. गी० १६। २३ 'तस्माच्छास्त्रं प्रमाणं ते कार्य्याऽकार्य्यव्यवस्थितौ। ज्ञात्वा शास्त्रविधानोक्तं कर्म्म कर्त्तुमिहाऽर्हसि, गी० १६। २४। इत्थं कृते सति, अन्त्यजानामार्थिकदशासुधारे च सति ( यस्याऽत्यन्ताऽऽवश्यकता, यद्विषये च वयं पुनः प्रकाशमर्पयितुं चेष्टिष्यामहे, येन देशस्य कल्याणं जायेत। अतएव वेदोऽप्यभिधत्ते—'मा नः पित्र्यान्मानवादधि दूरं नैष्ट परावतः' ऋ० ८। ३०। ३ पित्र्यो मार्गश्च वेद-प्रोक्तः। वेदश्च स्पष्टमभिधत्ते—

'नीचैर्दासा उपसर्प्पन्तु भूमिम्' अ० ५। ११। ६

'यथा वशं नयन्ति दासमार्य्यः' ऋ० ५। ६। ३४

'दैत्याय कर्म्मणे शुन्धध्वं देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि' यजु० १। १३

'यो दासं वर्णमधरं गुहाऽकः' ऋ० २। १२। ४

# वैदिकविवाहवयोनिर्णयः

## आक्षेपपरिहारः

## ( ३ )

( ले० प्र० स्ना० धर्मदेवः सिद्धान्तालङ्कारो विद्यावाचस्पतिः वैदिकधर्मप्रचारकः )

श्रियश्चैत्राङ्के प्रकाशितलेखे मया श्रीदीनानाथशास्त्रिणां लेखं विमर्शयता तत्कृतानेकाक्षेपपरिहारोऽकारि । अवशिष्टविषयविमर्शं चिकीर्षुणा लेखोऽयं लिख्यते । विवाहविषयकं वैदिक तत्त्वं बुभुत्सूनां सत्यजिज्ञासूनां वाचकमहानुभावानां च लाभाय ।

श्रीमदुभयवेदान्ताचार्यमहोदयैः कन्याविवाहमाहात्म्यं प्रतिपाद्य कन्या नाम—

अष्टवर्षा भवेत् कन्या नववर्षा तु रोहिणी ।
दशवर्षा भवेद्गौरी, तत ऊर्ध्वं रजस्वला ॥

बिना कन्याविवाहं रजस्वलाविवाहकरणे निन्दारूपं वेदोपबृंहितस्मृतिवचनं—'पितुर्गेहे तु या कन्या' इत्यादि, स्वकीये विवाहसमर्थनाभिधे लेखे निरूपितं, तदेव निराकर्तुं मया कन्याशब्दार्थविमर्शो व्यधायि, मया सायणीयभाष्यमुद्धरता वेदेषु कन्याशब्दो नाष्टवर्षीयबालिकाभिधायकः किन्तु "युवतिः," अकृतविवाहा स्त्री, कमनीया इत्यादिवाचक इति निरूपितम् । तेन प्रमाणजातेन 'अष्ट वर्षा भवेत्कन्या' अथवा 'दशवर्षाभवेत्कन्या' इत्यादिवाक्यानामप्रामाण्यं नूनमुपपद्यते । अष्टदशवर्षीयकुमार्या नाम कन्या न भवतीति केनापि नोदीर्यते 'अकृतविवाहा या कापि स्यात् तदर्थं पदमिदमुपयोक्तुं शक्यमेव, तस्मात् 'अष्टवर्षा दशवर्षैव वा कन्या' इति कल्पितां परिभाषां कृत्वा तदाधारेण लघुबालिका विवाह समर्थन मनुचितं वेदविरुद्ध मित्येवास्माभिः सघण्टाघोषं भूयो भूय उद्घुष्यते । एवं सामान्यतयाऽकृत विवाहास्त्री मात्र वाचके कन्या शब्दे सत्यापि ।

"मृते भर्तरि या तु स्त्री, न च संप्राप्तमैथुना ।
अन्यस्मै विधिवद्देया, यथा कन्या तथैव सा ॥

लघुशातातपः ।

उद्वाहितापि या कन्या, न चेत्संप्राप्तमैथुना ।
पुनः संस्कारमर्हेत, यथा कन्या तथैव सा ॥

नारदस्मृतिः ।

बलाच्चेत्प्रहृता कन्या, मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया, यथा कन्या तथैव सा ॥
विसृष्टायां हुते वापि, यस्या भर्ता म्रियेत सा ।
सा चेदक्षतयोनिः स्याद्, गतप्रत्यागता सती ॥
पौनर्भवेन विधिना, पुनः संस्कारमर्हति ॥

बौधायन धर्मशास्त्रम् ।

इत्यादि भवदभिमतस्मृतिवचन प्रामाण्येन बालविधवास्वपि कन्यापदमपवादरूपेण प्रयुज्यते, तद्विवाहश्च 'उदीर्ष्व नार्यभिजीवलोकं गतासुमेनमुपशेष एहि । हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि-

संबभूथ ॥ ऋ० १० । १८ । ८ अथर्व का० १८ । ३ । २
इयं नारी पतिलोकं वृणाना निपद्यत उपत्वा मर्त्य प्रेतम् ।
धर्मं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणं चेह धेहि ॥

अ० १८ । ३ । १

इत्यादि वेदमन्त्राधारेणापद्धर्मरूपेणानुज्ञायत एव । अप्रासंगिकत्वाद् विधवाविवाहविषयोऽयं नात्र 'सप्रपञ्चं निरूपयितुं शक्यः । एतेन श्रीदीनानाथशास्त्रिभिरुत्थापिता कन्याशब्दविषयकाः सर्वेऽप्याक्षेपाः परिहृता वेदितव्याः । यत्तु श्रुतिस्मृत्योर्विरोधे तु श्रुतिरेव गरीयसी' इति मदुद्धृतं श्लोकं प्रामाणिकत्वेनाभ्युपगच्छद्भिरपि तैर्महोदयैः' अत्र नास्ति श्रुतिस्मृत्योर्विरोधः, किन्तु श्रुत्या यः कन्याशब्दो निर्दिष्टः तस्य स्मृत्या स्पष्टतयाऽवस्थासंख्या नियमिता । किमेषविरोधो नाम" इत्यलेखि तन्नूनमाश्चर्यास्पदम् ।

श्रुतिस्तावद् भगवती 'पुत्रकामा, उशती ( ऋ० १० । ८५ । ३७ ) पतिकामा ( अ० २ । ३० । ५ ) युवतिः ( ऋ० १० । १८३ । २ ) पत्ये शंसन्ती ( ऋ० १० । ८५ । ९ ) इत्यादि विशेषणानि बह्वर्थं प्रयुञ्जाना स्फुटमेव विवाहकाले कन्याया यौवनं सूचयति "ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्" । ( अथर्व ११ । ७ । १८ ) इत्यादिभिश्च मन्त्रैर्ब्रह्मचर्यानन्तरं पतिवरणं च तस्या अनुजानाति—

बालेति गीयते नारी, यावद्वर्षाणि षोडश ।
ततस्तु तरुणी ज्ञेया, द्वात्रिंशद्वत्सरावधि ॥ भावप्रकाशे
षोडशवार्षिकं यावत्, बाल्यं तावत्प्रवर्तते ॥
हारीतसंहितायां शारीरस्थाने,
"षोडशीस्तोम ओजो द्रविणं" ( यजु० १९ । ३ )
अथास्मै पञ्चविंशतिवर्षाय षोडशवर्षां पत्नीमावहेत्
पित्र्य धर्मार्थ कामप्रजाः प्राप्स्यतीति" । सुश्रुतसंहिताशारीरस्थाने दशमाध्याये ।

इत्याद्यनुसारं च षोडषवर्षानन्तरं कन्यानां यौवनमिति, तदनन्तरमेव तत्परिणयो वेदै र्विधीयते । पराशरादिनामतः कल्पितानि स्मार्तवचनानि तु—

दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ।
माता चैव पिता चैव, ज्येष्ठो भ्राता तथैव च ।
सर्वे ते नरकं यान्ति, दृष्ट्वा कन्यां रजस्वलां ॥

इत्यादिना यौवने विवाहं सर्वथापि विनिन्द्य निषिध्य च बाल्यविवाहमनुमोदयन्ति । इत्थमाकाशपातालयोरिव वर्तमानमति स्थूलं श्रुतिकतिपय ( कल्पित ) स्मृतिविरोधं श्रीदीनानाथ शास्त्रिणो यदि द्रष्टुं न समर्था नूनं शल्यचिकित्साहैं तेषां नयन इत्येव मया वक्तुं पार्यते । किं वेदैः प्रयुक्तान्युपर्युद्धृतानि विशेषणानि 'युवतिः पतिकामाऽपत्ये शंसन्ती' इत्यादीनि दशद्वादशवर्षीयबालिकासु कथमपि संघटन्ते, नो चेन्न । कथं तत्र विरोधोऽभ्युपगम्यते श्रौतस्मार्तवचसाम् ।

"यत्तु सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः। तृतीयो अग्निस्ते पतिस्तुरीयस्ते मनुष्यजः ॥ ऋ० १० । ८५ । ४० ।

सोमोऽददद् गन्धर्वाय गन्धर्वोऽददद्ग्नये । रयिं च पुत्राँश्चादादग्निर्मह्यमथो इमाम् ॥ ऋ० १० । ८५ । ४१

इति मन्त्रद्वयप्रामाण्येन द्वादशे वर्षे विवाहं वेदानुमतमुपपादयितुं प्रयतितं श्रीशास्त्रिमहोदयैस्तत्तु केवलमुपहासजनकं, निष्पक्षपातं श्रौतस्मार्तमतमालोचयताम् विपश्चितां दृष्टौ, कथमिचेत् सोमगन्धर्वाग्नि-भोगानन्तरं कन्याया विवाहो वेदानुमत इति श्रीदीनानाथ शास्त्रिणोऽप्यभ्युपगच्छन्ति ।

पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववन्हिभिः ।
भुज्यन्ते मानुषैः पश्चान्नैता दुष्यन्ति कर्हिचित् ॥
(अत्रिस्मृतौ ५ । ५)

पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववन्हिभिः ।
गच्छन्ति मानुषान् पश्चाद् नैता दुष्यन्ति धर्मतः ॥
(वसिष्ठस्मृतौ २८ । ५)

इत्यादीनि स्मार्तवचनानि चोदाहरन्ति, किन्तु तैर्यद्वयो विवाहार्थं निर्धार्यते एतादृशवचनाधारेण, तत्तु सर्वथा कपोलकल्पितमेव । नैतानि वचनानि बाल्यविवाहं कथमपि समर्थयन्ति किन्तु निराकुर्वन्त्येवेत्यस्माकं द्रढ़ीयान् विश्वासः । कस्यां कस्यामवस्थायां सोमाद्याधिपत्यं कन्याशरीरेष्वित्यधस्तनानि प्रमाणानि द्योतयन्ति ।

"व्यञ्जनेषु च जातेषु, सोमो भुंक्ते च कन्यकाम् ।
पयोधरेषु गन्धर्वो रजस्याग्निः प्रतिष्ठितः ॥
( अत्रिः ५ । ९ ।)

रोमकाले तु संप्राप्ते, सोमोभुङ्क्तेऽथ कन्यकाम् ।
रजः काले तु गन्धर्वो वन्हिस्तु कुचदर्शने ॥
(संवर्तः)

अत्रानेकसंस्करणेषु 'कामकाले' इति पाठान्तरम् ।

व्यञ्जनैस्तु समुत्पन्नैः सोमो भुञ्जीत कन्यकाम् ।
पयोधरैस्तुगन्धर्वो रजस्याग्निः प्रकीर्तितः ॥

( गोभिल पुत्र गृह्यसूत्रसंग्रहे )

"कन्यां भुंक्ते रजःकालेऽग्निः शशी रोमदर्शने ।
स्तनोद्भवे च गन्धर्वः ॥" (काशीखण्डे ३९ अ० )

एतानि च सर्वाण्यपि वचनानि नहि द्वादशे वर्षे विवाहं किन्तु रजोदर्शनानन्तरमेव युवत्या विवाहं पोषयन्तीति स्पष्टमेव, नहि कुचदर्शनादिकमष्ट-दशवर्षीयबालिकासु संभवति । अनृतुमत्यास्तु विवाहं सर्वथापि निराकुर्वन्तीमानि वचनानि कन्याया रजोदर्शने सत्येवाग्नेराधिपत्यात्तदनन्तरं च तस्या विवाहस्याभ्यनुज्ञायमानत्वात् ।

एतस्मिन्नेव विषय ऋग्वेदीयमन्त्र एकः सायणभाष्यसहित उद्ध्रियते यस्य पराशरः शाक्त्या ऋषिः । अग्निर्देवता । जारः कनीनां पतिर्जनीनाम्" इति मन्त्रस्यान्तिमं चरणं सायणाचार्य इत्थं विवृणोति ( अग्निः ) ( जनीनाम् ) जायानां कृतविवाहानां ( पतिः ) भर्ता तथा च व्याख्यायते । अनुपजातसंभोगेच्छावस्थां स्त्रियं सोमो लेभे, स च सोम ईषदुपजातसंभोगेच्छावस्थां तां विश्ववसवे गन्धर्वाय प्रादात् , स च गन्धर्वा विवाहसमये अग्नये प्रददौ, अग्निश्च मनुजाय भर्त्रे इमां प्रायच्छदिति । इममर्थं काचिदृक् स्पष्टं ब्रूते "सोमोऽददद् गन्धर्वाय" इति ।

अष्टमाद्वर्षात्प्रारभ्य एकवर्षपर्यन्तं सोमस्य, तत एकवर्षपर्यंतं गन्धर्वस्य, तत एकाब्दवर्षपर्यन्तं चाग्नेराधिपत्यम् , एवं च "अग्निकर्तृकं वराय दानमेव विवाहे फलति, तादृशी चावस्था पूर्णैकादशवर्षानन्तरं द्वादशे वर्ष एव फलति तेन वेदेनापि कन्या विवाहो द्वादशे वर्षे तिष्ठायिषितः" इति श्रीदीनानाथ शास्त्रिणां निराधारं कपोलकल्पितं कथनं न कथमपि मान्यतामर्हत्युपर्युक्तवचनविरुद्धत्वात् ।

प्रसङ्गोपात्ततया वर्तमानलघुपराशरस्मृतावुपलभ्यमानाः "अष्टवर्षाभवेद्गौरी नववर्षातु रोहिणी"। इत्यादयः श्लोका अपि समासतोऽत्र विमृश्यन्ते वाचकमहाभागानां कुतूहलमुपशमयितुं, यद्यपि वैदिकधर्मानुगायिनामस्माकं वेदविरुद्धवचनेषु यत्र क्वचिदुपलभ्यमानेष्वपि व्यक्तमनास्था न कथमप्याक्षेप्या। लघुपराशरस्मृतेरन्ते श्लोकसंख्यैवं परिदृश्यते—

"एतत् पाराशरं शास्त्रं, श्लोकानां शतपञ्चकम्।
द्विर्नवत्या समायुक्तं, धर्मशास्त्रस्य संग्रहः ॥ १२। ८१

अत्र पराशरस्मृतेः श्लोकसंख्या ५९२ इति निर्दिष्टा वस्तुतस्तु गणनायां क्रियमाणायां सा ६१५ वर्तत इत्यालोकमालोकमाश्चर्यचकितोऽहमभवम्। श्रीदीनानाथशास्त्रिणोऽन्ये वापि महानुभावा गणनां स्वयं विदधतु, यदिसंशीतिस्तेषामस्मिन् विषये। इत्थं च२३ श्लोका वर्तमान लघुपराशरस्मृतौ प्रक्षिप्ता इति तैः स्पष्टमवगंस्यते। अष्टवर्षा भवेद्गौरीत्यादि श्लोकानां प्रक्षिप्तत्वमप्रासङ्गिकत्वादपि व्यक्तम्। कथमिति चेत्

अयमस्य सप्तमाध्यायस्याद्यः श्लोकः —

"अथातो द्रव्यशुद्धिस्तु, पराशर वचो यथा।
दारवाणां सुपात्राणां, तत्क्षणाच्छुद्धिरिष्यते ॥७।१
मार्जनाद् यज्ञपात्राणां, पाणिना यज्ञकर्मणि।
चमसानां ग्रहाणां च, शुद्धिः प्रक्षालनेन च ॥७।२
चरूणां स्रुक् स्रुवाणां च, शुद्धिरुष्णेन वारिणा।
भस्मना शुद्ध्यते कांस्यं, ताम्रमम्लेन शुध्यति ॥७।३

इत्थं दारुकांस्यादि द्रव्यशुद्धि प्रकरणेऽस्मिन् :—

अष्टवर्षा भवेद् गौरी, नववर्षा तु रोहिणी।
दशवर्षा भवेत्कन्या, अत ऊर्ध्वं रजस्वला ॥
माता चैव पिता चैव, ज्येष्ठा भ्राता तथैव च।
सर्वे ते नरकं यान्ति, दृष्ट्वा कन्यां रजस्वलाम् ॥

इत्यादयः श्लोकाः कथमप्रासङ्गिका इति न कथनमपेक्षते। अप्रासङ्गिकं विवाहविषयकं श्लोकजातमिदं परित्यज्यते चेत् पुनश्चतुर्विंशश्लोकस्य तृतीयश्लोकेन सह सङ्गतिरति स्पष्टतयावगम्यते यथा।

भस्मना शुद्ध्यते कांस्यं, सुरया यन्न लिप्यते।
सुरामात्रेण संस्पृष्टं, शुध्यतेऽग्न्युपलेपनैः ॥७।२५
गवाघ्रातानि कांस्यानि, श्वकाकोपहतानिच।
शुद्धयन्ति दशभिः क्षारैः, शूद्रोच्छिष्टानि यानि च ॥७।२६
आयसेष्वायसानां च, सीसस्याग्नौ विशोधनम्। इत्यादि

इदमप्यत्रावधेयं यल्लघुपराशरस्मृतिर्यस्यामिमे "अष्टवर्षा भवेद् गौरी" इत्यादयः श्लोकाः साम्प्रतमुपलभ्यन्ते "धर्मशास्त्रस्यसंग्रहः" (लघुपरा० स्मृ० १२।६१ न तु मूलधर्मशास्त्रम्। मूलधर्मशास्त्रं तु बृहत्पराशर संहितेति नाम्ना प्रख्यातम्। तस्यां संहितायां ३३०० श्लोकाः सन्ति विवाहविषयके चतुर्थेऽध्यायेऽपि ३७१ श्लोका वर्तन्ते किन्तु "अष्टवर्षा भवेद् गौरी" इत्यादिका बालिकाविवाहप्रतिपादकाः श्लोका न तत्र क्वाप्युपलभ्यन्ते। बृहत् पराशरसंहिता तु व्यक्तं यौवने वधूवरयोर्विवाहमनुमोदयतीत्यधस्तनश्लोकैरूपपद्यते—

स्वजातिमुद्वहेत्कन्यां, सुरूपां लक्षणान्विताम्।
अरोगिणीं सुशीलां च, तथा भ्रातृमतीमपि ॥४।३२
सर्वावयवसम्पूर्णां, असगोत्रां कुलोद्भवाम्।
हंसमातङ्गगमनां, मृद्वङ्गीं च सुलोचनाम् ॥४।३३
सलज्जां शुभनादां च, पतिप्रीतिकरीमपि।
श्वश्रू श्वशुरगुर्वादि—शुश्रूषाकारिणीं प्रियाम् ॥४।३४
कन्यायाश्च वरस्यापि, यत्रोभयोर्भवेद्रतिः।
तथा कन्यां वरं धीमान्, वरयेद् वंशशुद्धये ॥४।२५
स्त्रियाश्च पुरुषस्यापि, भवेद् यत्रोभयोर्वृतिः।
तत्र धर्मार्थकामाः स्युस्तदधीना यतस्त्वमी ॥४।४६

रेखाङ्कितानि कन्याविशेषणानि न ह्यष्टद्वादशवर्षीयबालिकासुप-

पद्यन्ते युवतिष्वेव तानि चरितार्थानि भवन्ति। वरवध्वोः परस्परं वरणमपि नहि बाल्ये संभवति। न केवलमेतदेव किन्तु बृहत्पराशर संहिताया अधस्तनं श्लोकद्वयं यौवने विवाहं मुक्तकण्ठतया प्रतिपादयति तद् यथा—

"विवाहात्प्राक् पिता रक्षेत्, यौवनस्थां पतिस्तथा ॥४।५८

उद्वाह उदितः स्त्रीणां, यौवने बन्धुकारणात्। बृ. प. अ० १०

इत्थं च मूलधर्मशास्त्रभूतबृहत्पराशरसंहिता विधानविरुद्धत्वादपि वर्तमानलघुपराशरस्मृतावुपलभ्यमानानां बालिकाविवाहप्रतिपादकश्लोकानामप्रामाण्यं प्रक्षिप्तत्वं च व्यक्तमुपपद्यते। विस्तरभिया स्मृत्यन्तरवचनविमर्शो नात्र विधातुं शक्यते।

साम्प्रतं श्रीदीनानाथशास्त्रिणां बालिकाविवाहसमर्थनस्य मूलभूता कल्पना विमृश्यते सा चेयम् "स्त्रीणां विवाह एवोपनयनसंस्कारः, तथा च या तत्तद् वर्णस्योपनयनावस्था सैव तत्तद्वर्णस्त्रीणां विवाहावस्था।" इति

इयं कल्पना सर्वथाप्यवैदिक्यसमीचीना च। वेदाध्ययनमुपनयनादिकं च बालकानामिव कन्यानामपि विहितम्। वैदिककाले शतश ऋषिका ब्रह्मवादिन्यश्चासन्निति "गोधा घोषा विश्ववारा, अपालोपनिषन्निषत्। ब्रह्मजाया जुहूर्नाम, अगस्त्यस्य स्वसा दितिः। इन्द्राणी चेन्द्र माता च, ब्रह्मवादिन्य ईरिताः"। इत्यादि सूच्यवलोकनेन मूलवेदसंहितावलोकनेन वा सम्यगवगन्तुं शक्यते। एतासां ब्रह्मवादिनीनामुपनयनं भवति स्म प्राक्तनकाल इति। "तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे भिक्षाचर्येति सद्योवधूनां तु यथाकथञ्चिदुपनयनं कृत्वा विवाहः कार्यः" इति हारीतसंहितातः।

"पुराकल्पे कुमारीणां, मौञ्जीबन्धनमिष्यते। अध्यापनं च वेदानां, सावित्रीवचनं तथा॥" यमः (पाराशरमाधवीय उद्धृतमिदं वचनद्वय) प्रावृतां यज्ञोपवीतिनीमभ्युदानयन् जपेत् "सोमोऽददद् गन्धर्वायेति" (गोभिलगृह्यसूत्रम्)

"नहि शूद्रसमाः स्त्रियः। नहि शूद्रासु ब्राह्मणक्षत्रियवैश्या जायन्ते तस्मात् स्त्रियो मन्त्रतः संस्कार्याः॥ (हारीतसंहिता अ० २१)

प्राहुरप्युत्तमे स्त्रीणामधिकारं तु वैदिके।
यथोर्वशी यमी चैव, शच्याद्याश्च तथापराः॥

(व्योमसंहितातो माध्वब्रह्मसूत्र भाष्य उद्धृतम्)

इत्यादिभिः शतशः प्रमाणैरुपापादयितुं शक्यम्। एवंविधमेव प्रमाणजातं मनसि निर्धार्य लवपुरीयप्राच्यविद्यामहाविद्यालयस्य मुख्याध्यापकैर्दिवंगतैर्महामहोपाध्यायश्रीशिवदत्तशर्मभिर्जैमिनीय न्यायमालाविस्तारव्याख्यायामित्थमलेखि।

"अस्यैव (यज्ञे अधिकारविषयकस्य) अधिकरणस्यानुसारेण अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत इत्यत्रापि स्त्रिया अप्यधिकार" अतएव।

"प्रावृतां यज्ञोपवीतिनीमभ्युदानयन्" (गोभिलगृह्यसूत्रे)

"मनसा भर्तुरतिचारे सावित्र्या अष्टशतेन जुहुयात् पूता भवति (वसिष्ठस्मृतौ २०।५)

"अथ य इच्छेत् दुहिता मे पण्डिता जायेत" (बृहदारण्यके)

किं च यजमानपत्न्या अध्ययनमन्तरेण ऋत्विजादिप्रोक्तार्थस्य ज्ञानाभावात् तदुक्तकर्मणि प्रवृत्तिरेव न स्यात् उपलभ्यते च प्राचीनेतिहासेषु सीतामहाश्वेतादीनां सन्ध्योपासनमपि। यथा

"सन्ध्याकालमनाः श्यामा, ध्रुवमेष्यति जानकी।
नदी चेयं शुभजला, सन्ध्यार्थे वरवर्णिनी॥"

(बाल्मीकिरामायणे)

"सा (कौशल्या) क्षौमवसना नित्यं, हृष्टा व्रतपरायणा।
अग्निं जुहोति स्म तदा, मन्त्रवत्कृतमङ्गला॥ (बा० रामा०)

सुग्रीवपत्नी तारा विषये—

"ततः स्वस्त्ययनं कृत्वा, मन्त्रविद् विजयैषिणी इत्यादि।

सनातनधर्माभिमानिपण्डितमूर्धन्यानां—श्री शिवदत्तशर्मणामयं लेखो

नितान्तं मननीयः सर्वैरपि सत्यहग्रग्रो बृद्धपरिकरैर्महाभागैः ।

एतच्च सर्वं "ब्रह्मचर्येण कन्या युवानं विन्दते पतिम् ॥

( अथर्व ११ । ६ । १८)

भीमा जाया ब्राह्मणस्योपनीता दुर्धां दधाति परमे व्योमन् ॥

( ऋ० १० । १०९ । ४)

इत्यादि वेद मन्त्राधारेण निरूपितं सामाण्यमर्हति । ब्रह्मचर्य पदव्याख्याधः सायणाचार्येणापित्र ह्यवेदः—तदध्ययनार्थमाचरणीयं समिदाधानोर्ध्वरेतष्कत्वादिकं ब्रह्मचारिभिरनुष्ठीयमानं कर्म ब्रह्मचर्यम् "ब्रह्मणि—वेदात्मके अध्येतव्ये चरितुं शीलमस्येति ब्रह्मचारी" इत्येवं रूपेणैव व्यधायि । इत्थं च कन्यानां वेदाध्ययने तदधिकारस्थापक उपनयनसंस्कारे च सिद्धे श्रीदीनानाथशास्त्रिणां कल्पनाया मूलमेवोच्छिद्यते 'नष्टे मूले नैव शाखा न पत्रम्" इन्याभाणकं चानुसृत्य तत्कथनस्य निस्सारता स्वयमेवोपपद्यते ।

दुर्जनतोषन्यायेन "स्त्रीणां विवाह एवोपपयनसंस्कारः" इति श्रीदीनानाथशास्त्रिभिः प्रस्तुतमवैदिकं सिद्धान्तमभ्युगम्यापि रजस्वला विवाहस्य निन्दितत्वमशास्त्रीयत्वं वा न कथमपि वक्तुं युक्तम्। अधोलिखित श्लोकेषु प्रतिपादित उपनयन कालावधिरस्मिन् विषये द्रष्टव्यः—

"आषोडशाद् ब्राह्मणस्य, सावित्री नातिवर्तते ।

आद्वाविंशात् क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥" मनुस्मृतौ, आश्वलायनगृह्य सूत्रे ( अ० १ क० १९ )

"आषोडशाद ब्राह्मणस्यानतीतः कालः । आद्वाविंशात् क्षत्रियस्याचतुर्विंशादित्यनात्ययबौधायन धर्मशास्त्रे ।" ( १ । २ । ३ )

"आषोडशादाद्वाविंशादाचतुर्विंशादित्यनात्यय एषां क्रमेण॥"

( अ० ११ )

वसिष्ठ धर्मशास्त्रे—

"आषोडशाद् ब्राह्मणस्य नातीतः कालः । आद्वात्रिंशात् क्षत्रियस्य; आचतुर्विंशाद्वैश्यस्य ॥"

याज्ञ वल्क्य स्मृतावाचाराध्याये—

आषोडशाद्द्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः॥

इत्थमेव शङ्खापस्तम्बधर्मं सूत्रादिष्वपि।

एषु च सर्वेष्वपि वाक्येष्वैकमत्येन ब्राह्मणक्षत्रियविशामुपनयन कालावधिः, क्रमेण १६, २२, २४ वर्षपर्यन्तं निर्दिष्टः। एतद्वधि पर्यन्तमुपनयन संस्कारानुष्ठाने न किमपि प्रायश्चित्तमपेक्ष्यत एतदवध्युत्तरं तु प्रायश्चित्तं विधीयते। स्त्रीणां विवाहः क्रमेण १६, २२, २४ वर्षपर्यन्तमनुज्ञायत एव शास्त्रकृद्भिरित्यवश्यमङ्गीकर्तव्यं भवत्येतत्सिद्धान्त समर्थकैः सवैः। श्री दीनानाथशास्त्रिभिः कुतोऽयं सुप्रसिद्धोऽपि विषयो न लक्ष्यमानीत इति नाहं वक्तु मर्हामि। "मम सर्व-वर्ण कन्यानां द्वादशवर्ष एव विवाहे पक्षपातः" इति स्वयमभ्युपगतः पक्षपात एव तत्र मुख्यहेतुः संभवति स्त्रीणां विवाह एवोपनयनस्थानीयः इति सिद्धान्तं प्रतिपादयितुं यः श्लोकः श्री दीनानाथशास्त्रिभिर्वर्तमानमनुस्मृतेरुद्धृतः।

"वैवाहिको विधिःस्त्रीणां, संस्कारो वैदिकः स्मृतः।"

तत्रेदं वक्तव्यम्। अत्र स्त्रीणां वैदिको विधिः वैदिकः संस्कार इत्युक्तम् तेन विवाहसंस्कारस्योपनयनस्थानीयता नोपपद्यते। कुल्लूकस्य "विवाहविधिरेव स्त्रीणां वैदिकः संस्कार उपनयनाख्यः मन्वादिभिःस्मृतः" इति व्याख्यानं तु सर्वथाप्यमान्यं कपोलकल्पितं च मूले एव कारस्याभावात्। तथैव पतिसेवा गुरौ वास इत्यादावपि, यद्यपि पूर्वोक्तदिशा वेदविरुद्धवचनानि यत्र क्वचिदुपलभ्यमानान्यप्यस्मभ्यमप्रामाणिकानि, तथापि श्रीदीनानाथशास्त्रिभिर्भूयोभूय उद्धृतम्

"त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्।"
अष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः॥

इति वर्तमानमनुस्मृतावुपलभ्यमानं वचनं सुप्रसिद्धत्वात् किञ्चिद् विवेचनमपेक्षते।

प्रथमं तावत् एतस्मिन् श्लोकेऽनेकविधं परिवर्तनं सञ्जातमि त्यवधेयम्। कतिपयसंस्करणे त्र्यष्टवर्षः (२४ वर्षीयः) इत्यस्य स्थाने द्व्यष्टवर्षः (१६ वर्षीयः) क्वचिच्च "अष्टवर्षः" इति पाठो दृश्यते (पं० वामनशास्त्रिसम्पादितपराशरस्मृतिव्याख्यापादटि प्पण्याम्)

सुप्रख्यातविपश्चिच्छिरोमणयो वाराणसीस्था श्री डा० भगवानदासमहोदया इतरे चानेकपण्डितप्रकाण्डाः "द्वादशवार्षिकीम्" इत्यस्य स्थाने द्विदशवार्षिकीम् (२० वर्षीयाम्) "अष्टवर्षाम्" इत्यस्य स्थाने च "अष्टिवर्षीम्" (१६ वर्षीयाम्) इति पाठं समीचीनं मन्यन्ते वेदायुर्वेदानुकूलत्वात्।

वाराणसीस्थराजकीयमहाविद्यालयस्य महामहोपाध्याय दिवं गताः श्रीराममिश्रशास्त्रिणः 'उद्वाहसमयमीमांसायाम्' "अष्ट वर्षाम्—षोडशवर्षवयस्कामित्यर्थः। स चायमर्थः अष्टौ च अष्टौ च इत्यष्टौ इत्येकशेषेन लभ्यस्तत्र प्रमाणं च "त्रिंशद्वर्षं षोडशाब्दां भार्यां विन्देत नग्निकाम्" इति महाभारतीयमुद्वाहतत्वे रघु नन्दनकृते १६ वर्षवयस्ककन्याया उद्वाह्यत्ववचनम्।" इत्याश्चर्य कारिणीं व्याख्यामकार्षुः। द्विदशवार्षिकीम् (२० वर्षीयाम्) इति पाठेऽभ्युपगम्यते 'हृद्याम्' इति विशेषणं यथा संगच्छते न तथा द्वादशवार्षिकीमिति पाठे। द्विदशवार्षिकीम् (२०) अष्टिवर्षीम् (१६) इति पाठौ मनुस्मृति महाभारत ब्रह्मपुराणादि वाक्यैः सङ्गतौ समीचीनौ च प्रतीयेते। मनुस्मृतेः—

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती।
ऊर्ध्वं तु कालादेतस्माद्, विन्देत सदृशं पतिम्॥"

अयं श्लोक उद्धृत एव प्राक् यः षोडशवर्षीयकन्याया उद्वाहमनुमोदयति प्रायशस्त्रयोदशवर्षान्त ऋतुमतीत्वदर्शनात्। महाभारतीयम्—

"त्रीणि वर्षाण्युदीक्षेत, कन्या ऋतुमती सती।

चतुर्थे त्वथसंप्राप्ते, स्वयं भर्तारमर्जयेत् ॥
प्रजा न हीयते तस्या रतिश्च भरतर्षभ ।
अतोऽन्यथा वर्तमाना, भवेद्वाच्या प्रजापतेः ॥"
अनुशासनपर्वणि अ० ४०

इत्यादिकं वचनमपि मानवसिद्धान्तमेव समर्थयति । एतद्विशिष्टापद्विषयकमपि न वक्तुं युक्तम् । मानवगृह्यसूत्रेऽपि विवाहकाले—"रेतोहमस्मि रेतो धत्तम् ता एहि विवहावहै पुंसे पुत्राय कर्तवै श्रिये पुत्राय वेतवै । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥" इत्यादि मन्त्रपाठात् "द्वादशरात्रं ब्रह्मचर्यं चरतः त्रिरात्रमेकरात्रं वेति" इति विधानाच्च यौवन एव विवाहः स्पष्टं सूच्यते ।

श्रीनाथचूडामणिकृते विवाहतत्त्वार्णवे ब्राह्मपुराणादुद्धृतावधस्तनौ श्लोकावस्मिन् विषय उल्लेख्यौ—

"द्वात्रिंशद्वर्षपूर्णेन, यदि षोडशवार्षिकी ।
लब्ध्वा तदा तु वस्तव्यं,षड्रात्रं संयते न तु ॥
विंशत्यब्दा यदा कन्या, वस्तव्यं त्वत्र वै त्र्यहम् ।
अत ऊर्ध्वमहोरात्रं, वस्तव्यं संयतेन वै ॥

विस्तरभिया विषयस्यास्य विवेचनमत्रैव पर्यवसीयते । 'वस्तुतस्तु'

अव्यङ्गाङ्गीं सौम्यनाम्नीं, हंसवारणगामिनीम् ।
तनुलोमकेशदशनां, मृद्वङ्गीमुद्वहेत् स्त्रियम् ॥ ३ ।१०
असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मण्यमैथुनी ॥ ३ । ५

( अमैथुनी=अक्षतयोनिरिति नन्दनः )

बाल्ये पितुर्वशे तिष्ठेत्, पाणिग्राहस्य यौवने ॥ ५ । १४८
पिता रक्षति कौमारे, भर्ता रक्षति यौवने । ९ । ३

इत्यादयो मानवश्लोका कन्याया यौवन एव विवाहमनुमोदयन्ति । ब्राह्मदेवार्षप्राजापत्यरूपविवाहेषु क्वचिदपि रजस्वला विवाहनिषेधो नोपलभ्यते विशेषतः

"सहोभौ चरतां धर्ममिति वाचानुभाष्य च।
कन्या प्रदानमभ्यर्च्य, प्राजापत्यो विधिः स्मृतः ॥ मनु० ३।३०
कन्याचैव वरश्चोभौ, स्वेच्छया धर्मचारिणौ।
स्यातामिति हि यत्रोक्त्वा, दानं कार्यं विधिस्त्वयम् ॥
बृहत्पराशरसंहिता ४। ७

सह धर्मं चरत मिति प्राजापत्यः ॥ आश्वलायनगृह्यसूत्रे,

इति लक्षणानुसारं प्राजापत्यविवाहो बधूवरयोरुभयोरपि यौवनं सूचयत्यन्यथा सहधर्मचरणासंभवाद् बालिकया सह।

षडानुपूर्व्या विप्रस्य, क्षत्रस्य चतुरोऽवरान्
विट् शूद्रयोस्तु तानेव, विद्याद् धर्म्यानराक्षसान् ॥ मनु० ३।२३

ब्राह्मणस्य ब्राह्मादि क्रमेण षट् ब्राह्मदैवार्षप्राजापत्यासुरगान्धर्वान् धर्म्यान् धर्मादनपेतात् जानीयात् (कुल्लूकः) इति मानव वचनमनुसृत्य गान्धर्वविवाहोऽपि ब्राह्मणाय धर्म्मतयानुज्ञायते यल्लक्षणं तत्रैव

इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च।
गान्धर्वः सतु विज्ञेयः, मैथुन्यः कामसंभवः ॥ ३। २३
एवं निरूपितम्।

"सुश्रुतसंहितात उद्धृतवाक्यस्य विमर्शोऽपि प्रसङ्गोपात्ततया विधीयते, यद्यपि लेखविस्तरो मां भीषयति। तत्र अथास्मै पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमावहेत् पित्र्यधर्मार्थ कामप्रजाःप्राप्स्यतीति" पाठः शारीरस्थानात १०।५३, श्री दीनानाथशास्त्रिभिरुद्धृतः। वस्तुतस्तु स पाठोऽसमीचीनः सुश्रुतकारमतविरुद्धत्वाद् धूर्तपरिकल्पितश्चेत्यस्माभिरुपपादयितुं शक्यम्। षोडशवर्षां पत्नीमित्येव समीचीनः पाठो यत इतोऽग्रएव। "ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम्।" इत्यादिकः सुप्रसिद्धः श्लोको वर्तते यत्र पञ्चविंशति षोडशवर्षयोः सम्बन्धोऽनुपातो वा स्पष्टं सूचितः।

"पञ्चविंशे ततो वर्षे पुमान्नारी तु षोडशे ।
समत्वागतवीर्यौ तु, जानीयात्कुशलो भिषक् ॥
सुश्रुतस्य सूत्रोस्थाने ३५।८

इतिश्लोके व्यक्तं पञ्चविंशवर्षवयस्कस्य षोडशवर्षया सह संयोगो निरूपितः। प्राचीनसंस्करणेषु 'षोडशवर्षां पत्नीमावहेत्' इत्येव पाठ आसीदिति १९४७ वैक्रमाब्दे (सन् १८९१) मुद्रिताच्छ्री विश्वेश्वरानन्दस्वामिकृतात्पुरुषार्थप्रकाशाभिधाद् ग्रन्थाद् विज्ञायते, यत्र युवति विवाहसमर्थन इदमेव वचनं प्रबलतया "अथास्मै पञ्चविंशतिवर्षाय षोडशवर्षां पत्नीमावहेत्" इतिरूपेणोद्धृतं दृश्यते। "गर्भाधानं विवाहश्चेति भिन्नौ संस्कारौ भिन्नकालिकौ च" इति श्री दीनानाथशास्त्रिणां कथनं सप्रमाणं समालोचितपूर्वमेव मयेति न पिष्टपेषणं विधीयते। वस्तुतो विवाहकाले कन्याया द्वादशवर्षवयसि निर्धारितं पुरुषस्य च पञ्चविंशेवर्षे गर्भाधानाभिधायके श्लोकेऽपि एकोनत्रिंशत् त्रिंशद्वेति पाठः समीचीनोऽभविष्यत् विवाहस्य प्रयोजनमेव पितृय धर्मार्थकाम प्रजाः प्राप्स्यतीति" यद्द्वारा सूचितत्वान्न सा कल्पना मान्यतामर्हति। "स्त्री यदि द्वादशवर्षा निर्बला वा स्यात् तथापि भाविसन्ततौ बाधा नैर्बल्यं वा न भवति" इति शास्त्रिमहोदयानां कथनमायुर्वेदविरुद्धत्वात् प्रत्यक्षविरुद्धत्वाच्च केवलमविगणनीयमुपहासजनकं च। प्राक्तनकाले याः सन्ततयो बभूवुस्ता अल्पवयो विवाहितवनिताजनिता इत्यप्यैतिहासिकदृशा अर्वथाप्यमान्यं कथनम्। प्राक्तनकालेऽस्माकं पूर्वजा वेदानुसृत्य "समानं ब्रह्मचर्यम्"। इति श्रौतसूत्रप्रतिपादितं सिद्धान्तमभ्युपगम्य यौवन एव कन्यानां विवाहमकार्षुः स्वयंवरविधिश्च न केवलं क्षत्रियासु किन्तु ब्राह्मणादिकन्यास्वपि प्रचलितोऽभवदिति निरूपितपूर्वमेव। सीताविवाह विषयेऽपि तस्याः स्वकीयोक्तिर्दृश्यताम्।

"पतिसंयोगसुलभं वयो दृष्ट्वा तु मे पिता।
चिन्तामभ्यगमद्दीनो वित्तनाशादिवाधनः॥
वा० रामा० अयो० का० ११८।३४

("पतिसंयोगे सुलभम् अन्यथा तु दुर्लभम् इत्यर्थः। पति संयोगं विना स्थातुमशक्यं यौवनावस्थावत् इत्यर्थः इति श्रीकृष्णमाचार्यकृत टिप्पण्याम्") किं षष्ठवर्षं ईदृशं पतिसंयोगसुलभं वयो यौवनावस्था वा भवतीति श्री शास्त्रि महोदया एव कथयन्तु। विवाहानन्तरमेव श्री सीतादेव्यादि विषये रामायणे।

"अभिवाद्याभिवाद्यांश्च, सर्वा राजसुतास्तदा।
रेमिरे मुदिताः सर्वाः, भर्तृभिः सहिता रहः॥

इत्यादिकं वर्णितं किमेतदेकान्ते रमणं षड्वर्षीयबालिकया सह संभवति ?

विवाहे काले श्रीरामादीन् सम्बोधयन् जनक एवमवोचत्।

सर्वे भवन्तः सौम्यास्तु सर्वे सुचरितव्रताः॥
बा० का० ७३।३१

इयं सीता मम सुता, सहधर्मचरी तव।
पतिव्रता महाभागा छायेवानुगता सदा॥ ७३।२४

किं षड्वर्षीयबालिका सहधर्मचरी छायेवानुगता च संभवतीति निष्पक्षपातविवेचका एवालोचयन्तु। इत्यादिभिरनेकप्रमाणैः श्री सीतादेव्या विवाहो यौवन एव संवृत्त इति व्यक्तं विज्ञायते। कुन्ती देवी विषये—"तां तु तेजस्विनीं कन्यां, रूपयौवनशालिनीम्"
आदिपर्व। १२।२

दमयन्ती विषये—

"स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम्॥"
वनपर्वणि ५३।८

वसिष्ठभार्या लोपामुद्राविषये—

वैदर्भीं तु तथा युक्तां, युवतीं प्रेक्ष्य वै पिता॥"
व० प० ९६।१३

ब्राह्मणवर्येऽस्थ—"शुक्राचार्य कन्या देवयान्या विषये।

स शीलयन् देवयानीं, कन्यां संप्राप्तयौवनाम्॥"
आ० प० ७६।२५

इत्यादिकानि निदर्शनानि श्री दीनानाथशास्त्रिणां कथनं सर्वथापि मिथ्या साधयन्तीत्यसन्देहं वक्तुं शक्यम्।

लेखान्ते श्री दीनानाथ शास्त्रिभिर्गोभिलगृह्यसूत्राद् वचनमेकमुद्धृतम् "नग्निका तु श्रेष्ठा॥" गो० ३।४।१।८

नग्निका त्वनागतार्तवेति प्रसिद्धमेवेति च तत्र टिप्पणीकृता। "वस्तुतस्तु अयं पाठोऽप्यसमीचीनः। अस्मिन् विषये बङ्गदेशीयं विपश्चिच्छिरोमणीनां सुगृहीत नामधेयानां दिवंगतानां श्री सत्यव्रत सामश्रमिणां भाष्यमेतस्य सूत्रस्योपरिमयाऽऽशेषतयोद्ध्रियतेऽत्यावश्यकत्वात्। तेः "अनग्निका तु श्रेष्ठा।" इति सूत्रपाठमुद्धृत्य लिखन्ति तत्र तु अपि ( अनग्निका ) यस्याः कन्याया ऋतुर्न भवेत् यावच्च नग्ना विचरितुं शक्नुयात् सा नग्निका तद् भिन्ना अनग्निका ऋतुमती-प्राप्तयौवना। सैव श्रेष्ठा—प्रशस्या। कन्याया ऋतौ संजाते ह्येवाग्नि भोज्यत्वमुपयुज्यते तदैव "सोमोऽददद् गन्धर्वाय" इति मन्त्रप्रयोगो युज्यते नान्यथेत्येव दारकर्मणि ऋतुमत्या प्राशस्त्यम्। अतएव मनुरपि।

"देवदत्तां पतिर्भार्यां, विन्दये नेच्छयात्मनः॥" (९।९५)

इति तदेवं प्राप्तायौवनायाम्।

आसन्नयौवनापि नोद्वाह्येति फलितम्॥

गोभिलगृह्यसूत्रं सामवेदीयमिति पण्डितप्रकाण्डानां सत्यव्रत सामाश्रमिणां भाष्यं तत्र प्रामाणिकमेव मन्तव्यम्।

इत्थं च श्रीदीनानाथशास्त्रिकृताक्षेपपरिहारपूर्वकं यौवन एव विवाहविधिमुपपाद्य विस्तर भियात्रैवोपरम्यते मया। मन्ये सर्वेऽपि विपश्चितः पक्षपातं विहाय धार्मिकसामाजिकदृष्ट्यावश्यकमिमं विषयमालोचयिष्यन्ति वैदिकं चादेशमनुसरिष्यन्तीति॥



# संपादकीयम्

## श्रियः पञ्चमो जन्मोत्सवः—

पाठकानां संस्कृतसाहित्य-परिषदः काश्मीर-श्रीनगरस्य सदस्यानां मनोरञ्जनाय सूचनेयं सुखावहा भविष्यति, यदद्य पाठकमहाभागाः श्रियः पत्रिकायाः पञ्चमे वर्षे प्रवेशं पश्यन्ति। यादृशीं सेवां वयं पत्रस्यास्य कुर्मः सर्वे स्वयमेव जानन्ति। भारतवर्षस्य संस्कृतवाङ्मयस्य संसारे प्रचलितपत्राणां संख्यैतेषु वर्षेषु संवर्धित इति हर्षास्पदम्।

पूर्वमपि बहुषु स्थानेषु स्वनियमं स्वमतञ्चास्माभिः प्रकटितमस्ति। वयं तु देववाण्याः सरस्वतीमन्दिरस्य पूजकाः प्राचीन-वैदिकार्यैतिहासस्य अर्वाचीनहिन्दुजातेः सभ्यतायाश्च रक्षकाः। अत्र श्रीःपत्रस्य पूर्ववर्षाणां पृष्ठा एवास्माकं साक्षिणः, यत् श्रियः सर्वे लेखा हिन्दुजातिसभ्यतायाः संस्कृतवाङ्मयस्य च दृढं पोषकाः। न च वयं जीर्णहिन्दुजातेः कुरीतीनां प्रचारकाः, याभिः कुरीतिभिरस्माकं धर्मकर्म सव नष्टं स्यात्, आर्यजातेः संख्या चातिन्यूनतां गता भवेत्। न चापि वयं हिन्दुजातेः प्राणप्रियस्येष्टस्य कस्यचिद् धर्मस्य वा खण्डकाः, न च कस्यचिद् हृदयङ्गतस्य धर्ममतस्य 'सुधारकाः'। सर्वेषां लेखास्तु तेषामेव भाषया तन्मतानुसारेण च प्रकाशयामः। यथा समयं यथावकाशं यदि कस्यचिल् लेखस्योत्तरमपि प्राप्नुमस्तदपि तथैवादरेण प्रकाशयामः। उत्तरप्रकाशने भिन्न-भिन्न लेखानां स्वीकरणे अन्तिमप्रमाणं तु संपादका एव। तेषामपि प्रयोजनं सर्वसमाजस्य हितमेव न चान्यत् किञ्चिद् इति।

## वैदिकविवाह-वयो विमर्षः—

श्रियः तृतीयसंख्यायां श्रीमन्तो नडादूरस्वामिनः कृष्णाचार्याः मद्रप्रदेशाद् बालविवाहसमर्थकं लेखं लिखितवन्तः,

यस्योत्तरं श्रीमता पं० धर्मदेववेदवाचस्पतिना बङ्गलोर नगरतः श्रियः पत्रेषु प्रकाशनार्थं प्रेषितम् अस्माभिश्च पूर्वोक्तलेखद्वयं सादरं यथावदुद्टङ्कितम्। तदनन्तरं पं० दीनानाथ शर्मणा सारस्वतेन मूलत्राणवास्तव्येन पं० धर्मदेवपक्षं खण्डितुं स्वामिनां च पक्षं मण्डितुमारब्धो लेखो वृहत्। पं० धर्मदेवेन तस्यापि दीर्घेण लेखेनोत्तरं प्रकाशितम्। स्वामिपादास्त्वस्मभ्यं रुष्टाः, यतः किमर्थमस्माभिस्तेषां बालविवाहसमर्थक लेखस्य खण्डनरूपमुत्तरं प्रकाशितम्। इदानीं ते तु विरमिताः, परं पं० दीननाथ-धर्मदेवयोः परस्परं शास्त्रार्थः प्रीतिपूर्वकश्चलत्येव यथा जानन्ति श्रियः पाठकाः। इदानीमस्मदभ्यर्णे द्वयोरपि पण्डित महोदययोर्लेखौ प्रकाशनार्थमागतौ विद्येते। ययोः प्रकाशनानन्तरं पाठकैः सर्वं ज्ञातं भवेत्। इदानीं विवादोऽयं यथा समाप्तिं लभेत्तथैव वर्तितव्यमस्माभिः। एतयोर्लेखयोः प्रकाशानन्तरं प्रायशः विवादोऽयं समाप्तिमेष्यति। लेखक महाभागौं कृपया क्षमाप्रदानं कुरुतां, यदि विषयेऽस्मिन् पर्याप्त विचारानन्तरं वयमग्रे विरमामः। इदं समाजस्य हितायाहिताय वा विषयोऽयं इति सर्वे स्वयमेव जानन्तु। काश्मीरनरेन्द्रेण तु (बालविवाह-निरोधनार्थं) नियमाः स्वीकृताः, यैर्बालविवाहकर्तारौ मतापितरौ पुरोहितश्च दण्डार्हाः स्थापिताः। लेखक महाभागानामन्तिम लेख प्रकाशनसमये वयमपि स्वविचारान् प्रकटयिष्यामः।

## जयपुरेऽभिनन्दन समारोहः—

श्रीमता महापण्डित गिरिधरशर्मणा जयपुरराज्यसंस्कृत महाविद्यालयस्याध्यक्षेण जयपुरे चैत्रशुक्लद्वादश्यां गुरुवासरे सं० १९९३, एप्रिल २ सन् १९३६ दिवसं प्रारभ्य चतुर्थं एप्रिलं यावत् संस्कृतसाहित्यसम्मेलनस्य वृहदधिवेशनं समजनि। तत्र प्रयोजनं तु श्रीमतां विद्यावाचस्पतीनां श्रीमधुसूदनओझा महा-

नुभावानां वैदिकसाहित्यस्याद्वितीयविदुषां शताधिकग्रन्थ-रचयितानां सप्तति (७०) वर्षायुप्राप्तावभिनन्दनपत्रदान-मासीत्। श्रीगोकुलनाथस्वामिमहाराजाः मोहमयीत अवसर-मनमलङ्कर्तुमागताः सभापतिपदश्च संगृहीतवन्तः। भारतवर्षस्य जयपुरराज्यस्य च प्रचुर संख्याविदुषां समारोहोऽयम्।

प्रथमे दिवसे प्रसिद्धपण्डितानां प्रारम्भिकभाषणानन्तरं प्रौढच्छात्राणां व्याकरणसाहित्यविषयेषु प्राचीनशैलीमव-लम्ब्य शास्त्रार्थाः सञ्जाताः। निपुणतमै श्छात्रैर्मध्यस्थपण्डितानां संमत्या पारितोषिकाणि प्राप्तानि। द्वितीयदिनेऽपि व्याकरण-दर्शन-विषयाववलम्ब्य प्रौढछात्राणां पुनरपिशास्त्रार्थाः सञ्जाताः। मध्याह्नोत्तरकाले वेदपाठ-मङ्गलगानाद्यनन्तरं ईश्वरवादविषये पञ्चविद्वांसः स्वनिबन्धानश्रावयन्। तदनन्तरं कतिपयैर्विद्वद्भिः सुरभारतीविषये स्वकविताः पठिताः। भट्टश्रीमथुरानाथ-साहित्याचार्यस्य कवितामत्युत्तमां ज्ञात्वा सभापतिना "कवि शिरोमणिः" इत्युपाधिस्तेभ्यः प्रदत्ता। तृतीये दिवसेऽपि इत्थमेव संस्कृतोद्धाराय संमेलनं सञ्जातम्। वैदिकदेवताविषये प्रतियो-गितारूपेण निबन्धौ द्वौ पठितौ। ततो विद्यावाचस्पति-श्रीमधु-सूदनमहाशया अभिनन्दनपत्रं प्राप्तवन्तः। कुरुक्षेत्र पाणीपत मोहमयी-वाराणसी लवपुरेत्यादि भिन्न २ भारतप्रान्तेभ्यो महा-विद्वांसस्तत्र प्राप्तवन्त आसन्। जयपुर महाराजस्य राज्याधिका-रिणां कृपया तत्रत्यपण्डितमण्डले उत्साहेन च अतिसमारो-हेण कार्यमिदं समजनि। अहो !! कीदृशी सेवा संस्कृतवाङ्-मयस्य। धन्यवादार्हाः सर्वे इमे यैः स्वसमयदानेनैतादृशो मनोविनोदद: सहस्रसंख्यासंख्येयपुरुषाणां समारोहो दिनत्रय-रचित इति।

भारते भातु भारती

कुलभूषणः

# परिषद् वृत्तम्

## संस्कृतसाहित्यपरिषदः श्रीनगर-काश्मीरस्य, सं० १९९२ चैत्रमासाजू ज्येष्ठ १९९३ पर्यन्तं वृत्तम्।

सौरचैत्रीयद्वाविंशे दिवसे परिषदः सरस्वतीसम्मेलनं वासन्तिकं यथासमयं सार्धद्विनाडिकायां माइसूमान्तर्वर्त्ति-हिन्दूसहायकसभामन्दिरे अन्तरङ्गपुरःसरं समजनि, यस्यां चान्तरङ्गसंसदि नियोजितसदस्यसंमत्या अधः उट्टङ्किताः प्रस्तावाः स्वीकृताः।

(१) श्रीः पत्रिकायाः काश्मीरेषु बहिश्च प्रचाराय सर्वैः प्रयतितव्यम्। गीर्वाणवाणीरसिकानां सूची संपाद्य पञ्च२ ग्राहकाः सदस्यैः संपादनीयाः॥

(२) परिषत्कायस्थसेवकानां कर्यबाहुल्यप्रयासफलात्मकं द्विगुणं वेतनं विधेयम्।

(३) संस्कृतोन्नत्यै व्यावहारिकोक्ति-प्रत्युक्ती प्राचीनार्वाचीनेतिहासादिविविधविषयमुद्रापणं पत्रिकायाम्।

(४) श्रीपत्रिकायाश्चाग्रिमं मूल्यं केवलं मुद्रिकैका इति। तदनन्तरं धर्मार्थविभागाध्यक्षाणां वार्षिक-साहायप्रदानाय शतशो धन्यवादवितरणपूर्वकं सभाविसर्जनमभूत्।

दिवाकरीय-माधवस्यैकोनत्रिंशे वासरे सार्धद्विघण्टानादकाले परिषदो मासिकमधिवेशनमभूत्। यत्र पं० जगद्धरजाडूशास्त्रिणा अवन्तिवर्मकालीन-शिवस्वामिनः काव्यमधिकृत्य, पं० कुलभूषणेन सरस्वतीयात्रा शीर्षक लेखोपहारः, पं० मुकुन्दरामशास्त्रिणा च सन्ध्यावन्दनविषये स्वविचाराः प्रकटिताः। अनन्तरं एस. पी. महाविद्यालयीय तृतीयकक्ष्याविद्यार्थिना चमनलालेन वसन्तर्तुविवरणात्मकं गद्यखण्डं श्रावितम्। यत्पश्चात् प्रधानवर्येण धन्यवादं दत्त्वान्तिमं व्याख्यानविचर प्रकटनं विधाय परिषद्विसर्जितेति।

भास्करीयशुचौ २५ शे तिथावुत्तरमध्याह्ने सार्धचतुर्थघण्टा-

वादने विद्वत्समाजोऽभूत्। यत्र राजकीयकार्यवशात् कश्मीरप्रान्तीय-संस्कृतपाठशालानिरीक्षणार्थं बहिर्गतस्य प्रधानवर्यस्यानुपस्थिता वुपप्रधानेन तदासनं सेवितं कार्यं चारब्धम्। पूर्वं मन्त्रिमहोदयेन गधी-याधिवेशनकार्यक्रममुपस्थाप्य दानशुल्क-रसीदनियमो निश्चयात्मको विनियोजितः। ततश्च वार्तिकजात्तिमता रामजी इयत्नेन सन्ध्यावन्दन-विषये, पं० श्यामलालगंज्जूशास्त्रिणा महात्मा तुलसीदासस्य जीवनचरित्रविषये, पं० लक्ष्मीचन्द्रशास्त्रिणा मानुष्यकृत्यविषये, तदनन्तरं परिषदुपमन्त्रिणा पं० शिवनाथ शास्त्रिणा च पुरावृत्तविषये, सारगर्भितानि व्याख्यानानि श्रावितानि। अनन्तरं मन्त्रिवर्यैस्तु काश्मीरानागतस्य भूतपूर्वविद्यासचिवमन्त्रिणे रमेशदत्तपाण्डे महाशयस्य सुस्वागतमकारि। ततश्च संस्कृतप्रचारमधिकृत्य पाण्डे महाशयेनापि स्वकीया विचारसरणी अन्ते प्रकटिता। तत अहो-रात्रसन्धौ सभाविसर्जनमभूदिति।

परिषन्मन्त्रिणौ

---

## व्यायामः

( श्री पं० रमाकान्त शास्त्री वैद्य विशारदः जम्मू )

यादृशः उपयोगः यस्य द्रव्यस्य यदि तद् द्रव्यं तदर्थम् न उपयुज्यते, ततः कालेन तत् स्वयमेव तस्मै उपयोगाय अयोग्यं जायते। यथा अभिनवानां फलानां अस्ति भक्षणे उपयोगः। तानि एव यदि अभुक्तानि कतिपयान् दिवसान् गृहे रक्षितानि विकृतिं गच्छन्ति, अभक्ष्याणि च जायन्ते।

इत्थम् एव निष्क्रियाणि शरीरस्य अङ्गानि विकृतानि भवन्ति, दुर्बलानि, अनुपयोगीनि जायन्ते। तानि एव सम्यगुपयुक्तानि पुष्यन्ति। ऊर्ध्वं बाहवः संन्यासिनः सदैव भुजम् एकम् उत्तानीकृत्य तिष्ठन्ति। परं स बाहुः अल्पेन कालेन तथा निष्क्रियो जायते, परि-शुष्यति च, यथा चालयितुमपि न शक्यते, इति बहुभिः विलोकितं स्यात्।

तस्मात् शरीरस्य कार्यक्षमतां पुष्टिं च वर्धयितुं निष्कर्मतां आलस्यं च निवारयितुं आरोग्य-शास्त्रविदः व्यायामं उपदिशन्ति। सच सर्वैः मानवैः प्रतिदिनं कर्तव्यः। केचित् मानवाः वृत्तेरनुरोधात् नानाविधान्परिश्रमान् ( भारवहन-कृषिकर्म लोह-काष्ठादि शिल्प कर्माणि ) सदैव कुर्वन्ति। ते चेत् व्यायामं न कुर्वन्तु, न तेषां तेन कापि हानिः भवति। परं यैः अहोरात्रे कोऽपि परिश्रमः न क्रियते ( यथा छात्राः, राजकर्मचारिणः, अध्यापकाः, बणिजः इत्यादयः ) तैः अवश्यम् एव प्रतिदिनं नियतकाले व्यायामः कर्तव्यः। तेन व्यायामेन बहवः उपकारा भवन्ति शरीराणाम्, तथा हि—व्यायाम-माचरतः मानवस्य श्वासेन अधिकपरिमाणतः वायोः गमागमौ भवतः, स्वेदः च सर्वशरीरे समुद्भवति। इत्थं रक्तशुद्धिः त्वरया समधिका जायते, यया प्राणशक्तिः ( ओष जन-रूपा ) प्राचुर्येण लभ्यते, रक्तस्थं विषाक्तं मलं आधिक्येन निर्गच्छति। किञ्च शरीर-स्थानि नानायन्त्राणि वेगात् संचलनात् पुष्टिं लभन्ते। व्यायाम—समुद्भूतेन ऊष्मणा भुक्तं अन्नं सम्यग् जीर्णं शरीरं पुष्णाति।

अथ व्यायाम सम्बन्धिनः छात्रैः पालनीयान् नियमान् संक्षेपतः वक्ष्यामः। तान् अनुसृत्य व्यायामः कर्तव्य :—

(१) क्रीड़नम् एव अल्पवयसां बालानां उचितः व्यायामः। तत् खलु सर्वेभ्यो बालेभ्यो रोचते च। परं क्रीड़नमपि तादृशं स्यात्, यस्मिन् तेषां परिश्रमः स्यात्।

(२) अल्पवयसां बालानां ( ८ वर्षाणि यावत् ) सम वयस्कैः बालैः सह कूर्दनं पलायनं इत्यादयः एव स्वाभाविका व्यायामाः समुचिताः।

(३) ततः ऊर्ध्वं नेत्रनिमीलन-प्रभृतीनि च भारतीयानि, क्रीड़-नानि क्रिकेट-फुटबाल प्रभृतीनि च पाश्चात्यानि क्रीड़नानि विधेयानि।

(४) दिवसे कोऽपि कालः घण्टानां द्वयं त्रयं वा व्यायामार्थं नियोक्तव्यः। तस्मिन् नियते काले एव स कर्तव्यः।

(५) द्वारबाह्याः ( Out door ) द्वारान्तराः ( Indoor ) इति द्विविधा भवन्ति व्यायामाः। तेषु पूर्वतनाः एव प्रशस्ततरा ज्ञेयाः। गृहाद् बहिः सति सम्भवे नगराद् बहिः प्रशस्ते विशुद्ध-पवनयुक्ते स्थले द्वारबाह्याः व्यायामाः कर्तुमुचिताः।

(६) भोजनानन्तरं व्यायामः न कर्तव्यः। तेन शरीरस्य महती हानिर्जायते।

(७) पूर्वोक्तपञ्चवर्षान्तरवयस्कानां बालिकानां कृते 'रज्जु कूर्दन' नामकं क्रीडनं साम्प्रतं प्रचलितमस्ति। ताभिस्तदेव अनुष्ठेयम्।

(८) उच्चैः नादः हास्यं च अपि व्यायामौ एव विज्ञेयौ।

(९) केचित् छात्राः व्यायाममुपेक्ष्य अहोरात्रं अध्ययने एव रता भवन्ति। तत् अतीव आरोग्यनाशकं अस्ति। आरोग्येनष्टे अध्ययनं स्वतः एव नश्यति।

(१०) दुराचारैः अति क्रोधनैः विरुद्धप्रकृतिभिः समवयस्कैः सह क्रीड़नम् प्रशस्तम्।

———

## सम्पादक समितिः

१. पं० डाक्टर कुलभूषण, डी. पी. एच. (लण्डन)
२. पं० गोविन्द राजदानः, शास्त्री, एम.ए., एम.ओ.एल., एल.टी.
३. पं० जगद्धर जाडू, शास्त्री, एम.ए., एम.ओ.एल.
४. पं० शिवनाथ शास्त्री ।

---

भीमसेन विद्यालङ्कार द्वारा नवयुग प्रिंटिंग प्रैस, १७, मोहनलाल रोड, लाहौर में मुद्रित ।

# संस्कृत साहित्य परिषदः श्रीनगरस्य श्रियश्च नियमाः

**उद्देश्यः—**

परिषदोऽस्याः केवलमेक एवउद्देश्यः संस्कृत भाषायंसभ्यता रक्षार्थं प्रचारः ।

एतत् प्राप्त्यर्थं १।) श्रीनगरात् भिन्ननगरस्थेभ्यः । १) श्रीनगरस्थेभ्यश्च शुल्करूपेण धनमपेक्ष्यते । अनेनैव पत्रिकापि लभेत सभासत्त्वमपि च भवेत् ।

श्रीः पत्रं सभासदैः सर्वैं रुप्यकेन एकेन १) प्राप्यते । संस्कृतानुरागिभिरस्याः परिषदः सभासत्वम् स्वीकर्तव्यम् पत्र लिखनेन ।

**सहायताः—**

परिषदो व्ययः पत्रिकाया अस्याः कृते शुल्कादत्यधिकं भवति, परन्तु धनाभावात् बहवः संस्कृतज्ञाः छात्राः ब्राह्मणाश्च विनामूल्येनैव लभन्ते पत्रम् । अतः सहायतारूपेण किञ्चित् धनमस्यै अवश्यमेव संस्कृतोद्धारप्रणयिभिर्दातव्यम् ।

**पत्रप्रकाशनसमयः—**

त्रैमासिकं पत्रमिदं सौरवर्षस्य आषाढ़, आश्विन, पौष, चैत्र मासेषु निर्गच्छति । पत्रप्रकाशनमासानन्तरमपि पत्रस्यानुपलब्धौ सूचनया पुनरपि प्रेषयिष्यते पत्रम् । मासादनन्तरं तु पत्रं न प्राप्यते ।

**पत्रव्यवहाराः—**

लेखप्रेषणाय पत्रप्रबंधाय च निम्नाङ्कितेन प्रत्ययेन पत्रव्यवहारं विधेयः

आषाढ़ १९९३
जुलाई १९३६

कुलभूषणः
परिषन्मन्त्री
श्रियः सञ्चालकः
सम्पादकश्च

सुन्वार बाग़, श्रीनगर, (कश्मीर)

वर्ष ५
संख्या २

Vol. 5
Number 2

❀ ओ३म् ❀

कश्मीर प्रदेशस्थ श्रीनगरस्थायाः

# संस्कृत साहित्य परिषदः

त्रैमासिकं पत्रम्

# श्रीः

Quarterly Journal of the

# SANSKRIT SAHITYA PARISHAD

SRINAGAR, KASHMIR.

श्रीनगर आश्विन / कार्तिक १९९३

*Srinagar October / November 1936*

वार्षिकं मूल्यम् १)

प्राप्ति स्थानम्—पं० कुलभूषणः श्री कार्यालय, सुथरवाग श्रीनगर कश्मीर

# विषय सूची



सर्वे लेखा लेखकमहानुभावानां भाषाकृतानुसारेणैव प्रकाश्यन्ते। तेषामुत्तरदायिनो लेखका एव न च सम्पादकाः।



---




वर्ष ५ संख्या २ | आश्विन संवत् १९९३ वि० अक्तूबर १९३६ ईसवी | पूर्ण संख्या १८

# ऋषिप्रवीरादिसिद्धानां जीवनचरित्रम् ।

( ले० पं० शिवनाथ शर्मा शास्त्री साहित्यभूषणः साहित्यमणिः
उपमन्त्री संस्कृतसाहित्यपरिषदः काश्मीरस्य )

देवा यत्र कृतास्पदा रुचिधरा विश्वेनिलाः कोमलाः
साध्या हस्तगताः समं वसुगणैर्विद्याधरा मानवाः ।
माहाराजिकवंशजाश्च तुषिता ह्याभासुराः सज्जनाः
सेयं शक्रपुरीमतीत्य न कथं कश्मीरभू राजते ॥

---

## मियाँशाह ( मीशाह ) कृष्णाकारी ।

पुरावृत्तम् :—

किल पुरा ईसवीयसप्तादशशताब्द्यां प्रारम्भे शाहजहाँ-राजशासनकाले सर्वतो धिक्कृतेषु क्षुत्पिपासापरिपीडितेषु हिन्दुषु एकोऽकिञ्चनः क्षुदाप्रपीडितः काश्मीरदेशोपत्यकाप्रान्तीयो हिन्दु-पुत्रः स्वगृहान्निर्गत्य ग्रामंग्रामं ( लारपरगना ) लहरविषयस्थं कमपि यवनगृहं सेवायै उपागमत् । केवलं वस्त्रान्नादिकमेव सेवाशुल्क-ममंस्त । प्रत्यहं स्वस्वामिनः अजाविकं वने चारयन्कालं .नताय ।

एकदा तद्ग्रामस्थेन केनापि हिन्दुना तदीयं स्वामिप्रेम सेवौत्सुक्यं चावलोक्य तत्स्वामिनिकटे गत्वा स्वगृहार्थे याचितोऽसौ भृत्यः। तत्पतिना प्रातिवेश्मिकप्रेममुग्धेन दत्तोऽसौ भृत्यः। हिन्दुगृहेऽपि भृत्यकार्यलग्नस्य तस्य महान्कालो व्यतीतः। एकदा कथायां स्वामिना प्रष्टो जन्मवृत्तान्तं हिन्दुगृहजन्म च निवेद्य तद्दिनात् मियाँ इति नाम्ना प्रसिद्धो बभूव। हिन्दुगृहेऽपि तस्य मियाँनामधेय-भृत्यस्य पशुचारणं दिनकृत्यमासीत्। अथैकदा वने गाश्चरयतो मियाँभृत्यस्य बहुजन्मसुकृतकर्मणः जन्मान्तरीयसंस्कारसिद्ध्यै कश्चित्सिद्धो मिलितः। यश्च वस्तुतः शिवदूत एवासीत्। मियाँ-भृत्यं कृतार्थीकृत्वा अदृष्टो बभूव। गच्छति काले मियाँभृत्यः स्व-स्वामिनः कृषिकर्म च चरन् राजकर्मचारिणा (कारदार) कारजा-त्यङ्कितेन, कृष्णनाम्ना दृष्टः। राजकर्मचारी कृषिकर्म चरतो मियाँ-भृत्यस्यालौकिकी सिद्धिं दृष्ट्वा चकित इव सञ्जातः, सायं च रात्रि-निवासहेतोः तत्स्वामि हिन्दुगृहमेवाजगाम। गृहस्वामिना राज-कर्मचार्यातिथ्येन सत्कृत्यार्चितः। मियाँभृत्येन गृहस्थितानां पादक्षालनं कृत्वा राजकर्मचारिणं प्रत्यपि पादक्षालनहेतोः समुपागतम्। पादक्षालनं निषेधं कृत्वा कारदारो गृहस्वामिनं भृत्यागमनवृत्तान्तमपृच्छत्। गृहस्वामी सर्वं वृत्तान्तमकथयत्। श्रुत्वा च तद्कारदारो भोजनादि निर्वर्त्य स्वगृहार्थं मित्याँभृत्यमयाचत। गृहस्वामीः—महाराज! मदीयं सस्त्रीपुत्रं गृहं भवदधीनं, का वार्ता भृत्यस्य, नीयतां स्वगृहम्। तथानुष्ठिते रात्रौ विश्रम्य कारदारः प्रातः पुनरपि गृहपतेराज्ञां लब्ध्वा मियाँभृत्यं स्वात्मसात्कृत्वा निर्जगाम। पथि मियाँभृत्यो नूतनस्वा-मिनं विजिज्ञापयत्। स्वामिन्! इदमश्वमारोहनक्रियाकर्तृकं कुरु, विश्रान्तोऽसि, अहमग्रतो भूत्वा भवामि। कारदारः—नहि २ भवाने-वाश्वारूढो भव, अहमग्रेसरो भवामि। भृत्यः—किं मया कृतं, अकृत-सेवस्य सेवकस्य मम भवन्तो रुष्टाः सञ्जाताः। कारदारस्तु मियाँ-भृत्यस्य पादावुपसंगृह्य प्रार्थनां कृतवान्। महात्मन्! ज्ञातोऽसि

सम्यङ्मया, अनुगृहाण मां दासोऽस्मि ते यावज्जीवम्। मियाँभृत्यः- भवतु तुष्टोऽस्मि, ते परिपक्वा दशा, त्वामधुना संस्करोमि। इत्युक्त्वा ग्रामात्तस्मान् निमिषार्धेन कृष्णकारः सह मियाँशाहेन रैणादित्य- वाटिकास्थं (रैणावारी) स्वंगृहं प्राप्य गृहलक्ष्मीमाज्ञापितवाँश्च। भवति! गृहलेपनं विधाय तत्र भवतामेतेषामर्थं स्वासनं विस्तारय। तया च भर्त्राज्ञासमकालमेव सर्वं यथोदितं कृतं, मियाँशाहश्च तत्रोवास। गच्छति काले प्रत्यहं मियाँशाहः अर्धरात्रवेलायां निर्गत्य शङ्कराचार्यपर्वतोपत्यकास्थं दुर्गानागप्रदेशं स्वधार्मिकक्रियायै गच्छतिस्म। मध्याह्नवेलायां पुनरागत्य मौनेनैव दिनमत्यवाहयत्। एकदा कृष्णकारो रात्रौ जागरमाणः समये निर्गतं मियाँशाहं छाया- वत्पृष्ठे गत्वा दुर्गानागकुण्डोपविष्टं तं पृष्ठ उवास। कियत्क्षणानन्तर- मकस्मात् कृष्णकारस्य क्षुन्मुखान्निर्गता। यया प्रतिबोधितोऽसौ मियाँशाहः स्वपृष्ठगं कृष्णकारं ददर्श। उवाच च। भो कृष्ण! आगच्छ समयोऽस्ति ते। इत्युक्त्वा मियाँशाहो दुर्गाकुण्डादुद्धृतं जलपात्रमेकं कृष्णकाराय प्रायच्छत्। पानसमकालमेव निश्चेतनो बभूव कृष्णकारः। एवमेव द्वितीयं तृतीयं पात्रमपि ददौ। द्वितीयपात्र- पानेऽपि न संज्ञामवाप्तवान्, ततस्तृतीयपात्रपानकाले संज्ञामवाप्य सिद्धो बभूव भविष्यद्वृत्तमपि उदाजहार। दृष्ट्वैतत्कृष्णकारस्यासाम- यिकं मियाँशाहो रुष्टः सन् भर्त्सयन्नुवाच। अरे! किमेतावतैव निरङ्कुशोऽसि जातः। इत्युक्त्वा तस्य मुखं पिधाय, गच्छ तावदिद- ममूल्यरत्नं त्वत्पार्श्वे निक्षेपरूपेण तिष्ठतु, यावत् ऋषिप्रवीरो (ऋषिपीरः) सिद्धो जनिं गृहीष्यति, तस्मै दास्यसि, स एवास्य योग्यभूमिरिति शशाप, तस्मात् स्थानाच्च उदतिष्ठत्। पूर्ववन्न कृष्ण- कारगृहमगमत् रैणादित्यवाटिकायामेवान्यं स्थानं यावज्जीवं निष- साद, यत्त्वधुनापि मीशाहपुर इति नाम्ना प्रसिद्धमस्ति।* मियाँशाहे-

---

*नोट:—तदानीं काश्मीरेषु यवनशासनत्वात्पारसीकभाषैव राजभाषा (Court Language) आसीत्। अतः शाह इति पीर इति च, उत्तमोत्तमो- पाधिः (Title) तदा आसीत्॥

नालौकिकं सिद्धिचमत्कारं न केवलं कश्मीरे समग्रभारते चीनदेश-पर्यन्तं दर्शितम्। हिन्दूनां यवनानाञ्च गुरुर्बभूव, यः कोऽपि यया कामनया तन्निकटे आगच्छति स्म, तां कामनामलब्ध्वा न प्रत्याययौ। सर्वकामप्रपूरकत्वाज् जगति "मीशाह पादशाह इति" नामान्तरं प्राप। अद्यापि कामनाकार्यसिद्ध्यभिलाषुका मीशाहस्य नाम्ना उपयाचितं निधाय कामनासिध्यनन्तरं रैणादित्यवाटिकास्थ—मीशाहपुरे गत्वा (नियाज़) इति दास्यन्ति तत्स्थानाधिष्ठातृपीरेभ्यो हिन्दवो यवनाश्च। नाविका अद्यापि डल-सरसि "मीशाह पादशाह" इति उच्चारयन्तो वायुविघ्नात्प्रमुच्यन्तेति नाम्नस्तात्कालिकी सिद्धिः। गते च षष्टिवर्षात्मके महति काले पौषकृष्णाष्टम्यां मीशाहो नश्वरं देहं विसृज्य निर्वाणमभजत्। हिन्दवो यथोपयोगि मृतदेहकर्म संसाधना-यागताः, इतश्च म्लेच्छा अपि मृतशरीरं भूमौ निखननाय (दफनार्थं) आगताः। परस्परं विरोधोऽभवत्। यवनशासनकालत्वात् शासका म्लेच्छपक्ष्या एवासन्नतो हिन्दव अकिञ्चित्कर्तुं क्षमा बभूवुस्तत्रैव तस्थुश्च। ततो म्लेच्छैः पीरान् मलांश्चाहूय मोहम्मदीयरीत्यनुसारं मीयाँशाहशरीरे स्नानं (ग्वस्तुल) इति दत्त्वा कफानं परिधाय ताबूदे निहितम्। हिन्दवश्च पृष्ठलग्ना एवासन्। अत्रान्तरे कश्चिदन्यः सिद्धस्तत्रागत्य तान् परस्परं विरुध्यमानान् विज्ञाय पृष्ठवान्। किं विरोधकारणम्। उभयपक्षैः स्ववृत्तान्तं कथितम्, सोऽपि मनसीकृत्य कथितवान्। शिविकां भूमौ क्षणमात्रं स्थापयन्तु यावदहं मियाँशाह-मेव "कस्य पक्षस्य भवान्" इति पृष्ट्वा भवद्विरोधमपाकरोमि। तथानुष्ठिते आगतेन सिद्धेन क्षणमात्रं शिविका (ताबूद) निकटे कर्णं दत्त्वा कथितम्। भोः! मियाँशाह आज्ञापयति। यवनैरेव सर्वं कार्यं करणीयं, परिधानवस्त्रं (कफनं) विमोच्य केवलं नग्नमेव शरीरं भूमौ निखातव्यमिति। श्रुत्वा चैतदुद्धताः सहर्षाश्च पीरा मल्लाः शिविकापट्टिकामुत्थाप्य तत्र कफनवस्त्रमेव केवलं ददृशुर्न देहमिति विषण्णाः लज्जाधोमुखाः सकफनां शिविकामेवं भूमौ निचख्नुः। उपरि

च मक़बरा इति संपादयामासुः। मसजिदस्य च कारणे, हिन्दुभ्योऽपि धनं याचितम्। किञ्चित्कालं मियाँशाहोत्सवं हिन्दुम्लेच्छा एकत्रैव कुर्वन्तिस्म। तदनन्तरं वैररोगग्रसितान् यवनान् परिज्ञाय हिन्दुभिर्मियाँशाहनाम्ना मसजिदनिकटे एव मन्दिरं संपादितम्, यत्राधुना मीशाहोत्सवं कुर्वन्ति पृथगेव हिन्दवः।

इतश्च कृष्णकारः स्वकीयं सकलत्रं गृहं परित्यज्योन्मत्त इव इतस्ततो बभ्राम। स्वगुरोः मियाँशाहस्याज्ञां ऋषिप्रवीरस्य जनिष्यमानस्योपदेशदानादिरूपां हृदि निधाय कालं प्रतीक्षमाण आस्ते इति ॥

सावशेषम्

---

## सरस्वती यात्रा

## (२)

कलिकाता कौतुकागारदर्शनेन महानानन्दो संजायते, सम्यक् निरीक्षणेन त्वतीव ज्ञानलाभः प्राचीन भारतस्य आत्मनि गौरव क्षोभः। प्रथमकपाटस्य दक्षिणदिशायां तक्षशिलातः (पुरुषपुर-रावलपिंडी मध्ये नार्थवेस्टर्न रेलवे लाईनतः निकटमेव स्थानं) आनीताः बह्वयः शिलामूर्तयस्तत्कालीनबौद्धकालस्य सभ्यता धर्मकर्मदर्शकाः स्थापिताः सन्ति। तक्षशिला (Taxila) उत्तर-भारतस्य प्रसिद्धं स्थानमिदानीं पुरातत्त्वविज्ञानां सर्वेषां ज्ञानागारे सम्यक्चित्रितमस्ति। आङ्गल-भारतीय-मध्यराज्य प्राचीनान्वेषण विभागकार्यालयस्य राज्याधिकारिभिः तक्षशिला (Taxila) भूमेः स्तूपाः खनिता येभ्य एतः मूर्तयो मिलिताः।

<u>कलिकाता वनस्पत्युपवनानि (Calcutta Botanical Gardens</u>—नगरतः ८ मीलपर्यन्तं दूरे हुगली नद्याः पारे होड़ापार्श्वे सन्ति। महत् विशालोपवनानि सर्वप्रकारवनस्पतिवृक्षगुल्म-

गुच्छपुष्पलतायुतानि सुन्दरहरितघासमयानि क्षेत्राणि, पुष्पागाराणि, जल प्रवाहानि, स्वल्पबृहन् नालिकाश्च पदे पदे दृक्पथं गच्छन्ति। उद्यानस्यास्यैको महान् वटवृक्षः यस्य १७० शाखा वृक्षरूपेणैव भूमौ स्थगिताः। आयुश्चास्य १५० वर्षादप्यधिकं कथयन्ति। कतिपययोजेनषु ४, ५ मीलादप्यधिकमुद्यानस्याकृति दीर्घता च वर्तते, वनस्पति-शास्त्र-तत्त्वज्ञानां तच्छास्त्रपिपठिषूनां ज्ञानवृद्धयर्थं महानवसरोऽयं यदेतादृशमुद्यानं विशालरूपेण कलिकातायां विद्यते। तत्र गतानां यात्रिणामपि सुखदायकस्थानं यत्र सम्मिलित्वा यात्रिणो भोजनपानेत्यादिकं परस्परं प्रीत्या वहन्ति। विशालायां नवीनायां नगर्यामेवास्यामागत्य विरमन्त्येतेषु स्थानेषु दिनं यापयन्ति च।

**पशुपक्षिणां विशेषोपवनम् (Zoological Gardens)**—कलिकातानगर्यां पशु-पक्षि-कीट-पतङ्गसर्पेत्यादीनां विशेषरीत्या सुरक्षितानामतीवादरेण पालितानां बृहदद्भुत स्थानमिदं भारतवर्षस्य सर्वमहानगरेभ्य अपूर्वमुद्यानं यत्र पशवः सर्व प्रकारकाः दृष्टिगोचरा भवन्ति। भिन्न २ जातीयसर्पाः कोबरा वाँईपर हरित पीतरक्ताः (Cobra viper) विशेष काञ्चनागारेषु पतिताः सन्ति, येषां दर्शनेनावश्यमेव पूर्वं भयं भवति। सिंह द्वीपि जेबरा (Zebra) हिपोपाटेमस (Hipopotamus), वानर लंगूल, कङ्गरू (Kangru) गेंड़ा (Rhinocerous) श्वापदाः ज़िराफ़ (Giraffe) सील (Seels) मकराः (Corcodile) कच्छपाः पशु विशेषाः, जलजन्तवश्च, अनेक प्रकारकाः पक्षिरवा उद्यानमिदं शोभयन्ति दर्शकस्य दिनमपि सर्वमेकम् यदि तत्र यापितं स्यात् तथापि दर्शनेन पर्याप्तः सन्तोषो न भवति। कलिकाता राज्यस्य नागरिक सभाया वाद्भुतः प्रसंशनीयः प्रबंधोऽयं लोकज्ञान वृद्धयै।

**जैन मन्दिरम्**—मित्रैः कैश्चित् जैनमन्दिरदर्शनार्थं प्रेरितोऽहं बहु

प्रयासेन प्राप्तवान्। मन्दिरस्य संमुखेऽतिसुन्दरं सरो विशाल रूपेण वरीवर्ति। नवीना भूमिः नवीनं स्थानं नवीनमेव सर्वं गृह-निर्माणादिकं मन्दिरस्योपरितने भागे महावीरस्य मूर्तय उपासकानाञ्चार्थे आसनानि हस्तपादमुखप्रक्षालनाय बृहज्जलमयानि भाण्डानि तत्र स्थापितानि। मन्दिरस्यास्य निकट एव कचिदन्यत् प्राचीनं जैनमन्दिरं विद्यते, यस्य दर्शनमिच्छन्नपि नापारयम्।

कालिकाता नागरिकसभामन्दिरम् ( Calcutta Carporation Buildings)—कलिकातायामागतानां विदेशीयानां कलिकाता नगरस्य नागरिकसभा आदर्शरूपा समितिः। स्वल्पमेवारभ्य सभयानया कलिकातानगरस्य महत्युन्नतिः कृता। यथा निर्दिष्टं पूर्वं, कलिकाता ग्रामानां त्रयाणां केवलं समूह आसीत्। बहवो रोगाः प्रजा अपीड़यन्। बहत्र स्वास्थरक्षानियमाभावात् विशूचिका मेलेरिया ज्वर बेरिबेरि (Beriberi) शीतलेत्यादि प्रसरणशीला रोगाः विद्यन्तेस्म, शतवर्षादप्यधिकसमयः व्यतीतः यत् कलिकाता नागरिक सभाया वृद्धया कलिकाता नगर्यपि स्वच्छा सुन्दरा मनोरञ्जका च सम्पन्ना। ३ कोटिपर्यन्तं रूपिकानामिदानीमस्या वार्षिकोऽऽया-,तावान्नेव व्ययऽपि वर्तेत। नगरस्य सर्वप्रकारकः स्वास्थ्यरक्षाकर्मणः प्रबंधः विद्याप्रसारण प्रसरः नागरिक औषधालयानां सञ्चालनं नगरस्य पानजलाय नालिकाभ्यो नगरे दानं, बहूनां नगरवर्ति उपवनानां प्रबंधः अन्यानि च लोकहिताय संवर्धितानि बहूनि कार्यालयानि कलिकातायां नागरिक सभाधीनान्येव।

ट्रापीकल स्कूल आफ मैडिसन एंड हाईजीन (Tropical School of Medicine and Hygiene)—पाश्चात्य रीत्यौषधालया यद्यपि महान्त अत्र विद्यन्ते। परं नवीनमेकं स्थानं यत्र विशेषतः

एशिया द्वीपवर्ति भारतवर्ति रोगानामन्वेषणं वर्तते। स्वास्थ्य-रक्षार्थं विद्यार्थिनां वैद्यानां, डाक्टराणां ज्ञानवृद्ध्यर्थं सं-कल्पितम्। नवीनविज्ञानेन यदपेक्ष्यते तस्यान्वेषणं शिक्षाप्रदानंच क्रियते। सर्पाणां विषं दूरीकर्तुं विशूचिकारोगस्योपायश्च बहूनामाधुनिक रोगानां चिकित्सायै नवीनाः पन्थानः अन्वेष्यन्ते वैज्ञानिकैः स्थानेऽस्मिन्।

कलिकातायाः सरस्वती यात्रायां वर्णनाय प्रचुरासीत् सामग्री परं विस्तरभयात् विरम्यते। वाराणसी सरस्वती मन्दिराणां वर्ण-नमागामिन्यङ्के प्रियःपाठकानामुपहारी क्रियते।

कुलभूषणः

---

## काश्मीरिक-भट्टशिवस्वामिनोऽमुद्रित-महाकाव्य कफिणाभ्युदयनामधेयम्

( पूर्वतोऽनुवृत्तम् )

( लेखक पं० जगद्धर जाडू शास्त्री, एम० ए० श्रीनगर )

शिवस्वामी त्रिराट्-लेखकोऽभूत्—इति निम्ननिर्दिष्टेन श्लो-केनाऽनुमीयते—

वाक्यानि द्विपदीयुतान्यथ महाकाव्यानि सप्त क्रमात्,
त्र्यक्ष प्रत्यहनिर्मितस्तुतिकथालक्षाणि चैकादश।
कृत्वा नाटक नाटिका प्रकरण प्रायान् प्रबन्धान् बहून्,
विश्राम्यत्यधुनापि नातिशयिता वाणी शिवस्वामिनः॥

"द्विपदीयुतानि वाक्यानि, क्रमात् सप्त महाकाव्यानि, प्रत्यहं निर्मितानि महादेवस्य स्तुतिकथानामेकादश लक्षाणि, नाटक-नाटिका-प्रकरण-प्रायान् बहून् निबन्धान् विरच्य, अतिशयं गता इयं शिवस्वामिनो भारती अधुनापि विश्रामं न लभते।" अस्य श्लोकस्य लेखकः कोऽप्यन्यः शिवस्वामि-समकालीनः कवि

स्यात्—इति ज्ञायते। "अधुनाऽपि न विश्राम्यति" इति वाक्येन "असावुपर्युक्तव्यतिरिक्तं अन्यदपि ग्रन्थादिकं निर्ममे" इति अनुमीयते। यद्ग्रन्थजालं कफ्फिणाभ्युदयमहाकाव्यं विहाय अन्याभिः स्तुति-कथा-काव्य-नाटकादिभिः सह विनष्टप्रायमेवाधुना वरीवर्ति। संभवतः कदाचिदागामिनि पुण्यदिने गवेषणाकाराणां हस्ते निपतिष्यति काचित् कृतिरस्य पुण्यश्लोकस्य महाकवेः, येन विद्वन्मण्डलेऽमन्दो हर्षो भवेत् ॥

लेखनशैली चास्य महाकवेर्महती मनोहरा। भाषासौष्ठवे, वर्णविन्यासे, शब्दार्थालंकारादिरचनायां, काव्यार्थानुसारि गुणगणनाविभागोपयोगे च श्रीमता कविपुङ्गवेन निजप्रतिभापाटवं परां काष्ठामुपनीतम्। स्वपूर्ववर्तिनां कवीनामतिविस्तृताः सूक्तयो निजललितभाषायां संक्षिप्तरूपेणोपनिबद्धा अनेन कुत्रचित्। कुत्रचन संक्षिप्ता एताः सूक्तयोऽस्य महाकवेः भाषायां सुविस्तारं प्राप्ताः। कुत्रापि भारवि-माघ—रत्नाकरादि काव्यकर्त्तॄं समतीत्य काव्यप्रतिभा शैल्यादयोऽस्य सुकवेर्दृश्यते। यत्र रत्नाकरपण्डितेन श्लोकदशके प्रातःकालीनं प्राकृतिकं दृश्यं वर्णितमस्ति, तत्राऽस्माकं कविः शिवस्वामी एकेन श्लोकेनैव उषःकालीनां शोभां मधुरया मञ्जुविशदया भाषयोपवर्णयति—यथाः—

"शोकं कोकाः कुमुदमलयः सान्द्रवाता दिगन्तान्,
दीपा वर्तीरभिमतभुजाभ्यन्तरं चाभिसार्यः।
ज्योत्स्ना काष्ठा निषदनमिना वर्हिणो वासयष्टीः,
व्योमापान्तान् तिमिरपटली तुल्यमेव जहाति ॥"

( १५ सर्ग—२१ श्लो० )

अत्र च 'कुमुदवनमपश्रि' इत्यादिना प्रातः-कालिक-दृश्यमुपवर्णयतो माघकवेः श्लोकोऽपि चिन्त्यः सुहृदयैः।

अपिच, 'मुहुः' इति पदं निम्नलिखिते श्लोके कीदृशीं शोभामावहति—इति रसिकाः स्वयं निरवधारयन्तु—

मुहुरविशदा विश्रम्भार्द्रा मुहुः स्मृतमन्यवो,
मुहुरसरलाः प्रेमप्रह्वा मुहुर्मुहुरस्थिरा।
वितथशपथोपालंभाज्ञा मुहुर्मधुरा मुहुः
परिववृधिरे निष्पर्यन्ता मिथो मधुरोक्तयः॥

उत्प्रेक्षालङ्कारविनियोगेऽपि शिवस्वामिनोऽसामान्या सिद्धहस्तताऽभवत्—यथाः—

हसितेन जितेव तर्जितेन,
क्षयिते वोन्मथितेव निर्धुतेन।
मधुपानमदेन मानिनीनाँ,
मनसः क्वापि जगाम मानवृत्तिः॥

सरला प्रसादगुणगुम्फिता भावभव्या च महाकवेरस्य लेखनशैली कथं "यत्"—शब्द विन्यासोपयोगेन मधुरतां प्राप्ता—इत्यपि निम्नोद्धृतात् पद्यात् दृश्यते :—

यदनिष्ठितवस्तु यत् सहासं,
यदकाण्डोद्गति यत् स्वभावमुग्धम्।
यदसाधुपदं स्खलत्पदं यत्,
तदुदैत् क्षीणधियां नवं कथासु॥

सुभाषितावलीषु श्रीशिवस्वामिकर्तृका बहवः श्लोका दृष्टिपथं यान्ति, ये काव्यकलाप्रौढतापरिपूर्णाः पठनेन चानल्पं मनोविनोदं कुर्वन्ति। तेष्वैकं श्रीमतां विद्वद्वराणां समक्षमुपस्थाप्य विरम्यते :—

भोक्तुं भङ्क्त्वा न भुंक्ते कुटिलबिसलता—
कोटिमिन्दोर्वितर्कात्
ताराकारान् तृषार्तो न पिबति पयसः
स्थूलबिन्दून् दलस्थान्।
छायां सध्वान्तसंध्ये त्वलिकुलशबलां
वेत्ति चाम्भोरुहाणाम्।
कान्ताविश्लेषभीरुर्दिनमपि रजनीं मन्यते चक्रवाकः॥

———

नोट—लेखोऽयं लवपुरस्थ-गवर्नमेण्ट कालेज-संस्कृताध्यापक-पंडित गौरीशंकर वर्य लिखित-महाकाव्य कप्फिणाभ्युदय भूमिका भागेण लिखितः।

# कवीश्वरो माघः

ले०—गोविन्दराजनकः शास्त्री (M.A., M.O.L., L.T., H.H.)

तावद्भा भारतेर्भाति यावन्माघस्य नोदयः।

कस्तावत् साहित्यसंसारेऽस्मिंछिशुपालवधकर्तुर्माघस्य नामनिर्देशं न वेत्ति तत्त्वतः को वा केवलेनैकेनैव प्रबन्धेन शतोत्तरप्रबन्धरचयितुः कविकोटिमधितिष्ठतः पुरुषस्य न्यक्कृतिं नानुमिनोति? साहित्यरसज्ञास्तत्रभवन्तः सहृदयचणा ययादरदृष्ट्या महात्मानमेनं निरीक्षन्ते, तत्पदं हि सर्वथाशक्ताः गन्तुं गमयितुं वान्ये बहवः कव्युपाधिधारिणः पूर्वे अपरे हि विद्वांसः, यतो न कश्चिदपि देवगिरीयां शिक्षां शिशुपालवधाध्ययनमन्तरा पूरयितुमर्हति।

महाकाव्येषु 'लघुत्रयी' रघुवंश मेघदूत कुमारसंभवाभिधाना। 'बृहत्त्रयी' च किरातार्जुनीय-नैषधचरित-शिशुपाल नाम्नी। उत्कृष्टतमं ललामभूतं महाकाव्यानां शिशुपालवधमेव। तथा च—

'उपमा कालिदासस्य भारवेश्चार्थगौरवम्।
नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः॥' इति

किन्तु तुलनयोत्कृष्टत्वापकृष्टत्वं सर्वथा दुःसाध्यमेव, यस्माद्रचना शैली सर्वथा सर्वेषां विभिन्नैव, तथा हि यं केचन कवीश्वरं वदन्ति न हि सोऽन्येषां मतेन तत्पदाधिकारी, किन्तु 'भिन्नरुचिर्हि लोकः' इति न्यायादवश्यमेवापरां कोटिमावहति गाढमन्यत्र। रसज्ञा हि विशेषचमत्कारातिशयं काव्यविशेषेऽवाप्य स्वानुमतिं प्रकटयन्ति। तथापि समवायसंमतिः प्रबला सर्वथा। माघविषये तु तावद्विचार्यते किं केषां मतमिति।

प्राचीनार्वाचीनानां प्रशंसया तु माघः परां कोटिमधिरोहति। तथा च कविः प्रभाचन्द्रः—

श्रीमाघोऽगाधधीः श्लाघ्यः प्रशस्यः कस्य नाभवत्।
चित्तजाड्यहरा यस्य काव्यगङ्गोर्मिविप्रुषः।

मल्लिनाथः— धन्यो माघकविर्वयं तु कृतिनस्तत्सूक्तिसंसेवनात्।

राजशेखरस्तु— माघेनेव च माघेन कम्पः कस्य न जायते।

किं देशीयः कदा वासौ जनिमवापेति शंकायास्तथ्यतः समाधानं दुष्करमेव। शर्मण्यदेशीयो विख्यातो विद्वान् जोकोबी महाशयस्त्वेनं ख्रिस्ताब्दीयषट् शतकान्तर्भवं युक्तिप्रमाणाभ्यां साध्यति। अध्यापकस्तु पाठकप्रोफेसरवर्योऽष्टशताब्दीजमेव वदति। मेकडानलप्रोफेसरस्तु नवमदशमशतकान्तरालजातमयोयुजत्। बेबरमतानुसारेण दशमशतकान्त्यसमयसामयिकमेवावादीत् प्राफेसरक्लाटमहाशयस्तु दशमशतकारम्भभवमेव निश्चिनोति। रामेशचन्द्रदत्तस्त्वेकादशशतकजमेव तं वेत्ति। मतभेद एवं वर्तमाने प्रबलयुक्तिप्रमाण परिणता पाठकमहोदयानुमतिरेव गरीयसी सार्वजनीना सिद्धयति। परं केचनामुं कालिदासादपि पूर्वतरं व्याहरन्ति तेषां युक्तिस्तु—

पुष्पेषु जाती नगरेषु काञ्ची नारीषु रम्भा पुरुषेषु विष्णुः।
नदीषु गंगा नृपतौ च रामः काव्येषु माघः कविकालिदासः॥

इत्यत्र माघस्य कालिदासात्पूर्वं नामनिर्देशेन, तथा च—
धन्वन्तरि क्षपणकामरसिंह शंकु वेतालभट्टघटखर्पर कालिदासः।
ख्यातो वराहमिहरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य॥

इति कथनात्कालिदासं माघादर्वाचीन मनुमिन्वन्ति, तत्तु सर्वथाऽसङ्गतमेव नहि घटखर्पर-नीतिसार-पुस्तकाभ्यामेव किंवदन्तीयं दृढाधारा तथापि घटखर्परराचितोऽयं श्लोक इति तु संदेहदोलायितमेव।

अपरे तु धारानरेशभोजराजसमकालीनं माघपण्डितं बल्लालरचित-भोजप्रबन्ध जैनमेरुतुङ्गाचार्य-विरचित प्रबन्धचिन्तामण्यन्तर्गतमाघवृत्तान्तवर्णनेन वदन्ति श्रीप्रभाचन्द्र रचित प्रभावकचरितेतु।

तस्य श्रीभोजभूपालबालमित्रं कवीश्वरः।
श्री माघो मत्तदो ...

इति कथनाद्धाराधिपभोजसमसामयिकोऽसावेवं योजयन्ति। किन्तु भोजप्रबन्ध प्रबन्धचिन्तामणि प्रभावकचरितानामैतिहासिकतथ्याभावे जनश्रुत्याधार विषयीभूतत्वे हि न कथञ्चिदपि माघस्यैकादशशतके जनिः संसिद्ध्यति। खिस्ताब्दीय दशमशतके वर्तमानेन सोमदेवेन स्वकीये यशस्तिलके माघस्य नाम निर्दिष्टमेव। काश्मीरिकेन तत्र भवता एकादशशतकान्तर्वर्तिना मम्मटभट्टेन काव्यप्रकाशे माघाया बहवः श्लोका उदाहृताः। कश्मीरमण्डलजेन प्रसिद्धेनानन्दवर्धनाचार्येण ध्वन्यालोके माघकाव्यान्तर्गतौ श्लोकावुदाहृतौ। तुङ्गेन नृपेन कविराजमार्गे माघं प्रशंस्य कालिदासेन सादृश्यं नीतः। ओघवर्षापरनामायं तुङ्ग ८१४–८७७ अन्तरालीयस्तस्मान्माघस्योत्पत्ति प्रलयौ नवमशतकात्पूर्वमेवेति विसंवादम्। बाह्य प्रमाणैरेवं घटिते निश्चिते चाभ्यन्तरीय मन्थनेन तस्मादसदृशमेव भाति। यतो हि—

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।
शब्दविद्येव नो भाति राजनीतिरपस्पशा॥ इति

कथनाज्जयादित्यवामन रचित काशिकावृत्ति जिनेन्द्रबुद्धि विरचितटीकान्यासानुसारेण मल्लिनाथीयटीकोल्लेखनेनच तदर्वाचीनोऽसौ माघ इति निश्चप्रचमेव। तथाष्टमशतकोत्तरभागे वर्तमान इत्यपि निःसंशयमेव।

शिशुपालवधेतु समुद्रद्वारिकैरैवतकादिवर्णनेन मालव वास्तव्य-दत्तकसूनोः माघस्य गुर्जरदेश एव जन्मभूमिः। वंशावली त्वस्य—

सर्वाधिकारी सुकृताधिकारः श्रीवर्मलाख्यस्य बभूव राज्ञः।
असक्तदृष्टिर्विरजाः सदैव देवोऽपरः सुप्रभदेवनामा॥
तस्याभवद्दत्तक इत्युदात्तः क्षमी मृदुर्धर्मपरस्तनूजः।
यं वीक्ष्य वैयासमजातशत्रोर्वचो गुण ग्राहि जनैः प्रतीये॥
तस्यात्मजः सुकविकीर्तिदुराशयादः
काव्यं व्यधत्त शिशुपालवधाभिधानम्॥

# कश्मीरराजतरङ्गिणी

पूर्वतोऽनुवर्तते पौषमासीयादङ्कात् १६६२

ले०—गोविन्दराजनकः शास्त्री ( M.A., M.O.L., L.T., H.H. )

सन्धिबन्धाय योसोभशाहो मिर्जाशकासिमौ ।
भगवद्दास सविधे प्रेषयद् बुद्धिमत्तरौ ॥
तौ तदन्तिकमागत्य भ्रातृभावे निवेदिते ।
सम्राजा कल्पिते सन्धौ प्रत्याजग्मतुः सत्वरम् ॥
उत्तरं भगवद्दास मन्त्रिण ऊचतुर्नृपम् ।
प्रणम्य पादौ संगृह्य देहलीमेत्य योसभः ॥
सम्राजोक्बरश्शाहस्य प्रभुत्वं स्वीकरिष्यति ।
चेत्तदाहं यतिष्ये वै कश्मीरधरणी भवम् ॥
निष्कण्टकं साधयितुं राज्यं ते दयया ध्रुवम् ।
प्रत्यागतेन कासीम मन्त्रिणैवं निवेदितः ॥
सहसा भगवद्दासं स समाशिश्रिये तदा ।
मन्त्रिवर्गमपृष्ट्वैव भीतः किं न करोति द्राक् ॥
संजातक्रोधाः सचिवा गर्हयन्तो नराधिपम् ।
चक्रुर्भद्रासने ज्येष्ठं तत्सुतं विक्रमाङ्कितम् ॥
कालक्षेपमकुर्वन् स जनकापत्तिशंकितः ।
अस्पृष्टो ह्यशोकभयदुष्टकौणपचेष्टितैः ॥
बालराजापि विभ्राजद्भास्वानिव नभस्तले ।
निर्जगाम स्वसेनाभियुद्धाय कृतनिश्चयः ॥
गाढं दुर्भिक्षयुद्धाभ्यां सम्राट् सैन्यं च दुःखितम् ।
बभूव सति दुर्दैवे फलाशापि निवर्तते ॥
भगवन्दास मन्त्री चोद्विग्नः सामादिसाधनैः ।
कमप्ययलक्भराख्यं संप्रेष्य मन्त्रविशारदः ॥
मोभारका खाननाम्नः पार्वतीयमहीपतेः
उद्वाह विधिना पुत्र्या याकोभ मनिर्वर्तयत ।

प्रलोभ्य रणक्षेत्रात्तमक्भराभ्यर्णमानयत् ॥
पुरस्कृतं तु कश्मीराधीशं सम्राट् स नीतिवित्।
तन्वन्तं चोपरोधादीन् ज्ञात्वा मन्त्रिप्रचोदनात् ।
कुचेष्टां त्रिविधां सम्यग् दूरदर्शी विशारदः
काराबन्धनपूर्वं योसभं लवपुरे खलम्
निबन्ध रुषा तूर्णं तदा संवत्सरद्वयम् ॥
प्रत्यावृत्तेन कास्भोजान्मानसिंहेन धीमतः ।
आदेशं प्राप्य संम्राजो मोचितो बन्धनालयात् ।
अगमद्वंगदेशं ससाकं तेनैव योसभः
चतुर्वर्षं मितं कालं गमयित्वा कथमपि ।
अन्तर्मनःतापयुक्तो रोगग्रस्तकलेवरः
तत्रैव प्राप दिष्टयान्तमाधिव्याधिसमाकुलः ॥
स रामो वासं यः सह वनचरैराप विपिने
तथा वैदेही या दशमुखपुरे बन्धनगता ।
अहो गङ्गा शम्भोः शिर मुकुटगा या त्रिपथगाः ।
ह्यस्वस्थे स्वस्थे वा प्रभवति विधिर्दारुण गतिः ॥
रथमारुह्यासौ वियति भ्रमतीवं दिनमणि
सदा हित्वा श्रान्तिं वटुभिरथ साकं श्रुतिमुखैः ॥
जगन्नाथस्त्वेवं शत्र शिरकर उञ्छति शिवो ।
विचित्रो दुर्वारो भवति परिणामो हतविधेः ॥
अथ कश्मीरक्षोणीन्द्रो याकोफाशाहकाभिधः ।
बभूव समदाराति पक्षाकवलनोद्यतः ॥
शिखिपिच्छातिशोभाढ्यैश्चमरीबालबालकैः ॥
सुन्दरीकरपद्माभ्यां दोलितैः कृतवीजनः ॥
क्रूरस्तब्धः प्रमादी सन्नप्यसौ दययान्वितः
अनुजीविगणान् मित्राण्येव मेने नवो नृपः ।
स्वबंधूनपि सन्मानयुक्तानेवं ददर्श सः
सौहार्दं स्वप्रभावं च तन्वन मित्रारिपक्षयोः ।

आसीद्लीडारनामा सचिवस्तस्य भूपतेः।
मादकासेवनाक्षिप्तचेता वेश समाश्रयः॥
प्रत्यहं राज्यकार्याव्यवस्था नात् प्राप्त वेदनाः।
चेलुः प्रजा नागरिकाः स्वाधिकारिजिहीर्षवः
कृत्यै जुंगुप्सितैरेवं ज्ञातैर्दुष्टस्य मंत्रिणः।
आबालवृद्धं महती चित्ते भीतिरभून्नृणाम्।

(क्रमशः)

---

# संपादकीयम्

## विवाहवयोविमर्शः—

श्रियः ५।१ संख्यायां पं० धर्मदेवदीनानाथयोः शास्त्रार्थं विषये-ऽस्माभि र्लिखितमासीत् यदिदानीं बहुकालादयं संवादः प्रचलति न च उभयपक्षतोऽस्य विरामाय संकेतो दृश्यते। अतोऽस्माभिः निवेदितं यदग्रे लेखकमहाभागौ कृपयास्मिन्विषये लेखान् समापयेताम्। अस्मिन्नङ्के श्री पं० दीनानाथस्पोत्तरस्यार्धभागः पुनरपि प्रकाशितोऽस्ति। पं० दीनानाथ महाभागस्य लेखा यद्यपि विद्वत्तापूर्वका वेदशास्त्रप्रमाणयुक्ता भवन्ति, तथापि अतिदीर्घत्वा ल्लेखानां न वयं श्रियः पृष्ठेषु सर्वेषां प्रकाशने क्षमाः। संमानाथ महाभागस्यास्माभिः प्राप्तो लेखः प्रकाश्यते। परं अस्मादुत्तर क्षमां याचे यतो त्रैमासिक पत्रे यस्य पृष्ठ संख्या एव ५०-६० पृष्ठाः स्युः। तत्र ३६ पृष्टस्य लेखस्य कथमवकाशः। श्रीमान् दीनानाथ एकस्य विषयस्य शास्त्रार्थे अप्रस्तुतान् एवान्यान् विषयानुद्धरति। यथा 'विवाह वयो विमर्श' सम्बन्धे विषयेऽऽग्रहेन वेदे इतिहासोऽस्ति न वा प्रतिपक्षिनं शास्त्रार्थाय मन्त्रयति। द्वित्रिपृष्ठान् च स्वपक्षं दृढयितुमेव लिखति। अतो लेखा अति दीर्घा भवन्ति। यद्यस्माभिः लेखस्य किञ्चिद् संक्षेपाय प्रयत्नो विधीयते तर्हि श्रीमान् पण्डितमहोदय अस्मान् नि:

पत्रेऽवाक्षेपयति। यदि लेखक महाशयो नितान्तं विषयमेवमवलम्ब्य लिखेत् तर्हि कदाचित् लेखस्य समाप्तिरपि दृश्येत। आगाम्यन्यङ्के पं० धर्मदेवस्य प्रत्युत्तर प्रकाशनानन्तरं ( यदि पण्डित महोदय उत्तरं प्रेषयेत् ) वयं विवाह वयो विमर्श रूपं शास्त्रार्थं समापयेम। स्वपक्षं स्वमतञ्च पाठक महानुभावानां संमुखे संस्थापयिष्यामः।

## वाराणसी धर्मक्षेत्रम्—

भारत सम्राट् प्रतिनिधिः (Viceroy) लार्ड लिलिथगो महोदयः स्वधर्मपत्न्या साकं भारतीय हिंदूनाँ प्रसिद्धं धर्मक्षेत्रं वाराणसीं अगस्तमासस्यारम्भे अलङ्चकार। भारते वर्षे लार्ड लिलिथगो महोदयः कतिपयमासेभ्य एव वाईसराय रूपेणागतः। प्रथमं स्थानं भारत प्रान्तेषु वाराणस्येव यत्र महानुभावोऽयमागतः। तत्रत्यैः पण्डितैः महत् स्वागतं प्रदर्शितं। वाईसराय महोदयस्या गमनेन हवनयज्ञमपि रचितम्। वेदमन्त्रैः यत् स्वागतं राज्यशक्तेः प्रद यते घण्टाघोषणासु भागीरथीतटेषु वाराणसी मन्दिरेषु राज्यप्रतिनिधिभ्योऽर्पितम्। महती च राज्यभक्तिः महाराजेन बनारसीयेन प्रदर्शिता। प्रसन्नचेता वाईसराय अपि वाराणसी पण्डितान् प्रसंशयामास। वाराणसीयभारतीय हिन्दूनां कृते धर्मक्षेत्रस्यास्य गौरवञ्च स्ववक्तृतायां प्रदर्शयामास। हिंदूधर्मानुयायिनां धर्म कर्म ज्ञान स्थानं विद्यापीठस्य परमपवित्रं क्षेत्रमिदं कस्य हिंदूधर्मनुयायिनः सहृदयस्य हृदयं न सन्तोषयति। कस्य न भवति कामना वाराणसी दर्शनाय।

कामनयैवेतया प्रेरितोऽहमपि वर्षस्यास्य प्रारम्भे कलिकाता नगरीतः प्रतिनिवृत्यागतः। विशेषतो लेखे सरस्वतीयात्रिके वाराणसीये स्वविचाराः प्रकटी क्रियन्तेऽऽगामिन्यङ्के श्रीःपत्रे। कलिकाता नगर्या वर्णनन्त्वस्याम् पूर्वस्याञ्च संख्यायां समापितमस्ति।

## समालोचनम्

### मधुरवाणी—

पाक्षिक संस्कृतपत्रं बैलगाम कर्णाटकेभ्यः बुर्ली श्रीनिवासाचार्यैः प्रकाशितं श्रीगलगली रामाचार्यैः संपादितम्। महान् प्रयासः महानुभावानामेतेषां यैः पाक्षिकरूपेण देववाणी प्रचारार्थं पत्रमिदं प्रकाश्यते। पञ्चसङ्ख्यकाः पत्रस्यास्य श्रीसंपादक महोदयैरस्मदभ्यर्णं प्रेषिताः येभ्य अस्याकृति लेखाश्च दृष्टा अस्माभिः। नितान्तं संस्कृतप्रणयिनां मनोज्ञानविनोदाय ऐहिकामुष्मिकफलप्राप्त्यै अत्युत्तमेयं पत्रिका। महतीसेवा संस्कृत वाङ्मयस्य कर्मणानेन कृता। मूल्यं पत्रस्य १॥)।

प्राप्ति स्थानं—बेलगाम (कर्णाटक) मधुरवाणी कार्यालयः।

—o—

### अन्त्याजानां मन्दिरादि प्रवेशः—

पं० विश्वदेव शास्त्रिणा कश्मीर निवासिना विषयेऽस्मिन् द्वित्रिपृष्ठको लेखः श्रियः ४-४ संख्यायां प्रकाशित आसीत् यस्याभिप्रायोऽन्त्यजानां शास्त्रयुक्ति प्रमाणाभ्यां मन्दिर प्रवेशोऽधिकारोऽनुमोदित आसीत्। यद्यपि तस्योत्तरं नापेक्षतेऽस्माभिस्तथापि सन्मानार्थं श्री पण्डित दीनानाथस्य ३८ पृष्टात्मको बृहत् लेखस्तस्य विरुद्धेऽस्माभिः प्रकाशितः। तस्योत्तरं श्रीमता विश्वदेवेन न प्रेषितम्। परं मान्येन पं० विद्याधर भास्करेण गुरुकुल पोठाहारत ज़िला जेहलमतः पूर्वलेखसमर्थको लेखः प्रेषितोऽस्ति। यश्च लेखो ऽस्मिन्नेव श्रियोऽङ्केऽन्यत्र प्रकाश्यते। अस्मिन् विषयेऽग्रे वादविवादाय न स्थानं विद्यते श्रियः पृष्ठेषु। न चास्माभिरुत्तरप्रत्युत्तर रूपेण लेखाः प्रकाश्यन्ते। परं यदि स्वतन्त्रो लेखः कस्यचिद् युक्तिप्रमाणाभ्यामनु मोदितः स्यात् तर्हि प्रकाश्यते। परं अति दीर्घा लेखाः न स्थानं लभेयुः। लेखक महानुभावानां महाननुग्रहःस्यात् यदि ते स्वाभिप्रायं संक्षेपेणैव प्रकाशयेयुः।

कुलभूषणः

# संस्कृतवाङ्मयसंसारस्यात्मोद्धाराय प्रयत्नः

निम्नलिखितपत्रद्वयं सादरेण प्रकाश्यते संपादकेन

श्री वाचेनमः

१८-८-३६ मितौ नौगछिया-राघवेन्द्रसंस्कृतविद्यालयस्य पाक्षिकाधिवेशनम् प्रधानाध्यापकस्य सभापतित्वे यथा नियमं सम्वृत्तम्। यत्र श्रीयुत शतञ्जीव कुमारकर्तृक-पुराणप्रवचनानन्तरम् सन्ध्योपासनाविषयमालम्ब्य संस्कृतगिरा व्याख्यातवन्तः। सर्वं सम्मत्या प्रस्तावोऽयं स्वीकृतः यत् पाक्षिक-परीक्षायां, विशिष्ट कारण-मन्तरानुपस्थितश्छात्रः आणकत्रयेण दण्ड्यः स्यात् इति।

श्री वाचेनमः

४-८-३६ अद्य नौगछिया राघवेन्द्रसंस्कृतविद्यालयस्य पाक्षिकाधिवेशनं प्रधानाध्यापकस्य सभापतित्वे यथा नियमं समजनि, यत्र श्रीयुक्त बलभद्रमिश्र विद्यालयद्वितीयाध्यापककर्तृकपुराण-प्रवचनान्तरं साहित्ये सरलता क्लिष्टता वापेक्षितेति विषयमालम्ब्य छात्र मिथिलया स्वाभिप्रायं योग्यशब्दैः प्रकाशितवन्तः, अन्ते सर्वं सम्मत्या प्रस्तावोऽयं स्वीकृतः, समितावत्र यथा काशीसूर्योदयो मासिको नियमेनायाति, तथैव दरभङ्गा "मिहिर पत्रम्" काश्मीर श्रीनगर "श्रीः" पत्रञ्चायातु, किञ्च सभासञ्चालकः प्रतिसभं संक्षिप्त-विषयन्त्र तत्र पत्रे प्रकाशयितुम्प्रेषयेत् यदिहायाति।

॥ इति ॥

सूचयिता—

श्री परमानन्द झा

सभासंचालकः।

श्रीः

# छात्राणामभ्यर्थनम्

( ले० — नौगछिया राघवेन्द्र संस्कृत विद्यालय प्रधानाध्यापकः पं० श्री सुरेशकुमारः साहित्य धुरीणः )

नाविदितं कस्यचित् यदत्र संसारे सर्वे स्वकर्मसूत्रग्रन्थिताः परस्परं निरपेक्षाः सन्ति, अनयैव परिपाट्या अस्माकं पूर्वजाः स्वीयं स्वीयं कर्म उपभुज्य संसारं परित्यक्तवन्तः। वर्त्तमाना वयमपि एवमेव गच्छेम, अत्र न संशयकलिकापि, अतएव इदं नूनम् प्रधार्यम् यदत्र किं कर्त्तव्यम् येनास्माकं श्रेयः स्यात्। यद्यप्यत्र बहुविधं मतं पश्यामि, कश्चित् कामविधिम् अन्योऽर्थ विधिम्, इतरो धर्मविधिं भिन्नो मोक्षविधिं श्रेयोऽधिगच्छति। कश्चिच्च सर्वात्मना स्वात्मपरिपालनं श्रेयोऽधिगच्छति, तच्च मिथ्याप्रयोगेण भवतु चौर्य्येण, दस्युतया, इतरकुकर्माचरणेन वा, परम् नितान्तं कष्टमस्ति यद् वास्तविकश्रेयसि विरलानामेव प्रायः प्रवृत्तिः, तस्मात् दुर्घटेऽपि कलावस्मिन् अस्माभिस्तथाचरणीयम् येन ऐहलौकिकम् पारलौकिकञ्च न विरुद्ध्येत, तथा हि कश्चित् कविः " या लोकद्वयसाधिनी तनुभृतां सा चातुरी चातुरी " तच्चास्माकम् अनायाससाध्यं विद्यासाधनमेवास्ति। तत्रापि इदानीं दैवदुर्विपाकेन जनानां चेतः परिवर्तितम् पश्यामि। यथा अद्यत्वे नवोढ़ा नायकेव न कस्य भावुकस्य स्वान्तं परीक्षा प्रति पलमलंकरोति। यद्यपि परीक्षोद्देशः नितान्तं रमणीय आसीत् परं ह्याकष्टम्, इदानीं तु " यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसापि न कृते तदिहाभ्युपैति " इत्याभाणकम् प्रतिजनं शिरसि चरणं दत्वा नृत्यति। हा ! क्व परीक्षाया ग्रन्थानां परिशीलनता इष्टा आसीत् क्वेदानीं शुकवदितस्ततो विद्वल्लेखमभ्यस्य ग्रन्थसारस्य भूस्पर्शनमपि न कुर्वन् शास्त्रं कलुषयति भारतस्य भावी भावुको युवा। किम्वा तस्य वराकस्य दूषणम् " यद्यदा चरति श्रेष्ठः तत्तदेवेतरो जनः। स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते।" इदानीं तु अध्यापका एव निस्संकोचं छात्रान् उपदिशन्ति यद् स्वल्प लेखाभ्यासस्य न गच्छे

तर्हि परीक्षां नोत्तरेः। ग्रन्थाभ्यासेन इदानीं कस्तव लाभः इदानीन्तु यथाकथंचित् परीक्षैवोत्तर्त्तव्या इति छात्राः तादृशीं पाठशालां तत्तत् परीक्षायाम् कार्तिके शुनी श्वानइव अनुधावन्ति यत्र पाठशालायां यद्विषयपरीक्षायाः प्रश्नदाता अध्यापकोऽस्ति। यद्यप्ययं तत्तत्परीक्षा-समित्या प्रान्तेभ्यः हितायैव परीक्षकपदे निर्धारितोऽस्ति, परमयं किम्पश्यन् स्वीयधैर्यमुत्सृज्य देशयूनो निघ्नन् छात्रानुपदिशति यल्लेख-मभ्यस्यैव गच्छत विलिख्य च ददाति, प्रायः प्रतिवर्षं स यत् प्रश्नं निर्धारितवानस्ति तदेव विलिख्य छात्राय ददाति वदति च इयत्स्थलं साधु कुरु इतरस्य नास्ति प्रयोजनम्, यस्य पत्रस्य स स्वयं परीक्षको नास्ति तस्यापि प्रश्नज्ञानं तत्कृते इति सुलभं भवति। यत् स्वीयपत्र प्रश्नम् इतरपत्रपरीक्षकं व्याहृत्य ततोऽपि जानाति। तत्रापि ये महो-दयाः प्रश्न निरीक्षणे सन्ति, प्रश्नमुद्रायणे वा, तैस्तु सम एव प्रश्नाः निरीक्षिताः भवन्ति। तेषामेव छात्रः प्रायेण पदकमधिगच्छति, इतरे प्रथमश्रेण्यां किमिव गच्छन्तु।

अये मे वत्साश्छात्राः ? अवधत, युष्माकं जीवनोपरि कीदृशोऽयम् कुठाराघातः, अध्यापकास्तु युष्माकं जीवनमुपभुज्य मयात्र वर्षे इयन्तश्छात्रा उत्तारिता इति यशो भाजनतामभिगच्छन्ति परं युष्माकं कृते को लाभः इति, इदानीं स एव समयः समागतोऽस्ति। यत्र भवन्तः स्वयमेव विचारं विधाय स्वीयकर्तव्यपद्धतिं निर्मिमीरन् येन "या लोकद्वयसाधिनी तनुभृतां सा चातुरी चातुरी," इति प्रागुक्तश्रेयस्साधनशैलीं न व्यपगच्छेत्, इदानीं यथा परीक्षायाः प्रचारः तथा परीक्षोत्तीर्णतामात्रेण लौकिकमिष्टं साधितमवगच्छन्ति चेत्तः अवगच्छन्तु नाम ? पारलौकिकं तु सर्वं शिष्टमेव तिष्ठति। यतः एकः शब्दः सुष्ठु प्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके च कामधुग् भवति। वर्तमानपरीक्षाशैल्या कथं सुप्रयुक्तः सम्यग् ज्ञातश्च भवेदिति स्वयमेव विचारयन्तु। मन्मतेन तु लौकिकमपि इष्टं न साधितं भवति यतः परीक्षामात्रमुत्तीर्योऽपि योग्यसभायाम् न स योग्यतया गणितो भवति,

किञ्च यद्यध्यापनमेवेष्टं, तदपीदानीं, न केवलं परीक्षामात्रेण लभ्यते, प्रायः उच्चावच्चेषु सर्वेष्वेव विद्यालयेषु अध्यापनादिक्रियाकौशलं प्रत्यक्षेण दृष्ट्वा अध्यापका निर्धारिता भवन्ति, तस्मात् परीक्षायाः यो गम्भीरः परिणामः प्रायः निश्चित आसीत् स एव लब्धध्येयः, प्रधानेषु कृतो यत्नः फलवान् भवति, अन्तेऽध्यपकानपि सप्रार्थनं प्रार्थयामः यत्स्व देशबालकान् मुधाऽयोग्यान् मा कुरुत शास्त्ररक्षकव्याजेन शास्त्रभक्षका मा भवत । इति शम् ।

---

## महात्मा तुलसीदासः

( ले०—पं० श्यामलालः कथावाचकः सङ्गमेश्वर श्रीनगरतः )

मान्या विपश्चित्प्रवराः नास्त्यविदितमात्रभवतां महात्मना तुलसीदासस्य जन्म अलौकिकानि कार्याणि चातिनरां लोकोक्तिमनुसृत्य बहुभिर्लेखकैः निरूपितानि । किन्तु अद्य यावन्न कोपि तादृशो ग्रन्थः समुपलभ्यते, येन महात्मनोस्य जीवनचरित्र सम्यग् ज्ञायते, तस्मादयं जनः भक्तमालादि पुस्तकेभ्यः संगृह्य यथामति संस्कृतहिन्दीभाषाकोविदस्य महात्मनस्तुलसीदासस्य जीवनं, चरित्रञ्च निरूपयितुमीष्टे । श्रीमतः शिवसिंहसरोजस्य मतेन त्र्यशीत्यधिके पञ्चदशतमे शतके तन्निकटे एव संवत्सरे वा गोस्वामिन स्तुलसीदासस्य जन्म सरयूपारीणभूदेववंशेऽभूत् । कौमार एव तदम्बा हुलशी नामधेया आत्मारामाख्यो जनकश्च स्वर्ययौ, पित्रोरभावान्महात्माऽय बन्धुभिः पालितो ग्राम्यपाठशालायां गृहीतविद्यश्च कालं निनाय । पश्चात् तारुण्ये कृतदारपरिग्रहो गृहस्थः स्वदारास्वत्यन्तमासक्तोऽभूत् । लोकोक्त्या तारक नामानं पुत्रञ्च लेभे, पूर्वजन्मसंस्कारवशात् सत्कुलोद्भवाद्वा वृत्तमस्य महात्मनः सर्वथा विशुद्धमेवासीत् । कदाचित् पित्रोर्गृहं प्रत्यनुज्ञामप्राप्यैव रत्नावलीत्यभिधा तत् पत्नी जगाम । तत् विदित्वा तुलसीदासः पत्नीप्रेमातुरः झटिति तामनुययौ । सा च पत्युरनेन कर्मणा लज्जिता तं धिक् कृत्य उवाच.......।

दोहा--लाज न लगत आपको, दौरे आयहु साथ ॥
धिक् धिक् ऐसे प्रेम को, कहा कहुँ मैं नाथ ॥१॥
अस्थि चर्म मय देह मम, तासों जैसी प्रीति ॥
तैसी जो श्रीराम में, होत न तो भवभीति ॥२॥ इति

तच्छ्रुत्वैव प्रबुद्धस्य महात्मतुलसीदासस्य विचारदृष्टिः समुत्पन्ना। तदानीमेव तीव्रतमवैराग्याक्रान्तचित्तः स्वन्त्वयतो जनस्य काशीं प्रतस्थे। तत्र शिवमाराधयामास। भगवतः श्रीरामस्य दर्शनं प्रति समुत्सुकः तद्भक्तिं दिवानिशं निषेवे, काशीपुरवासी कोपि गोस्वामी नरहरिस्तद् विलोक्य तमुपदिदेश, शास्त्राण्यध्यापयामास च। एवं स गुरुसमीपे वसन् यथावसरं तेन साकं कुरुक्षेत्रादिस्थानेषु पर्यटन् गुरोः कृपां "काले श्रीरामदर्शनमवेक्ष्यसीति" वरंच लेभे। महात्मा तुलसीदासः काश्यां शौचावशिष्टं पानीयं मार्गस्थस्य कस्यापि वृक्षस्य मूले सदा प्रक्षिपतिस्म। स च वृक्षः प्रेताधिष्ठितोऽभूत्। अतो जलेन तृप्तः स प्रेतः स्वां तनुं प्रकटयित्वा "तृप्तोऽहं किन्ते सहायं करिष्यामि इत्युवाच। तुलसीदासस्तच्छ्रुत्वा रामदर्शनं कारयेति प्रत्युवाच। प्रेतस्तु "नाहं शक्तस्तत्र, किन्तूपायं कथयामि येन श्रीरामदर्शनमवाप्स्यसि। मन्दिरेऽमुष्मिन् रामायणकथा कथ्यते। तत्र कश्चित् मनुष्यो मलिनाम्बरः कुरूपः प्रत्यहं कथा शुश्रूषुः सर्वेभ्यः प्रथममायाति पश्चात् याति च। असौ मनुष्यो भगवान् वायुपुत्रोऽस्ति तमेव शरणं याहि। स दयावशंवदः ईप्सितं ते पूरयिष्यति" इति प्रोवाच, गोस्वामी तुलसीदासः प्रेतोक्तधा तत्र गत्वा हनुमन्तं प्रत्यभिज्ञाय च विजने तच्चरणावभिवन्द्य जग्राह। हनुमांस्तं बहुशो निवारयामास, परं गोस्वामी तुलसीदासस्तस्य स्वमनोरथपूर्णसमर्थं स्वहठाद् पादौ गृहीत्वा तस्थौ। सञ्जातकरुणो वायुपुत्रः श्रीरामं चित्रकूटपर्वते द्रष्टासि अतस्तत्रैव याहि" इत्युत्क्वाऽन्तर्दधे। सन्तुष्टो महात्मा तत्र गत्वा कतिचिदहानि तस्थौ। एकदा कौचिद् हरिणमनुधावन्तौ धनुर्बाणहस्तौ श्यामगौरकायौ मनोहरौ कुमारावपश्यत्। तौ

निरीक्ष्य चकितो विस्मितश्च श्याम मूर्त्याऽऽकृष्टमानसश्च रामलक्ष्मणौ इति तं व्यजानात्। अनन्तरमेव हनुमताऽगस्य उक्तमिमौ रामलक्ष्मणावास्ताम्। तुलसीदासस्तु पश्चात् नयो दूराद् दर्शनं नेच्छामि समीपे दर्शनं कारयेति तं प्रार्थयामास। महावीरस्तु एकवारं पुनर्दर्शनमवाप्स्यसि इत्युक्त्वाऽन्तर्दधे। कदाचित् तुलसीदासश्चन्दनघर्षणासक्तः अष्टवर्षदेशीयं कुमाराकृतिं धृत्वा श्रीरामस्तत् समीप उपाविवेश। तुलसीदासस्तु तद्रूपमोहितः श्रीरामोऽयमिति न ज्ञातवान्। तदानीमेव हनुमान् शुकरूपं धृत्वा निकटस्थतरुशाखामधितस्थौ॥

स कुमारो महात्मन् स्वहस्तेन चन्दनैस्तव भालं भूषयामीति तुलसीदासमुक्त्वा तथाकरोत्। तरुशाखास्थितः शुकरूपधारी हनुमान्........।

दोहा—"चित्र कूट के घाट पर, भइ सन्तन की भीर।
तुलसीदास चन्दन घिसै, तिलक देत रघुवीर॥"

इति पद्यं पपाठ, पद्यस्यास्य श्रवणात् बालकममुं श्रीरामं विज्ञाय तुलसीदासस्तमस्तौत्। ततो भगवानप्यऽन्तर्दधे, एवमनेकविधाः जनश्रुतयः सन्ति। याभिः पतितान् पावयन् प्रत्यर्थिनो जयन् आर्तान् रक्षन् श्रीकृष्णमूर्तिं वंशीधरां चन्द्रिकमुकुटालंकृताञ्च जटाजूटिनीं धनुर्बाणहस्तां परिणमयन् महात्माऽयं लोकातिगं कर्म कुर्वन् भुवं भूषयामास।

## लोकोपकारः

महात्मनाः तुलसीदासेन हिन्दु समाजस्य स्वीये समये यादृशी सेवा समनुष्ठिता। विरला एव महात्मनस्तादृशीं विहितवन्तः। एतस्य समये भारते महम्मदीयानां साम्राज्यमासीत्। हिन्दु जनता धर्मेण सभ्यतया शास्त्रैः देवालयैश्च सार्धं विपद्सागरे मग्ना अभूत्। विपदाकुलत्वात् भ्रान्तचित्ता किं कर्त्तव्यमिति न निश्चिनुतेस्म। किं बहुना जनतेयं कबीरदासस्य निराकारब्रह्मोद्देशेन वर्णव्यवस्थानिराकरणप्रवणोपदेशेन च निराकारलक्षणः स्वीयां रक्षामलभमाना विध्वस्ता

विपरीत गामिनी चाभूत्। तदानीमेव सदाचार शिक्षामुपदिशन् सगुणं ब्रह्म प्रतिपादयन् स्वभक्तरक्षायै ब्रह्मणोऽवतरणमुपदिशन् परस्पर प्रेम प्रवर्धयितुं कर्त्तव्यं प्रदर्शयितुं विदेशीयैः दस्युभिर्मुषितां भारतलक्ष्मीं पुनरानयितुं साक्षात् कविः कण्ठीरवः वाल्मीकिः तुलसीदास रूपो रामचरितमानसप्रणयनपरः श्रेयस्करं मार्गं भारत जनतोद्धाराय निर्दिष्टवान् ॥

## गीर्वाण ( वाणी ) कोविदत्वम्

भगवाँस्तुलसीदासो न केवलं हिन्दीभाषाभिज्ञ एवासीत्। किन्तु स्ववर्वाणी निपुणोपि बभूव । इत्यत्र रामचरितमानसे प्रति काण्डं संस्कृतश्लोकाः प्रमाणभूताः। वेदान्ततत्वविद् गीताशांकर भाष्यप्रणेता अनेक वेदान्त ग्रन्थानाँ रचयिता श्रीमधुसूदनसरस्वती वाराणस्यां निवसन् गोस्वामितुलसीदासस्य पाण्डित्यविषये इत्थं समुदीरयामास.............

"आनन्द कानने ह्यस्मिन् जङ्गमस्तुलसी तरुः ।
कविता मञ्जरीयस्य रामभ्रमरभूषिता ॥ इति

"संस्कृत साहित्यस्य महता पण्डितेनापि किमर्थं हिन्दी भाषायां भवता कविता क्रियते" इति केनापि सुधिया पृष्टस्तुलसीदासस्तमवदत्...........

"मणि भाजन विष पारई पूरन अमी निहारि ।
काँ छाँडिय, का संग्रहिय, कहहु विवेक विचारि ॥ इत्यादि

रामचरितमानस नामक ग्रन्थे महात्मातुलसीदासेन प्रायः श्रुति स्मृति पुराणादि धर्मग्रन्थानामनुवाद एव कृतो यतस्तेन......

"नाना पुराण निगमागमसंभतं यद्
रामायणे निगदितं क्वचिदन्यतोऽपि ।
स्वान्तः सुखाय तुलसी रघुनाथगाथां
भाषा निबन्धमतिमञ्जुलमातनोति ॥" इति पद्यं रामयणस्य प्रारम्भ एव प्रतिश्रुतमास्ते ॥

इदानीं कतिचिदुदाहरणानि पूर्वोक्तशास्त्रानुवादसूचकानि महात्मनोऽस्याधो निर्दिश्यन्ते ।

### वर्षावर्णनम् भागवते यथा—

मूलम्—मेघागमोत्सवा हृष्टाः प्रत्यनन्दत् शिखण्डिनः ।
गृहेषु तप्ता निर्विश्मा यथाच्युत जनागमे ॥

अनुवाद—लछिमन देखहु मोगन, नाचत वारिद पेखि ।
गृही विरत रत हरष जसु, विष्णु भगत कहुँ देखि ॥

मूलम्—श्रुत्वा पर्जन्य निनदं मण्डूका व्यसृजन् गिरः ।
तूष्णीं शयानाः प्राग् यावद् ब्राह्मणा नियमात्यये ॥

अनुवाद—दादुर धुनि चहुँ ओर सुहाई । वेद रटत जनु बटु समुदाई ॥

### शरद् वर्णनम्, भागवते यथा—

मूलम्—शरदा नीरजोत्पत्या नीराणि प्रकृतिं ययुः ।
भ्रष्टानामिव चेतांसि पुनर्योगनिषेवया ॥

अनुवाद—सरिता सर निर्मल जल सोहा ।
संत हृदय जस गत मद मोहा ॥

### ईश्वर सम्बन्धे, उपनिषदि यथा—

मूलम्—अपाणिपादो जवनो ग्रहीता, पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं नच तस्यास्तिवेत्ता, तमाहुरग्र्यं पुरुषं महान्तम् ॥

अनुवाद—पद विनु चलै सुनै विनु काना ।
कर विनु कर्म करै विधिनाना ॥
आनन रहित सकल रस भोगी ।
विनु बाणी वक्ता बडयोगी ॥इत्यादि ।

### भगवद् गीतायां यथा

मूलम्—यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगेयुगे ॥

अनुवाद—जब जब होहि धर्म की हानि
बाढै असुर महा अभिमानी ॥
तब तब धरि प्रभु विविध शरीरा ।
हरहि दयानिधि सज्जनपीरा ॥ इत्यादि

एवं स भारतभुवं कृतार्थयन् रामायण, दोहावली, गीतावली, विनयपत्रिकादि द्वाविंशतिभिर्ग्रन्थैः कर्तव्यमीश्वरभक्तिं सदाचारं प्रकटयन् दुःखाम्बुधे हिन्दूजनतायाः उद्धारं कुर्वन् अशीत्यधिके षोडश शतके वैक्रमे (१६८०) श्रावण शुक्लसप्तम्यां गङ्गातीरे समाधिनिष्ट परमधाम भेजे। महात्मनोऽस्य वैकुण्ठधामाश्रयणादारभ्येदानीं यावद् द्वाविंदशदधिकं शतत्रयं (३२२) व्यतिजगाम । यदुक्तम्—

संवत् सोलह सौ असी,
असी गङ्ग के तीर ।
श्रावण शुक्ला सप्तमी,
तुलसी तज्यौ शरीर ॥

—o—

## अन्त्यजानां मन्दिरादिप्रवेशः

( लेखकः—श्री विद्याधरो भास्करः गुरुकुल पोठोहार )

श्री नाम्नः पत्रस्य तुर्याब्दस्य तृतीयाङ्के "अन्त्यजानां मन्दिरादि प्रवेशः" इति विषयकं मुद्रितं लेखमवालुलोके। लेखकमहोदयो जनतायां भेदभावं दर्शयन्नपि कासु चिद्विशेषास्ववस्थासु सर्वे समानाधिकारिण इति युक्तिभिः प्रमाणैश्च सम्यङ्निरूपयामास । समाजहितकरीं समताञ्चेमामुन्नत्या दृढ़ाधारं स्वीचकार। परं श्रीमते पण्डित दीनानाथाय शास्त्रिणे इदं साम्यं नारोचत । साम्यं हि मृत्युर्लयो वेस्त्येवमसौ प्रतिपद्यते । यद्यपि शास्त्रिणो युक्तयः प्रमाणानि च स्वविषयं द्रढ़यितुमर्हाणि, तथापि साम्यद्योतकानि प्रमाणानि स्वल्पान्यल्प

संख्याकानीति न केवलमभीष्टसत्यतां निर्द्धारयितुकामैः पक्षपातावरणमपहाय तत्संगमयितुं प्रयतितव्यम्। यथा स्त्रीपुरुषयोर्द्वयोरेव न केवलं धर्मार्थकाममोक्षाणां प्रवृत्तय एव समाना अपितु भगवान् द्वावेव स्त्रीपुरुषौ धर्मादिचतुर्वर्गमधिगन्तुं वेदमुखेन विविधोपायान्समानमेवोपदिदेश। गार्हस्थ्यधुराञ्च वोढुं यद्यपि तौ समानं नियुक्तौ तथापि स्त्रीवद्गर्भधारणे पुरुषो नैव वाध्यते। यतोऽयं वैषम्यातिशयः। एवंविधेषुस्थलेषु साम्यवैषम्ययोरेकतरस्याग्रहो दुराग्रह एव। योग्यतानुकूलमधिकारावधारणमेव बुद्धिचातुर्य्यं न्याय्यञ्चाहुः।

एवमेव वेदादिशास्त्रेषु परस्परं विरुद्धत्वेन भासमानानि स्थलानि बहुत्र लभ्यन्ते, परमेकस्यैवकर्तुस्ततोऽपि मनुष्वसम्भवैः प्रमादाहिदोषैरलिप्तस्य सत्यज्ञातुः प्रभोः रचनायां व्याघातादयो दोषा असम्भवा एव, नैतच्छास्त्रिमहाभागोऽपि निह्नुते यतो हि सौभाग्येन भवान् भगवन्त वेदमुन्मत्तप्रललापन्न मन्यत अपितु बुद्धि पूर्वा वाक्यकृतिर्वेद इत्येवं तत्रातिष्ठते।

साम्यवैषम्ये द्वावेव भावौ समष्टिजगता (सामाजिक जीवनेन) व्यष्टिजगता (वैयक्तिक जीवनेन) च सुसम्बद्धौ। सामाजिकं प्रत्यङ्गं स्वमधिकारं रक्षन्नेव समाजं पुष्णाति, विरुद्धञ्चातः किञ्चिदपि सामान्यमङ्गमात्मकर्तव्यं जहन्न केवलमात्मक्षतिमनुभवति, सामाजिक विनाशेऽपि तद्धेतुतां गच्छति। यद्यपि तान्येवाङ्गानि स्वकार्यव्यासक्तानि कर्तव्यदशा मिथो भिन्नान्येवोपलक्ष्यन्ते, तथापि समुदायसाध्यं सममेव लक्ष्यं सम्पादयन्ति समान्येवोच्यन्ते। यथा यन्त्रावयवः क्षुद्रादप्यतिक्षुद्रा महान्तो वा नियतं कर्म कुर्वाणो भिन्ना अपि यन्त्रजायमानवस्त्रादि पदार्थोत्पादने समानभागिनः। एवं हि भगवता वेदेन यत्र तत्र समाजसंहतिरुपायमुखेन सम्यगुपदिष्टा—

संगच्छध्वं संवदध्वं संवो मनाँसि जानताम्। देवा भागं यथापूर्वे संजानाना उपासते। समानी प्रपा सहवोऽन्नभागः समाने योक्त्रे सहवो युनज्मि। सम्यञ्चोऽग्निं सपर्यता सनाभिमिवाभितः। अथर्व०

समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषां, समानं मन्त्रमभिमन्त्रयेः समानेन वो हविषा जुहोमि। ऋग्वेदः

इत्येवंविधः प्रशस्तः साम्यवादो न काप्यन्यत्रोपलभ्यते। घृणायास्त्वत्र नास्त्यंशतोऽप्यवकाशः। नचाममात्मावृण्णाविषयः, अशुभानि कर्माणि व्यवहाराश्चेदृशा घृणापात्राणि। कर्माणि संस्काराश्चैव नरमलक्षितमुन्नमयन्ति पातयन्ति च क्षणम्।

अन्यस्य चितमभिसंचरेण्यं, ऋ०

चञ्चलं हिमनः कृष्णः , गीता

इति भगवद्वचसा मनसोऽस्थै यविगतौ महात्मनामपि पतने, तस्य स्थिरतायां सम्पादितायाञ्च दुरात्मनामप्युद्धरणेऽद्भुतपरिणामाविर्भावः सम्भवतीति द्योतितम्। दृष्टान्तश्चात्र ऋषिर्वाल्मीकिः, महात्मा सूरदासः भक्तकबीरादयो बहवः सन्तो वरिवृतति। एत एवात्र महाभागाः प्रबलप्रमाणरूपा यत्प्रत्येकमपि नाऽस्त्ययोग्यताञ्चेत्परिवर्धयितुमनुकूलमवसरमधिगच्छेत् तस्मै दीयेत वाऽचिरमेवासावभ्युदितः स्यादिति। एष एव च न्यायपन्थाः, यदुन्नत्याः सर्वे मार्गाः सामर्थ्यभृद्भ्यो धीमद्भ्योऽपावृताः स्युराध्यात्मिका जातीयसम्बन्धिनोऽपि वा। अत्र हि विषये सर्वेषां समानाधिकारतां सङ्केतयन्ती प्रौढ़ां प्रबलां युक्तिमेतान्नकोऽपि खण्डयितुं पारमति। यथा :—

चक्षुष्मतां सूर्ये, रसनावतां जले तद्रसे वा, बुद्धिमतां ज्ञाने (वेदे) अल्पज्ञानां अल्पसामर्थ्यानामात्मनोऽपेक्षया महत्यां शक्तौ श्रद्धतां भक्तिमतां च जीवानामीश्वरोपासनायां सर्वथा समेषां पूर्णाधिकारः, यतो हि सूर्यादि साधनान्यन्तरेण चक्षुरादीनि अर्थशून्यानि, नचेश्वरदत्तस्याणुरपि व्यर्थ इति वक्तुं शक्यम्। ये चक्षुष्मतां सूर्यदर्शनं विघ्नन्ति, जिह्वावतरसोपभोगादपवारयन्ति, मतिमतश्च शिक्षाभावेन वञ्चयन्ति, श्रद्धया भक्त्या चालङ्कृतस्योपासनाद्वारमपिदधति; ते पापा निर्दया आततायिनः प्रभोराज्ञाया नियमस्य च भङ्क्तार उच्यन्ते। ततोऽन्यथा उन्नतिपथं स्वातन्त्र्येणाप्याप्तुं नोन्नत्यैचेष्टन्ते तेऽधन्या भाग्यहीना

नराधमाः। त एव शूद्रा ये कथमपि कांचिद्विद्यामधिगन्तुमशक्ताः। शूद्रस्यान्त्यजस्य वापि गृह उत्पन्नो बालो बुद्धियोग्यतां च विभ्रदपि केवलं जन्मना दोषेण विद्यादीनामभाजनमित्येवंविधस्तु न न्यायः। एषान्यायसरणिस्तु भगवतस्तद्भक्तानां धर्मशास्त्रकाराणामृषीणां मुनीनाञ्चापि नेष्टा—

यथा—१. धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जाति परिवृत्तौ। आपस्तम्बः।

२. शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैव शूद्रताम्। मनु०

३. नहि कश्चिद्दोऽश्ववज्जातिभेदोऽस्ति देहिनाम्।
कार्यशक्तिनिमित्तस्तुसंकेतः कृत्रिमो भवेत्॥ भविष्यपुराण०

४. शूद्रोऽप्यागमसम्पन्नो द्विजो भवति संस्कृतः। ब्रह्मपुराण०

५. शूद्रयोनौ हिजातस्य सद्गुणानुपतिष्ठतः।
वैश्यत्वं लभते ब्रह्मन् क्षत्रियत्वं तथैव च।
आर्जवे वर्त्तमानस्य ब्राह्मण्यमभिजायते।

म० भारत वनपर्व।

यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः।
तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद्द्विजः। म० भारत, वनपर्व अ० २१६

जन्मनैव वर्णव्यवस्थां साधयितुकामः शास्त्रिणः कानिचित्प्रमाणानि सुस्पष्टं गुणकर्मणा वर्णपुष्टिकराण्यपि निजपक्षेऽन्यथा व्याचक्षते—"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः" इत्यत्रप्राक्तन जन्मन एव गुणकर्म विवक्षितं न त्वैहिकमित्युक्तवद्भिः "पूर्वजन्मतो गुणकर्माणि वर्त्तमानं जन्म, ऐहिकानि च भावि जन्म निर्वर्त्तयन्ति; नैतस्मिञ्जन्मनि गुणकर्मणां वर्णपरिवर्त्तने शक्ति" रित्याक्षिप्तम्। आदौ तावदनेन गुणकर्माण्येव वर्णनिर्माणे निमित्तमित्यङ्गीकृतं भवति, तानि चेत्प्राग्भवीयान्यपि वा स्युः। अपरं ब्राह्मणादयो वर्णा आचारभ्रष्टाः सन्तस्तथान्नतिशालिनोऽपि यदि न वर्णान्तरं समन्ते तथैव तिष्ठन्ति

तर्हि अस्मत्पूर्वोपात्त प्रमाणानि संगमयितुं श्रीमतां कतमो यत्नः स्यात् ? यथा—जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते "शूद्रो ब्राह्मणतामेति" इत्येवमादीनि। यद्याचारविशेषेणापि वर्णपरिवर्त्तनं सर्वथाऽसम्भवन्तर्हि ऋषीणामुपरोक्तवाक्यानि सर्वाण्येव व्यर्थतामुपयान्ति। यदि "ब्राह्मणस्तु जन्येनैव भवति 'सु' 'कु' त्वन्त तस्य गुणकर्मणाऽख्यायेत" इति भवदुक्त दिशा सुब्राह्मण कुब्राह्मणयोः वर्णान्तराभावेऽपि विशेषणान्तराणि भेदकराणि भवन्ति, एवं शूद्रस्यापि ब्राह्मण कथन एतदेव प्रयोजनं यथासौ तद्वद्व्यवहारं लभेत इति न तु वर्णान्तरम्। तदैताभ्यां सुब्राह्मण कुब्राह्मणाभ्यां तथा सुशूद्र कुशूद्राभ्यां सह व्यवहारानुष्ठाने कश्चिद्भेदः स्यान्नवा ? चेत्साम्यंस्यान्न कश्चिदुन्नतिं स्पृहयेदात्म कर्त्तव्यमनुतिष्ठेद्वा तथा न च यतनाद्विभीयात् चेद्भेदः, सुशूद्रोऽपि कुशूद्रापेक्षयाऽधिकं मानमाप्नुयात्। सम्भवतः यथा पतितो ब्राह्मणो मनुनोक्तया रीत्या "स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः" इति शूद्रवद्बहिष्कार्यत्वं निकारं प्राप्नुयात्तथैवाचारवानुन्नतिशीलः शूद्रो ब्राह्मणवद्व्यवहारभागी अपि स्यात्! एवं हि पात्रं जन उन्नतिमार्गमधिगच्छेत्, उन्नत्याः पथि तस्य स्वातन्त्र्येण समानाधिकारः स्यादित्येव लेखकस्याशयः न शब्दान्तरमात्रे वर्णान्तरे आग्रहः।

वर्त्तमान जन्मन्यपि यथा वर्णव्यवस्था महात्मनामिष्टा, सानिरीक्ष्यताम्।

आचार्यस्त्वस्य यां जाति विधिवद्वेदपारगः।
उत्पादयति सावित्र्या सा सत्या साजराऽमरा। मनु०

वेदानां पारंगन्ता आचार्यः शिष्यस्य यां जातिं कल्पयति सा न शीघ्रं परिणमते। आयुषस्तुर्यो भागः, अधिको वा शिष्यस्याचार्यसेवायामत्येति एवमऽस्मिन्द्राघीयसि काले तथारम्भिके सारल्यान्विते बाल्ये वयसि शिष्यगतान्विविधसंस्कारानाचार्यः सम्यग्वेदितुमर्हति आदधाति च ततो निश्चित्य। समावर्त्तन समये वर्णव्येकतयेनालङ्कृत्य "गृहस्थमास्थाय त्वयाऽत्य वर्णानुकूलं वर्त्तितव्यमिति शिष्यमादिशति।

वर्णभेदस्यावश्यकता सम्बन्धोऽपिवा केवलं गृहस्थाश्रमेण सह वरीवर्त्ति, यतः सामाजिकोऽयं विभागः। यः कश्चिद् यथायोग्यतया समाजं सह योक्तुं शक्तः, तस्य तेनैव वर्णनाख्यानं युक्तम्। शेषास्त्रय आश्रमा मुख्यतो व्यक्तिगत जीवनमाश्रयन्ति, तस्मात्सामूहिक धर्मस्य (वर्ण भेदस्य) तत्र नास्त्यावश्यकता।

एवमेवोपासना विषयोऽपि न सामाजिकः। उपासना समये उपासकस्य लक्ष्यमीश्वराराधनमात्मिकशक्तिविकासश्च भवति, तत्र वर्णभेद चिन्ता नोत्पद्यते। सर्वं ब्राह्ममिदं जगत, अर्थात् सकलं जगत्तत्र भगवदन्वेषणतत्परं भवतीत्युच्येत तथापि नात्युक्तिः। तत्र सर्वे उपासकाः प्रभोः प्रिया समानमेव च दयाभाजनानि भवन्ति।

मन्दिर प्रवेश विषयस्तु तथा नाधिककष्टसाध्यः। यदि मन्दिराणि वस्तुतो भगवतो गृहाणि, तत्प्रत्यक्षे च वृहत्साधन भूतानि वा सन्ति, तदा तत्र भगवद्भक्तानामेव प्रवेश उचितो नान्येषाम्। येषां मनसि भगवन्तं प्रति श्रद्धाया अगाधो नदो भृशं तरङ्गायेत। सत्यवादिता, त्यागो, ऽहिंसाचेत्यादयो दिव्यागुणाश्चेतसि ओताः प्रोताश्च छल कपट द्वेषद्रोहादिभिरपाताश्चानुरागवन्त एव भक्तिमन्तः सन्तं मन्दिरं प्रवेष्टुमर्हन्ति। प्रभुरपि तानेव शुद्धान्तःकरणानघो वर्णान् वर्णान्तरगतानपि जनान् स्निह्यति। उपरिवर्णितानां गुणानां धनिनः केते धन्याः! इति जिज्ञासायां विनैवायासमित्थं विभावनीयम्-यस्य चेतो मलिनं रागद्वेषादिभिर्भावनाभिरात्रिलं श्रद्धाहीनं नास्तिकं स्यात्तस्मै तु मन्दिरनामश्रवणमपि सर्वथा न रोचेत किं पुनस्तद्गमनम्? पाप कर्मभ्यो विरक्ता दुःखिनो बन्धनान्मुक्ति प्रेप्सवो भगवन्तं मृजुना भावेन बलं याचमानाः श्रद्धया परमया भक्त्या च सुरभितानां मनोभाव पुष्पाणामञ्जलीर्वितरन्तो भाविनं जीवन मुन्निनंसवश्चैवोपासकास्तत्र गन्तुं कामयन्ते। तस्माद्भद्रजेनैरुदारैरुच्चावच्च भावानपहाय सर्वेभ्य उपासकेभ्यः शूद्राय, अन्त्यजायापि वा मन्दिराणां द्वाराणि सामान्यतोऽनावरणीयानि। येनात्मविन्यं विनैव कमपि निरोधं

सहर्षं प्रभोश्चरणयोः कश्चिदपि भक्तो विनिवेदयेत्। यद्येवं सौभाग्यं सम्यगवसरमाप्य केचिद्भक्तशिरोमणयः कबीरसूरदास प्रभृतय इव महात्मानो नः सौभाग्येनाविर्भवेयुराध्यात्मगगने चामलद्युतयः सूर्यं चन्द्रमसाविव सततं विद्योतेरंस्ततः किमाश्चर्यम् ?

---

## ब्रह्मचर्य-धर्म लक्षणम्

( ले०—पण्डित वार्त्तांक रामनाथः श्रीनगरस्थः )

"धर्मेण गमनमूर्ध्वं गमनमधस्ताद् भवत्यधर्मेण" तथाहि०—

धार्यतेऽनेनेति धर्मः, इति व्युत्पत्त्या धर्मशब्देन अवश्य कर्त्तव्यत्वं ( Duty ) नियमबद्धत्वं लोकस्थितिसुखप्राप्तिश्चावगम्यते। यं धर्ममाश्रित्य, यस्य च साधुतया सदैव प्रयोगेण जनोऽस्मिन् संसारे परमं सुखमनुभवन् स्वजीवनमुल्लङ्घयति-प्रख्यातिञ्च लभतेध। नैश्वर्यं भोगादीन् च प्राप्नोति-लोके मान्यो भवति-सर्वैः सत्कृत्य चैहिकमामुत्रिकं फलमवाप्नोति तथा शरीरस्य नीरोगतां लभते इति।

स च धर्मः श्रुति स्मृति पुराणादि शास्त्रेषु सम्यक् तथा निर्णीतः स्मार्तैं विद्वद्वरैश्च।

अनेक प्रकारा हि धर्मास्तदन्तर्गतं ब्रह्मचर्यमहिमानुगतस्नान सन्ध्यादि रूपमेकं धर्ममुद्दिश्य मया किंचिदुल्लिख्यते। तथा हिद्विजैः 'सायं प्रातः सन्ध्यामुपासीत' इति श्रुतिचोदनया सन्ध्यारूपो धर्मः सततमुपासितव्य इति।

सन्ध्या च सम्यक् ध्यायतेऽस्मिन्निति सन्ध्या, सा हि नित्यं सायं प्रातः ब्राह्मे मुहूर्त्ते पुरुषैर्नद्यास्तटे गत्वा, न्यासादिभिः सह जपादिविधिना भगवन्नामोच्चारण पूर्वकंक्रियते। ययाऽधर्मजन्य पापध्वंसः संजायते, तदुक्तं।

सन्ध्यामुपासते ये तु सततं शंसित व्रताः।
विधूत पापास्ते यान्ति ब्रह्मलोक मनामयम्॥ इति

[illegible] कल्पते। इहफलं तु शरीरस्याभ्यन्तरतो

बाह्यतश्च शुद्धीकरणम्, तथाःहि—प्रातः काले वायुरतीव निर्मलो रम्यः पथ्यश्च नात्युष्णस्तथा सुखावहश्च मन्दं मन्दं सरति। विशेषतो नदीनां तटेषु। प्राणायामादिभिर्वायु सेवनं शरीरस्याभ्यन्तर शुद्धिकरं भवति विशेषतो हृदयस्य। येन हृदय यन्त्रेण ( Circulation of blood) रक्त संचारो भवति, तदुक्तम्।

तदेतत्। त्र्यक्षरं हृदयमिति, हृ इत्येकमक्षरम् द इत्येकमक्षरं, यम् इत्येकमक्षरम् ( शत १४–४–१ ) हृदयशब्दो हृञ् हरणे, दा दाने, इण् गत्तौ इति त्रिभिर्धातुभिः संयुज्य सिद्ध्यति। एतत् ( हृदयं) अशुद्ध रक्तस्य हरणं कुर्वत् शुद्ध रक्तस्य प्रदातृ तथा गति कर्तृ भवतीति स्वभाविकमेव हृदयस्य कर्म। परं शुद्धवायुसेवनेन हृदयस्य पुष्टि र्भवति, यया पुष्ट्या हृदययन्त्रं स्वयं दृढ़ीभूय शीघ्रतया रक्तस्य च गतिं करोति। साधुतया शरीरस्थ नाडीषु रक्तसंचारणेन शरीरमपि नीरोगतां प्राप्नुवत् पुष्टिं लभते, स्वस्थमपि संजायते इत्याभ्यन्तर शुद्धिः।

अथ शरीरस्य बाह्यतः शुद्धिकरणाय स्नानमावश्यकं, यतः शरीरस्य बाह्यत्वचि सहस्राणि सूक्ष्मछिद्राणि भवन्ति। येभ्योऽन्त-स्थस्य मलिनस्वेदस्य निष्क्रमणं भवति। स्नानाभावेन तानि बाह्येन मलेनापिधीयन्ते, येनान्तःस्थमलिनस्वेदस्य निष्क्रमणं न भवति, रोगश्चोत्पद्यते हानिश्च विद्यते। विना स्नानेनालस्यं रूपहानिश्च भवति, आलस्येनावृतः पुरुषः किञ्चित् कार्यमपि कर्तुं नैव शक्नोति, कार्या-भावात् स्वजीवनमपि सुखेनोल्लङ्घयितुं नैव समर्थो भवति, अतः स्नान-मावश्यकं मनुजमात्राय विद्यते। परमेते खलु कठिना नियमाः ब्रह्म-चारित्वेनैव सम्यक्तया पूर्यन्ते न चान्यथा, अत एवोक्तं शास्त्रेषु 'ब्रह्म-चारी भव।'

ब्रह्मचारित्वं हीन्द्रिय-निग्रहत्वं भवति, इन्द्रिय-निग्रहेण पुरुषः सर्वस्वभूतस्य स्वबीजस्य रक्षां कुर्वन् बलिष्ठो भवति। संजातबलः शूरो वीरश्च सर्वाणि कर्माणि कर्तुं समर्थो भवति, यथा हि पुरा

रामायणे बलयुक्तः शूरः पवन पुत्रो हनूमान् स्व ब्रह्मचर्य बलेनैव दुस्तरं समुद्रमुदलङ्घयत् महतीं लङ्कामदहत्, नानाविधैर्घोरैः राक्षसैः सह चैकाक्येव स युद्धं कृत्वा स्वस्वामिनो रामचन्द्रस्य समीपं प्राप्य सीतायाः उदन्तं तमकथयत्। इति सर्वं ब्रह्मचर्यस्यैव माहात्म्यम्॥

जगत्यस्मिन् लोकस्य स्थितिनाशयोः सम्भवो ब्रह्मचर्यस्य भावाभावाभ्यामेवास्ति। (ब्रह्मचारित्वेन नैतन्मम प्रयोजनं, यत् पुरुषा यावज्जीवनमिन्द्रिय निग्रहं कृत्वा स्वकीयां भार्यामपि नैवोपगमेयुः, येन प्रत्यक्षमेव सृष्टे र्नाशः सम्भवेदिति, किंत्वादौ पंच विंशति वर्ष पर्यन्तं पूर्ण रूपेण ब्रह्मचर्यं धृत्वा विवाहं च कृत्वानन्तरं धर्म शास्त्रोक्तानुसारं यथोचित कालेषु त्वयुपगमनमेव ब्रह्मचर्यमिति) ब्रह्मचारिणो यान्बालकान् जनयन्ति, तेऽतीव वीराः रूपवन्तः धीशालिनः स्वस्थशरीरास्तथा ब्रह्मर्यस्य फलभागिनः अग्रे सम्पत्त्यादिभिर्वर्धमानाः साधुकार्येषु च प्रवृत्ताः लोके स्वजीवनं सम्यक्तया निर्वाहयितुं शक्नुवन्ति, जगति लोकस्थितिं च कुर्वन्तीति।

अथ ये ब्रह्मचर्यहीनाः पुरुषाः भवन्ति, ते सदैव कामादि दोषासक्ताः विद्यन्ते, येन तेषां शरीरस्य सर्वस्वभूतस्य स्वबीजस्य नाशः संजायते, बीजस्य न्यूनत्वे ते सदैव रोगिणः, आलस्य ग्रस्ता स्तथा क्षीणशरीराः, मृत प्राया इव जीवनमुल्लङ्घयन्ति, किञ्चित् साधु कार्यमपि नैव कर्तुं वाञ्छन्ति, न च कर्तुं शक्नुवन्ति, येन ते धनोपार्जनं कृत्वा स्वोदरपूर्तिं कुर्युः। अनन्तरं धनाभावात् स्वोदरं पूरयितुं, विवशास्ते चौर्यकर्मपरास्तुथाऽसत्यभाषणपरा, जनानां वंचकाः, अधर्मासक्ताः, क्रूरकर्मकराः, अगम्यमपि गम्यं जानन्तः, यद्यपि क्लेशात् किञ्चिन्मात्रं धनमुपार्जयन्ति, तथापि तदधर्मजन्यं धनं पुनरधर्म एव नियोजयन्ति। येनाधर्माचरणेन तेषां महत् दुःखं भवति, दुःखस्याधिक्यं जानतामपि तेषामजितेन्द्रियत्वात् पुनः २ कामादि विषयेषु प्रवृति र्भवति। दुर्विषयासक्तत्वात् ब्रह्मचर्य हीनाः पुरुषाः स्व पूजनीयौ मातापितरावपि 'यौ हि पुत्रं स्वकीय प्राणैरपि रक्षन्तो

पालयतः सदैव चाहित कारिणोपि तस्य हितामिलाषिणौ तस्य रोगाक्रान्त शरीरस्यापि दार्ढ्यवाञ्छकौ भवतः', क्लेश दशां प्राप्‍यन्ति, का कथा चान्येषां लोकानां दुःखदाने। लोके हि ते सर्वै निराद्रियन्ते, अविश्वासपात्रतां च यान्ति। नीचस्वभावा दुश्च खल्वेत इति मत्वा न कोऽपि साधु पुरुषस्तैः सार्धं प्रेमालापमात्रमपि करोति, प्रत्युत स तेषां शत्रुः सम्पद्यते। न केवलं साधु पुरुषाः परं तेषां विरोधिनः, अपितु स्वजना बान्धवाः अपि द्रोहिणो भवन्तस्तेषां लोके स्वसामीप्यमात्रमपि नैव वाञ्छन्ति, सदैव च तेषामनिष्टकारकत्वात्। इत्थं हि तेषां सर्वजनैः पुरुषाः अपि स्वार्थमपरित्यज्य दुष्ट शब्दान प्रयुंजानाः, असत्यं च भाषमाणाः चौर्य हिंसा दुष्टकर्मरताः, परस्परं प्रेमोपचयस्य यं कुर्वन्तः, स्ववैरनिर्यातनाय सततं प्रयत्नशीला भवन्ति, कृतप्रयत्नाश्च ते जनसंघै दूरतो विवर्जनीया भवन्ति, येन ते कदापि सज्जनानां सभासु गन्तुं स्थातुं च नैव शक्नुवन्ति, यत्र ते साधुपुरुषाणां संसर्गात् किञ्चित् स्वात्मोद्धरणाय शिक्षेरन्। दूरंतोऽस्तु स्वात्मोद्धरणकथा, ते तु साधारणजीवनं परित्यज्य यथाशक्यं विलासादीम् विरच्य लण्ठकाः, चौराः, मधुमासयोः प्रवृत्ताः, मातृवत् पूज्यान् परदारान् स्वभार्यामिवाचरन्तः प्रतिदिवसं कुकर्मभिरावृत्ता भवन्ति। सततं पापाचरणेन ते सम्नश्यन्ति, अन्यांश्च दुःखयन्ति च। मूलतो ब्रह्मचर्यस्य भावाभावयोः सम्भवो भक्ष्याभक्ष्य पदार्थानां सेवनेनैवास्ति तदग्रे निर्णेष्यते।

---

# विवाहवयो-विमर्शः

निबन्धा—श्रीदीनानाथशर्म्मा शास्त्री सारस्वतः। स० ध० कालेजाऽध्यापकः, मुलतान

'निषुसीद गणपते ! गणेषु त्वामाहुर्विप्रतमं कवीनाम्।
न ऋते त्वत् क्रियते किञ्चनाऽऽरे महामर्कं मघवञ्चित्रमर्च'
ऋ० । १० । ११२ । ९

पाठकमहोदयैः 'श्री' पत्रस्य तुरीयवर्षीय-तुर्यसङ्ख्यायां विद्यावाचस्पतिश्रीधर्म्मदेवमहोदयस्य आक्षेपपरिहारो दृष्टः स्यात्। तदीयनिबन्धद्वारा प्रतीयते; यदस्मदीय लेखस्य तत्र पर्य्याप्तप्रभाव ऽ पतितः। तदैव तु यत्र तत्र कठोरशब्दा अप्यमुना महाशयेनाऽस्मत्कृते समुपन्यस्ताः। सेयं तेषां पारम्परिकी सम्पत्तिरिति विविच्य तत्राऽस्माभिर्मृष्यते, प्रकृतञ्चाऽनुस्रियते।

तत्र श्रीमान् कृपां कृत्वाऽभिधया स्त्रीणां यौवनंवयः षोडशाऽब्दात् परं (१७ वर्षे) चतुर्विंशतितमवर्षाऽन्तराले च वक्ति; तदेव च वैदिकविवाहवयो मनुते। परं तन्मताचार्य्यैः 'संस्कारविधौ' विवाह प्रकरणे 'युवतयः' इति मन्त्रस्थपदस्य वैदिकाऽर्थं 'बीसवें वर्ष से चौबीसवें बर्षवाली हैं' इति १२५ पृष्ठे आचष्टे; १०२ पृष्ठे च १६ वर्षायाः स्त्रिया विवाहम् 'अधमम्' आचष्टे, २०-२४ वर्षाया विवाहञ्च सर्व्वोत्तममाचष्टे, अधमन्तु वस्तु हेयम्भवति; अत्र मिथो गुरुशिष्ययोर्व्वैयधिकरण्यं फलितम्, अनयो ऽ कतरो वैदिकः ? किं वेदे इदं तारतम्यं वर्णितम् ?

श्रीमता १७–२४ वर्षे कन्यायौवनं भवति,—अत्र न वेद प्रमाणं दत्तम्, न स्वस्वाम्यभिमतसुश्रुतचरकयोः; तर्हि किं श्रीमत्कथनमात्रमेव प्रमाणं मन्येमहि ?। श्रीमन्तः स्त्रिया गर्भमभिलक्ष्यैव स्त्रिया यौवने विवाहं निरूपयन्ति, स्त्रीयौवनतञ्च श्रीमन्मते १७ बर्षादारभ्य २४ वर्षारम्भपर्य्यन्तं भवति; तर्हि २४ वर्षानन्तरं यौवनसमाप्तिकारणात् तस्यां स्त्रियां विवाहवद् गर्भाधानमपि त्यक्तव्यं भविष्यति श्रीमद्भिः; यतः श्रीमन्तो यौवन एव विवाहं निरूपयन्ति, यौवन एव च गर्भम्। १७ वर्षात् प्राक् २४ वर्षानन्तरञ्च भवन्मते यौवनं न भवति, अन्यथा २५ वर्षानन्तरमपि यौवनत्वे भवन्मते मते २५-३० वर्षेष्वपि स्त्रिया विवाहो भवतां वैदिकनये भवेद्, यतो भवन्मताऽनुसारं वेदे यौवने विवाहो यौवन एव च गर्भाधानं वर्णितम्। परं भवद्भिः २५-३० वर्षे स्त्रिया विवाहो न मतः; एवं गर्भाधानमपि

न मंस्यते यौवनाऽभावाद्। विवाहे मूलनिमित्तञ्च भवन्तो निधुवन-मात्रमामनन्ति, एतदर्थमेव च विवाहं यौवनं आदिशन्ति। अत्र विद्यावाचस्पतिमहाशयो वेदाऽनुसारं व्यवस्थां प्रकाशयत्। वयन्तु ऋतुकाले गर्भं मन्यामहे, तत्सम्भावनात ईषत् प्राग्—(द्वादशवर्षं, यत आयुर्वेदः—'तद्वर्षाद् द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम्' सुश्रुत० सूत्र० १४। ६ इति ऋतुकालं वक्ति) विवाहं मन्यामहे, ऋतुरेव च यौवनस्य लिङ्गम्।

प्रौढाशब्दं यौवनार्थे श्रीमान् यद्यैकदेशिकं मन्यते, तर्हि तद्-प्रयोग एव श्रेयानासीत्।। यदि श्रीमतः सायणभाष्ये न श्रद्धा, तर्हि श्रीमता तत् पुनः पुनः कथमुद्* धृतम् ?। यद्यस्मदवबोधनार्थम्, एतदयुक्तम्। प्राक् स्वमतम् उभयाऽभिमतप्रमाणेन पोषणीयं भवति; ततोऽन्यस्याऽपि पक्षः प्रदर्शनीयो भवति, श्रीमता तथा न कृतम्। सनातनधर्म्मस्याऽऽधारस्तम्भं न कोऽपि सायणं मनुते सनातन-धर्म्मा। प्राङ् मूलवेदवाक्यस्य तत ऋषिमुनिवचनानां ग्राह्यता भवति। यदि सायणस्तद्वचनानि विरुणद्धि, मूलतो विरुद्धं वा व्याचष्टे; तर्हि न तत्र कोऽपि तं प्रमाणं मनुते, सायण ऋषिमुनिर्नाऽऽसीत्। अस्तु—यदि श्रीमतो न सायण-भाष्ये श्रद्धा; तर्हि श्रीमता सायणभाष्यमेव तूद्धृतम्; तत्र श्रद्धाऽभावाच्च भवत्पक्षो विध्वस्तो जातः, यतः—सायणभाष्यादेव तु श्रीमता 'प्राप्तयौवनाम्' इत्यर्थः साधितः, न स मूले दृष्टः। सायणस्तु देवयोनिं मनुते 'न वोऽस्त्यर्भको देवासो! न कुमारकः। विश्वे सन्तो महान्त इत्' ऋ० ८। ३०। १ 'युवानो रुद्रा अजराः' ऋ० १। ६४। ३ इति दर्शनात् स देवताया यौवनाऽर्थं निर्दिशति; भवांश्च देवयोनिं न मन्यते, अत एव भवत्पक्षो विहतः। स सूर्यां नृयोनितोभिन्नां मन्यते, वर्त्ततेऽपि च सा भिन्ना—इति स्वप्राक्-प्रमाणितसायणभाष्ये द्रष्टव्यम्। स लिखति—"आदितः पञ्चानां सोमो देवता, तत एकादशभिः सूर्या स्वविवाहं स्तुतवती, अतस्तत्र योऽर्थः प्रतिपाद्यते स एव देवतात्वेन विज्ञेयः (अत्रेतिहासो-ऽपि वेदे सिद्धः)। सप्तदश्या देवा देवताः, अष्टादश्याः सोमाऽर्कौ, एकोनविंश्याश्चन्द्रमाः। अग्रेसलिखति—'सुकिंशुक' मित्याद्या नवर्चा

---

* दोषोऽयन्तु उभयपक्षस्य। श्री० लेखक महाशयोऽपि स्वामिदयानन्दस्य पं० राजाराम शास्त्रिणो भाष्यं पुनः पुनरुद्धृयति। किं लेखकस्य श्रद्धावर्तते स्वामि दयानन्द कृत भाष्ये पं० राजारामस्य टीकासु वा ?। भू० सम्पादकः

विवाहमन्त्रा आशिषः प्रतिपादकाः।" तत्र २१ मन्त्रादेव नृणां विवाहः प्रारभ्यते, २१ मन्त्र भाष्ये स्वयं तेन लिखितम्—'आभिः नृणां विवाहः स्तूयते।' एतेन एतदपि सिद्ध्यति, यत् सूर्य्या नृयोनितो भिन्ना; परिशेषात् सा देवयोनिः सिद्ध्यति। तस्यां नित्ययौवनदर्शनात् तत्र यदि सूर्य्याया यौवनं सायणेन दर्शितमपि; तदाऽप्यस्माकं न क्षतिः। यदि श्रीमतः सूर्य्याया देवतात्वे सायणभाष्ये श्रद्धा न भवेत्*; तर्हि 'अजमेर वैदिकयन्त्रालये' मुद्रिते मूलर्ग्वेदे द्रष्टव्यम्। तत्र ६-१६ सूर्य्याविवाहो देवता, २०-२८ नृणां विवाहमन्त्रा देवताः इति मुद्रितम्। एतेन स्पष्टं प्रतीयते यत्-सूर्य्या नृयोनितो भिन्ना, अन्यथा तस्या अपि मानुषीत्वे६-१६, २०-२८ मन्त्रयोः सूर्य्याविवाहः, नृणां विवाह मन्त्राः—इति भिन्न-भिन्न देवतोपन्यासो नाऽभविष्यत्।

यदि श्रीमन्निर्दिष्टा मन्त्रा भाष्यं नाऽपेक्षन्तेऽस्म; तर्हि सायणभाष्योद्धरणं व्यर्थम्, मूलेन विवाहस्य यौवनं साधनं कार्य्यमासीत्, कथं सायणशब्देन साध्यते?। परं मूले तु तदनुपस्थितिः।

सूर्य्याशब्दस्य 'सूर्य्यवत् तेजस्विनी ब्रह्मचारिणी' इत्यर्थः श्रीमता कस्माद् व्याकरणात्, कस्मान्निरुक्तात्, कस्माद् भाष्यात्, कस्मान्मन्त्रात्, कस्माद्वा ब्राह्मणात् कृतः? कोऽत्र कस्मिन्नर्थे केन प्रकृतिप्रत्ययश्च कृतः?। 'सूर्य्याद् देवतायां चाब् वक्तव्यः' ४।१।४८ इति व्याकरणवार्त्तिकमपि श्रीमता तिरस्कृतम्। 'सूर्यस्य स्त्री सूर्या देवतायामिति किमर्थं—सूरी' ४।१।४८ (२) इति महाभाष्यमप्यतिक्रान्तम्। 'सूर्य्या—सूर्यस्य पत्नी' इति निरुक्तम् १२।८।१ अपि अवहेलितम्। 'सविता सूर्य्यां प्रायच्छत् सोमाय राज्ञे प्रजापतये वा' इति च निरुक्तस्थं ब्राह्मणमप्युपेक्षितम्। 'प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् सूर्य्यां सावित्राम्, तस्यै सर्व्वे देवा वरा आगच्छन्नित्यादि' सायणभाष्यस्थम् ऐतरेय ४।७ ब्राह्मणमप्युपेक्षितम्। 'प्रजापतिः सविता स्वदुहितरं सोमाय प्रायच्छत्—सोमाय दास्यामीति मनीषामकरोत्, तस्मिन् समये......अश्विनौ प्रबलौ सन्तौ आजि पुरतो गत्वा तामलभेताम् इति 'सोमो वधूयरभवत्, इत्यादिनाऽयमेवाऽर्थः स्पष्टो भविष्यति' इति तस्य सायणकृतं (ऋ० १०।८५।८) विवरणमप्यनादृतम्। 'पुनाति ते परिस्रुतं सोमं सूर्य्यस्य दुहिता।' ऋ० ९।१।६

* (इतः प्राक् श्रीमत्पादकीया टिप्पणी विराजते; तत्र निवेदन मिदं यन्मया प्राक् स्वपक्षपुष्टौ युक्तिप्रमाणानि प्रच्यानि प्रदाय ततो वादिमताधारस्वाभिवचनान्यपि निर्दिष्टानि; परं स्नातकमहोदयः स्वपक्षपुष्टौ युक्तिप्रमाणान्यप्रदाय केवलमत्र सायणवचनं प्रमाणीकरोति; यो न तदीय ऋषिमुनिः; न च तद्वचनं स्मृत्यादिवत्तर्ककोटिकम्; तथाप्यस्माभिस्तदीयो वास्तविकसमाधिः कृत एव। —लेखकः)

कः समासः?

'पर्जन्यवृद्धं महिषं तं (सोमं) सूर्य्यस्य दुहिताऽभरत्। ऋ० ९।११३।३
इति मन्त्रा अप्युपेक्षिताः। 'सूर्यां यत् पत्ये शंसन्तीं' अत्र पति
कामयमानां पर्य्याप्तयौवनाम्, इति-सायण-शब्दमात्रं दृष्ट्वा प्रसङ्गेन
श्रीमता स्वाचार्य्यस्य—'सूर्य्य की किरणवत् सौन्दर्य्य गुणयुक्त पति के
लिये मन में गुणकीतन करने वाली वधू है, इति संस्कारविधौ गृहाश्र
मसंस्कारारम्भे कृतोऽप्यर्थोऽनादृतः, अधुना-न ज्ञायते-कतरो वैदिकः।

श्रीमता ब्रह्मचारिणी सूर्य्यवत् तेजस्विनी मता; तर्हि रात्रि
समये प्रदीपस्य न प्रयोजनीयता भविष्यति-इति सन्तोषो जातः,
परं निधुवने व्याक्षेपो भवेत्। श्रीमदाचार्य्याऽनुसारं (संस्कारविधौ
वेदारम्भे ६६ पृष्ठे) 'अथ यान्यष्टाचत्वारिंशद्वर्षाणि, तत् तृतीयसव-
नम्, अष्टाचत्वारि ँ शदक्षरा जगती, जागतं तृतीयसवनं तदस्याऽऽ-
दित्या अन्वायत्ताः, छान्दोग्ये० ३।१६।६। अब ४८ वर्ष पर्यन्त जैसा
कि—अड़तालीस अक्षर का जगती छन्द होता है, वैसे इस उत्तम
ब्रह्मचर्य्य से......सूर्य्यवत् प्रकाशमान होकर ब्रह्मचारी सब विद्याओं
को ग्रहण करता है' इति सूर्य्यं ब्रह्मचर्य्यं जगतीछन्दसा सम्बन्ध-
वशात् ४८ वर्षस्य मतम्; तर्हि सूर्य्यवद् ब्रह्मचर्य्य युक्तायाः स्त्रिय
अपि जगतीच्छन्दः-सम्बन्धात् ४८ वर्षं ब्रह्मचर्य्यं यथास्वाऽऽचार्य्य
सम्प्रदायं श्रीमता मंस्यते, जगतीछन्दश्च कदाऽपि १७-१८-१९-२०-
२१-२२-२३-२४ अक्षराणां न भवति; तर्हि श्रीमन्नयेन 'सूर्य्यायाः
४८ वर्ष ब्रह्मचारिण्याः १७-२४ तोऽधिकवयस्कत्वेन यौवनवत्त्वाभा-
वाद् वेदविध्यनुसारं विवाहो न भविष्यति, तर्हि कथं श्रीमान् वेदे
'सूर्य्या' विवाहेन १७-२४ वर्षेषु स्त्रिया विवाहं सिषाधयिषति!
आशासेऽत्र विद्यावाचस्पतिना कासविकासो नाश्रीयेत ऋषि(?)वाक्ये

सवितृशब्दः श्रीमता 'षुञ् प्रसवैश्वर्य्ययोः, इति धातुना निष्पा-
दितः, अत्र षुञ् धातोरुल्लेखोऽशुद्धः; यतः 'षुञ्' धातुस्तु अभिषवे
भवति, नचाऽत्र तदर्थः, अभिषवः—स्नपनं पीडनं स्नानं सुरासन्धा-
नञ्च। इतश्च स धातुरनिड् भवति। यश्च 'प्रसवैश्वर्य्ययोः' धातुः,
'षु' धातुः, नतु षुञ्, सोऽपि न सेट्, किन्त्वनिट्; तत्राऽपि प्रसवो
ऽभ्यनुज्ञानार्थको नतु गर्भमोचनार्थपरः। तस्माच्छ्रीमता 'षूङ् प्राणि
गर्भविमोचने' इत्यादिकः, षूङ् प्राणिप्रसवे, इति दैवादिक
वाधातुरुदाहरणीय आसीत्। परं सोऽपि वेड भवति; परमेवदादि
मन्त्रे सर्व्वत्र 'सविता' इत्येव दृष्टम्, नतु क्वचित् 'सोता' इत्यपि

अन्यथा वेदूकत्वस्य किं फलम् ? । तस्मात् 'सविता' इत्यत्र 'पू प्रेरणे' इति तौदादिकः सेट् धातुरेव ग्राह्यः, सुवतिकर्म्मणि लोकम् इति सविता* तत्र देवविशेष एव, तत्र योगरूढत्वात् ; न तु पितृपर्य्यायः । न च वेदे आर्य्यसमाजमते यौगिका एव शब्दास्सन्ति न योगरूढा इति वाच्यम्, तत्प्रवर्त्तकः स्वा० दयानन्दसरस्वती 'निघण्टु वैदिक-कोष, नामकपुस्तकस्य भूमिकायां लिलेख—'यह सब पद वेद में यौगिक और योगरूढि आते हैं, केवल रूढि नहीं, । आर्य्यसमाज नेता—श्रीसातवलेकरोऽप्याचष्टे—'हमारा भी पक्ष है कि—इन शब्दों का यौगिक अर्थ भी है, परन्तु वह अर्थ आध्यात्मिक तत्वज्ञान विषय का विचार करने के समय उपयोगी है, इतिहासिक खोज के लिये वह अर्थ लेना योग्य भी नहीं है, निरुक्तकार आध्यात्मिक अर्थ की सूचना यौगिक अर्थ के द्वारा बताते हुए ऐतिहासिक तात्पर्य भी साथ २ बताते हैं, महाभारत की समालोचना० द्वितीयभागे१७पृष्ठे।

दुर्ज्जनतोषन्यायेन सवितृशब्दोऽत्र पितृवाचकोऽपिमन्येत यदि, तत्र वैयर्थ्यदोषः समापतति । श्रूयताम्-सायणेन उक्त ८५ सूक्तारम्भे लिखितम्—'सवितृसुतायाः सूर्य्याया आर्षम्, इति । श्रीमन्मतेन च सविताऽत्र देवविशेषो न किन्तु पितृवाचकोऽत्र यदि, तर्ह्यर्थोऽयमभ-विष्यति—'पितुः पुत्री ब्रह्मचारिणी ऋषिः' हन्त ! कोऽर्थो निष्पन्नः ? किं पुत्री पितुर्न भवति ? यदि तत्राऽव्यभिचारः, तर्हि पितृशब्दप्रयोगो-ऽत्र निरर्थकः ; अन्यथा 'श्री' लेखकैः स्वनाम्ना सह मनुष्य इति, पितुःपुत्र इत्यपि वा लेख्यम् । 'अजमेर वैदिकयन्त्रालय' मुद्रिते ऋग्वेदेऽपि लिखितम्—ऋषिः १-४७ सूर्य्या सावित्री । तत्र सावित्री-इत्यस्य सवितुरियम् इति विग्रहः ; तर्हि तत्र किं 'पितुः पुत्री सूर्य्या ऋषि' रित्यर्थो वर्त्तते ?। हन्त ! हन्त !! वास्तविकतानिह्नवार्थं प्रयत-मानाः स्नातकमहोदया जायमानामसङ्गतिमपि न विचारयन्ति । वस्तु-तस्तु-प्रसह्यकारितयाऽर्थपरिवर्त्तने ईदृशा दोषा अवश्यमेव परापतन्ति । भवदाचार्य्य उक्तमन्त्रस्थस्यैव सवितृपदस्याऽर्थं 'संस्कारविधौ' गृहाश्रमप्रकरणे 'सकल जगत् का उत्पादक परमात्मा देता है' इति करोति ; कतरोऽत्र वैदिकोऽर्थः ? ।

'सूर्य्या' इत्यस्य ब्रह्मचारिणीत्यर्थोऽपि स्पष्टं कृत्रिमः ; केनाऽपि कोषकारेण निरुक्तकृता वा तथाऽर्थो न कृतः । 'सूर्य्येव नारि !

* (अद्य नो देव सवितः प्रसुव यजुः [illegible] 'सविता नः सुवतु सर्वतातिम्' ऋ० १०।३६।१४ इत्यादिवेदमन्त्रेष्वपि तौदादिकसुवतिधातुं मत्वा सविता प्रार्थितः ।)

विश्वरूपा' अ० १४।२।३२ 'तेनेमां नारीं सविता भगश्च सूर्य्यामिव' अ० १४।१।५३ इति भवदुद्धृतमन्त्रयोर्विवाह्यां प्रत्याशीर्वाद उच्यते, यदि सूर्य्या-ब्रह्मचारिणी उच्यते ; तर्हि विवाह्यमाना नारी-अब्रह्मचारिणी मंस्यते, अन्यथा ब्रह्मचारिण्या ब्रह्मचारिण्युपमा व्यर्था। सूर्य्या-इति विशेषनामस्वीकारे तु वेदे इतिहासप्रसङ्गः। अथ चाऽस्मिन् मन्त्रे १४।१।५३ सविता भवन्मताऽनुसारं पिता मन्तव्यो भविष्यति ; तर्हि पितैव विवाह्यां नारीं प्रजया परिधत्तां किम् ?। हन्त कृत्रिमते !। निरुक्ते १०।३१।३ सविता-इत्यस्य 'सर्व्वस्य प्रसविता' इत्यर्थः कृतः 'सविताय्न्त्रैः पृथिवीमरम्णात्' इति निगमश्चोदाहृतः, तत्र मध्यमोदेवोऽपि सविता मतः, आदित्योऽपि सविता मतः, अग्रे च १०।३२।४ तथा च—'हैरण्यस्तूपे स्तुतोऽर्चन् हिरण्यस्तूप ऋषिरिदं सूक्तं प्रोवाच' इत्यङ्कयित्वा 'तदभिवादिन्येषग्' भवति, हिरण्यस्तूपः सवितर्यथा त्वाङ्गिरसो जुह्वे, इति मन्त्रमुदाहृत्य च सवितारं देवविशेषं मत्वा तस्य पितृशब्दार्थं निराचकार, वेदे इतिहासमपि च मेने। देवविशेषस्य च सवितुः सोमाय स्वपुत्र्याः सूर्य्यायाः प्रदानकथातो वेदे इतिहासोऽपि सिद्धः।

कथयन्ति यद्-वेदे इतिहासं न मन्महे, यतो-वेदे सादित्वापत्तिर्भवति, हन्त ! परमात्मनो ज्ञानं भवन्त ईदृशं शिथिलं विभावयन्ति यत्-स भविष्यज्ज्ञाता सर्व्वथा नाऽस्ति ? वाच्यम्—सूर्य्यश्चन्द्रमा अश्विन्यादीनि २८ नक्षत्राणि, सुवर्णादिधातवो वेदात् पूर्व्वमुत्पन्नानि पश्चाद्वा ?। यदि प्राग् वा पश्चाद् वा, तर्हि उभयथैव वेदस्याऽनादित्वं व्याहन्यते, यतः—'सूर्य्याचन्द्रमसौ धाता यथापूर्व्वमकल्पयद्' ऋ० १०।१९०।३ इति सूर्य्याचन्द्रमसोर्निर्माणेतिहासो निरूपितः—'यथा पूर्वकल्पे सूर्य्याचन्द्रादिरचनं तस्य ज्ञानमध्ये ह्यासीत्, तथैव तेनाऽस्मिन् कल्पेऽपि रचनं कृतम्, इति ऋग्वेदादिभाष्यभूमिकायां स्वामिना भूतकालस्याऽर्थः कृतः। 'सुहवमग्ने ! कृत्तिका रोहिणी चाऽस्तु' इत्यादिमन्त्रेषु अथर्व० १९।७।२-३-४-५ क्रमशोऽष्टाविंशतिः नक्षत्रेभ्यः फलितज्यौतिषाऽनुसारं कल्याणप्रार्थना। यजुर्वेदे १८।१३ मन्त्रे च हिरण्यम्, अयः, सीसं, त्रपु, इत्यादीनामत्यन्ताऽर्वाचामपि धातूनां वर्णनम्, कथमेतत् ?। यदि वेदात् पूर्व्वमिमानि वस्तूनि प्रणीतानि, तर्हि वेदः सादिः सिद्ध्यति। यदि वेदः प्राक् प्रणीतः, इमानि च वस्तूनि पश्चात् ; तर्हि वेदे एतेषां वर्णनमेषां क्षेपकतां

पुष्णाति, यतो भवत्स्वामिन एव सिद्धान्तोऽयम्, यद्—'यस्मिन् पुस्तके यस्य वर्णनम्, स ग्रन्थस्तदुत्पत्तेः पाश्चात्यो भवति'। यदि भविष्यद् दृष्ट्या सूर्यादीनां वर्णनं परमात्मना प्राक् कृतम्, तर्हि भविष्यद्दृष्ट्या सूर्याया इतिहासस्याऽन्येषाञ्चेतिहासानामप्यस्मिन् सत्ता मन्तव्या भविष्यति। वेदे भविष्यद्-वर्णनं सुतरां नाऽस्ति-इत्यपि भवद्भिः कथयितुं न शक्यम्, तत्र 'आ घा ता गच्छानुत्तरा युगानि' ऋ० १०।१०।१० इति मन्त्र एव गृह्यताम्। अस्याऽर्थो निरुक्ते इत्थं निरुक्तः—'आगमिष्यन्ति तानि उत्तराणि युगानि, यत्र जामयः करिष्यन्त्यजामि-कर्म्माणि, निरु० ४।२०।१ अत्र स्पष्टं भविष्यद्-वर्णनम्। अधुना वाच्यम्, यदेयं दशा कलियुगे उपस्थास्यते, तस्मिन्समयेऽप्ययं मन्त्रोऽनादिनित्यश्च स्थास्यति न वा? यदि न, तर्ह्ययं मन्त्रस्तदा क्षेपको मंस्यते, यतस्तदा भविष्यत्ता नभविष्यति किन्तु वर्त्तमानता। यदि तदाऽप्यस्य मन्त्रस्याऽनादिताऽक्षुण्णा स्थास्यति, भूतपूर्व्वकल्पस्थ-सूर्य्यचन्द्ररचनासूचकस्याऽपि मन्त्रस्य यदीह कल्पे अनादिता स्थास्यति, तर्हीतिहासेनाऽपि तस्याऽनादिता-ऽक्षुण्णैव स्थास्यति।

यजुर्वेदे १२। ४ स्वामिना स्वभाष्ये—'वामदेव ऋषि ने जाने वा पढ़ाये तीसरा सामवेद आपका शरीर है' इति मन्त्रार्थे 'वामदेवः' ऋषिविशेषो मतः। ऋ० १। २७। ४ मन्त्रभाष्ये—अनन्तविद्यामय जगदीश्वर! देवेषु—सृष्ट्यादौ जातेषु अग्नि-वाय्वादित्याऽङ्गिरस्सु मनुष्येषु प्रवोचः—प्रोक्तवान्' अत्र स्वामिना वेदे एव वेद ग्राहकाणा-मग्न्यादीनामृषीणाम्—यद्यपि न ते ऋषयः किन्तु अङ्गिरोवर्जं देवाः—वर्णनं कृतम्। किं वेदनिर्म्माणोत्तरकालिकमिदं वर्णनम्, क्षेपकोऽयं वा मन्त्रः?। एवमन्येऽपि स्वा० दयानन्दस्य वेदे इतिहासप्रतिपादका मन्त्राः सन्ति, आवश्यकतायामुपस्थाप्येरन्। श्री सायणस्तु यत्र तत्रेतिहासं दर्शयत्येव। श्री यास्कोऽपि तत्तन्मन्त्राऽर्थेऽनेकत्र इति-हासं दर्शयति—इति निरुक्तपारायणं कुर्व्वन्तु, पूर्व्वमेतदुदाहरणं दत्तमपि। ब्राह्मणभागोऽपि मन्त्रभागस्थमितिहासं विशदीकृत्य स्पष्ट-मभिधत्ते—'तस्मादेतदृषिणाऽभ्यनूक्तम्' इत्यादि, आवश्यकतायां तत्प्रमाणान्युपस्थाप्येरन्, पं० राजारामशास्त्रिणाऽपि अथर्व्ववेद भाष्यान्ते ऐतिहासिकनाम्नां सूची दत्ता। तर्हि श्रीमान् कथं वेदे इतिहासं न मनुते?

स्वकीयाऽर्थोपोद्बलने श्रीमान् यदि मीमांसासूत्रं न प्रादर्शयिष्यत, तर्हि साध्वभविष्यत्। किं मीमांसादर्शनं श्रीमान् मन्यतेप्रमाणम्? किमसौ वेदः?। यद्येवम्, तत्र ब्राह्मणभागस्य वेदता मता; तर्हि किं श्रीमान् मन्यते तत्? यदि न, तर्हि कथम्? श्रीमान् ब्राह्मणभागे इतिहासं मनुते नो वा?। यदि मनुते; तर्हि मीमांसाऽनुसारं वेदभूते तस्मिन् कथमितिहासं मन्यते?। अथ च--'परन्तु श्रुतिसामान्यमात्रम्' पू० मी० १।१।३१ इति सूत्रं मीमांसायां 'बबरः प्रावाहणिरकामयत' तै० सं० ७।१।१०।२ इति कृष्णयजुर्वेदस्थ-बबरशब्दस्य कृते उत्तररूपेण वितीर्णम्। किं गुरुकुल प्रथमस्नातकः श्रीमान् कृष्णयजुर्वेदं वेदं मन्यते?। यदि आम्, तर्हि भवत्स्वामी तु शुक्लयजुर्वेदं वेदं मन्यते, न कृष्णम्, कतरोऽत्र वैदिकः?। वस्तुतस्तु—उक्तसूत्रं बबरसदृशाऽप्रसिद्ध साधारणव्यक्तीतिहासानां वेदे सत्तां निषेधति, नतु सृष्ट्यादावुत्पन्नानां वसिष्ठादिविशिष्टर्षिप्रभृतीनां सूर्यादिदेवतानाञ्चेतिहासमपि; अन्यथा तेते मन्त्रा मीमांसाकारेणाऽवश्यं प्रादर्शयिष्यन्त। मीमांसाकारेण बबरस्य वायुरित्यर्थः कृतः किं श्रीमान् वायोः कामनां मनुते? 'बबरः प्रावाहणिर-कामयत'। अस्तु-प्रासङ्गिकोऽयं विषय इह दिङ्मात्रं प्रदर्शितः। यदि श्रीमद्भिरिह पृथग् विचारश्चिकीर्ष्येत; तर्ह्यहं सज्जीभूतोऽस्मि तदर्थमपि। अथवा 'संस्कृतरत्नाकर' स्य वेदाऽङ्के ममैतद्विषयको निबन्धो द्रष्टव्यः।

'स हैष सूर्यो भर्त्ता' श० ४।६।७।२१ इति प्रतीकं वाजसनेयकस्य (माध्यन्दिनीयस्य) श्रीमता प्रदत्तम्; तर्हि किमिदं 'सोमो वधूयुरभवत्' इति ऋङ्मन्त्रस्य भाष्यम्?। शतपथस्य काण्डिकायां सूर्यशब्दो न विद्यते—इत्यजमेरमुद्रिते द्रष्टव्यम्, श्रीमता कथं तत्र निवेशितः?। यदि 'य एष तपति' इति शब्दं दृष्ट्वा निवेशितः; तर्ह्यत्र देवविशेषस्य सूर्यस्य वर्णनं सिद्धम्; श्रीमताऽत्र मनुष्यवर्णनं कथं कृतम्?। यदि श्रीमान् सूर्यं भर्त्तारं साधयति, सूर्याञ्च स्त्रीम्; तर्हि तत्र मन्त्रे देवविशेषवर्णनं स्वतः सिद्धम्, 'सूर्यो देवता' यजुः १४।२०। 'सूर्याद्देवतायां' वा०। पुमान् वै सोमः, स्त्री सूर्या' इति तैत्तिरीयप्रमाण मप्यस्मन्मतपोषकम् यत्—सोमनामकः पतिरभवत्, सूर्या च तस्य स्त्री जाता, नाऽत्र मनुष्यस्य वर्णनम्, किन्तु देव विशेषस्यैव; अत-एव 'सूर्येणोत्तभिता द्यौः।...दिवि सोमो अधिश्रितः'* इत्युक्तं



* ('अथो नक्षत्राणामेषामुपस्थे सोम आश्रितः' ऋ० १०।८५।२)।

सूक्तस्यैवाऽऽरम्भिकमन्त्रे सोमसूर्य्ययोर्द्दिवा सम्बन्धो निर्द्दिष्टः; द्युलोकश्च पृथिवीलोकतो भिन्न एव—'दिवञ्चपृथिवीञ्चाऽन्तरिक्षमथो स्वः' ऋ० १० । १९० । ३ इति प्रमाणात् । मनुष्याश्च पृथिवीलोकवासिनः; तेन सूर्य्याविवाहो देवविवाहः सिद्धः, अतएव नृणां विवाहमन्त्राः सूर्य्याविवाहात् पृथगेव दर्शिताः, येन तस्या नृयोनितो भिन्नता सिध्यति । अतएव सूर्य्यासोमौ देवयोनिगौ मिथो वरवधूभूतौ सिद्धौ भवत्प्रमाणैः, नतु मनुष्यवर-वधूनां तत्र वर्णनम् । अयं पक्षो भवतः सर्व्वथा शिथिलः । मनुष्यविवाहेऽत्राऽभीष्टे—'द्यौर्भूमिः कोश आसीद् यदयात् सूर्य्या पतिम्' ऋ० १० । ८५ । ७ 'सूर्य्याया अश्विनौ वरौ' १० । ८५ । ८ इत्यादि न घटते, देवविशेषविवाहे तु 'माहाभाग्याद् देवतायाः' नि० ७ । ४ । ८ 'एकस्याऽऽत्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति' नि० ७ । ४ । ९ 'इतरेतरजन्मानो भवन्तीतरेतर प्रकृतयः' नि० ७ । ४ १२ 'अपारो वो महिमा' ऋ० ५ । ८७ । ३४ इत्यादिना सर्व्वञ्चिद् घटते ।

'सुकिंशुकं' ऋ० १० । ८५ । २० इत्यादिमन्त्रविनियोगः सायणेन ऋग्वेदे रथारोहणे न निर्दिष्टः, किन्तु 'पूषात्वेतो नयतु' १० । ८५ । २६ इति नृविवाहदेवताको मन्त्र एव ससूत्रनिर्द्देशं रथाऽऽरोहणे विनियुक्तः । यद्यपि गृह्यसूत्रेषु केषुचिद् उक्तमन्त्रस्य वधूवरयो रथाऽऽरोहणे विनियोगः; तथाऽपि नाऽस्माकं काऽपि हानिः, ईदृशा मन्त्रा अपि भवन्ति, येषामर्थोऽन्यो भवति, तत्र च कस्यचिद् देवस्याऽपि वर्णनं भवति; परं तन्मनुष्याणां विविधकार्य्येष्वपि विनियुज्यते, तत्र विनियोगमात्रमेव भवति, नतु सर्व्वस्य तस्य मन्त्रस्य तेन विनियोगेन सह समानार्थकता भवति—इति पं० राजारामप्रणीतस्य अथर्व्ववेदभाष्यस्य भूमिकायां द्रष्टव्यम्, अन्यथैकस्य मन्त्रस्य विविध-विनियोगैर्न भाव्यम्, यथा—'इमं ते उपस्थं मधुना सꣳसृजामि प्रजापतेर्मुखमेतद् द्वितीयम् । तेन पुꣳसोऽभिभवासि सर्व्वानवशान् वशिन्यसि राज्ञि स्वाहा ।' 'अग्निं क्रव्यादमकृण्वन् गुहानाः स्त्रीणामुपस्थमृषयः पुराणाः ।' 'काम ! वेद ते नाम, मदो नामाऽसि समानयाऽमुꣳसुराते अभवत्' मं० ब्रा० १ । १ । २-३-१ इति मन्त्राणामर्थोऽन्यः, किन्तु स्वा० दयानन्देन गृह्यसूत्रकारान्तरा-

ऽनुसारममी मन्त्रा वधूवरयोः स्नाने विनियुक्ताः, एवमन्येऽपि मन्त्रा उपस्थापयितुं शक्याः। तेन मनुष्यविवाहे विनियोगमात्रेण सूर्य्याया मनुष्यता न भविष्यति।

'आरोहत् सूर्य्या सावित्री। अ. १४।२।३० अत्र श्रीमता सावित्रीशब्दः सूर्य्यापर्य्यायत्वेन तद्विशेषणत्वेन वा प्रयुक्तः, नाऽत्राऽस्मत्पक्षस्य हानिः, किन्तु भवत्पक्षस्यैव; यतो भवान् सवितारं पितृवाचकं मनुते, नहि सूर्य्यायाः पितृविशेषम्, तर्हि वेदे व्यर्थता सिद्ध्यति। 'पितुःपुत्री ब्रह्मचारिणी' इत्यर्थे वेदे व्यर्थपदत्वदोषो भवति, 'पितुः पुत्र्या लेखने को नाम विशेषो जाजायते। 'पितुः पुत्रस्य स्नातकस्य विवाहोऽर्जनि' इति लौकिकवाक्यमपि न प्रयुज्यतेऽनर्थकत्वात्; तर्हि वेद एवेदृशी व्यर्थता कुतो भवितुमर्हति ?। सवितुः सूर्य्यापितृविशेषत्वे, सूर्य्यायाश्च तद्दुहितृविशेषत्वे तदितिहास उपपद्यत एव। श्रीमदाचार्य्य ईशकेनकठादि-दशोपनिषदः प्रमाणीकरोति, श्रीमांश्च तमत्यशेत, यज्जैमिनीयोपनिषद्मप्यमंस्त, परं तत्र न भवदभिप्रेतसिद्धिः। 'स्त्री सावित्री, इत्यस्य सावित्री स्त्री आसीत्-सोमस्येतिशेष इत्यर्थः, न तु मानुषी तत्र विवक्षिता, न च तत्र मानुषीशब्दो दृष्टः। न च तत्राऽस्य मन्त्रस्य भाष्यम्।

यत्तूच्यते—कथमिमेदेवतामन्त्रा मानुषविवाहे उच्चार्य्यन्ते इति, तत्रोत्तरं प्राग् दत्तमेव। अन्यदपि श्रोतव्यम्-'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां प्रतिगृह्णामि, यजुः १। १० अस्य मन्त्रस्याऽर्थोऽन्यः, परंस्वामिनाऽप्यनेन मन्त्रेण मधुपर्को गृहीतः, न तस्य बाहू 'अश्विनोर्बाहू' आस्ताम्, न च दाता 'पूषा देवः, आसीत्, तथाऽपि विनियोगो जातः। अन्यच्छ्रूयताम्—'वसवस्त्वा······भक्षयन्तु' अत्र वसुकर्तृकं भक्षणमादिष्टम्, परं स्वामीमं मन्त्रं पूर्वदिशायां मधुपर्कत्यागे विनियुङ्क्ते। एवं 'रुद्रास्त्वा······भक्षयन्तु' अत्र रुद्रकर्तृकभक्षणं निर्दिष्टम्, परं स्वामी दक्षिणदिशाऽभिमुखं मधुपर्कं विकिरति। 'आदित्यास्त्वा······भक्षयन्तु' अत्र आदित्यभक्षणनिर्देशेऽपि स मधुपर्कं पश्चिमदिशाऽभिमुखं क्षिपति। 'विश्वेत्वा······भक्षयन्तु' अत्र प्रार्थना यद्—विश्वे देवा मधुपर्कं भक्षयन्तु, परं स्वामी अस्य मन्त्रस्य विनियोगम्—उत्तरदिशाऽभिमुखं मधुपर्कविक्षेपे प्रतिपादयति पौराणिक इव, किं विश्वेदेवा उत्तरदिशायां

तिष्ठन्ति ? । 'भूतेभ्यस्त्वा परिगृह्णामि' इति मन्त्रं पठित्वा चाऽऽकाशाऽभिमुखं त्रिर्मधुपर्कं क्षिपति स्वाकृष्ट 'पोपलीला' मिवाऽऽचरन् । तेनेदं सिद्धम्, यत्—सूर्य्यायाएव कतिचनमन्त्रा* यदि नृणां विवाहे कस्यचिद् गृह्यसूत्रस्याऽनुसारेण विनियुज्यन्तेऽपि; तर्हि किं सा मानुषी सेत्स्यति ? नहि-इदं तु विनियोगमात्रमेव ।

श्रीमता दुर्ज्जनतोषन्यायेन सूर्य्या देवता न मता, किन्तु वैवश्येन, यतः—'सूर्य्येव नारि' अ० १४ । २ । ३२ 'तेनेमां नारीं सविता भगश्च सूर्य्यामिव परिधत्तां प्रजया' अ० १४ । १ । ५३ इति मन्त्रस्थ इव-शब्दो भवत्पक्षं भित्त्वा 'सूर्य्यां' नारीतो भिन्नां मन्यते । 'नृनरयोर्वृद्धिश्च' ४ । १ । ७३ इति गणसूत्रेण जातिवाचकान्नृ-नर-शब्दाद्ङीन् भवति । 'इयं मानुषी (नारी) रमेव' इति वाक्यं रमा-मानुष्यौ परस्परं भिन्ने साधयति । यदि रमेति कस्याश्चिन्मानुष्या नाम भवति, तदा पूर्व्वोक्तं वाक्यं न भवति, किन्तु—'इयं स्त्री रमेव, इदमेव । अनेन सूर्य्या नारीतो (नरजातितो) भिन्ना सिद्धा । शिष्टः प्रश्नो यौवनवत्त्वस्य, तस्यैतदुत्तरम्, यदुपमायामत्र साधारणधर्म्मता यौवनस्य न निर्द्दिष्टा, तन्मन्त्रद्वयं स्वयं दृश्यताम्; किन्तु प्रजाविषये विश्वरूपत्वविषये चोभयोस्साधारणता दर्शिता, तस्मान्न कोऽपि दोषः । 'श्रीमान् धर्म्मदेवः स्व० दयानन्दवद् मार्म्मिकगवेषकः' इत्युपमायां स्नातकमहोदयस्य स्वामिवत्स्थूलवपुष्कतां संन्यासित्वं वा न कोऽपि भोत्स्यते, न च ग्रहीष्यते, किन्तु मार्म्मिकगवेष-कतामात्रमेव ।

'अनुकूला त्ववाग्दुष्टा......देवता सा न मानुषी' इति स्वस्वा-म्यनभिमताया दक्षस्मृतेः श्लोको दत्तः स्नातकमहोदयेन । अस्मत्पार्श्वे या दक्षस्मृतिर्विद्यते, तत्र तु 'अनुकूला त्ववाग्-दुष्टा दक्षा साध्वी पतिव्रता । एभिरेव गुणैर्युक्ता श्रीरिव स्त्री न संशयः' ४।१० अयं पाठो दृश्यते, तेन 'श्रीरिव' इति दर्शनान्न कोऽपि दोषः । श्रीमतस्त्वस्यैव पुस्तकस्य पाठः प्रामाणिको मन्येत, तथाऽपि नाऽस्मत्पक्षस्य क्षतिः, अत्र प्रश्नः—'देवता सा न मानुषी' तिपद्यं मानुषीकृते लिखितम् ? भिन्नयोनिकृते वा ? । यदि मानुषीकृते; तर्हि न मानुषीति कथं कथितम ? । अतएव सिद्ध्यति, तत्र देवताशब्दस्य विधिर्मानुषीत्व-निषेधश्च गौण्या वृत्त्या, न तु मुख्यया । उक्तश्लोकस्यैवाऽग्रेऽयं



* यथा—अत्र ऋ० १० । ८५ सूक्तस्य मननं कर्तव्यम् ।

श्लोकः—'भर्त्तुः प्रीतिकरी या तु भार्य्या सा चेतरा जरा' ४.११ नां
किम् इतरा वृद्धावस्थैव भविष्यति ? तत्र गौण्या रीत्या प्रयो
मन्तव्यो भविष्यति । 'यः संस्कृतभाषां न वेत्ति स पशुरेव, न मानुषः
'साहित्यसङ्गीतकलाविहीनः साक्षात् पशुः पुच्छविषाणहीनः' इ
वाक्येन किं मानुषयोनिकः साक्षात् पशुयोनिर्मंस्यते ?। तेन न स्व
बुसघासादिकमत्तव्यं न किलाऽन्नादिकम् ?। यथाऽत्र गौण्या वृत्त्या
पशुः कथ्यते, न मुख्यया, तथैवोक्तश्लोकेऽपि ज्ञेयम्, तेन देवता मनु
ष्योर्भेदः फलितः, परं 'सूर्याद् देवतायां चाप्' अत्र देवताशब्द
न गौण्या वृत्त्याऽभिहितशब्दशास्त्रे, किन्तु मुख्यया शब्दवृत्त्यैव
तेन न श्रीमदिष्टसिद्धिः । व्याकरणदृष्ट्या सूर्य्या मुख्यदेवतैव भवति,
मानुषीत्वे तु 'सूरी' इति प्रत्युदाहरणं भाष्यादिके सङ्गच्छते। इत्थं
श्रीमदाक्षेप आक्षिप्तो बोध्यः ।

अधुना श्रीमान् सोमस्य मनुष्यतां साधयितुं लेखनीं प्रचाल-
यति, परं नवममण्डले पवमानसोमस्य—देवविशेषस्य रसविशेषस्य
वा वर्णनम्, नतु श्रीमदभिमतस्य स्नातकस्य मनुष्यस्य । 'एष प्रत्नेन
जन्मना देवो देवेभ्यः सुतः' ९।३।९ नप्तीभिर्यो विवस्वतः, ९।१४।५
एते (सोमा) मृष्टा अमर्त्याः, ९.२२.४ 'एष सूर्य्यमरोचयत्' ९।२८।५
'सोमो देवो न सूर्य्यः' ९।५४।३ 'अमर्त्यः' ९।२२।४, ९।१०३।५, आ
यस्तस्थौ भुवनान्यमर्त्यो विश्वानि सोमः, ९।८४।२ । 'प्र यो नृभिरमृतो
मर्त्येभिः' ९।९१।२ 'देवो देवानां गुह्यानि नामानि' ९।९५।२ । 'सोमः
पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताऽग्ने-
र्जनिता सूर्य्यस्य जनितेन्द्रस्य जनितोत विष्णोः' ९।९६।५ 'देवो देवानां
जनिम्' ९।९७।७ । 'राजा देवानामुत मर्त्यानाम्' ९।९७।२४ 'अजीजनो
अमृत ! मर्त्येषु' ९।११०।४ 'सूर्य्यम्' इति पूर्वमन्त्रादत्राऽनुषञ्जनीयम्।
इत्यादिषु बहुषु मन्त्रेषु सोमस्य देवत्वं निरूपितम्, तेन श्रीमतो
मनुष्याऽर्थकरणं खण्ड्यते, भवद्दर्शितानि विशेषणानि तु सोमे देवे न
विरुद्ध्यन्ते ।

आश्चर्य्यम्, श्रीमन्तो वरं स्नातकन्तु सौम्यगुणयुक्तं स्थापयन्ति,
स्त्रियन्तु सूर्य्यवत्तेजस्विनीम्, कदाचिदयं सदृशगुणकर्म्मविवाहो
भवेत्, सोमस्य ४८ वर्षीयब्रह्मचारित्वं न्यूनवर्षीयत्वं वा ? आद्ये किं
प्रमाणम् ?। अन्त्ये वरस्य न्यूनवयस्कत्वं सूर्य्यब्रह्मचारिण्याश्च

४८ वर्षत्रयस्कत्वम्, कीदृश्यत्र व्यवस्था ? अथ च वरस्य ४८ वर्षीयत्वे यौवनावस्था, भिन्ना वा ? आद्ये किं प्रमाणम् आयुर्वेदस्य वेदस्य च ? अन्त्ये-भवन्मतेऽयौवनत्वाद् वेदविरुद्धता । तेनेदं कृत्रिमतामात्रत्व एव पर्य्यवस्यति । 'सूर्य्या' इत्यस्य मनुष्यब्रह्मचारिणीत्वकपोलकल्पना निराकृतैवप्राक् । स्नातकमहोदयः सोमं स्नातकं मन्यते; परं ब्राह्मणभागो मन्त्रभागश्च तं देवविशेषं राजानं मन्यते—'सोमोऽस्माकं ब्राह्मणाना ँ राजा' यजुः ९ । ४० इत्यादि ।

प्राक्तनलेखे श्रीमता नेयं स्वकल्पना प्रदर्शिता, किन्तु सायणमतेनैव उपसंहारः कृतः, अतएवाऽस्मत्प्रश्नावली स्थाने आसीत्; परं निग्रहणसमये श्रीमता सायणाऽर्थोऽश्रद्धितोऽस्मिँल्लेखे । नैषु मन्त्रषु स्नातकस्य ब्रह्मचारिण्या वा वर्णनम् । न च तत्र ब्रह्मचर्य्यावधिर्निरूपितः । तेन भवत्पक्षः सर्व्वथैव खण्ड्यते । अर्थेऽस्मिन्नपि इतिहासाद् भवतां गलग्रहो न व्यपगच्छति, यतोभवन्मते कयोश्चित् स्नातकब्रह्मचारिणोरत्र मन्त्रे 'अददात्' इत्यनद्यतनाऽर्थकलकारेण विवाहनिरूपणात् तस्य च श्रीमद्भिरादर्शग्रहणाद् वेदे भूतकालिक इतिहासो मन्तव्यो भवेत् । आदर्शशब्द इतिहासस्यैव साक्षी भवति, अधुना प्राक्तनलेख-विरुद्धकल्पनया न किमपि फलम् ।

'अश्विनाऽऽस्तामुभावरा' अत्र श्रीमद्भिः पारम्परिकप्रकृतिकारणाद् गतलेखे सायणपाठ स्त्यक्त आसीत् । स्मारणे सति श्रीमता स तु न लिखितः, किन्तुस्वकल्पित एवाऽर्थः कृतो यः सायणभाष्यस्थ—'ब्राह्मणभाग निर्द्दिष्टाऽर्थतोऽपि विरुद्धः । स ऐतरेय पाठोऽस्माभिः प्राङ् निर्दर्शितः । सोऽर्थो ब्राह्मणभागादेव न विरुद्धः, प्रत्युत मन्त्रभागतोऽपि विरुद्धः, तथा च मन्त्राः—'सूर्य्याया अश्विनौ वराऽग्निरासीत् पुरोगवः' ऋ० १० । ८५ । ८ अस्य स्पष्टोऽर्थः—सूर्य्याया अश्विनौ वरौ आस्ताम्, अग्निः पुरोहित आसीत् ।' एवमेवाऽग्रिममन्त्रोऽपि—'अविश्नाऽऽस्तामुभा वरा' १० । ८५ । ९–अर्थः ।—सूर्य्याया उभौ अश्विनौ वरौ आस्ताम्—इति स्पष्टे मन्त्रे श्रीमता 'अश्विनाविव' इति कृत्रिमकल्पना कुत ः कृता ? । अथर्व्ववेदमन्त्रेष्वप्येवं स्पष्टम्, 'सूर्य्यां सावित्रीमश्विनोहतुः, अ० ६ । ८२ । २ 'याऽश्विना पृच्छमानावायातं त्रिचक्रेण वहतुं सूर्य्यायाः । क्वैकं चक्रं वामासीत्' अ० १४ । १ । १४ 'यदयातं शुभस्पती ! वरेयं सूर्य्यामुप । विश्वेदेवा अनुतद् वामजानन्' अ० १४ । १ । १५ अत्र स्पष्टमश्विनौ

सूर्य्याया वरयितारावास्ताम्, इतिसिद्ध्यति; तेन भवतो निर्म्मूलोपमा निरस्यते। 'अश्विना त्वा प्रवहतां रथेन, ऋ० १०।८५।२६ इति मन्त्रादपि विरोधकारणेन भवदर्थोऽसंगतः। भवतोऽस्यांशस्याऽर्थस्तु भवदाचार्यकृताऽर्थादपि विरुद्धः—इति 'संस्कारविधौ गृहाश्रम प्रकरणारम्भे द्रष्टव्यम्, अधुना भवतो ऽ कतरो वैदिकोऽकृत्रिमाऽर्थ. कर्त्ता च। स्वमानरक्षाऽर्थमत्र अश्विनोर्द्यावापृथिवीत्वाऽर्थस्तत्र उपमा च कल्पिता श्रीमता। श्रूयताम्—'द्यावापृथिव्याविव्येके' नि० १२।१।५ अत्र 'एके' इति कथनेन निरुक्तकृता द्यावापृथिव्यर्थेऽरुचिः सूचिता, तस्य स्वमतन्तु—'अथातो द्युस्थाना देवताः, तासामश्विनौ प्रथमाऽऽगामिनौ भवतः' १२।१।१–२ इति। निरुक्तकृताऽश्विनोर्ये निगमा ऽ प्रदर्शिताः, तत्र क्वाऽपि द्यावापृथिव्यर्थो न स्वीकृतः न च निघण्टौ द्यावा पृथिव्योर्नामसु क्वाऽपि 'अश्विनौ' इति पदं समेति। 'अश्विनावेह गच्छताम्। अस्य सोमस्य पीतये' ऋ० १।२२।१ 'अश्विना ता हवामहे' १।२२।२ नहि वामस्तिदूरके यत्रा रथेन गच्छथः। अश्विना! सोमिनो गृहम्' १।२२।४ नाऽत्र द्यावापृथिव्योरर्थं ऽ कथमपि सङ्गच्छते भवन्मतेऽपि। एवं 'प्रातर्यजध्वमश्विना, ऋ०५।७७।२ इत्यादि-निरुक्तोद्धृतमन्त्रेष्वप्यूह्यम्। 'द्यौर्भूमिः कोश आसीद् यदयात् सूर्य्या पतिम्' ऋ० १।८५।७ अत्र द्यावाभूमी तु सूर्य्यायाः कोशत्वेन निर्दिष्टे, अत्र तयोरुपमा कीदृशी?। तेनाऽपदेशमात्रा दधिकं मूल्यं नाऽस्य भवितुमर्हति। अस्मदर्थे तु न दोषः, तत्र मन्त्रब्राह्मणयोस्साक्ष्यम्। अथ च दैव्यो मर्य्यादाः सर्व्वा नाचरणीया भवन्ति मानुषैः, भिन्नयोनिमत्त्वात्, किन्तु धर्म्मशास्त्रव्यवस्थापिता एव, इत्यस्मत्पक्षे न कोऽपि दोषः।

'गृहपत्नी' इत्यस्य द्वादशवर्षवयस्कत्वेऽपि न दोष इति मत्प्रतिपादिते किमप्युत्तरमनाचक्षाणो विद्यावाचस्पतिमहाभागः स्वयमेव मत्कथनमुररी कृतवानस्ति, समयवैयर्थ्यस्याऽपदेशस्त्ववश्यमाश्रितो मानरक्षाऽर्थम्। अत्रैतज्ज्ञेयम्, यद्-गृहं प्राप्ता वधूः श्वश्रूश्वशुराद्यपेक्षया न्यूनतमवयस्कैव भवति, तथापिसा सर्व्वेषां सम्राज्ञी वेदेन कथ्यते, तथाच—सम्राज्ञ्येधि श्वशुरेषु सम्राज्ञ्युत देवृषु। ननान्दुः सम्राज्ञ्येधि सम्राज्ञ्युत श्वश्र्वाः' अ० १४।१।४४ 'एवा त्वं सम्राज्ञ्येधि पत्युरस्तं (गृहं) परेत्य' अ० १४।१।४३। यद्येवं सर्व्वेषामपेक्षया न्यूनवयस्काऽपि सर्व्वस्य गृहस्य वेदेन सम्राज्ञी मन्यते, अथवा तस्यै 'आशिषि लिङ्लोटौ' पा० ३।३।१७३ इत्याशीर्वादो दीयते

तथैव 'गृहपत्नी यथाऽसः' इत्यत्राऽपि द्वादशवर्षवयस्कतायां न कोऽपि दोषः परापतति। अथ च 'गृहपत्नी' इत्यस्य 'गृहपतेः स्त्री' इत्यप्यर्थो भवितुं शक्यते 'विभाषासपूर्वस्य' ४।१।३४ 'वशिनी' इत्यस्य सायणभाष्योद्धरणे स्नातकमहोदयेन नैजपारम्परिक प्रकृत्युपयोगोऽपिकृत आसीत् प्राक्तनलेखे। तस्य (सायणस्य) 'वशिनी-पत्युर्वशेवर्त्तमाना वा' इति उत्तरो वास्तविकोऽर्थस्तेन त्यक्तः' अत्र पं० राजारामस्य भाष्यम्—अपने घरों को जा, जिससे तू घर की मालिक होवे, 'वशिनी' इत्यस्याऽर्थस्तेन—'अपने आपको वश में रखती हुई' इतिकृतः अ० १४।१।२०। यशःपालसिद्धान्तालङ्कारेण 'गृहपत्नी' अ० १४।२।७५ इत्यस्य 'मुझ घर के स्वामी की स्त्री' इति-अर्थः कृतः वै० सि० द० पृ० ८८। पूर्वार्थेऽपि न कोऽपि दोषो भवति द्वादशवर्षाविवाहे इति स्पष्टमेव, आशासे विद्यावाचस्पति-महाशयस्याऽऽग्रहिलतां पाठका वेदिष्यन्त्येव।

'तां पूषन्' इति मन्त्रेण कथ्यमानो मैथुनविधिर्विवाहसंस्कार एव करणीय इति यदि श्रीमन्नयेन महामूर्खेणाऽपि नोदीर्यते, किन्तु स भविष्यत्कालिक एवेति सिद्धान्तालङ्कारमहोदयो मनुते; तर्हि स्मत्पक्षः सिद्ध एव, मन्त्रोऽस्मिँस्तदवधिर्न लिखितः, अत ऋतुकाल प्राप्तावेव तदुपयोगः, अतएवद्वादशवर्षाविवाहे न कोऽपि दोषः परापतति। विवाहगर्भाधानयोर्भिन्नत्व-भिन्नकालिकत्वयोर्मनने श्रीमते धन्यवादो दीयते। 'तयोःकालेऽन्तरं कतिपयदिवसानां विशिष्टाऽवस्थासु कतिपयमासानामेव' यदि प्रोच्यते; तर्ह्यागतोऽस्मदीयः पन्थाः, अत्र श्रीमद्भिर्वेद प्रमाणं न दत्तम् अतएवाऽत्रेत्थं कथयितुं शक्यते, यत्-तयोः कालेऽन्तरं कतिपयमासानाम्, विशिष्टावस्थायान्तुकतिपयदिवसानामेव। 'रसादेव स्त्रिया रक्तं रजःसञ्ज्ञं प्रवर्त्तते। तद्वर्षाद् द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम्' सुश्रु० सूत्र० १४।६ इत्युपवेदः श्रीमदाचार्य्यसम्मतश्च आयुर्वेद आचष्टे-इति द्वादशवर्षविवाहे जाते ऋतुकालस्य निकटभविष्यत्कालिकत्वात् तयोः संस्कारयोरन्तरं श्रीमदनुसारमत्र वैदिकं सिद्ध्यति; यतः कतिपयमासा-



उपरोक्त से ही पता चलता है।

नामन्तरन्तु भवताऽपि मतम्। भवत्स्वाम्यपि कन्यायाः पञ्चदश-वर्षत्वे ३६ वारं रजस्वलात्वं मन्यते सत्यार्थप्रकाशे, तर्हि तन्मतेऽपि द्वादशवर्षानन्तरमृतुकालः सिद्धः; तर्हि द्वादशवर्षविवाहकाले ऋतुकालस्य निकटत्वाद्, ऋतुकालएव च ऋतुदानस्येष्टत्वादस्मत्पक्षे न कोऽपि दोषः परापतति। श्रीमान् यत् १७–२४ विवाहं कन्याया निर्द्दिशति; तर्हि किम् ऋतुकालः १७ वर्षादारभ्यते ? २४ वर्षपर्य्यन्तञ्च समाप्यते ? गर्भाधाने ऋतोरेव कारणत्वं सर्व्वसम्मतम्। तेन 'तां पूषन्निति, विवाहे मन्त्रपाठो भावि नाऽतिदूर-मैथुनसूचकत्वाद् द्वादश-वर्षाविवाहे नाऽप्रकृतः। तत्कालं मैथुनं श्रीमद्-दिशा कश्चिन्महामूर्खोऽपि न मन्यते, तर्ह्यस्मत्पक्षः सिद्धः। श्री हरदत्तभाष्येऽपि न भवत्पक्षसिद्धिः, नचाऽप्यस्मत्पक्षहानिः काऽपि; अतएव तदुद्धरणं प्रयासमात्रफलकमेव, यतो न तात्कालिकमिदं वर्ण्णनमिति श्रीमताऽपि मन्यत एव।

'इह-प्रियं प्रजयाते······एना पत्या तन्वं संसृजस्व' ऋ० १०।८५।२७, अ०१४।१।२१ अस्याऋचः पतिगृहे वधूप्रवेशसमये कौशिक ७७।२० सूत्राऽनुसारेण पाठमात्रं क्रियते, अथचाऽत्रभावी आशीर्वाद एव, तेन न कोऽपि दोषः। 'इह प्रजां जनय पत्ये अस्मै··· पुत्रस्त एषः' अ० १४।२।२४ अनेन मंत्रेण कौशिक ७७।२२-२५ सूत्राऽनुसारं ब्राह्मणकुमारो बध्वा अङ्के स्थाप्यते, तर्हीदम्भाविवर्ण्णनमेव, न तात्कालिकम्, अथ चेदं रीतिमात्रमेव, न च मन्त्रपाठसमये तस्याः स्वकीयः पुत्रो भवति-इति श्रीमताऽपि मंस्यते आपस्त० गृ० २।६।११, गोभिल २।४।७ इत्यादिसंवादात्, किन्तु भावी आशीर्व्वादो विधिर्वा॥ 'तस्यां नरो वपत बीजमस्याम्' अ० १४।२।१४ अस्याऽपि पूर्व्ववदुत्तरम्। श्रीमन्मतेन कश्चिन्महामूर्खोऽपि तात्कालिकमिदं वर्ण्णनं न मनुते, किन्तु भाविनिर्द्देशपरम्। तच्च कतिपयमासानन्तरं ऋतुकाले जाते स्वतः सिद्धम्, न तत्पूर्व्वम्॥ 'आरोह तल्पं' अ० १४।२।३१ इति मन्त्रं पठित्वा कौशिक ७९।१

# विशेष सूचनाः

(१) श्रीयुक्त पं० भीमसेन विद्यालङ्कारस्य मुद्रणालयाध्यक्षस्य रोगग्रस्तत्वात् 'श्रीः' प्रकाशने आश्विनमासस्थाने कार्तिक-मासः सञ्जातः। अस्माकं नास्त्यस्मिन् कश्चिद् दोषः। प्रयत्यमानेऽपि सततमनिवार्यो विलम्बः प्रत्युपस्थितः। श्री पाठकानामर्थे प्रथमोऽवसरोऽयम्। आशासे क्षमां प्रदास्यन्ति श्रियः पाठकाः।

(२) धन्यवाद पूर्वकं विनयमयेन स्वीक्रियते मीमांसा ग्रंथ प्रकाशक समितेः मासिकपत्रं पुण्यपत्तनतः प्रकाशमानम्। आगामिन्यङ्के समालोचनमपि विधीयते।

(३) श्रियः पाठका अनुग्रहेण सुलेखान् सामाजिक, साहित्यिक, सभ्यता संस्कृति धर्मरक्षासूचकान् प्रेषयन्तु श्रियः पृष्टाश्चा-लंकुर्वन्त्विति।

निवेदकः

संपादकः

---

## सम्पादक समितिः

१. पं० डाक्टर कुलभूषणः डी. पी. एच. (लण्डन)
२. पं० गोविन्द राजदानः, शास्त्री, एम.ए., एम.ओ.एल., एल.टी.
३. पं० जगद्धर जाडू, शास्त्री, एम.ए., एम.ओ.एल.
४. पं० शिवनाथः साहित्य-भूषणः, साहित्य-मणि।

---

पं० भीमसेन विद्यालङ्कार द्वारा, नवयुग प्रिण्टिग प्रैस, १७ मोहनलाल रोड लाहौर में मुद्रित।

# संस्कृत साहित्य परिषदः श्रीनगर...
# श्रियश्च नियमाः

**उद्देश्यः—**

परिषदोऽस्याः केवलमेक एवउद्देश्यः संस्कृतभाषायंसभा... रक्षार्थं प्रचारः।

एतत् प्राप्त्यर्थं १।) श्रीनगरात् भिन्ननगरस्थेभ्यः। २) श्रीनग... स्थेभ्यश्च शुल्करूपेण धनमपेक्ष्यते। अनेनैव पत्रिकापि लभ्... सभासत्त्वमपि च भवेत्।

श्रीःपत्रं सभासदैद्भिः सर्वैं रुप्यकेन एकेन १।) प्राप्यते... संस्कृतानुरागिभिरस्याः परिषदः सभासत्त्वम् स्वीकर्तव्यम् प... लिखनेन।

**सहायताः—**

परिषदो व्ययः पत्रिकाया अस्याः कृते शुल्कादत्यधिकं भवति... परन्तु धनाभावात् बहवः संस्कृतज्ञाः छात्राः ब्राह्मणाः... विनामूल्येनैव लभन्ते पत्रम्। अतः सहायतारूपेण किञ्चि... धनमस्यै अवश्यमेव संस्कृतोद्धारप्रणयिभिर्दातव्यम्।

**पत्रप्रकाशनसमयः—**

त्रैमासिकं पत्रमिदं सौरवर्षस्य आषाढ़, आश्विन, पौष, चैत्र मासेषु निर्गच्छति। पत्रप्रकाशनमासानन्तरमपि पत्रस्या... नुपलब्धौ सूचनया पुनरपि प्रेषयिष्यते पत्रम्। मासादनन्त... तु पत्रं न प्राप्यते।

**पत्रव्यवहाराः—**

लेखप्रेषणाय पत्रप्रबंधाय च निम्नाङ्कितेन प्रत्ययेन पत्रव्यवहारः... विधेयः

आश्विन १९९३
अक्तूबर १९३६

कुलभूषणः
परिषन्मन्त्री
श्रियः सञ्चालकः
सम्पादकश्च

सुन्दर बाग, श्रीनगर, (कश्मीर)

वर्षं ५
संख्या १

Vol. 5
Number 1

॥ ओ३म् ॥

कश्मीर प्रदेशस्थ श्रीनगरस्थायाः

# संस्कृत साहित्य परिषदः

## त्रैमासिकं पत्रम्

# श्रीः

Quarterly Journal of the

# SANSKRIT SAHITYA PARISHAD

## SRINAGAR, KASHMIR.

श्रीनगर आषाढ़ १९९३

*Srinagar July 1936*

वार्षिकं मूल्यम् १)

प्राप्ति स्थानम्—पं० कुलभूषणः सुन्वारबाग श्रीनगर कश्मीर

# विषय सूची



सर्वे लेखा लेखकमहानुभावानां भाषामतानुसारेणैव प्रकाश्यन्ते तेषामुत्तरदायिनो लेखका एव न च सम्पादकाः ।








वर्ष ५ संख्या १ | आषाढ़ संवत् १९९३ वि० जुलाई १९३६ ईसवी | पूर्ण संख्या १७

# काश्मीरिक-भट्ट-शिवस्वामिनः महाकाव्यं कप्फिणाभ्युदयनामधेयम्।

( पं० जगद्धर ज़ाडू शास्त्री एम. ए. )

श्रीमन्तो मान्या विद्वत्पुंगवाः, श्रीशिवस्वामिनिर्मितं कप्फिणाभ्युदयं महाकाव्यं कदाचित् भवत्कर्णगोचरीभूतं स्यात्, यदधिकृत्य श्रीमतामग्रतः किंचिन्मया वाक्-चापल्यं क्रियतेऽधुना। कल्हण पण्डितविरचितायां राजतरङ्गिण्यां कृतनामनिर्देशस्य श्रीराजराजेश्वरस्य महाराज-अवन्तिवर्मणो राज्यकाले भूस्वर्गोऽयं सर्वलोकविश्रुतः काश्मीरदेशः भूयांसं समृद्धिपथं समवागाहत। अस्य पुण्यश्लोकस्य महामहिमशालिनो नृपपुंगवस्य निजगौरवगरिम्णाऽमरपुरमप्युपहसन्ती राजधानी आधुनिकं 'वन्तीपुर'-प्रदेशं समधिष्ठित्य विरराजतराम्। काश्मीरान् विहायाऽन्यानि समृद्धानि राज्यानि अपि असौ स्वबाहुपराक्रमेण देवगुरुसदृशानां निजामात्यानां अतुलितबुद्धिप्राबल्येन च स्वायत्तीचकार। अस्य महावीरस्य राज्यकालः षट्पंचाशद्वर्षाधिकं क्रैष्टाष्ट शतकं (856 A. D.), यस्मिन् बहवः कवयः

रत्नाकर-मुक्ताकणादयः शूरातिशायिनः शूरनाम्नो महामात्यात् संल-ब्धसंमानाः निजकविताकमनीयकिरणजालैर्दिग्वनितामुखान्यलंकृत्य परां ख्यातिमधिजग्मुः। यथा च राजतरङ्गिण्यां कल्हणपण्डितेन वर्णितम् :—

१. विच्छिन्नप्रसरा विद्या भूयः शूरेण मन्त्रिणा।
सत्कृत्य विदुषः सभ्यान् देशेऽस्मिन्नवतारिता:॥
(R. T. v. 32)

२. युग्यैः क्षतिभुजां योग्यैरुह्यमानाः महर्द्धयः।
बुधाः प्रवृद्धसत्काराः विविशुर्भूपतेः सभाम्॥
(R. T. v. 33)

३. मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः॥
(R. T. v. 39)

४. अनुग्रहाय लोकानां भट्ट श्रीकल्लटादयः।
अवन्तिवर्मणः काले सिद्धा भुवमवातरन्॥
(R. T. v. 66)

५. अवन्तिवर्मणः पुण्यैर्जन्तून् जीवयितुं ततः।
स्वयमन्नपतिः श्रीमान् सुय्यः क्षतिमवातरत्॥
(R. T. v. 72)

ध्वनिकाव्यविमर्शनविचक्षणस्य श्रीमतो विद्वच्छिरोमणेरानन्द-वर्धनाचार्यस्य ध्वनिकारिकाः सर्वलोकविश्रुताः। याः श्रीमदभिन-वगुप्ताचार्यवर्यैः 'आलोकेन' व्याख्याताः प्रसिद्धिं भजन्ते। रत्नाकर-महाकवेः पंचाशत्सर्गात्मकं हरविजयाख्यं महाकाव्यं काव्य-लोकेऽद्वि-तीयम्। श्रीमतो मुक्ताकणपण्डितस्य कृतिरद्यपर्यन्तं न क्वापि लभ्यते। केवलं तस्य सुभाषितमुक्ताकणाः यत्र तत्र विप्रकीर्णाः सुभाषितग्रन्थेषु समधिगम्यन्ते। श्रीशेषगिरिशास्त्रिगवेषणा-लब्ध-कप्फिणाभ्युदय-महाकाव्याध्ययनेन श्रीकाश्मीरिकभट्टशिवस्वामिनः किञ्चित् समा-चारादिकं साम्प्रतमुपलभ्यते। यथा च—भट्टाचार्यस्वामी श्रीशिवस्वा-

मिनः पूज्यः पिता; अस्य बौद्धधर्मगुरुः चन्द्रमित्रः, यस्यादेशेन राज्ञः कफ्फिणस्य अवदानमसौ कफ्फिणाभ्युदये महाकाव्ये सूक्तिभिर्निबबंध। असौ शैवधर्मावलम्बी शैवसंप्रदायानुवर्ती च अभवत्" इत्यादि।

अस्य महाकाव्यस्य सर्वोत्कृष्टतायां ऐक्यमस्यं सर्वेषां विदुषां काव्यकलामर्मज्ञानाम्। कोशकाराः, वैयाकरणा अन्ये च सुभाषितसंगृहीतारः कविताकुञ्जकोकिलाः सहर्षं अस्य महत्त्वं स्वीकुर्वन्ति। क्रैस्टीयैकादशशतकवर्तिना कवीन्द्रवचन - समुच्चयकारेण - काव्यप्रकाशकर्त्रा मम्मटभट्टेन च श्रीशिवस्वामिनिर्मिताः श्लोकाः तत्तत्कृतिभ्यः उद्धृताः लभ्यन्ते। येषां पठनेन 'असौ महाकविः सहजसुन्दरां अलौकिकीं वाक्पटुतां, अपूर्वं काव्यकलाचातुर्यं, विस्मापयित्रीं प्राकृतिकदृश्यवर्णनाशक्तिं चावहत्' इति सुतरामनुमीयते।'

इत्थं संस्कृतसाहित्ये विशेषतः काश्मीरीय-काव्यसाहित्य-संसारे उत्कृष्टतमं स्थानमवलम्बमानं श्रीशिवस्वामिना निर्मितमिदं महाकाव्यं धार्मिकेतिहासग्रन्थानां भूयसीं पुष्टिं वितनोति। काव्येऽस्मिन् बौद्ध-शैव वैष्णवधर्माणां समालोचनां कुर्वन् कविः तेषां विरोधवादान् स्वमतिपर्यालोचनया समीकृत्य, तत्तद्धर्मावलम्बिषु प्रेमबुद्धिं संजनय्य, परस्परं तान् स्नेहपूर्वकं व्यवहाराचारधर्मे प्रेरयति।

अथ कोऽसौ कफ्फिणः? कफ्फिणो बुद्धसमकालीनः राजाऽभवत्। भगवतो बुद्धस्योपदेश-सुधा-रसप्लावितस्वान्तोऽसौ तत्प्रेरणया बौद्धधर्मं स्वीचकार। तथागतस्य मुख्येषु द्वादशशिष्येषु गण्यतेऽसौ। सिद्धार्थस्य जीवनकाले एव 'अर्हन्' इति संम्मानपदं समधिगम्य परां ख्यातिमसौ संप्राप्तवान्। 'जावा' द्वीपे बौद्धमन्दिरभित्तिषु श्रावकमध्येऽस्य नामोट्टङ्कितं लोकैरधुनापि दरीदृश्यते। बुद्धावदानेषु गाथासु च प्रसिद्धचरितं पुण्यश्लोकमेवंविधं महाराजं कफ्फिणं निजकाव्यं निर्माय हिमगिरिधवलेन यशसा समाछाद्य चैनं अमरतां निन्ये महाकविः श्रीभट्ट शिवस्वामी।

( अन्यदग्रे )

# पाणिनिराचार्यः

( पं० गोविंदराजदान शास्त्री एम० ए० )

संस्कृतसाहित्यसंसारे गौरवपूर्णं प्रधानतमं पदं भगवत आचार्यपाणिनेरेव सर्वत्र प्रसिद्धम्। महान्तं पारावारपरिमाणरहितं व्याकरणार्णवं केवलं ३९६३ वह्निरसनन्दाग्निपरिमितैः सूत्रप्रवाहैरलतमं घटमिव अष्टाध्यायीं सम्पूरयांचक्रे। अनन्यसदृशीं तां तथाविधां प्रतिभामाचार्यवर्य्यस्यास्य निरीक्ष्य को न भवेत्स्मिन् चकितः स्यात्? क्वासौ मुनिपुङ्गवः पाणिनिः क्व च शब्दसागरः यं सम्यक् तर्तुं पाणिनिं विना सर्वोऽपि देववर्गः कान्दिशीक इव निर्धैयो निरालम्बो निरवग्रहो निष्परिग्रहः सर्वदा सर्वथा सर्वत्र सर्वतोऽपि बिभयाम्बभूव तत्र का कथा परिमितवयसोऽचिरंजीविनो मनुष्यस्य। तथाच—बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच न चान्तं जगाम। बृहस्पतिश्च वक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालः, न चान्तं जगाम, किं पुनरद्यत्वे? यः सर्वथा जीवति स वर्षशतं जीवति। चतुर्भिश्च प्रकारैः विद्योपयुक्ता भवति— आगमकालेन; स्वाध्यायकालेन, प्रवचनकालेन व्यवहारकालेनेति। तत्र चागमकालेनैव कृत्स्नमायुः पर्युपभुक्तं भवति। तस्मादनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः। कथं तर्हीमे शब्दाः प्रतिपत्तव्याः? किंचित् सामान्यविशेषवल्लक्षणं प्रवर्त्यं येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरनिति महाभाष्यकारस्य पतञ्जलेरुक्तिः। तस्मादाचार्यपाणिनेरेवायं प्रभावो येनाष्टभिरेव केवलमध्यायैः निखिलोऽपि शब्दनिधिः पारं नीत्वाकण्टकितो मार्गः परोपकाराय प्रदिष्टः।

कदासौ पाणिनिरभूत् कंचकुलं जन्मनालंकृतवान् कथं वा जीवनं व्यतीयायेति निश्चयो बाह्यैराभ्यन्तरिकैश्च निरीक्षणविवेचना विषयैरनुसंधातव्योऽपि अतलस्पर्शसागरवद्दुरधिगमो दु:

साध्यश्च दरीदृश्यते तथापि यथाशास्त्रं यथापूर्वं यथाविधि यथा पाश्चात्यविद्वज्जननिर्दिष्टं यथाशिष्टादेशं प्रयतिष्यायामहे—

Indian wisdom इण्डियन विज़डमनाम्नि पुस्तके होरेस हेमन विल्सनमहाशयो लिखति यदयमाचार्यो गान्धारदेशान्तर्गते शलातुरग्रामे जन्म प्रपेदे येनासौ शालातुरीयः कथ्यते एतस्य जननी दाक्षी देवी तथाच भाष्यकारः—'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः। एकदेशविकारे हि नित्यत्वं नोपपद्यते' इति तस्माद्दाक्षेयोऽप्यसौ। पाणिनिऋषेर्गोत्रजत्वात्पाणिनिरयम्। पितामहस्तस्य स्मृतिकारो देवलो व्यासादपि पूर्वतमो यतो हि महाभारते 'असितो देवलो व्यासः' इत्यन्यत्रापि देवलस्य नामसंकीर्तनं व्यासात् पूर्वमेव सर्वत्र दृश्यते।

कदासौ अभूदिति तु न निश्चयेनोदाहियत अपित्वनुमानप्रमाणाभ्यामेव सिद्ध्यति।

प्रो० गोल्डस्टकरस्तु बौद्धमतप्रचारकस्य शाक्यमुनेरपि पूर्वमेव पाणिनिसमयं निश्चिनोति। बुद्धस्तु ६६३–४१३ कालीनः। अतः पाणिनिः खिस्तात्पूर्वं षष्टयामेव शताब्द्यामासीत्। परन्तु कतिपये विद्वांसस्तं खिस्तात्पूर्वं तुर्ये एव शतके समुत्पन्नं वदन्ति तन्निखिलमप्यसम्मतमेव।

'गवियुधिभ्यां स्थिरः'( ८।३।९६ ) 'वासुदेवार्जुनाभ्यां वुन्'—इति द्वाभ्यामेव सूत्राभ्यां प्रतीयते यत् पाणिनिः कृष्णेन पाण्डवैश्च सह परिचित आसीत् 'बाह्वादिभ्यश्चेति सूत्रान्तर्गतगणपाठे कृष्णयुधिष्ठिरार्जुनप्रद्युम्नरामादयः शब्दाः श्रूयन्ते तथा 'एजेः खश्' इत्यस्मिन् सूत्रे 'अरुर्द्विषदजन्तस्य मुम्,—इत्यनेन मुमागमे जनमेजय इति साधनात् जनमेजयपरिचितः पाणिनिरिति सर्वेषां मतम्। पाण्डवकालीन एव व्यासस्तस्य च पिता ऋषिः पराशरः सोपि पाणिनिपरिचितः 'अतएव पाराशर्यं शलालिभ्यां भिक्षुनटसूत्रयो' इत्यनेन पाराशर्यशब्दव्युत्पत्त्यौ 'गर्गादिभ्यो यञ्' इति यञ् करणात् पाराशर्यशब्देन

व्याससंज्ञकऋषिज्ञानम् । गर्गादिगणे पराशरशब्दान्तर्भावेन ब्रह्मसूत्रकर्तुर्व्यासस्यानुमानं तदानीन्तनेनेहसि ब्रह्मसूत्राणां भिक्षुसूत्र-व्यपदेश आसीत् यतोहि संन्यासिजना एव तदा तानि सूत्राण्यपठन् सूत्रे च भिक्षुसूत्रपदग्रहणेन व्यासेन वेदान्त दर्शनं पाणिनिकाला-त्पूर्वमेव रचितमासीदित्यपि निःसन्देहास्पदम् । व्यासस्य पाणिनेश्च पञ्चाशद्वर्षात्मकोन्तरो निकटवर्तित्वं वा पाणिनेः भिक्षुसूत्रज्ञानात् ज्ञायतेऽपि ।

कथं पाणिनिः पाण्डवसमकालीन एव कथं नार्वाचीन इति प्रश्ने सुधातुर कङ् चे–त्यनेन सुधातृ ग्रहणान्अकङ् इञ च विधा-नात् "सौधातकि" रिति सिद्धयति अप्रसिद्धस्य सुधातृनामकस्य मुनेर्ग्रहणात् कथं प्रसिद्धस्य व्यासस्य ग्रहणं न भवेत्—परं वरुड-निषादचण्डालबिम्बानां चेति वक्तव्यमिति कात्यायनकृतप्रथम वार्तिकेन वैयासकि (शुकः) पद सिद्धावनुमीयते पाणिनिसमये व्यासस्य पुत्र एव नासीत्—यदि चासीत् तर्हि बालत्वादप्रसिद्ध एव स्यादित्यपि अनुमीयते यः पश्चात्परीक्षितकथापण्डितो भूत्वा कात्यायनसमये परां ख्यातिमापेदे ।

जनमेजयपरिचितः पाणिनिः कथं न शुकदेवपरिचित इति प्रश्ने तु महाभारतकाले अभिमन्युमृत्युसमये परीक्षितस्य मातुरेव-गर्भे सम्भवात् पश्चाच्च जननकालादेव भाविक्षत्रियकुलावतंसका-णात्प्रसिद्धिं जनमेजयो यथावाप न तथा शुकेन ख्यातिर्लब्धा स्या-दित्यपि निश्चेतुं शक्यते ।

पाणिनिः पाण्डवकालीन एवेत्यत्रान्यदपि कारणम् । कात्यायन वार्तिककालस्तु पाणिनेः पश्चादेवेति निर्विवादम् । पाणिनिकाले यः शब्दोऽसाधुः स कात्यायनसमये भाषापरिवर्तनेन साधुतां गतः स्यात—इत्यपि—धर्मेणाधिगतो यस्तु वेदः सपरिबृंहणः ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुति प्रत्यक्षहेतवः' इत्यत्र—मनूद्दिष्टलक्षणे (एत-स्मिन्नार्यावर्ते निवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्य-

माणकारणाः किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः तत्रभवन्तः शिष्टाः ।६।३।३। इत्यनेन कात्यायन कथनेनार्यावर्तदेशीयत्वेनैव शिष्टत्वम्—एवमेव आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् । तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः इति मनुनोक्तम् । कात्यायनस्तु प्राक् आदर्शात् प्रत्यक् यवनात् उत्तरेण हिमवन्तं दक्षिणेन परियात्रमित्यत्र कात्यायनोक्तौ महदन्तरं मनुसमयादपि मनुसमयः खिूस्तात्पूर्वं ३०७ तस्मात्पूर्वं कात्यायनः ३०० ४०० वा तस्मादपि पूर्वं पाणिनिर्वर्षसहस्रमिति सिद्धम् । शतेषु षट्सु सार्धेषु त्र्यधिकेषु च भूतले कले र्गतेषु वर्षाणामभूवन् कुरुपाण्डवा इति कल्हणो क्त पाण्डवसमयसमकालीनोयं तस्मात्पाणिनिरिति निर्विवादमेव—

पाणिनेर्गुरुर्वर्षः तथा च कथासरित्सगरान्तर्गतप्रथमकथापीठस्य चतुर्थे तरङ्गे—

अथ कालेन वर्षस्य शिष्यवर्गो महानभूत्
तत्रैकः पाणिनिर्नाम जडबुद्धितरोभवत् ॥
स शुश्रूषा परिक्लिष्टः प्रेषितो वर्षभार्यया ।
आगच्छत्तपसे खिन्नो विद्याकामो हिमालयम् ।
तत्र तीव्रेण तपसः तोषितादिन्दुशेखरात् ॥
सर्वविद्यामुखं तेन प्राप्तं व्याकरणं नवम् ।

जयादित्यकृत काशिकायां च—

नृत्यावसाने नटराज राजो ननादढक्कां नवपञ्चवारम् ।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥

कथं च परलोकं गत इति—

सिंहो व्याकरणस्य कर्तुरहरत्प्राणान्प्रियान् पाणिनेः—इति

——

# सरस्वती यात्रा

गत चैत्रमासस्य श्रियः चतुर्थवर्षीय तुरीय संख्यायां 'सरस्वती यात्रा' शीर्षकः स्वल्पलेखो मदीयः प्रकाशित आसीत्। यस्मिन् सरस्वती यात्रा मध्ये १९३६ ई० वर्षस्यारम्भे दृग्विषयीभूतानां नगराणां नाम वर्णनंमात्रमेव परिचयोऽभूत्, विस्तारस्य काचित् प्रतिज्ञा च। अद्याहं स्वप्रतिज्ञां पूरयितुं किञ्चित् पाठकानामुपहारीं करोमि।

## भारतवर्षस्य प्राचीनेतिहासः ( कलिकाताया महत्त्वम् )

कलिकाता नगरी भारतवर्षस्य १५० वर्षेभ्यो राज्याधिकारिणामाङ्गलदेशप्रसूतमहाभागशालिराज्ञां प्रतिनिधीनां (Viceroys') राज्यधानी विचित्राद्भुतैव। इदानीं २५ वर्षेभ्यो मुगल सम्राजां प्राचीनार्यराज्ञाञ्च राज्यधानी इन्द्रप्रस्थाभिधाना—देहलीति (Delhi) आङ्गलैरपि पुनः स्वीकृता। १४,१५ लक्ष परिमित स्त्री-पुरुषाणां निवास स्थानं भारत वर्षस्य प्राचीन काले महाराज चन्द्रगुप्तस्य मगधराजस्य निकटवर्ति संस्कृतशिक्षार्यसभ्यताया प्राचीन केन्द्रं महम्मदीय सम्राजां हस्तगतमाङ्गलविद्या प्रचारस्याग्रसरं वङ्गदेशोऽयं यस्य महत् नगरं कलिकाताभिधानम्। कथमाङ्गलैः प्राप्त भारतीयैः दत्तम् किञ्चिदस्य वृत्तं अर्वाचीन भारतवर्षस्येतिवृत्त-पृष्टेभ्य उद्धृयते।

भारतवर्षस्य बौद्धराज्ञां कालो विशेषतया सम्राट् चन्द्रगुप्तस्याशोकस्य च(३२७B.C.—२२६)कतिपय शताब्दीषु भारतंपूर्वदेशेभ्यः सर्वम् उच्चतमं देशमुद्घोषयत्। यावत् बौद्धानां राज्यंन्यूनतामागात् गुप्तवि[?]राज्ञां राज्यं भारत वर्षे गौरवं प्राप। अष्टम्यां शताब्द्यां याव[?] निरन्तरं भारतीयानामेव स्वराज्यं सर्वत्र भारतेऽऽसीत्।

## यवन राज्ञां भारताक्रमणम्—

भारतवर्षस्यावनतेः नक्षत्रं तु खृष्टवर्षस्याष्टम्यां शताब्द्यां महमदीय राज्ञां महमदस्य कासिम पुत्रस्य अरबतः प्रेषणेन सिंधु प्रदेशस्यच स्वायत्तीकरणेन निस्तेजतां गतमासीत् । महमदेन ( कासिम पुत्रेण ) सिंधु प्रान्तस्य बौद्ध प्रजायाः साहाय्येनार्यं राज्ञो विजित्य सिंधु प्रदेशे स्वराज्यं ( मुस्लिम राज्यं ) स्थापितम् । यद्यपि महमूद ग़ज़नवी अभिधानः कश्चिद् महमदीयः ग़ज़नीत आगत्य १००० ई० शताब्द्यां भारतवर्षं स्वाधीनं चकार तथापि तस्मात् पूर्वं महमदेन ( कासिम पुत्रेण ) ८०१ ई० शताब्द्यां सिंधू देशस्य बहुभागं विजित्य प्रचुरं धनं अरब देशे प्रेषितमासीत् । १००० ई० तः १७०० ई० यावत् भारते नितान्तं मुस्लिम राज्यमासीत् । दक्षिण भारते १८ शताब्द्यां महाराष्ट्र ललामभूतेन शिवाजी महाराजेन बहुत्र पुनरार्य-राज्य स्थापनाय महान् प्रयत्नः कृत आसीत् । उत्तर भारते तु गुरो गोविन्दसिंहस्य शिष्यैः (सिक्खैरिति) सिक्खराज्यं स्थापितम् ।

## पाश्चात्यजातीनां भारत आगमनम्—

१५०० ई० यावत् भारतवर्षो दृढं मुस्लिमराज्याधीन आसीत् । यद्यपि मुग़लानां राज्यस्य गौरवं १६, १७ शताब्द्यां उच्च-शिखर आसीत् तथापि १७ शताब्द्यामेव दैवयोगेनन्यशक्तेः प्रादुर्भा-वोऽपि भारते निश्चयेना ऽभूत् । भारतस्य सर्वं वाणिज्यं कतिपय शताब्दीषु तु केवलं महमदीयानां हस्त आसीत् । विशेषतो यस्मात् समयात् ( ७ मयां शताब्द्यां ) महमदीयैः मिस्रदेशः स्वाधीनता मानीतः तस्मात् कालात् पाश्चात्यजातीनां मिस्रदेशात् भारतवर्ष-मागन्तुं पन्थानमेव महमदीया अरुन्धन् । प्रथमो देशः पाश्चात्येषु पुरतगालित्यासीत् यस्य शूरैः समुद्रयात्रिकैः वैज्ञानिकैश्च पूर्व देशेषु विशेषतो भारते स्वकीयं वाणिज्यं वर्धयितुं वाणिज्यगृहादिकमधिष्ठा-पितम् । पुरतगाल प्रदेशीयाः मिस्रप्रदेशस्य पन्थानमवरुद्धं दृष्ट्वा

अफ़रीका प्रदीपस्य दक्षिण समुद्रे केप आफ़ गुड होप (Cape of Good Hope नाम्ना पथा भारते आगतवन्तः। त्रिमासपरिमितां दुष्करां यात्रामपि पुर्चगोज़जातीयैर्मानवैस्तृणीकृत्य दक्षिण भारते कतिपय देशेषु स्ववाणिज्यं प्रसारितम्। कालीकट गवा प्रभृति देशेषु भारत वर्षस्यार्यराज्याज्ञया स्वकार्यालयान्यपि निर्मितानि। लङ्कादेशमपि स्वाधीनतामानीतम्। १६ शताब्द्यां विजयनगरेन ( हिन्दुराज्यधान्याः सह ) सह प्रभूतं वाणिज्यं चक्रुः।

## पाश्चात्यानां परस्परं संघर्षणमाङ्गलानां विजयश्च—

१७ शताब्द्यां डच ( Holland ) देशीयैरपि पूर्व देशेषु व्यापारार्थं संघ एकः स्थापितः—'ईस्ट इण्डिया ट्रेंडिंग कम्पनी' ( East India Trading Co. )। शताब्द्यां १६ मयां त, भारतस्य सर्वः सामुद्रिकव्यापारः पुर्चगीज़ानां हस्त आसीत्। परन्तु १७ म्यां शताब्द्यां हालैंड प्रदेशीयै डचाभिधानैरपि बहुषु स्थलेषु स्वकीयानि वाणिज्यालयानि पुर्चगीज़ान् विजित्य स्थापितानि। १६ म्यामेव शताब्द्यां कतिपयवर्षान् डेनिशजातीयैरपि भारते पदार्पणः कृतः परन्त्वेतेषां भागदेयमदिष्टावहमेव वरिवर्तिस्य। डचजातीयाः प्रबला आसन्। अस्यामेव शताब्द्यामांगम देशीयानां सामुद्रिक वणिजशूराणां डच जातीयैः सहात्यन्तं कलहः सञ्जातो येनाङ्गलजातीयाः डच प्रभृतीन् सर्वान् समुद्रे विजित्य भारतवर्षे स्वकीयं सम्बन्धं प्रत्यष्ठापयन्। प्रथमत आङ्गल वसतिः (Settlement ) १६०८ ईस्वीयाब्दे सूरत देशे निर्मिता।

मुग़ल सम्राजां राज्ये चांगलाः भारते वसतिं स्थापयितुमाज्ञप्ताः। वाणिज्यमिषेणै तैरात्मानं स्थिरीकृत्य कलहं कुर्वतां केषाञ्चिद् भारतीयराज्ञां पक्षमवालम्बयन् येनाङ्गलाः स्वाधिकारं कतिपय भारतीय प्रान्तेषु संवर्ध्य भारतवर्षस्य सर्वं राज्यमेवावन्ते प्रजहुः। सूरत प्रदेशे व्यापारं संवर्ध्य दक्षिण भारते मोहमय्यां (Bombay Presidency) अन्यत्र च पश्चिमदक्षिण खण्डेषु स्वव्यापारगृहान्य-

स्थापयन्। बम्बे प्रेज़ीडेंसी पूर्वं पुर्चगीज़ानामासीत्। मोहमयी (Bombay) नाम्ना नगरी पुर्चगीज़ैरांगलेभ्यः पुर्चगीज़राज्यकुमार्या आंगलराज्ञा चार्लसाभिधानेन सहोद्वाह काले दायभागरूपेण वितीर्णा। मद्र (Madras) प्रदेशेऽपि स्थानानि क्रीत्वा स्वप्रभावमवर्धयन्।

## कलिकाता नगरी—

पश्चिम दक्षिण भारतेऽप्यांगलाः सौवं महिमानं सम्यक् पुपोष्य वहुषु स्थलेषु स्वराज्यं (आंगलराज्यं) प्रतिष्ठाप्य पूर्व तटेष्वपि वाणिज्य-कार्यालयानि संस्थापयामासुः। १६५१ ईस्वीयाब्दे हुगली नद्यां वसतिं कारयामासुः। १६६० ई० वर्षे सम्राजावरंगज़ेबस्याज्ञया कलिकाता नगरेऽप्यापणान्युद्धाटयामासुः। प्रथमं सूतानुति ग्रामं प्राप्तम्। तद-नन्तरं बहूनि स्थानानि स्वाधीनानि कृत्वा महत् दुर्गं—फ़ोर्ट विलियम नाम्ना कलिकातायामेव निर्ममुः। १७०० ई० वर्षे पूर्व देश व्यापार संघेन (East India Co.) सूतानुति कलिकाता गोविंदपुर ग्रामानि च क्रीतानि यत् महत् कलिकाता नगरं विद्यते। तस्मादेव कालात् शनैः २ कलिकाता नगरी उन्नतिं प्राप्यांगलराज्ये द्वितीयं ब्रहत् स्थानं लेभे, यस्य कीर्तिर्यशः सर्वत्र संसारे श्रूयते।

१७८२ ई० वर्षे महाराष्ट्रदेशीयराज्ञां भाग्यमुदयमगात् तैस्तु किञ्चित् कालमांगलानां प्रभावोऽपि स्थगितः। परं १७५६ ईस्वीयाब्दे ब्लेकहोल (Black hole) नामोपद्रवानन्तरं पलासी युद्धे आँगल-विजयेन च सर्वेषामन्येषां भारतराज्यार्थं युयुत्सूनामुत्साहो ममन्द। तदनन्तरं कलिकाता नगरस्येतिहासः भारते बृटिश (British) राज्येतिहासकल्प एव। तेषाञ्च राज्य चमत्कारो राज्यगौरवं राज्य-वृद्धिः कलिकातायाश्च महत्युन्नतिः समकालीनैव। कलिकाता नगरी भारतवर्षस्य राज्यधानी १७७४ ई० तः १९१२ ई० यावतासीत्। १९१२ ईस्वीयाब्दे तु महाराज जार्ज पञ्चमेन। पुनर्देहली नगरी भारत-स्य राज्यधानीति स्वीकृता।

## आधुनिक कलिकाता नगर्यां सरस्वती मन्दिराणि कलाकौशलश्च-

कलिकाता नगरे दिदृक्षोरामोद प्रमोदार्थं बहूनि स्थानानि विद्यन्ते।

### होड़ा प्रतरं ( Howra Bridge )—

दिदृक्षोर्चक्षुषी पूर्वं हूगली नद्याः महति होरा प्रतरे पततः। होड़ा रेलवे स्टेशनतः (Railway station) (यत्र वाष्पशकटानां विराम स्थानं) कलिकातायामागमनाय महती प्रतोलिरियं यस्यां मोटरशकटादीनि चलन्ति, नीचैस्तु यावदावश्यकं समुद्रे बाष्पनावः (Steam ships) वहन्ति। महानद्भुतः प्रबंधोऽयं येन निश्चित वेलायां प्रत्यहं प्रतरोऽयंद्विधा विभिन्नो भवति उच्चैश्च गच्छति। तस्मिन्नेव काले सामुद्रिकबाष्पनावः प्रतरस्य परं पारं गच्छन्ति। हुगलि नद्या अपि पारं यस्मिनदूर एव बाष्पनावः समुद्रयात्रार्थं चलन्ति। कलिकाता ५ योजन मात्रं (४० मील पर्यन्तं) हुगली नदी तदनन्तरं बृहत् सा यत्र हुगली समुद्रेण मिलति। तस्मात् स्थानात् यात्रिणः समुद्र विकासु ब्रह्मदेशेषु (Burma) गच्छन्ति अन्यत्र च पूर्व समुद्रे ल देशादीनां यात्रायां पन्थानो विद्यन्ते। हुगली नद्याः कलिकाता पा एव आस्रमघाट (Osram Ghats) नाम्ना स्थानं वर्तते यदतीव रमनीयं दृश्यम्। तस्मादेव स्थानात् सामुद्रिक नाविकायां समुद्र यात्रार्थं यात्रिण आरोहन्ति अवरोहन्ति च।

### चौरङ्गी—

नाम्ना बृहत् पन्था विद्यते यत्र धनाढ्यानां वणिजानामापणा बहूनि रङ्गग्रहाणि पाकशाला सिनेमा होटलेत्यादयः वर्तन्ते। सर्वसं रस्य यात्रीणां भ्रमणस्थानमेव तत्। पाश्चात्यानां कार्यालयान्यप त्रैव। वङ्गदेशशासकस्य ( गवर्नर महोदयस्य ) राज्यग्रहस्थानम तन्निकटमेव। कतिपययोजन पर्यन्तं चौरङ्गी पन्था गच्छति। पार्श ऽस्यानेनैव मार्गेण कलिकाता ट्रेम ( Tram ) विद्युतशाकटमीति वह

## मैदान

सम्मुखे चौरङ्गेः महान् विशाल मैदान ( Maidan ) भूमिखण्ड इति वर्तते यः कलिकातायाः श्वासस्थानमस्ति। हुगली नद्याः कतिपय योजनानि (४-५ मील पर्यन्तं) महान्तः पन्थानः प्रारभन्ते येषु एस्प्लेननेड चौरंगी इत्यादयः पंथानः आगच्छन्ति। सर्वेषां तेषां सम्मुखे मैदानोयं दृष्टिगोचरो भवति। कलिकातायाः रमणीयता मैदानेन विना विलुप्ता स्यात्। कलिकाता नगरी मैदानेनानेन सुशोभिता मनोरञ्जिका सहस्रशः नारीपुरुषाणामामोदाय वर्तते। वंगशासकस्य निकट एव रमणीयमुपवनं एस्प्लेनेड गार्डन ( Esplanade garden ) इति तदनन्तरं विशालमुद्यानं ईडन गार्डन ( Eden garden इति चक्षुषी आनन्दयति। अति सुन्दरं सरः कमलपुष्पैः सुशोभितं ईडन गर्डन मध्ये वर्तते। अस्मिन्नेव मैदान मध्ये कतिपयांगलमहापुरुषाणां शिलामूर्तयः सन्ति। केषाञ्चिद् भारतराज्याङ्गल प्रतिनिधीनां ( Viceroy ) आंगलमहानुभावानाञ्च शिलाकृतयः मैदानस्य विशेष स्थानेषु वर्तन्ते।

## फ़ोर्ट विलियम

अस्मिन्नेव भूमिखण्डे फ़ोर्ट विलियम नाम्ना प्रसिद्धं दुर्गं (Fort william) हुगली समीपे मैदानस्य पार्श्वे एकस्मिन्नस्ति। पूर्वस्मिन् काले आंगलैः यदा कलिकाता नगरे वसतिः स्थापिता बलञ्च किञ्चिद् प्राप्तं दुर्गमिदं निर्मितं यत्रांगल बलादिकमस्ति। तस्मादेव कालात् फ़ोर्ट विलयमांगलानां बृहत् स्थानं यस्याग्रे सर्वदिक्षु परिकरोऽस्ति। इदानीमपि अत्रैवांगलबलानि निवसन्ति। मैदान मध्ये क्रीड़ा व्यायामार्थमागच्छन्ति। मैदानस्यास्यैकस्य पार्श्वे प्रतिवर्षं प्रथम जनवरी दिवसे ( New Years parade ) आंगबलानां युद्ध क्रीड़ा भवति। प्रतिवर्षञ्च राज्यप्रतिनिधिः ( Viceroy ) सर्वसेनानां नमस्कृति सन्ततीः स्वीकरोति।

बृहत् मैदानस्यास्य फ़ोर्ट विलयमस्याग्रे अतिरमणीयं त्रिवी
मुपवनं वरिवर्ति ।

## महाराणी विक्टोरियाया स्मारकम्

यस्मिन् महाराज्ञाः विक्टोरियायाः स्मारकं स्थापितमस्ति
विक्टोरिया मेमोरियल इति प्रसिद्धं स्थानम् । विक्टोरिया मेमोरिय
भवनं महत् विशालं सुन्दरञ्च विद्यते रिक्ते । नयनानन्ददायिने महावृ
गुल्मगुच्छपुष्पलता युक्ते उद्याने विक्टोरिया मेमोरियल भवन
बृहत् स्थानमपि शोभनतमं दरिदृश्यते । चित्र कलाकौशल युक्त
बहूनि आगाराणि विशेष चित्रैः विक्टोरिया कालात् पूर्वं तत्कालीन
च महाराणी विक्टोरिया बाल्यकालात् मरण पर्यन्तं चित्राणि शो
नानि दृग्पथमायान्ति । बृहदागारे एकस्मिन् आंगलानां भारते
सह दक्षिण भारते उत्तर भारते च युद्धानि चित्रितानि सन्ति । क
टक मैसूर टीपू सुलतानस्य युद्धानि सिक्ख वीराणां पञ्चनदर
चित्राणि महाराष्ट्रीयाणां स्वगौरवरक्षण चित्राणि सर्वा
लेखितानि ।

## अन्यास्मिनागारे

मुग़लराजभिः सहांगलशासकानां भारतराज्यप्रतिनिधीनां
व्यवहाराः पारसी भाषायामांगल भाषायाञ्च हस्त लिखि
सुरक्षिताः । बहूनि चित्राणि शिलामूर्तयो बहूमूल्यान्या सामग्री
पुस्तकालयोऽपि एको महान् विद्यते । न च सर्वं वस्तुजातस्य भ
संग्रहीतस्य नामान्यपि स्मर्तुं शक्यते ।

## कालिकाता कौतकागारः ( Calcutta Museum)

भारतवर्षे प्रायशः महानयम् । प्राचीन भारतस्य गौरव दर्शका
बौद्धकालीनानि तक्षशिला नालंदेत्यादि देशविशेषेभ्यः आनीता
बहूनिवस्तूनि शिलामूर्तयश्च चित्राणि पुस्तकानि प्रचीनभारतीय क
कौशल दर्शकानि पटवस्त्रजातानि मृतभाण्डानि सहस्रप्रकारका

वस्तूजातानि मध्येऽस्मिन् कौतुकागारे विद्यन्ते। पशुपक्षीणामस्थीनि सामुद्रिक महा जन्तूनां मत्स्यकच्छप कूर्मानां महत् पञ्जराणि तेषामाकृतयश्च भृदङ्गवादित्रादीनि संख्यातीतानि संग्रहीतानि। सम्यक् निरीक्षणायास्य बहूनां दिनानामावश्यकता भवति। [क्रमशः]

कुलभूषणः

---

# परमावश्यकी सन्ध्या।

( ले० पं० मुकुन्दराम शास्त्री उपदेशकः, कथावाचक-श्री प्रताप सभा, मुख्याध्यापकः स० ध० पाठशाला श्रीनगर )

"अहरहः सन्ध्यामुपासीत" इति भगवतो वेदस्यानुशासनात् सन्ध्योपासनं हि समस्तनित्यनैमित्तिककर्मणां मूलभूतं निखिलाधि-व्याधिविध्वंसकं बाह्याभ्यन्तरमलनिर्मोचनं स्वास्थ्यवर्धकमायुष्यं च परमावश्यकं कर्म। यदाचरणं परमो धर्मः। धर्ममूलस्य वेदस्य निखिलधर्मानुशासनं मनुष्यमात्रस्याभ्युदयनिःश्रेयससि-द्ध्यै। "यतोऽभ्युदयनिः श्रेयससिद्धिः स धर्मः" इत्युक्तम्। प्रभुस-म्मितस्य वेदस्याज्ञानुलङ्घनीया यतः। अतोऽस्य कर्मण अपि प्रति दिनमुपासनं परमं कर्तव्यम्।

समस्तशुभकर्मणां मूलभूतस्य मुख्यस्यास्य कर्मण आवश्य-कता युक्तिप्रमाणाभ्यां निरूप्यतेः—संसरणशीलेऽस्मिन्संसारे नानायोनिषु परिभ्रमन्नयं जीवः सत्कर्मवशात् कदाचिदाप्नोति मानुष्यं जन्म। यस्मिन् वेदोदितकर्माचरणे नान्तःशुद्धौ स्वात्मज्ञानस्फु-रणादूगमनागमनाभ्यां विप्रमुच्यते। तेष्वखिलेषु कर्मसु "सन्ध्योपा-सनं" प्रधानं कर्म येन चतुर्वर्ग सिद्धिः।

सम्यग् ध्यायते परब्रह्मानयेति सन्ध्या। अहोरात्रसंयोगः सन्ध्या। इति परब्रह्मध्यानात्मकस्य कर्मणः प्रत्यूष-रजनीमुखका-लस्यास्य चोक्तत्वात्स एव संध्योपासनस्य कालः। यदुक्तम्—"अहो

रात्रस्य योगे सन्ध्यामुपासीत" उभयोः संध्ययोर्नैसर्गिकी शान्तिर्भवति। अतः स्ववसरोऽयं ब्रह्मध्यानस्य।

सन्ध्योपासनालाभः। "उद्यन्तमस्तं यान्तमादित्यमभि-ध्यायन् कुर्वन् ब्रह्मणो विद्वान् सकलं भद्रमाश्नु॥ (तै० आ०)

यदह्ना कुरुते पापं तदह्ना प्रतिमुच्यते।

यद् रात्र्यात्कुरुते पापं तद्रात्र्यात्प्रतिमुच्यते॥ (तै० आ०)

पूर्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति।

पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम्॥ (मनु० २। १०२)

अस्मिन्नित्यकर्मणि यानि प्राणायामाचमनोपस्थानजपादीनि कर्माणि विहितानि तानि सर्वथा प्रत्यक्षलाभदायकानि।

तत्र प्राणायामेन—पूरकावस्थायां शुद्धस्य वायोः (Oxygan) अन्तः पूरणात् रेचने नान्तर्गतस्य दूषितस्य वायो (Carbonic acid gas) र्बहिर्निर्गमनाद्रक्तशुद्धिः पार्श्वलबवृद्धिश्च जायते। रक्तशुद्ध्या तद्विकारोद्भवा रोगा नश्यन्ति। पार्श्वलबवृद्ध्या च पार्श्वशूल (Neumonia) राजयक्ष्मादयो (Thisis) घातका रोगा नाभिभवन्ति।

आचमनेन—परिमितस्य निर्मलजलस्य प्रातः पानं कफ-वात-पित्त वैषम्यदोषानपाकरोति। कोष्ठबद्धता (कब्ज़ी) मुन्मोचयति मनः प्रसन्नतां च जनयति। यदायुर्वेद (उषापान) इति नाम्ना प्रसिद्धम्।

उपस्थानेन—सूर्योपस्थितया (Sun Bath) स्नाननिर्मलीभूत शरीरान्तवर्तिरोमकूपमार्गेण रविकिरणप्रवेशाद् रक्तशुद्धिरस्थिस्थैर्यं रोगोत्पादक किटाणु (germs) नाशश्च भवति।

जपेन तु—भगवत्स्मरेणान्तः शुद्धिः परमसुखलाभश्च। किं बहुना सन्ध्योपासनयैहिकामुष्मिकसुखलाभः। अतोहि प्राणायामादिकर्मस्वेतान् गुणान् विमृशद्भिः पाश्चात्यैर्भिषग्वरैस्तेषामुपयोगोऽत्यावश्यकः स्वास्थ्यहेतुश्च निर्णीतः। ये तु प्रमादादालस्यादश्रद्धया वा शरीराधार भूतंमुख्यं नित्यकर्मोपेक्षन्ते ते बहुभिः प्रत्यवायैः

प्रबाध्यन्ते। "नित्यस्याकरणे प्रत्यवायः" इत्युक्तत्वात्। सन्ध्योपासनाहीनस्य द्विजकर्माचरणे नाधिकारः, यदुक्तं मनुना—

नानुतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः॥ (२।१०म)

तथा च श्रीदक्षः—

सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु।
यदन्यत् कुरुते कर्म न तस्य फलभाग्भवेत्॥

इत्याद्युक्तत्वादिदमत्यावश्यकं कर्म सदोपास्यम्। वेदविहित कर्माचरणे शैथिल्यादेवास्माकमीदृशी शोचनीयावस्था सञ्जाता। अतोऽस्य प्रधनावश्यककर्मणो यथापूर्वं प्रचारो भविष्यति, तथा धर्मधुरन्धरैः कृपया वा देशोन्नत्यै वा पूर्वाचार्यधर्ममर्यादापरिरक्षणाय वा दोषारोपभयेन वा प्रयतितव्यम्।

अत्र जम्बूकाश्मीरराजकीय-धर्मार्थविभागाध्यक्षमहानुभावैः स्वकीये विभागे प्रतिप्रान्तं प्रतिस्थानं तदधीनकार्यकर्तॄणां कृते संध्योपासनमत्यावश्यकमाज्ञप्तं, येनात्र चत्वारिंशद्वर्षदेशीया अपि सन्ध्योपासनामन्त्रान् पठित्वा कण्ठस्थीकृत्य च सन्ध्योपासनां कर्तुं प्रवृत्ताः। धर्मार्थविभागाधिकारिणामिदं कर्मातिप्रशंसनीयमस्ति। यद्येवं सर्वे धर्मानुरागिणः प्रयतेयुस्तर्ह्यचिरादेवास्माकं पुनरभ्युदयो भवेदिति शम्।

भद्रं पश्येम प्रचरेम भद्रं भद्रं वदेम शृणुयाम भद्रम्। तन्नो मित्रो वरुणो मामहान्ता मदितिः सिन्धुः पृथिवी उत द्यौः।

———

# धर्मे सर्वं प्रतिष्ठितम्

ले० पं०शिवनाथ शर्मा शास्त्री साहित्यभूषण: साहित्यमणि: श्रीनगर काश्मीर

खलु जगति सर्वो भूतसंघात उभयलोक संसिद्ध्यै यं कञ्चिद्धर्ममवलम्ब्य जगत्यां दरीदृश्यते। किञ्च—"ज्योतींषि यद्दिवि चरन्ति यदन्तरिक्षे सूते पयांसि यदहिर्धरणीं च धत्ते। यद्वाति वायुरनलो यदुर्चिरास्ते तत्सर्वमेव हि सदा किल धर्मनिष्ठम्॥" सत्येवं? मर्त्या धर्मभाजो धर्मनिष्ठा वा किं न भवेयुः। तत्र मुनीनां धर्मतत्त्वप्रदर्शकानां बहुत्वात्तन्निर्दिष्टधर्मस्यापि वेदान्त-न्याय-सांख्य-योग शैव-शाक्त-पाशुपतादि मतनामान्तराद्बहुविध्यमस्ति। तत्तन्मतानुयायिनस्तत्तन्मतसरणिमुररीकृत्य तत्तद् धर्मेण धृता विध्यन्ते। धर्ममार्गप्रवर्तकानां मध्ये श्रेष्ठकक्ष्यावर्तमानो धर्मधुरन्धरो मीमांसादीपप्रकाशप्रकाशस्तत्र भगवाञ्जैमिनिरपि स्वमतानुभूतं मीमांसाधर्ममुपदिदेश। तस्य सकलस्य यथा गतार्थभूतं स्वल्पकर्गलपत्र्व्ययेन मीमांसासारं पाठकमहाशयानां पुरस्तादुपढौकयामि।

## अथातो धर्म जिज्ञासा।

'अथ' शब्दो वेदाध्ययनानन्तर्य वचनः, 'अतः' शब्दो वेदाध्ययनस्य दृष्टार्थत्वं ब्रूते "स्वाध्यायोऽध्येतव्यः" अर्थज्ञानरूपफलत्वाज्जिज्ञासा कार्या। अथ को धर्मः? अत आह—"वेदप्रतिपाद्यप्रयोजनवदर्थो धर्मः यागादिः, यजेत स्वर्ग कामः। यजेतेति गम्यतेऽत्र धातुप्रत्ययौ तस्य द्वावंशौ लिङ्गमाख्यातत्वमुभाभ्यां, भावनाभवितुर्भावनानुकूलो भावयितुर्व्यापारविशेषः।

सा द्विधा शब्दभावना आर्थी च। पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषोऽलिङ्गांशेनोच्यते, सा चांशत्रयमपेक्षते साध्यं साधनमिति कर्तव्यता किं भावयेत् केन भावयेत् कथं भावयेत्। प्रयोजनेच्छाजनितक्रियाविषयव्यापार आर्थी भावना। साध्यं स्वर्गादि, साधनं यागादि इति, कर्तव्यता प्रयाजादि। अपौरुषेयं वाक्यं वेद

विधिमन्त्रनामधेयनिषेधार्थवादभेदात्पञ्च विधः। अज्ञातज्ञापको वेदभागो विधिः, यजेत स्वर्गकामः। यत्र कर्ममानान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्रं विधत्ते, दध्ना जुहोति। यत्र तूभयं प्राप्तं तत्र विशिष्टं विधत्ते, सोमेन यजेत सोमविशिष्टयागविधानम्। विधिश्चतुर्विधः—उत्पत्तिविधिर्विनियोगविधिरधिकारविधिः, प्रयोगविधिः। कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः अग्निहोत्रं जुहोति। अङ्गप्रधानसम्बन्ध बोधको विधिर्विनियोगविधिः, दध्ना जुहोति। एतस्य विधेः सहकारिभूतानि षट् प्रमाणानि श्रुतिलिङ्गवाक्यप्रकरण समाख्यानि। निरपेक्षो रवः श्रुतिः, सा त्रिविधा विधात्री अभिधात्री विनियोक्त्री। आद्या लिङ्ग्याद्यात्मिका, द्वितीया व्रीह्यादि श्रुतिः। यस्य च शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते सा विनियोक्त्री। सा त्रिधा विभक्तिरूपा, एकाभिधानरूपा,एकपदरूपा। विभक्तिश्रुत्या यागाङ्गत्वं, व्रीहिभिर्यजेत। द्वितीया पशुना यजेत। एकत्वपुंस्त्वयोरेकाभिधानेनाङ्गत्वं यागस्य। ऐन्द्र्या गार्हस्पत्यमुपतिष्ठेतेति। द्वितीयश्रुत्या गार्हस्पत्योपस्थानम्। शब्द सामर्थ्यं लिङ्गम्। यथाहुः—सामर्थ्यं सैव शब्दानां लिङ्गमित्यभिधीयते।" इति सामर्थ्यं रूढिरेव नतु समाख्या, अतो नाभेदः। बर्हिर्देवसदनं, दामि कुशलवणाङ्गत्वं न तूलपाद्यङ्गत्वं, एवमन्यत्रापि विनियोगो ज्ञेयः। समभिव्याहारो वाक्यम्। समभिव्याहारश्च साध्यत्वादि वाचकद्वितीयाद्यभावेऽपि शेषशेषिवाचकयोः सहोच्चारणात्। यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति। पर्णता जुह्वो समभिव्यहारादेव पर्णताया जुह्वङ्गत्वम्, यत्र समग्राङ्गोपदेशः सा प्रकृतिः। दर्शपूर्णमासादि, तत्प्रकरणे सर्वाङ्गपाठात्। यत्र न समग्राङ्गोपदेशः सा विकृतिः। सौर्यादिः, तत्र कतिपयाङ्गानामतिदेशेन प्राप्तत्वात्. अनारभ्यविधिः सामान्यविधिः। इन्द्राग्नी इदं हविः, एकवाक्यत्वाद्दर्शाङ्गत्वम्। उभयाकाङ्क्षा प्रकरणम्। उपकार्यां दर्शपूर्णमासादि, उपकारकाकाङ्क्षास्वर्गादि, समिधो यजति। शब्दभावनाफलयोरनिर्देशात्। प्रकरणं

द्विविधं, महाप्रकरणमवान्तरप्रकरणम्। मुख्यभावना सम्बन्धि प्रकरणं महाप्रकरणम्। प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम्। अङ्गभावना सम्बन्धि प्रकरणमवान्तरप्रकरणम्। अभिक्रमणादीनां प्रयाजाङ्गत्वं सन्दंशेन ज्ञायते। एकाङ्गानुवादेन विधीयमानयोरप्यङ्गयोरन्तराले विहितत्वं सन्दंशः। यथा अभिक्रमणादीनाम्। अङ्ग इति प्रसिद्धः। देशसामान्यं स्थानम्। तद्द्विविधम्, पाठसादेश्यं-अनुष्ठानसादेश्यम्। आद्यं द्विविधम्, यथासंख्यपाठः सन्निधिपाठश्चेति। ऐन्द्राग्नमेकादशकपालं निर्वपेत्। वैश्वानरं द्वादशकपालं निर्वपेत् यथासंख्यस्थानेन वाक्यम्। सन्निधिपाठश्च दार्शपौर्णमासादि, तत्र सर्वकर्मण अन्यापेक्षा। प्रकृतिवद्विकृतिकार्येत्यतिदेशेन। समाख्या यौगिकः शब्दः। सा द्विविधा लौकिकी वैदिकी, यथा होतृचमसः होतुश्चमसः। आध्वर्यवम् अध्वर्योरिदमाध्वर्यवम्। एवं संक्षेपतो निरूपितानि षट् प्रमाणानि। दर्शपूर्णमासाभ्यां यजेतेत्यङ्गानि द्विविधानि, सिद्धरूपाणि क्रियारूपाणि, जातिद्रव्यसंख्यादीनि क्रियारूपाणि, द्विविधानि गुणकर्माणि प्रधानकर्माणि तच्च दृष्टार्थमदृष्टार्थमवघातादि, प्रोक्षणादि पशुपुरोडाशादि संक्षेपतो विनियोगविधिः।

प्रयोगप्राशुभाव सम्बन्धबोधको विधिः प्रयोगविधिः। अङ्गानां क्रमबोधको विधिः प्रयोगविधिरित्यपि लक्षणम्। क्रमो नाम विततिविशेषः पौर्वापर्यरूपो वा, तत्र षट् प्रमाणानि श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यानि, क्रमपरं वचनं श्रुतिः तद्द्विविधं केवलक्रमपरं, तद्विशिष्टपदार्थपरं, वेदं कृत्वा वेदिं करोति। यत्र प्रयोजनवशेन क्रमनिर्णयः स अर्थक्रमः, अग्निहोत्रं जुहोति, यवागूं पचति। यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन क्रमः। पदार्थबोधकवाक्यानां क्रमः पाठक्रमः। यथाप्रत्ययं च पदार्थानामनुष्ठानम्। स च द्विधा मन्त्रपाठो ब्राह्मणपाठः। आग्नेयाग्निषोमेयं प्रयोगाद्बहिर्वेदं कार्यम्। स्थानं नामोपस्थितिः। ज्योतिष्टोमे त्रयः पशुयागाः। अग्नीषोमेयः, सवनीयः, आनुबन्ध्य इति। प्रधानक्रमेण योऽङ्गानां क्रमः

स मुख्यक्रमः। द्वितीयादिपरार्थानां प्रथमानुष्ठितपदार्थक्रमाद्यः क्रमः स प्रवृत्तिक्रमः निरूपितः षड्विधकर्मनिरूपणेन प्रयोगविधिः।

कर्मजन्यफलसाम्यबोधको विधिरधिकारविधिः—यजेत स्वर्गकामः। स्वर्गमुद्दिश्य यागं विदधतानेन स्वर्गकामस्य यागजन्य फलभोक्तृत्वं प्रतिपाद्यते। प्रयोगसमवेतार्थस्मारकाः मन्त्राः। नानासाधनसाध्यक्रियायामेकसाधनप्राप्ता अप्राप्तस्यापरसाधनस्य प्रापको विधिर्नियमविधिः। यथाहुः—

"विधिरन्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्रा चान्यत्र चाप्राप्तौ परिसंख्येति गीयते ॥१॥

प्रमाणान्तरेणाप्राप्तस्य प्रापको विधिरपूर्वविधिः—यजेत स्वर्गकामः। पक्षे प्राप्तस्य प्रापको विधिर्नियमविधिः—व्रीहीनवहन्ति, अपूर्वार्थं विधिः। उभयोश्च युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसंख्याविधिः। पञ्च पञ्चनखा भक्ष्याः, रागप्राप्तनियमप्राप्ता पञ्चनखभक्षण निवृत्तिपरा। सा द्विधा श्रौती लाक्षिणिकी। पञ्च पञ्चनखा भक्ष्याः प्रसिद्धा श्रौती, लाक्षिणिकी अत्रैवेतरनिवृत्तिवाचकपदाभावात्। एषा त्रिदोषग्रस्ता। श्रुतहानिरश्रुतकल्पना प्राप्तबाधः। श्रुतपञ्चनखभक्षणहानाद् अश्रुतपञ्चनखभक्षणनिवृत्तिकल्पनात् प्राप्तस्य पञ्चनखभक्षणस्य बाधात्। नामधेयं च निमित्तचतुष्टयात्। उद्भिजा यजेत पशुकामः, उद्भिद्विना यागेन मत्वर्थलक्षणाभावात्। चित्रया यजेत पशुकामः, कर्मनामधेयत्वं वाक्यभेदभयात्। अग्निहोत्रं जुहोति, कर्मनामधेयत्वं तत्प्रख्यशास्त्रात्, श्येनाभिचरन्यजेत, श्येनशब्दस्य कर्मनामधेयत्वं तद्व्यपदेशात्। तद्बाधकं द्विविधं, तस्य व्रतमित्युपक्रमो यथा—नेक्षेतोद्यन्तमादित्यम्। विकल्पप्रसक्तिः याजतिषु येयजामहं करोमि नानुयाजेषु। प्राशस्त्यनिन्दान्यतरपरं वाक्यमर्थवादः। स्वर्गकामो यजेत्, सद्विविधः—विधिशेषो निधिशेषश्चेति। वायव्यं श्वेतमालभेत भूतिकामः। वायुर्वै क्षेपिष्ठो देवता। बर्हिषि रजतं न देयमिति विधिनिधिशेषे नार्थवादः। सत्रेधा—विरोधो गुणवादः

स्यादनुवादेऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः। आदित्यो यूपः, यूपे आदित्याभेदस्य प्रत्यक्षबाधितत्वादादित्यवदुज्ज्वलत्वरूपगुणोऽनेन लक्षणया प्रतिपद्यते । प्रमाणान्तरावगतोऽर्थबोधकोऽनुवादः । "अग्निर्हिमस्य भेषज"मिति हिमविरोधित्वस्याग्नेः प्रत्यक्षावगत्वात् । प्रमाणान्तरविधि तत्प्राप्तिरहितार्थबोधकोऽर्थवादो भूतार्थवादः । यथेन्द्रो वृत्राय वज्रमुदयच्छत् । यजेत स्वर्गकामः इति। सोऽयं धर्मो यदुद्दिश्य विहितस्तदुद्देशेन क्रियमाणस्तद्धेतरेश्वरार्पणबुद्ध्या क्रियमाणस्तु निश्रेयसहेतुरिति शिवम् ।

---

# अन्त्यजानां मन्दिर प्रवेशोऽनधिकारः

## २

( पूर्वतोऽनुवर्तते )

( श्री दीनानाथ शर्मा शास्त्री, स० ध० कालेज, अध्यापकः मुलतानस्थः )

'सूतम्' यजुः ३० । ६ क्षत्रियाद् ब्राह्मण्यां जातं परासुव । 'अन्तकाय श्वनिनम्' ३० । ७ हिंसक तथा कुत्ते के पालने वाले चाण्डालादि को दूर बसावें, इति दयानन्दभाष्यम् । अत्र श्वनिनमितिपदेन चाण्डालस्य ग्रहणं समूलकम्, तथा च मनुः—( चाण्डालश्वपचानान्तु बहिर्ग्रामात् प्रतिश्रयः । अपपात्राश्च कर्त्तव्या धनमेषां श्वगर्द्दभम्, १०।५१ 'न तैः समयमन्विच्छेत् पुरुषो धर्म्ममाचरन्, मनु० १० । ५३ । यद्येवं वेदेन तदनुसारिणा मनुना च चाण्डालादीनां बहिर्निवासनं प्रोक्तम्, सुधारकाऽग्रणीः स्वा० दयानन्दोऽपि यमर्थं स्वयमनुवदति, तर्हि तत्रैवं कथनं यद्—वेदे न क्वाऽपि भेदवाद, इति महताऽऽटोपेन लेखनञ्च वक्तुर्लेखकस्य च साहसं वेदाऽदर्शनञ्चोपोद्बलयति । एवन्तु भवन्तो यत् किमपि कुर्वन्तु—भवत ≈ को रुणद्धि; परन्त्वत्र वेदानां स्मृतीनां पुराणानां वा नाम न मलिनयन्तु,यत्–तत्राऽभेदवादो लिखित इति । अस्पृश्येष्वपीदृश्यो जातयो या मिथः स्पर्शं न कुर्वन्ति, तर्हि तास्वेव स कलङ्कः कथमारोप्यते ?

अत्र विषये स्वा० दयानन्दस्याऽपि स्पष्टशब्दाः श्रोतव्याः—

'जैसे अन्त्यजों की दुर्गन्ध के सहवास से पृथक् रहने वाले बहुत अच्छे हैं; जैसे अन्त्यजों की दुर्गन्ध के सहवास से निर्मल बुद्धि नहीं होती, वैसे तुम और तुम्हारे संगियों की भी बुद्धि नहीं बढ़ती, सत्यार्थप्रकाश १२ पृ० ५७८ (गु०) स्वाम्यनुयायिनः सावधानं पठन्त्विदं वचनम्। केचिच्च महाशया अभेदवादस्योद्घोषणं कृत्वा तैस्सह सहभोजादिकमपि चिकीर्षन्ति, अकुर्वंश्च अजमेरादिके; तेऽपि स्वस्वामिनः स्पष्टं वचनं शृण्वन्तु—

(प्रश्न) कहो जी, मनुष्य-मात्र के हाथ की की हुई रसोई के खाने में क्या दोष है; क्योंकि—ब्राह्मण से लेके चाण्डालपर्य्यन्त के शरीर हाड़मांस चमड़े के हैं, और जैसा रुधिर ब्राह्मण के शरीर में है, वैसा ही चाण्डालादि के, पुनः मनुष्यमात्र के हाथ की पकी हुई रसोई के खाने में क्या दोष है?

(उत्तर) दोष है, क्योंकि—जिन उत्तम पदार्थों के खाने-पीने से ब्राह्मण और ब्राह्मणी के शरीर में दुर्गन्धादि दोष रहित रजवीर्य उत्पन्न होता हैं, वैसा चाण्डाल का शरीर दुर्गन्ध के परमाणुओं से भरा हुआ होता है, वैसा ब्राह्मणादि वर्णों का नहीं, इसलिये ब्राह्मणादि उत्तम वर्णों के हाथ का खाना, और चाण्डालादि नीच भंगी चमार आदि का न खाना। भला जब कोई तुम से पूछेगा कि—जैसा चमड़े का शरीर माता, सास, बहिन, कन्या, पुत्रवधू का है, वैसा ही अपनी स्त्री का भी है, तो क्या माता आदि स्त्रियों के साथ भी स्वस्त्री के समान वर्तोगे? तब तुम को संकुचित होकर चुप ही रहना पड़ेगा। जैसे उत्तम अन्न हाथ और मुख से खाया जाता है, वैसे दुर्गन्ध भी खाया जा सकता है, तो क्या मल आदि भी खाओगे? क्या ऐसा भी कोई हो सकता है, पृ० ३३५ (गु०)।

'शूद्र के पात्र तथा उसके घर का पका हुआ अन्न आपत्काल

के बिना न खावें।......आर्यों के घर जब ( शूद्र ) रसोई बनावें, तब मुख बांध के बनावें, क्योंकि—उनके मुख से उच्छिष्ट और निकला हुआ श्वास भी अन्न में न पड़े, पृ० ३२६ ( गु० )। इयं श्वासाऽपवित्रताया × कथाऽस्ति शूद्रस्य; तदा चाण्डालादिकस्य तु का कथा?

'( इन्होंने ) अंगरेज़, यवन, अन्त्यजादि से भी खाने पीने का भेद नहीं रक्खा। इन्होंने यही समझा होगा कि—खाने-पीने और जाति भेद तोड़ने से हम और हमारा देश सुधर जायगा; परन्तु ऐसी बातों से सुधार तो कहां, उलटा बिगाड़ होता है। पृ० ४८० (गु०)।

कीदृशाः स्पष्टशब्दाः, सुधारकैः स्वनेतुरिमे शब्दा अवधेयाः।

'( प्रश्न ) देखो—युरोपियन लोग......होटल में सब के हाथ का खाते हैं—इसीलिये अपनी बढ़ती करते जाते हैं।

(उत्तर)—यह तुम्हारी भूल है, क्योंकि—मुसलमान, अन्त्यज लोग सब के हाथ का खाते हैं, पुनः उनकी उन्नति क्यों नहीं होती?' पृ० ४८१ गु०।

अन्यान्यपि स्वा० दयानन्दस्यैतद्विषये बहून्युद्धरणानि; यान्युपस्थापयितुं शक्यन्ते। स्वा० दयानन्द आधुनिकयुगस्य वैदिकः प्राचीनतापरिष्कर्त्ता च मन्यते तदनुयायिभिः; तर्ह्यद्यत्वे कथं तदनुयायिनस्तद्वचनान्युपेक्षन्ते? कथं वा स्वयं निन्दितानां विषसम्पृक्ताऽन्नसदृशत्वेन च व्यपदिष्टानां पुराणादीनां स्वयमाश्रयं ग्रहीतुं तेऽद्यत्वे उत्कलिकाकुला दृश्यन्ते? स्वा० दयानन्दो द्विजबालकानां शूद्रबालकानाञ्च पाठशालामपि भिन्नां भिन्नां मन्यते, किम्पुनश्चाण्डालादिबालकानां द्विजबालकैस्सह पठनं रोचयेत? हन्त? कीदृक्षमिदं वैषम्यम्? तस्य शब्दा अमी—

'२ वें वर्ष के आरम्भ में द्विज अपने सन्तानों का उपनयन करके आचार्यकुल में......भेज दें और शूद्रादिवर्ण उपनयन किये बिना, विद्याभ्यास के लिये गुरुकुल में भेज दें, पृ० ३४ गुटका।

अत्र स्वा० दयानन्दो द्विजसन्तानानां पठनाय 'आचार्य्यकुलम्' आज्ञापयति, शूद्रसन्तानांश्च गुरुकुले पठनाय प्रेरयति। हंहो! कीदृशो भेदभावः स्वामिनाऽप्याज्ञप्तः। न जाने! तदनुयायिनस्तदाचरणं कुर्व्वन्ति नो वा?

वेदाऽनुसारिणी मनुस्मृतिश्चाण्डालादीनां स्पर्शमपि निषेधति, तदुक्तम्—'घ्राणेन सूकरो हन्ति पक्षघातेन कुक्कुटः। श्वा तु दृष्टिनिपातेन, स्पर्शेनाऽवरवर्णजः' मनु० ३। २४१ अवरवर्णजश्चाण्डालादिरित्यर्थः, स्पर्शेन हन्ति। कीदृशाः स्पष्टशब्दाः। कथं वेदानुसारिणी सा स्मृतिर्वैषम्यवादं वदति? तत्रेदमेव कारणम्, यद्—वेदे साम्यवादो नाऽस्ति, अथवेदमेव वाच्यम्—भिन्न-भिन्न जातीनां मिथः साम्यवादोऽवैदिकः। मनुना केवलं जीवन एव न, मरणेऽपि शूद्रस्पर्शो निषिद्धः। तथा च—'न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण नाययेत्। अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता' मनु० ५। १०४। गोभिलगृह्यसूत्रे शूद्रगृहाद् अग्न्यानयनमपि नादिष्टम्; तथा च—'आगाराद् ब्राह्मणस्य वा, राजन्यस्य वा, वैश्यस्य वा, १। १। ६ एतदेवाऽभिलक्ष्य स्वा० दयानन्देनाऽपि 'संस्कारविधौ' पृ० २४ ब्राह्मण क्षत्रिय वा वैश्य के घर से अग्नि ला······अग्न्याधान करे, इति लिखितम्, इतोऽधिको भेदवादः कोऽन्यो भवेत्? 'यथेमाम्' यजुः २६। २ इति मन्त्रे स्वा० दयानन्देन 'अरणाय—अन्त्यज के लिये इत्यर्थं कृत्वा सोऽन्त्यजश्शूद्रादपि भिन्नो मतः; तर्हि तस्य भेदवादे का नाम कथा? अतएव—'दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकां तथा। शवं तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुध्यति, मनु० ५। ८५ दिवाकीर्त्तिः—चाण्डालः, तत्स्पर्शे सति स्नानेन शुद्धिरुक्ता। इत्थं शीतकालेऽपि वयं स्नानकष्टं स्वयमेव कुर्म्मः; चाण्डालेभ्यस्तत्—कष्टं न प्रदद्मः; परंत्वात्मनोऽस्पृश्यानां हितैषिणो मन्यमानाः सुधारकाः परमचतुराः; ते स्वयं तु तत्स्पर्शेन शीते स्नानादिकष्टं नेच्छन्ति; परं तानादिशन्ति यद्—भवन्तः स्नानादिकं कृत्वाऽस्माभिस्सह स्पृशन्तु? धन्येयं तद्धितैषिता!

'पञ्चजना मम होत्रं जुषध्वम्' ऋ० १०।५३।४ इतिमन्त्रमुप न्यस्य श्रीविश्वदेवशास्त्रि-महोदयेन तस्य स्पष्टता न कृता, तत्र निरुक्ते ३।८।१ पञ्चजनाः—इत्यस्य 'गन्धर्व्वाः पितरो देवा असुरा रक्षांसि' त्येके—इति बहुसम्मतोऽर्थो लिखितः। किं श्रीमान् इममर्थं मनुते। यदि न—तत्र किं कारणम्? 'चत्वारो वर्णा निषादः पञ्चमः इत्यौ पमन्यवस्यैकाकिनो मतम्' नामग्रहणादरुचिः सूच्यते। तर्हि कथं कस्याऽर्थो मन्येत? अथवा मन्येताऽपि; तर्ह्यत्र किं नश्छिद्यते- निषादश्चाण्डालो न भवति—'ऋक्षीकाभ्यो नैषादम्' यजुः ३०।८ वायवे चाण्डालम्' यजुः ३०।२९ इति। 'कुलालवरुडकर्म्मार(निषादचाण्डाल मित्रामित्रेभ्यश्छन्दसि' इति ५।४।३६ सूत्रस्थवार्त्तिकेन स्वार्थिकाऽण् प्रत्ययान्तयोः, निषादचाण्डालयोः पार्थक्येन ग्रहणम्। निषादोऽनुलो मजो भवति, चाण्डालस्तु प्रतिलोमजः। 'तस्माद् बीजं प्रशस्यते' मनु० १०।७२। 'बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते। सर्व भूतप्रसूतिर्हि बीजलक्षणलक्षिता, मनु० ९।३५, 'यादृशं तूप्यते बीजं क्षेत्रे कालोपपादिते। तादृग् रोहति तत्तस्मिन् बीजं स्वैर्व्यञ्जितं गुणैः ९।३६ 'इयं भूमिर्हि भूतानां शाश्वती योनिरुच्यते। न च योनिगुणान् कांश्चिद् बीजं पुष्यति पुष्टिषु॥ ९।३७ 'अन्यदुप्तं जातमन्यदित्येतन्नोप पद्यते। उप्यते यद्धि यद् बीजं तत् तदेव प्ररोहति, मनु० ९।४० —इत्युच्चवर्णपितुर्हीनवर्णा-मातर्य्युत्पन्नस्याऽनुलोमजस्य, हीनवर्ण बीजाद् उच्चवर्णक्षेत्रे जातस्य प्रतिलोमजस्याऽपेक्षया श्रेयस्त्वं भवति प्रतिलोमजः, तत्राऽपि चाण्डालस्तु अत्यन्ताऽधमो मतः, तथाच- 'चण्डालश्चाधमो नृणाम्, मनु० १०।१२, १०।१६ 'चाण्डालश्च नराऽधमः १०।२६ 'यथैव शूद्रो ब्राह्मण्यां बाह्यञ्जन्तुं प्रसूयते' मनु० १०।३० तेन चाण्डालादिकानां यज्ञसेवनेऽनधिकारः, यतस्ते 'शूद्राणां तु सधर्म्माणः' मनु० १०।४१। परन्त्वनुलोमजास्तु तथा न निषिद्धाः अत उक्तम्—'सजातिजाऽनन्तरजाः षट् सुता द्विजधर्म्मिणः' मनु० १०।४१। केवलं ते "स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्

सदृशानेव तानाहुर्मातृ—दोषविगर्हितान् ॥ मनु० १०।६ इत्यादिना मातृदोषमात्रविगर्हिताः, अतएव तेषां सर्व्वविधास्त्वधिकारा न भवन्ति, परन्तु यज्ञाऽऽगमनमात्रं न निषिद्धम्, अतएव—'तावुभावप्यसंस्कार्य्याविति धर्म्मो व्यवस्थितः। वैगुण्याज्जन्मनः पूर्व्व उत्तरः प्रतिलोमतः' ॥ मनु० १०।६८ इति तस्योपनयनादिकं निषिद्धम्, तेन यज्ञादिकरणस्य नाऽधिकारः, परं तत्राऽऽगमनमात्रं न निषिद्धम्। एवं शूद्रस्याऽपि; तैस्तु स्वस्वनियत-सेवामात्रमेव कर्त्तव्यम्भवति. 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' कृष्णयजुर्व्वेदे। न वै देवाः सर्व्वेण संवदन्ते। ब्राह्मणेन वा क्षत्रियेण वा वैश्येन वा, ते हि यज्ञियाः, शत० ३।१।१।१० इत्यादिना पूर्व्वोक्तं सिद्ध्यति। यत्तु निरुक्ते—निषादस्य निषण्णमस्मिन् पापकमिति निर्व्वचनं कृतम्, तस्याऽयं भावः यद्—'उभयं तु समं यत्र सा प्रसूतिः प्रशस्यते'। मनु० ९।३४ 'सुबीजञ्चैव सुक्षेत्रे जातं सम्पद्यते यथा। तथाऽऽर्य्याज्जात आर्य्यायां सर्व्वं संस्कारमर्हति. मनु० १०।६९ 'सर्व्ववर्णेषु तुल्येषु पत्नीष्वक्षतयोनिषु। आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते ॥ मनु० १०।५ सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्म्मणि। कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः ॥ मनु० ३।१२—इति कामतः प्रवृत्तत्वान्निषादे सवर्णाऽपेक्षया न्यूनाऽऽदरणीयता। तेनोक्तमन्त्रेण न काऽपि भ्रान्तिः, नच चाण्डालादिकानां तत्र साम्यवादः! प्रेमवादोऽन्यो भवति, शास्त्रीयव्यवहारोऽन्यो भवति, किं पुरुषस्य स्वस्त्रिया सह प्रेम न भवति, परं नैमित्तिकाऽस्पृश्यत्वे (रजस्वलात्वे) स स्वस्त्रियाऽपि न व्यवहरति, स्वा० दयानन्देन त्वेतत्पर्य्यन्तं संस्कारविधौ लिखितम्—'रजस्वला के हाथ का छुआ पानी भी न पीवे। पृ० ३९। तर्हि वंशपरम्पराप्राप्ताऽस्पृश्यताकैर्यदि न व्यवह्रियते; तर्ह्यत्र का नाम घृणा? घृणा तु सुधारकाणां सनातनधर्म्मिब्राह्मणेभ्य एव भविष्यति, चाण्डालादिके कथं स्यात्?

स्वार्थपरम्परया पश्चाज्जन्मप्राधान्यमेव मत्वा भेदबीजमवापुः,

लिखत्यग्रे विश्वदेवमहोदयः । सोऽस्मासुस्वार्थाक्षेपं न करोतु, किन्तु वेदादिके तदनुसारि-मनुस्मृतौ, परमात्मनि वा। न जाने परमात्मनि कः स्वार्थं ईदृशः प्रापप्तत्, यो ब्राह्मणं मुखादुदपादयत्, शूद्रञ्च पादाज्जनितवान्। भवन्तश्च पादं शिरसि स्थापयितुमीहन्ते, शिरश्च छित्वा पादस्थाने सन्धित्सन्ति। सन्दधतु, परं तादृक्त्वे विराड्रूपपुरुषस्य गतिरपि द्रष्टव्या भविष्यति, या मरुत्तरादिक्रमप्यतिक्राम्यन्ती भवेत्। प्रथमतो निजबाबूमण्डल एव शूद्रो निर्म्मेयो भविष्यति, यो विदेशीय-भाषाराश-प्रवणो वेदं पश्यत्येव न, पठनस्य तज्ज्ञानस्य तु कैव कथाऽऽस्ताम्। किं स (बाबूमण्डलः) एतत्स्वीकरिष्यति ?

वैदिक काले यदि मन्दिरनिर्माणपद्धतिर्मूर्त्तिकल्पना वा नाऽऽसीदित्युच्यते, तर्हि पूनर्वेदविरुद्धानि पुराणप्रमाणानि समुपस्थाप्य श्रीविश्वदेवशास्त्रिणा कथं स्वात्महननम् कृतम् ? । किं श्रीमतीयो वेदविश्वासोऽधुना व्यपगतः ? । यदि व्यपगतः, पुराणानि च प्रमाणानि मन्यन्ते; तर्हि श्रीमतेतावल्लेखं लिखित्वा एकं पृष्ठं कथं कलुषितम् ?

हन्त ! कथयन्ति—वेदे मन्दिरनिर्माणकल्पना नाऽस्ति, कृपया वेदे दृष्टिपातन्तु विदधतु । इष्टापूर्त्ते सꣳसृजेथाम्' यजुः १५।५४ इति मन्त्रे इष्टापूर्त्तनिर्म्माणं विहितम्। तत्र पूर्त्तस्य च लक्षणमत्र स्मृतौ श्रोतव्यम्—वापीकूपतडागादि देवतायतनानि च। अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते' अत्रि० ४५। 'इष्टापूर्त्तेन' इत्यथर्व्ववेदे १८।३।५८ पूर्तं—स्मृतिपुराणागमचोदितं वापी-कूप-तटाक-देवागारनिर्माणादि—इति सायणः । 'पूर्तं सुरालयाऽराम-कूपाजीव्यादिलक्षणम्' भागवतपुराणे ७।१५।४६ इति भवत्प्रमाणिते पुराणे, यदवश्यमन्तव्यं भविष्यति पुराणप्रमाणपक्षपातित्वात् अतः 'यत् पूर्त्तं याश्च दक्षिणाः तदग्निर्वैश्वकर्म्मणः स्वर्देवेषु नो दधत्' यजुः १८। ६४ इति पूर्त्तस्य देवपूजोपयोगित्वमुक्तम्। अत एव योनिष्टे इन्द्र ! सदने अकारि' सामवे० ३।९।२ अत्र इन्द्रस्य सदने मन्दिरे योनिः-स्थितिरुपलन्यते। 'कार्य्याणि देवतायतनानि च

म० ८ । २४८ देवतागारभेदकान् हन्यादेवाऽविचारयन्' मनु० ९ । २८० 'प्रतिमानाञ्च भेदकः, प्रतिकुर्य्याच्च तत्सर्व्वं पञ्च दद्याच्छतानि च' ६ । २८५ इति वेदाऽनुसारि-मनुस्मृतौ, ( यां स्वा० दयानन्दः—'क्योंकि—यह मनुस्मृति जो सृष्टि की आदि में हुई है—उसका प्रमाण है' सत्यार्थप्र० एकादशसमुल्लासारम्भे ३४१ पृष्ठे ( गु० ) इति वैदिककाले प्रणीतामाचक्षौ सुबहु-प्राचीनाञ्च मेने )—देवमन्दिर-निर्म्माण-मूर्त्ति पूजासत्ता सिद्ध्यति; तेन श्रीविश्वदेवस्याऽऽक्षेपो निर्म्मूलः।

अधुना मूर्त्तिपूजाबीजमपि वेदे श्रूयताम्—

'नमो मात्रे पृथिव्यै' यजुः ९ । २२ इति पृथिवीपूजा । 'शिला भूमिरश्मा पांसुः सा भूमिः, ...तस्यै...पृथिव्या अकरं नमः' अथर्व० १२ । १ । २६ * इत्यश्मादिकस्य, तदात्मक पृथिव्याश्च पूजा । 'नमोऽस्तु दैवाय प्रस्तराय' अ० १६ । २ । ६ इति देवसम्बन्धि-प्रस्तर-पूजा । 'ग्रावाणो ! अपदुच्छुनामपसेधत दुर्म्मतिम्' ऋ० १० । १७५ । २ इति ग्रावभ्यो दुर्म्मत्यपसरण प्रार्थना । 'ते वा एतेऽश्ममया ग्रावाणो भवन्ति' शत० ३ । ९ । ४ । २ । स्वा० दयानन्देन यजुः १ । १५ 'बृहद्-ग्रावाऽसि' इत्यस्याऽर्थः 'बड़े पत्थर हैं' इति कृतः । इत्यादि प्रमाणानि आधिक्येन मम मूर्तिपूजा-निबन्धे द्रष्टव्यानि । अधुनाऽप्येतत्साहसिक्यं भवितुं शक्नोति ? यद्देवमन्दिरनिर्म्माणप-द्धतिर्मूर्त्तिकल्पना च वैदिककाले नाऽऽसीत् ? 'सूर्यदेव-मूर्त्तिपूजा तु सृष्ट्यारम्भादेव, प्रत्युत वैदिककालादेव भवद्भिरपि मन्तव्यो भविष्यति; यामपह्नोतुं न कोऽपि शक्तः, वेदः स्पष्टमाचष्टे—"योऽसा-दित्ये पुरुषः सोऽसावहम्' इति यजुर्व्वेदस्याऽन्तिमो मन्त्रः । उद्यते नम उदायते नम उदिताय नमः' अ० १७ । १ । २२ 'अस्तं यते नमोऽस्तमेष्यते नमोऽस्तमिताय नमः' अ० १७ । १ । २३ इत्यादि ।

---

*अत्र २६ इति पङ्क्तः, विवाहविषयके मम गतलेखे बहुत्र पङ्क्स्थाने नवाऽङ्को मुद्रितः । एवमन्यत्राऽपि प्रमादा दृश्यन्ते प्रूफ शोधकानां शैथिल्यात् । ते स्वयं ज्ञेयाः ।

अधुना पुराणश्लोकानां व्यवस्था श्रूयताम्—श्रीमत्सम्प्रदाय जनाःप्राग् लिङ्गपूजनदर्शनस्योपहासं कुर्वन्ति स्म; अधुना त लिङ्गदर्शनाऽर्थं प्रेरयन्तीत्याश्चर्य-विषयः। अन्त्यजानां लिङ्गदर्श सनातनधर्म्मो न विरोधं समाचरति, परं नियमोऽयम्, यत्—त गर्भगृहस्थं वेदमन्त्रप्रतिष्ठापितञ्च न स्यात्। सनातनधर्मस्य मूर्ति पूजनमपि रहस्यमयम्, यदज्ञात्वा बहवो भ्रान्ता भवन्ति। काश्चि न्मूर्त्तयो ब्राह्मणादिभिः प्राणप्रतिष्ठाद्वारा प्रतिष्ठाप्यन्ते। कासु चि प्राणप्रतिष्ठा न भवति, यथा च ज्योतिर्लिङ्गानि स्वयं दिव्यशक्तिमन्ति काश्चिच्चलमूर्त्तयः, तासां यात्रा भवति, पुनस्संस्कारश्च। या मूर्त्तयः प्रतिष्ठापिता भवन्ति, ता यदि मूर्तीः प्रतिष्ठापकपुरुषादुच्चपदवीका प्रणमेयुः, यथा परमहंसा दण्डिस्वामिनः, तदाऽपि तत्र देवत्वं तिष्ठति (एतदर्थं पूजाविधि-प्रतिपादक-पुस्तकानां दर्शनमपेक्ष्यते) अ एव दण्डिस्वामिनस्ताभिः सह दण्डस्पर्शमात्रं कुर्वन्ति, न ता प्रणमन्ति। एवं तमोजन्माश्चाण्डालादयोऽमूः पश्येयुस्तदाऽपि त देवत्वं न तिष्ठति, अतएव तासां मूर्तीनां पुनश्शोधनं प्रतिष्ठा च क्रियते तदैव तत्र पूज्यत्वम्भवति। एवं यदि चाण्डालादयः काश्चिन्मू प्रतिष्ठापयेयुः, तर्हि तत्रोच्चपदवीको ब्राह्मणादिस्तां मूर्त्तिं न नमस्क रोति। परं या दिव्यज्योतिर्लिङ्गादिमूर्त्तयो भवन्ति, ता एतदपवा स्वरूपाः, तामुच्चकोटिका नीचकोटिका वा द्रष्टुं शक्ताः, परं चाण्डा लादीनां गर्भगृह प्रवेशनिषेधाद् मन्दिरस्यैकतः किञ्चिद् विशि स्थानं नियती-क्रियते, छिद्रादिकं वा तत्र किञ्चित् स्थाप्यते, येना न्त्यजादयोऽपि तद्दर्शनं कर्त्तुं शक्नुयुः, एवञ्च चलमूर्त्तयोऽपि भवन्ति तासां यात्रासमये सर्व्व एवाऽन्त्यजपर्य्यन्तास्तद्-दर्शनं कर्त्तुं शक्ताः यानि च ज्योतिर्लिङ्गानि वटादिवृक्षाणामधस्तात् स्थापितानि भवन्ति तानि सर्व्वे द्रष्टुं शक्ताः। यास्तु प्रतिष्ठापितसंस्कृतमूर्त्तयस्तत्र ता चाण्डालादि-कर्तृकदर्शं सर्व्वथा निषिद्धम्भवति, अतएव मन्दि स्योपरितनशिखरे तत्सदृशी मूर्त्तिः स्थाप्यते, येन दिदृक्षवोऽन

कारिणश्चाऽपि तद्-दर्शनं न कुर्य्युः । तद्-दर्शनेनाऽपि अन्त्यजानां तादृशं फलं मूर्त्तिपूजाविधि-प्रतिपादकपुस्तकेषु दृश्यते—, प्रतिलोमा-ऽन्त्यजातीनां स्तूपिं दृष्ट्वा समाचरेत्, अर्च्चनानवनीत० १०। 'दर्शनं गेहचूड़ाया दर्शनं गोपुरस्य च। अन्त्यजानां तथाऽन्त्यानां विज्ञेयं देवदर्शनम्' ॥ शैवसिद्धान्तरहस्ये। चाण्डालादयस्तु दूरे—मरणा-द्यशौचाऽवस्थायां वयमपि देवमन्दिरं गन्तुं न शक्नुमः, तर्हि येषा-मशुद्धता जन्ममूलिका, प्राक्तनकर्म्ममूलिका, तादृशपितृवीर्य्यमूलिका च, या स्नानादिभिरपि न दवयितुं शक्या, तर्हि तेषां तत्र प्रवेशः कथं सम्भवेत्। यद्येतदादिविषये शास्त्रवचनं प्रमाणं न मन्यते, यन्म-न्दिरशिखरादिदर्शनमेव तेषां पुण्यप्रदम्, तर्हि मन्दिरे प्रविश्यैवो-पासनया तेषां पुण्यम्—इत्येव कथनं कथं प्रमाणभूतं तेषाम्? अविश्वासो यदि सुधारकाणां जीवनम्, तर्ह्युभयत्रैवाऽविश्वासः कार्य्यस्तैः।

अथ च श्रीयुतशास्त्रिमहोदयेनेदं विचिन्त्यम्, यत्सनातन-धर्म्माणः कथं मन्दिर-प्रवेशाय निषेधन्तु ?। तेषान्तु-स्वधार्म्मिक-सिद्धान्त-प्रसरणेन महती प्रसन्नता भवेत्, स्वसिद्धान्तस्य विश्वव्या-पितया कस्य प्रसन्नता न भवति? ये आर्य्यसामाजिका मूर्त्तिपूजा-खण्डका आसन्, यैश्चैतद्विषयक-शास्त्रार्थेषु परस्सहस्राणां रूप्यकाणां व्ययः कृतः, त एव यदाऽन्त्यजानपि मूर्त्तिदर्शनाय प्रेरयन्ति, प्रत्युत स्वयमप्यधुना मन्दिराणि गन्तुं सन्त्युद्यताः, ये च मूर्त्तिपूजां वेद-विरुद्धां मन्यन्तेस्म, तेऽपि तत्पुष्टौ गुप्तरूपेण लेखनीं प्रचारयन्ति इति स्पष्टं सनातनधर्म्म-सिद्धान्त-विजयः, तर्हि कथं सनातनधर्म्मा-णोऽत्र निषेधन्तु। तथाऽपि यदा ते निषेधन्ति, तत्र कारणम्, यत्—तेन तेषां सिद्धान्तमर्य्यादायां भङ्गः समापतति। अन्त्यजाः स्वयं मूर्त्तिं स्वगृहे स्थापयन्तु—तान् को निषेधति? चित्ते भक्तिः, भावो वेष्यते, सर्व्वकार्य्याणि सिद्ध्यन्ति।

शास्त्रिमहाशयेन ये श्लोका उपस्थापिताः, तत्र प्रथम एव

श्लोके एतल्लिखितम्—'लिङ्गानि ज्योतिषाञ्चाऽत्र विद्यते मुनिसत्तमाः। तान्यहं कथयाम्यद्य श्रुत्वा पापं व्यपोहति' । १७ । किं शास्त्रिमहोदय एतच्छ्लोकं प्रमाणं मन्यते ? अत्र लिखितम् यज्ज्योतिर्लिङ्गनाममात्रमेव श्रुत्वा पापं नश्यतीति। यदि सनातनधर्म्मिणो मन्दिर-प्रवेशं विरुन्धन्त्यपि; तर्हि श्रीमन्त उक्तज्योतिर्लिङ्गानां नाममात्रमेव श्रावयन्तु, येनाऽन्त्यजानां पापक्षयः स्यात्। यदि भवन्तः 'श्रुत्वा पापं व्यपोहति' इति न मन्यन्ते; तर्हि तस्माञ्च दर्शनं चरेत्, इत्यस्य श्लोकस्याऽपि तदेव मूल्यम्। भवद्भिः २१-२२ २३-२४-२५-२६-२७ श्लोकाः कथं त्यक्ताः ? तस्मिन्नेव पुराणे शिवोऽष्टमूर्त्तिर्दर्शितो जल-वह्नि-यजमान-सूर्य्य-चन्द्र-भूम्याकाश-वायु-प्रभृतिभेदेन; तद्-द्वाराऽपीश्वरोपासना मता, इमां पूजान्तु न कोऽपि रुणद्धि। रोद्धुं वा शक्तः, भवन्त आसामेव मूर्त्तीनां-याः सनातनधर्म्मिणोऽपि पूजयन्ति-पूजनकृतेऽन्त्यजान् कुतो न प्रेरयन्ति ? मनसि यदि श्रद्धा, शास्त्रविश्वासो भक्तिश्च, तदा त्वेतद् द्वाराऽपि पूजा शास्त्रे दर्शिता, यदि श्रद्धा न, तर्हि मन्दिराऽभ्यन्तरे प्रविश्याऽपि पूजा न भवितुमर्हति। वस्तुतस्तु मन्दिराऽभ्यन्तरे प्रवेशाऽऽग्रहोऽप्येका राजनीतिः; यदेषां परस्परं-विरोधो भवतु सनातनधर्म्मिणाञ्च जगति निन्दा स्यात्। अद्य यदि सर्व्वे सनातनधर्म्मिणोऽन्त्यजानां मन्दिर-प्रवेशविरोधं त्यजन्तु; तर्हि तदीयमन्दिर-प्रवेशाऽऽग्रहं न कोऽपि कुर्य्यादित्यस्माकं विश्वासः।

तस्माद् यत्र पुस्तके लिङ्गादिदर्शनस्याऽपि वार्त्ता, तत्रेदमेव तात्पर्य्यम्, यद् अन्त्यजाः स्वप्रतिष्ठापितमूर्त्तिं द्रष्टुं नन्तुञ्च शक्ताः नाऽत्र कश्चित् सनातनधर्म्मस्य विरोधः। यश्च खलु—'सर्व्वे लिङ्गाऽर्चनादेव देवा दैत्याश्च मानवाः' इति श्लोक उद्धृता, तत्रेदं पृच्छ्यते किं देवा दैत्या अस्माकमेव मन्दिरेषु समागच्छन्ति लिङ्गार्चनं कर्त्तुम्? नहि-सर्वे स्वयमेव लिङ्गं प्रतिष्ठापयन्ति, स्वयञ्च पूजयन्ति। त्रैवर्णिकप्रतिष्ठापितं लिङ्गं त्रैवर्णिकानां कृते, अन्त्यजप्रतिष्ठापित-

श्चाऽन्त्यजानां कृते । प्रागस्माभिर्व्वेदप्रमाणैस्त्रैवर्णिकानां शूद्राऽन्त्यजादीनाञ्च वैषम्यं साधितम् अत्राऽपि तदेव ज्ञेयम् ।

'अपि वा यश्चाण्डालः शिव इति वाचं वदेत्, तेन सह संवदेत् तेन सह भुञ्जीत' इति श्रुतिरुद्धृता श्रीमता; परन्न लिखितम्, यत्—सा कस्मिन् पुस्तके वर्त्तते; केवलं कस्यचिट्टीकाकारस्य श्रुतिनामग्रहणेनैव सा श्रुतिर्न मन्तव्या भवति। केचिदीदृशा अप्येकदेशिक-सम्प्रदाया भवन्ति, येषां परिभाषा व्यवहाराश्च ऐकदेशिका भवन्ति, महाभाष्ये च एतादृशानां नाम—'पारिषदकृतिः' इति प्रसिद्धम् । सार्व्वलौकिक-व्यवहारास्ताननुसृत्य न भवन्ति, अत्र न्यायदर्शनस्य प्रमाणं सदा स्मरन्तु—'यज्ञो मन्त्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य, लोकव्यवहार-व्यवस्थापनं-धर्मशास्त्रस्य विषयः' न्यायदर्शन० ४ । १ । ६२ । अथ चाऽस्मदृक्षाणि वचनान्यर्थवादरूपाणि, विधेयस्तुतिमात्रतायां पर्यवस्यन्ति, न तु अक्षराऽर्थमात्रपर्य्यवसायीनि भवन्ति 'अपशवो वाऽन्ये गो-अश्वेभ्यः' इत्यादिवत् । यथाऽस्यैकमुदाहरणं गृह्यताम्—'नाऽहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवं-विधो द्रष्टुं दृष्टवानसि मां यथा' ॥ गीता० ११ । ५३ अस्मिन् श्लोके विराड्-रूपदर्शन-समये श्रीकृष्णेनाऽर्ज्जुनः प्रोच्यते। तदिदं पद्यं भक्तिप्रशंसामात्रतात्पर्य्ये विश्रान्तम्, न तु वेद–तपो-दानयज्ञादि-निन्दापरम्, अन्यथा वेदादिकास्त्यक्तव्याः स्युः, वेदादिकैश्च पर-मात्मप्राप्तिरपि न मन्येत । परं नैवम्-एव पूर्व्वोक्त-श्रुतावपि शिवनाम-कीर्त्तनमात्रतायामेव तात्पर्य्यम्, न तु चाण्डालेन भोजनादिकेऽपि, तस्य परश्शतग्रन्थेषु विरोधात् । अत्र प्रकरणे, सति सम्भवेऽवसरान्तरे प्रकाशः पात्येत । अस्माभिरन्त्यजानां विषये नैतिकरूपेण धार्म्मिक-रूपेण च पर्य्याप्तं चिन्तितम्, एतद्वादिकं द्रष्टुं 'सूर्य्योदये' ८ । ५ । ९ । १, ९ । ५ । ६ । ७, १० । ८ । ९ । १० पश्यन्तु। 'वेद पुराणयोरेक वाक्य-तायाञ्च' ४० पृष्ठे निबद्धम् 'अस्पृश्यताविज्ञानम्' अपि पश्यन्तु ।

अन्ते श्रीविश्वदेवशास्त्रिमहाशयेन व्यवस्था याचिता, सा चेत्थमस्माभिः प्रदीयते—

'न बुद्धिभेदं जनयेद् अज्ञानां कर्म्मसङ्गिनाम्। जोषयेत् सर्व्व कर्म्माणि विद्वान् युक्तः समाचरन्' गीता० ३। २६ 'श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात्। स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः' गी० ३। ३५। श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात्। स्वभाव-नियतं कर्म्म कुर्व्वन् नाप्नोति किल्बिषम्' गी० १८। ४७ 'सहजं कर्म्म कौन्तेय! सदोषमपि न त्यजेत्। सर्व्वारम्भा हि दोषेण धूमेनाग्निरिवाऽऽवृताः' गी० १८। ४८ 'स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः। स्वकर्म्मनिरतः सिद्धिं यथा विन्दति तच्छृणु' गी० १८। ४५ यतः प्रवृत्तिर्भूतानां येन सर्व्वमिदं ततम्। स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' गी० १८। ४६।

वरं स्वधर्म्मो विगुणो न पारक्यः स्वनुष्ठितः। परधर्म्मेण जीवन् हि सद्यः पतति जातितः' मनु० १०। ९७ 'स्वानि कर्म्माणि कुर्व्वाणा दूरे (व्यवहारादिति भावः) सन्तोऽपि मानवाः। प्रिया भवन्ति लोकस्य स्वे स्वे कर्म्मण्युपस्थिताः' अत्रि० १२। 'ये व्यपेताः स्वधर्म्मात् ते परधर्म्मे व्यवस्थिताः'। तेषां शास्तिकरो राजा स्वर्गे लोके महीयते' अत्रि० १७। आत्मीये संस्थितो धर्म्मे शूद्रोऽपि स्वर्गमश्नुते। परधर्म्मो भवेत् त्याज्यः सुरूप-परदारवत्' अत्रि० 'येनाऽस्य पितरो याता येन याताः पितामहाः। तेन यायात् सतां मार्ग्गं तेन गच्छन्न रिष्यते' मनु० ४। १७८। 'यः शास्त्र-विधिमुत्सृज्य वर्त्तते कामकारतः। न स सिद्धिमवाप्नोति न सुखं न परां गतिम्' गी० १६। २३ 'तस्माच्छास्त्रं प्रमाणं ते कार्य्याऽकार्य्यव्यवस्थितौ। ज्ञात्वा शास्त्रविधानोक्तं कर्म्म कर्त्तुमिहाऽर्हसि, गी० १६। २४। इत्थं कृते सति, अन्त्यजानामार्थिकदशासुधारे च सति (यस्याऽत्यन्ताऽऽवश्यकता, यद्विषये च वयं पुनः प्रकाशमर्पयितुं चेष्टिष्यामहे, येन देशस्य कल्याणं जायेत। अतएव वेदोऽप्यभिधत्ते—'मा नः पित्र्यान्मानवादधि दूरं नैष्ट परावतः' ऋ० ८। ३०। ३ पित्र्यो मार्गश्च वेद-प्रोक्तः वेदश्च स्पष्टमभिधत्ते—

'नीचैर्दासा उपसर्प्पन्तु भूमिम्' अ० ५। ११। ६

'यथा वशं नयन्ति दासमार्य्यः' ऋ० ५। ६। ३४

'दैव्याय कर्म्मणे शुन्धध्वं देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि' यजु० १। १३

'यो दासं वर्णमधरं गुहाऽकः' ऋ० २। १२। ४

# वैदिकविवाहवयोनिर्णयः

## आक्षेपपरिहारः

## ( ३ )

( ले० प्र० स्ना० धर्मदेवः सिद्धान्तालङ्कारो विद्यावाचस्पतिः वैदिकधर्मप्रचारकः )

अयश्चैत्राङ्के प्रकाशितलेखे मया श्रीदीनानाथशास्त्रिणां लेखं विमर्शयता तत्कृतानेकाक्षेपपरिहारोऽकारि । अवशिष्टविषय-विमर्शं चिकीर्षुणा लेखोऽयं लिख्यते । विवाहविषयकं वैदिक तत्त्वं बुभुत्सूनां सत्यजिज्ञासूनां वाचकमहानुभावानाँ च लाभाय ।

श्रीमदुभयवेदान्ताचार्यमहोदयैः कन्याविवाहमाहात्म्यं प्रतिपाद्य कन्या नाम—

अष्टवर्षा भवेत् कन्या नववर्षा तु रोहिणी ।
दशवर्षा भवेद्गौरी, तत ऊर्ध्वं रजस्वला ॥

बिना कन्याविवाहं रजस्वलाविवाहकरणे निन्दारूपं वेदोपबृंहितस्मृतिवचनं—'पितुर्गेहे तु या कन्या' इत्यादि, स्वकीये विवाहसमर्थनाभिधे लेखे निरूपितं, तदेव निराकर्तुं मया कन्याशब्दार्थ-विमर्शो व्यधायि. मया सायणीयभाष्यमुद्धरता वेदेषु कन्याशब्दो नाष्टवर्षीयबालिकाभिधायकः किन्तु "युवतिः," अकृतविवाहा स्त्री, कमनीया इत्यादिवाचक इति निरूपितम् । तेन प्रमाणजातेन 'अष्ट वर्षा भवेत्कन्या' अथवा 'दशवर्षाभवेत्कन्या' इत्यादिवाक्यानाम-प्रामाण्यं नूनमुपपद्यते । अष्टदशवर्षीयकुमार्या नाम कन्या न भवतीति केनापि नोदीर्यते 'अकृतविवाहा या कापि स्यात् तदर्थे पदमिदमुपयोक्तुं शक्यमेव, तस्मात् 'अष्टवर्षा दशवर्षैव वा कन्या' इति कल्पितां परिभाषां कृत्वा तदाधारेण लघुबालिका विवाह समर्थन मनुचितं वेदविरुद्ध मित्येवास्माभिः सघण्टाघोषं भूयो भूय उद्घुष्यते । एवं सामान्यतयाऽकृत विवाहास्त्री मात्र वाचके कन्या शब्दे सत्यपि ।

"मृते भर्तरि या तु स्त्री, न च संप्राप्तमैथुना ।
अन्यस्मै विधिवद्देया, यथा कन्या तथैव सा ॥

लघुशातातपः ।

उद्वाहितापि या कन्या, न चेत्संप्राप्तमैथुना ।
पुनः संस्कारमर्हेत, यथा कन्या तथैव सा ॥

नारदस्मृतिः ।

बलाच्चेत्प्रहृता कन्या, मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया, यथा कन्या तथैव सा ॥
विसृष्टायां हुते वापि, यस्या भर्ता म्रियेत सा ।
सा चेदक्षतयोनिः स्याद्, गतप्रत्यागना सती ॥
पौनर्भवेन विधिना, पुनः संस्कारमर्हति ॥

बौधायन धर्मशास्त्रम् ।

इत्यादि भवदभिमतस्मृतिवचन प्रामाण्येन बालविधवास्वपि कन्यापदमपवादरूपेण प्रयुज्यते, तद्विवाहश्च 'उदीर्ष्वनार्यभिजीवलोकं गतासुमेनमुपशेष एहि । हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि-

संबभूथ ॥ ऋ० १० । १८ । ८ अथर्व का० १८ । ३ । २
इयं नारी पतिलोकं वृणाना निपद्यत उपत्वा मर्त्य प्रेतम् ।
धर्मं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणं चेह धेहि ॥

अ० १८ । ३ । १

इत्यादि वेदमन्त्राधारेणापद्धर्मरूपेणानुज्ञायत एव । अप्रासंगिकत्वाद् विधवाविवाहविषयोऽयं नात्र 'सप्रपञ्चं निरूपयितुं' शक्यः । एतेन श्रीदीनानाथशास्त्रिभिरुत्थापिता कन्याशब्दविषयका सर्वेऽप्याक्षेपाः परिहृता वेदितव्याः । यत्तु श्रुतिस्मृत्योर्विरोधे तु श्रुतिरेव गरीयसी' इति मदुद्धृतं श्लोकं प्रामाणिकत्वेनाभ्युपगच्छद्भिरपि तैर्महोदयैः' अत्र नास्ति श्रुतिस्मृत्योर्विरोधः, किन्तु श्रुत्यां यः कन्याशब्दो निर्दिष्टः तस्य स्मृत्या स्पष्टतयाऽवस्थासंख्या नियमिता । किमेषविरोधो नाम" इत्युल्लेखि, तन्नूनमाश्चर्यास्पदम्

श्रुतिस्तावद् भगवती 'पुत्रकामा, उशती (ऋ० १०।८५।३७) पतिकामा (अ० २।३०।५) युवतिः (ऋ० १०।१८३।२) पत्ये शंसन्ती (ऋ० १०।८५।९) इत्यादि विशेषणानि बह्वर्थं प्रयुञ्जाना स्फुटमेव विवाहकाले कन्याया यौवनं सूचयति "ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्"। (अथर्व ११।७।१८) इत्यादिभिश्च मन्त्रैर्ब्रह्मचर्यानन्तरं पतिवरणं च तस्या अनुजानाति—

बालेति गीयते नारी, यावद्वर्षाणि षोडश।
ततस्तु तरुणी ज्ञेया, द्वात्रिंशद्वत्सरावधि॥ भावप्रकाशे
षोडशवार्षिकं यावत्, बाल्यं तावत्प्रवर्तते॥
हारीतसंहितायां शारीरस्थाने,
"षोडशीस्तोम ओजो द्रविणं" (यजु० १५।३)
अथास्मै पञ्चविंशतिवर्षाय षोडशवर्षां पत्नीमावहेत्
पित्र्य धर्मार्थ कामप्रजाः प्राप्स्यतीति"। सुश्रुतसंहिताशारीरस्थाने दशमाध्याये।

इत्याद्यनुसारं च षोडषवर्षानन्तरं कन्यानां यौवनमिति, तदनन्तरमेव तत्परिणयो वेदैर्विधीयते। पराशरादिनामतः कल्पितानि स्मार्तवचनानि तु—

दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला।
माता चैव पिता चैव, ज्येष्ठो भ्राता तथैव च।
सर्वे ते नरकं यान्ति, दृष्ट्वा कन्यां रजस्वलां॥

इत्यादिना यौवने विवाहं सर्वथापि विनिन्द्य निषिध्य च बाल्यविवाहमनुमोदयन्ति। इत्थमाकाशपातालयोरिव वर्तमानमति स्थूलं श्रुतिकतिपय (कल्पित) स्मृतिविरोधं श्रीदीनानाथ शास्त्रिणो यदि द्रष्टुं न समर्था नूनं शल्यचिकित्साहँ तेषां नयन इत्येव मया वक्तुं पार्यते। किं वेदैः प्रयुक्तान्युपर्युद्धृतानि विशेषणानि 'युवतिः पतिकामाऽपत्ये शंसन्ती' इत्यादीनि दशद्वादशवर्षीयबालिकासु कथमपि संघटन्ते, नो चेन्न। कथं तत्र विरोधोऽभ्युपगम्यते श्रौतस्मार्तवचसाम्।

"यत्तु सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः। तृतीयो अग्निस्ते पतिस्तुरीयस्ते मनुष्यजः॥ ऋ० १०। ८५। ४०।

सोमोऽददद् गन्धर्वाय गन्धर्वोऽददद्ग्नये। रयिं च पुत्रांश्चादा- दग्निर्मह्यमथो इमाम्॥ ऋ० १०। ८५। ४१

इति मन्त्रद्वयप्रामाण्येन द्वादशे वर्षे विवाहं वेदानुमतमुप- पादयितुं प्रयतितं श्रीशास्त्रिमहोदयैस्तत्तु केवलमुपहासजनकं, निष्पक्षपातं श्रौतस्मार्तमतमालोचयताम् विपश्चितां दृष्टौ, कथमित्थं सोमगन्धर्वाग्नि-भोगानन्तरं कन्याया विवाहो वेदानुमत इति श्रीदीनानाथ शास्त्रिणोऽप्यभ्युपगच्छन्ति।

पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववन्हिभिः।
भुज्यन्ते मानुषैः पश्चान्नैता दुष्यन्ति कर्हिचित्॥

(अत्रिस्मृतौ ५। ५)

पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववन्हिभिः।
गच्छन्ति मानुषान् पश्चाद् नैता दुष्यन्ति धर्मतः॥

(वसिष्ठस्मृतौ २८। ५)

इत्यादीनि स्मार्तवचनानि चोदाहरन्ति, किन्तु तैर्यद्वयो विवाहार्थं निर्धार्यते एतादृशवचनाधारेण, तत्तु सर्वथा कपोलक- ल्पितमेव। नैतानि वचनानि बाल्यविवाहं कथमपि समर्थयन्ति किन्तु निराकुर्वन्त्येवेत्यस्माकं द्रढीयान् विश्वासः। कस्यां कस्यामव- स्थायां सोमाद्याधिपत्यं कन्याशरीरेष्वित्यधस्तनानि प्रमाणानि द्योतयन्ति।

"व्यञ्जनेषु च जातेषु, सोमो भुंक्ते च कन्यकाम्।
पयोधरेषु गन्धर्वो रजस्याग्निः प्रतिष्ठितः॥

(अत्रिः ५। ९।)

रोमकाले तु संप्राप्ते, सोमोभुङ्क्तेऽथ कन्यकाम्।
रजः काले तु गन्धर्वो वन्हिस्तु कुचदर्शने॥

(संवर्तः)

अत्रानेकसंस्करणेषु 'कामकाले' इति पाठान्तरम् ।

व्यञ्जनैस्तु समुत्पन्नैः सोमो भुञ्जीत कन्यकाम् ।

पयोधरैस्तुगन्धर्वो रजस्यग्निः प्रकीर्तितः ॥

( गोभिल पुत्र गृह्यसूत्रसंग्रहे )

"कन्यां भुंक्ते रजःकालेऽग्निः शशी रोमदर्शने ।

स्तनोद्भवे च गन्धर्वः ॥" (काशीखण्डे ३९ अ० )

एतानि च सर्वाण्यपि वचनानि नहि द्वादशे वर्षे विवाहं किन्तु रजोदर्शनानन्तरमेव युवत्या विवाहं पोषयन्तीति स्पष्टमेव, नहि कुचदर्शनादिकमष्ट-दशवर्षीयबालिकासु संभवति । अनृतुमत्यास्तु विवाहं सर्वथापि निराकुर्वन्तीमानि वचनानि कन्याया रजोदर्शने सत्येवाग्नेराधिपत्यात्तदनन्तरं च कस्या विवाहस्याभ्यनुज्ञायमानत्वात् ।

एतस्मिन्नेव विषय ऋग्वेदीयमन्त्र एकः सायणभाष्यसहित उद्ध्रियते यस्य पराशरः शाक्त्या ऋषिः । अग्निर्देवता । जारः कनीनां पतिर्जनीनाम्" इति मन्त्रस्यान्तिमं चरणं सायणाचार्य इत्थं विवृणोति ( अग्निः ) ( जनीनाम् ) जायानां कृतविवाहानां ( पतिः ) भर्ता तथा च व्याख्यायते । अनुपजातसंभोगेच्छावस्थां स्त्रियं सोमो लेभे, स च सोम ईषदुपजातसंभोगेच्छावस्थां तां विश्ववसवे गन्धर्वाय प्रादात्, स च गन्धर्वो विवाहसमये अग्नये प्रददौ, अग्निश्च मनुजाय भर्त्रे इमां प्रायच्छदिति । इममर्थं काचिदृक् स्पष्टं ब्रूते "सोमोऽददद् गन्धर्वाय" इति ।

अष्टमाद्वर्षात्प्रारभ्य एकवर्षपर्यन्तं सोमस्य, तत एकवर्षपर्यंतं गन्धर्वस्य, तत एकाब्दवर्षपर्यन्तं चाग्नेराधिपत्यम् , एवं च "अग्निकर्तृकं वराय दानमेव विवाहे फलति, तादृशी चावस्था पूर्णैकादशवर्षानन्तरं द्वादशे वर्ष एव फलति तेन वेदेनापि कन्या विवाहो द्वादशे वर्षे तिष्ठायिषितः" इति श्रीदीनानाथ शास्त्रिणां निराधारं कपोलकल्पितं कथनं न कथमपि मान्यतामर्हत्युपर्युक्तवचनविरुद्धत्वात् ।

प्रसङ्गोपात्ततया वर्तमानलघुपराशरस्मृतावुपलभ्यमानाः "अष्ट-वर्षाभवेद्गौरी नववर्षातु रोहिणी"। इत्यादयः श्लोका अपि समासतोऽत्र विमृश्यन्ते वाचकमहाभागानां कुतूहलमुपशमयितुं, यद्यपि वैदिकधर्मानुगायिनामस्माकं वेदविरुद्धवचनेषु यत्र क्वचिदु-पलभ्यमानेष्वपि व्यक्तमनास्था न कथमप्याक्षेप्या। लघुपराशरस्मृते-रन्ते श्लोकसंख्यैवं परिदृश्यते—

"एतत् पाराशरं शास्त्रं, श्लोकानां शतपञ्चकम्।
द्विनवत्या समायुक्तं, धर्मशास्त्रस्य संग्रहः ॥ १२। ८१

अत्र पराशरस्मृतेः श्लोकसंख्या ५६२ इति निर्दिष्टा वस्तुतस्तु गणनायां क्रियमाणायां सा ६१५ वर्तत इत्यालोकमालोकमाश्चर्य-चकितोऽहमभवम्। श्रीदीनानाथशास्त्रिणोऽन्ये वापि महानुभावा गणनां स्वयं विदधतु, यदिसंशीतिस्तेषामस्मिन् विषये। इत्थं त्रयः श्लोका वर्तमान लघुपराशरस्मृतौ प्रक्षिप्ता इति तैः स्पष्टमवगंस्यते। अष्टवर्षा भवेद्गौरीत्यादि श्लोकानां प्रक्षिप्तत्वमप्रासङ्गिकत्वाद्वि व्यक्तम्। कथमिति चेत्

अयमस्य सप्तमाध्यायस्याद्यः श्लोकः —

"अथातो द्रव्यशुद्धिस्तु, पराशर वचो यथा।
दारवाणां सुपात्राणां, तत्क्षणाच्छुद्धिरिष्यते ॥७।१
मार्जनाद् यज्ञपात्राणां, पाणिना यज्ञकर्मणि।
चमसानां ग्रहाणां च, शुद्धिः प्रक्षालनेन च ॥७।२
चरूणां स्रुक् स्रुवाणां च, शुद्धिरुष्णेन वारिणा।
भस्मना शुद्ध्यते कांस्यं, ताम्रमम्लेन शुध्यति ॥७।३

इत्थं दारुकांस्यादि द्रव्यशुद्धि प्रकरणेऽस्मिन् :—

अष्टवर्षा भवेद् गौरी, नववर्षा तु रोहिणी।
दशवर्षा भवेत्कन्या, अत ऊर्ध्वं रजस्वला ॥
माता चैव पिता चैव, ज्येष्ठा भ्राता तथैव च।
सर्वे ते नरकं यान्ति, दृष्ट्वा कन्यां रजस्वलाम् ॥

इत्यादयः श्लोकाः कथमप्रासङ्गिका इति न कथनमपेक्षते। अप्रासङ्गिकं विवाहविषयकं श्लोकजातमिदं परित्यज्यते चेत् पुनश्चतुर्विंशश्लोकस्य तृतीयश्लोकेन सह सङ्गतिरति स्पष्टतयावगम्यते यथा।

भस्मना शुद्धयते कांस्यं, सुरया यन्न लिप्यते।
सुरामात्रेण संस्पृष्टं, शुध्यतेऽग्न्युपलेपनैः ॥७।२५
गवाघ्रातानि कांस्यानि, श्वकाकोपहतानिच।
शुद्धयन्ति दशभिः क्षारैः, शूद्रोच्छिष्टानि यानि च ॥७।२६
आयसेष्वायसानां च, सीसस्याग्नौ विशोधनम्। इत्यादि

इदमप्यत्रावधेयं यल्लघुपराशरस्मृतिर्यस्यामिमे "अष्टवर्षा भवेद् गौरी" इत्यादयः श्लोकाः साम्प्रतमुपलभ्यन्ते "धर्मशास्त्रस्यसंग्रहः" (लघुपरा० स्मृ० १२।६१ न तु मूलधर्मशास्त्रम्। मूलधर्मशास्त्रं तु बृहत्पराशर संहितेति नाम्ना प्रख्यातम्। तस्यां संहितायां ३३०० श्लोकाः सन्ति विवाहविषयके चतुर्थेऽध्यायेऽपि ३७१ श्लोका वर्तन्ते किन्तु "अष्टवर्षा भवेद् गौरी" इत्यादिका बालिकाविवाहप्रतिपादकाः श्लोका न तत्र क्वाप्युपलभ्यन्ते। बृहत् पराशरसंहिता तु व्यक्तं यौवने वधूवरयोर्विवाहमनुमोदयतीत्यधस्तनश्लोकैरुपपद्यते—

स्वजातिमुद्वहेत्कन्यां, सुरूपां लक्षणान्विताम्।
अरोगिणीं सुशीलां च, तथा भ्रातृमतीमपि ॥४।३२
सर्वावयवसम्पूर्णां, असगोत्रां कुलोद्भवाम्।
हंसमातङ्गगमनां, मृद्वङ्गीं च सुलोचनाम् ॥४।३३
सलज्जां शुभनादां च, पतिप्रीतिकरीमपि।
श्वश्रू श्वशुरगुर्वादि—शुश्रूषाकारिणीं प्रियाम् ॥४।३४
कन्यायाश्च वरस्यापि, यत्रोभयोर्भवेद्रतिः।
तथा कन्यां वरं धीमान्, वरयेद् वंशशुद्धये ॥४।२५
स्त्रियाश्च पुरुषस्यापि, भवेद् यत्रोभयोर्वृतिः।
तत्र धर्मार्थकामाः स्युस्तदधीना यतस्त्वमी ॥४।४६

रेखाङ्कितानि कन्याविशेषणानि न ह्यष्टद्वादशवर्षीयबालिकासूप-

पद्यन्ते युवतिष्वेव तानि चरितार्थानि भवन्ति। वरवध्वोः परस्परं वरणमपि नहि बाल्ये संभवति। न केवलमेतदेव किन्तु बृहत्पराशर संहिताया अधस्तनं श्लोकद्वयं यौवने विवाहं मुक्तकण्ठतया प्रतिपादयति तद् यथा—

"विवाहात्प्राक् पिता रक्षेत्, यौवनस्थां पतिस्तथा ॥४।५८

उद्वाह उदितः स्त्रीणां, यौवने बन्धुकारणात्। बृ. प. अ० १०

इत्थं च मूलधर्मशास्त्रभूतबृहत्पराशरसंहिता विधानविरुद्धत्वादपि वर्तमानलघुपराशरस्मृतावुपलभ्यमानानां बालिकाविवाहप्रतिपादकश्लोकानामप्रामाण्यं प्रक्षिप्तत्वं च व्यक्तमुपपद्यते। विस्तरभिया स्मृत्यन्तरवचनविमर्शो नात्र विधातुं शक्यते।

साम्प्रतं श्रीदीनानाथशास्त्रिणां बालिकाविवाहसमर्थनस्य मूलभूता कल्पना विमृश्यते सा चेयम् "स्त्रीणां विवाह एवोपनयनसंस्कारः, तथा च या तत्तद् वर्णस्योपनयनावस्था सैव तत्तद्वर्णस्त्रीणां विवाहावस्था।" इति

इयं कल्पना सर्वथाप्यवैदिक्यसमीचीना च। वेदाध्ययनमुपनयनादिकं च बालकानामिव कन्यानामपि विहितम्। वैदिककाले शतश ऋषिका ब्रह्मवादिन्यश्चासन्निति "गोधा घोषा विश्ववारा, अपालोपनिषन्निषत्। ब्रह्मजाया जुहूर्नाम, अगस्त्यस्य स्वसा दितिः। इन्द्राणी वेन्द्र माता च, ब्रह्मवादिन्य ईरिताः"। इत्यादि सूच्यवलोकनेन मूलवेदसंहितावलोकनेन वा सम्यगवगन्तुं शक्यते। एतासां ब्रह्मवादिनीनामुपनयनं भवति स्म प्राक्तनकाल इति। "तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे भिक्षाचर्येति सधोवधूनां तु यथाकथञ्चिदुपनयनं कृत्वा विवाहः कार्यः" इति हारीतसंहितातः।

"पुराकल्पे कुमारीणां, मौञ्जीबन्धनमिष्यते। अध्यापनं च वेदानां, सावित्रीवचनं तथा॥" यमः (पाराशरमाधवीय उद्धृतमिदं वचनद्वय) प्रावृतां यज्ञोपवीतिनीमभ्युदानयन् जपेत् "सोमोऽददद गन्धर्वायेति" (गोभिलगृह्यसूत्रम्)

'नहि शूद्रसमाः स्त्रियः। नहि शूद्रासु ब्राह्मणक्षत्रियवैश्या जायन्ते तस्मात् स्त्रियो मन्त्रतः संस्कार्याः॥ (हारीतसंहिता अ० २१)

प्राहुरप्युत्तमे स्त्रीणामधिकारं तु वैदिके।
यथोर्वशी यमी चैव, शच्याद्याश्च तथापराः॥

( व्योमसंहितातो माध्वब्रह्मसूत्र भाष्य उद्धृतम् )

इत्यादिभिः शतशः प्रमाणैरुपपादयितुं शक्यम्। एवंविधमेव प्रमाणजातं मनसि निर्धार्य लवपुरीयप्राच्यविद्यामहाविद्यालयस्य मुख्याध्यापकैर्दिवंगतैर्महामहोपाध्यायश्रीशिवदत्तशर्मभिर्जैमिनीय न्यायमालाविस्तारव्याख्यायामित्थमलेखि।

"अस्यैव ( यज्ञे अधिकारविषयकस्य ) अधिकरणस्यानुसारेण अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत इत्यत्रापि स्त्रिया अप्यधिकार" अतएव।

"प्रावृतां यज्ञोपवीतिनीमभ्युदानयन्" ( गोभिलगृह्यसूत्रे )

"मनसा भर्तुरतिचारे सावित्र्या अष्टशतेन जुहुयात् पूता भवति ( वसिष्ठस्मृतौ २०। ५ )

"अथ य इच्छेत् दुहिता मे पण्डिता जायेत" ( बृहदारण्यके )

किं च यजमानपत्न्या अध्ययनमन्तरेण ऋत्विजादिप्रोक्तार्थस्य ज्ञानाभावात् तदुक्तकर्मणि प्रवृत्तिरेव न स्यात् उपलभ्यते च प्राचीनेतिहासेषु सीतामहाश्वेतादीनां सन्ध्योपासनमपि। यथा

"सन्ध्याकालमनाः श्यामा, ध्रुवमेष्यति जानकी।
नदी चेयं शुभजला, सन्ध्यार्थे वरवर्णिनी॥"

( बालमीकिरामायणे )

"सा ( कौशल्या ) क्षौमवसना नित्यं, हृष्टा व्रतपरायणा।
अग्निं जुहोति स्म तदा, मन्त्रवत्कृतमङ्गला॥ (बा० रामा०)

सुग्रीवपत्नी तारा विषये—

"ततः स्वस्त्ययनं कृत्वा, मन्त्रविद् विजयैषिणी इत्यादि।

सनातनधर्माभिमानिपण्डितमूर्धन्यानां—श्री शिवदत्तशर्मणामयं लेखो

नितान्तं मननीयः सर्वैरपि सत्यहग्रग्णै वृद्धपरिकरैर्महाभागैः।

एतच्च सर्वं "ब्रह्मचर्येण कन्या युवानं विन्दते पतिम् ॥

( अथर्व ११।६।१८)

भीमा जाया ब्राह्मणस्योपनीता दुर्धां दधातिपरमे व्योमन् ॥

( ऋ० १०।१०९।४)

इत्यादि वेद मन्त्राधारेण निरूपितं सामाण्यमर्हति। ब्रह्मचर्य पदव्याख्याधः सायणाचार्येणापित्र ह्यवेदः—तदध्ययनार्थमाचरणीयं समिदाधानोर्ध्वरेतष्कत्वादिकं ब्रह्मचारिभिरनुष्ठीयमानं कर्म ब्रह्मचर्यम् "ब्रह्मणि–वेदात्मके अध्येतव्ये चरितुं शीलमस्येति ब्रह्मचारी" इत्येवं रूपेणैव व्यधायि। इत्थं च कन्यानां वेदाध्ययने तदधिकारस्थापक उपनयनसंस्कारे च सिद्धे श्रीदीनानाथशास्त्रिणां कल्पनाया मूलमेवोच्छिद्यते 'नष्टे मूले नैव शाखा न पत्रम्" इत्याभाणकं चानुसृत्य तत्कथनस्य निस्सारता स्वयमेवोपपद्यते।

दुर्जनतोषन्यायेन "स्त्रीणां विवाह एवोपपयनसंस्कारः" इति श्रीदीनानाथशास्त्रिभिः प्रस्तुतमवैदिकं सिद्धान्तमभ्युगम्यापि खलु विवाहस्य निन्दितत्वमशास्त्रीयत्वं वा न कथमपि वक्तुं युक्तम्। अधोलिखित श्लोकेषु प्रतिपादित उपनयन कालावधिरस्मिन् विषये द्रष्टव्यः—

"आषोडशाद ब्राह्मणस्य, सावित्री नातिवर्तते।

आद्वाविंशात् क्षत्रबन्धोराचतुर्विंशतेर्विशः॥" मनुस्मृतौ, आश्वलायनगृह्य सूत्रे ( अ० १ क० १६ )

"आषोडशाद ब्राह्मणस्यानतीतः कालः। आद्वाविंशात क्षत्रियस्याचतुर्विंशादित्यनात्ययबौधायन धर्मशास्त्रे।" (१।२।३)

"आषोडशादाद्वाविंशादाचतुर्विंशादित्यनात्यय एषां क्रमेण॥

( अ० ११

वसिष्ठ धर्मशास्त्रे—

"आषोडशाद् ब्राह्मणस्य नातीतः कालः। आद्वाविंशात् क्षत्रियस्य; आचतुर्विंशाद्वैश्यस्य॥"

याज्ञ वल्क्य स्मृतावाचाराध्याये—

आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः॥

इत्थमेव शङ्खापस्तम्बधर्मं सूत्रादिष्वपि।

एषु च सर्वेष्वपि वाक्येष्वैकमत्येन ब्राह्मणक्षत्रियविशामुपनयन कालावधिः, क्रमेण १६, २२, २४ वर्षपर्यन्तं निर्दिष्टः। एतदवधि पर्यन्तमुपनयन संस्कारानुष्ठाने न किमपि प्रायश्चित्तमपेक्ष्यत एतदवध्युत्तरं तु प्रायश्चित्तं विधीयते। स्त्रीणां विवाहः क्रमेण १६, २२, २४ वर्षपर्यन्तमनुज्ञायत एव शास्त्रकृद्भिरित्यवश्यमङ्गीकर्तव्यं भवत्येतत्सिद्धान्त समर्थकैः सर्वैः। श्री दीनानाथशास्त्रिभिः कुतोऽयं सुप्रसिद्धोऽपि विषयो न लक्ष्यमानीत इति नाहं वक्तुमर्हामि। "मम सर्ववर्ण कन्यानां द्वादशवर्ष एव विवाहे पक्षपातः" इति स्वयमभ्युपगतः पक्षपात एव तत्र मुख्यहेतुः संभवति स्त्रीणां विवाह एवोपनयनस्थानीयः इति सिद्धान्तं प्रतिपादयितुं यः श्लोकः श्री दीनानाथशास्त्रिभिर्वर्तमानमनुस्मृतेरुद्धृतः।

"वैवाहिको विधिःस्त्रीणां, संस्कारो वैदिकः स्मृतः।"

तत्रेदं वक्तव्यम्। अत्र स्त्रीणां वैदिको विधिः वैदिकः संस्कार इत्युक्तम् तेन विवाहसंस्कारस्योपनयनस्थानीयता नोपपद्यते। कुल्लूकस्य "विवाहविधिरेव स्त्रीणां वैदिकः संस्कार उपनयनाख्यः मन्वादिभिःस्मृतः" इति व्याख्यानं तु सर्वथाप्यमान्यं कपोलकल्पितं च मूले एव कारस्याभावात्। तथैव पतिसेवा गुरौ वास इत्यादावपि, यद्यपि पूर्वोक्तदिशा वेदविरुद्धवचनानि यत्र क्वचिदुपलभ्यमानान्यप्यस्मभ्यमप्रामाणिकानि, तथापि श्रीदीनानाथशास्त्रिभिर्भूयोभूय उद्धृतम्

"त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्।"
अष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः॥

इति वर्तमानमनुस्मृतावुपलभ्यमानं वचनं सुप्रसिद्धत्वात् किञ्चिद् विवेचनमपेक्षते।

प्रथमं तावत् एतस्मिन् श्लोकेऽनेकविधं परिवर्तनं सञ्जातमि-त्यवधेयम्। कतिपयसंस्करणे त्र्यष्टवर्षः (२४ वर्षीयः) इत्यस्य स्थाने द्व्यष्टवर्षः (१६ वर्षीयः) क्वचिच्च "अष्टवर्षः" इति पाठो दृश्यते (पं० वामनशास्त्रिसम्पादितपराशरस्मृतिव्याख्यापादटि-प्पण्याम्)

सुप्रख्यातविपश्चिच्छिरोमणयो वाराणसीस्था श्री डा० भगवानदासमहोदया इतरे चानेकपण्डितप्रकाण्डाः "द्वादशवार्षिकीम्" इत्यस्य स्थाने द्विदशवार्षिकीम् (२० वर्षीयाम्) "अष्टवर्षाम्" इत्य-स्य स्थाने च "अष्टिवर्षीम्" (१६ वर्षीयाम्) इति पाठं समीचीनं मन्यन्ते वेदायुर्वेदानुकूलत्वात्।

वाराणसीस्थराजकीयमहाविद्यालयस्य महामहोपाध्याया दिवं गताः श्रीराममिश्रशास्त्रिणः 'उद्वाहसमयमीमांसायाम्' "अष्ट-वर्षाम्—षोडशवर्षवयस्कामित्यर्थः। स चायमर्थः अष्टौ च अष्टौ च इत्यष्टौ इत्येकशेषेन लभ्यस्तत्र प्रमाणं च "त्रिंशद्वर्षं षोडशाब्दां भार्यां विन्देत नग्निकाम् "इति महाभारतीयमुद्वाहतत्वे रघु-नन्दनकृते १६ वर्षवयस्ककन्याया उद्वाह्यत्ववचनम्।" इत्याश्चर्य-कारिणीं व्याख्यामकार्षुः। द्विदशवार्षिकीम् (२० वर्षीयाम्) इति पाठेऽभ्युपगम्यते 'हृद्याम्' इति विशेषणं यथा संगच्छते न तथा द्वादशवार्षिकीमिति पाठे। द्विदशवार्षिकीम् (२०) अष्टिवर्षाम् (१६) इति पाठौ मनुस्मृति महाभारत ब्रह्मपुराणादि वाक्यैरपि सङ्गतौ समीचीनौ च प्रतीयेते। मनुस्मृतेः—

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती।
ऊर्ध्वं तु कालादेतस्माद्, विन्देत सदृशं पतिम्॥"

अयं श्लोक उद्धृत एव प्राक् यः षोडशवर्षीयकन्याया उद्वाहमनुमोदयति प्रायशस्त्रयोदशवर्षान्त ऋतुमतीत्वदर्शनात्। महाभारतीयम्—

"त्रीणिवर्षाण्युदीक्षेत कन्या ऋतुमती सती।

चतुर्थे त्वथसंप्राप्ते, स्वयं भर्तारमर्जयेत् ॥
प्रजा न हीयते तस्या रतिश्च भरतर्षभ ।
अतोऽन्यथा वर्तमाना, भवेद्वाच्या प्रजापतेः ॥"

अनुशासनपर्वणि अ० ४०

इत्यादिकं वचनमपि मानवसिद्धान्तमेव समर्थयति । एतद्विशिष्टापद्विषयकमपि न वक्तुं युक्तम् । मानवगृह्यसूत्रेऽपि विवाहकाले—"रेतोहमस्मि रेतो धत्तम् ता एहि विवहावहै पुंसे पुत्राय कर्तवै श्रिये पुत्राय वेतवै । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥" इत्यादि मन्त्रपाठात् "द्वादशरात्रं ब्रह्मचर्यं चरतः त्रिरात्रमेकरात्रं वेति" इति विधानाच्च यौवन एव विवाहः स्पष्टं सूच्यते ।

श्रीनाथचूडामणिकृते विवाहतत्त्वार्णवे ब्राह्मपुराणादुद्धृतावधस्तनौ श्लोकावस्मिन् विषय उल्लेख्यौ—

"द्वात्रिंशद्वर्षपूर्णेन, यदि षोडशवार्षिकी ।
लब्धा तदा तु वस्तव्यं,षड्रात्रं संयते न तु ॥
विंशत्यब्दा यदा कन्या, वस्तव्यं त्वत्र वै त्र्यहम् ।
अत ऊर्ध्वमहोरात्रं, वस्तव्यं संयतेन वै ॥

विस्तरभिया विषयस्यास्य विवेचनमत्रैव पर्यवसीयते । 'वस्तुतस्तु'

अव्यङ्गाङ्गीं सौम्यनाम्नीं, हंसवारणगामिनीम् ।
तनुलोमकेशदशनां, मृद्वङ्गीमुद्वहेत् स्त्रियम् ॥ ३ ।१०
असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मण्यमैथुनी ॥ ३ । ५

( अमैथुनी=अक्षतयोनिरिति नन्दनः )

बाल्ये पितुर्वशे तिष्ठेत्, पाणिग्राहस्य यौवने ॥ ५ । १४८
पिता रक्षति कौमारे, भर्ता रक्षति यौवने । ९ । ३

इत्यादयो मानवश्लोका कन्याया यौवन एव विवाहमनुमोदयन्ति । ब्राह्मदेवार्षप्राजापत्यरूपविवाहेषु क्वचिदपि रजस्वला विवाहनिषेधोनोपलभ्यते विशेषतः—

"सहोभौ चरतां धर्ममिति वाचानुभाष्य च ।
कन्या प्रदानमभ्यर्च्य, प्राजापत्यो विधिः स्मृतः ॥ मनु० ३.३०
कन्याचैव वरश्चोभौ, स्वेच्छया धर्मचारिणौ ।
स्यातामिति हि यत्रोक्त्वा, दानं कार्यं विधिस्त्वयम् ॥
बृहत्पराशरसंहिता ४ । ७

सह धर्मं चरत मिति प्राजापत्यः ॥ आश्वलायनगृह्यसूत्रे,

इति लक्षणानुसारं प्राजापत्यविवाहो वधूवरयोरुभयोरपि यौवनं सूचयत्यन्यथा सहधर्मचरणासंभवाद् बालिकया सह ।

षडानुपूर्व्या विप्रस्य, क्षत्रस्य चतुरोऽवरान्
विट् शूद्रयोस्तु तानेव, विद्याद् धर्म्यानराक्षसान् ॥ मनु० ३।२३

ब्राह्मणस्य ब्राह्मादि क्रमेण षट् ब्राह्मदैवार्षप्राजापत्यासुरगान्धर्वान् धर्म्यान् धर्मादनपेतात् जानीयात् ( कुल्लूकः ) इति मानव वचनमनुसृत्य गान्धर्वविवाहोऽपि ब्राह्मणाय धर्म्मतयानुज्ञायते यल्लक्षणं तत्रैव

इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः सतु विज्ञेयः, मैथुन्यः कामसंभवः ॥ ३ । २३
एवं निरूपितम् ।

"सुश्रुतसंहितात उद्धृतवाक्यस्य विमर्शोऽपि प्रसङ्गोपात्ततया विधीयते, यद्यपि लेखविस्तरो मां भीषयति । तत्र अथास्मै पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमावहेत् पित्र्यधर्मार्थ कामप्रजाःप्राप्स्यतीति" पाठः शारीरस्थानात १०।५३, श्री दीनानाथशास्त्रिभिरुद्धृतः । वस्तुतस्तु स पाठोऽसमीचीनः सुश्रुतकारमतविरुद्धत्वाद् धूर्तपरिकल्पितश्चेत्यस्माभिरुपपादयितुं शक्यम् । षोडशवर्षां पत्नीमित्येव समीचीनः पाठो यत इतोऽग्रएव । "ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम् ।" इत्यादिकः सुप्रसिद्धः श्लोको वर्तते यत्र पञ्चविंशति षोडशवर्षयोः सम्बन्धोऽनुपातो वा स्पष्टं सूचितः ।

"पञ्चविंशे ततो वर्षे पुमान्नारी तु षोडशे।
समत्वागतवीर्यौ तु, जानीयात्कुशलो भिषक्॥
सुश्रुतस्य सूत्रोस्थाने ३५।८

इतिश्लोके व्यक्तं पञ्चविंशवर्षवयस्कस्य षोडशवर्षया सह संयोगो निरूपितः। प्राचीनसंस्करणेषु 'षोडशवर्षां पत्नीमावहेत्' इत्येव पाठ आसीदिति १९४७ वैक्रमाब्दे (अनु १८९१) मुद्रिताच्छ्री विश्वेश्वरानन्दस्वामिकृतात्पुरुषार्थरकाशाभिधाद् ग्रन्थाद् विज्ञायते, यत्र युवति विवाहसमर्थन इदमेव वचनं प्रबलतया "अथास्मै पञ्चविंशतिवर्षाय षोडशवर्षां पत्नीमावहेत्" इतिरूपेणोद्धृतं दृश्यते। "गर्भाधानं विवाहश्चेति भिन्नौ संस्कारौ भिन्नकालिकौ च" इति श्री दीनानाथशास्त्रिणां कथनं सप्रमाणं समालोचितपूर्वमेव मयेति न पिष्टपेषणं विधीयते। वस्तुतो विवाहकाले कन्याया द्वादशवर्षवयसि निर्धारितं पुरुषस्य च पञ्चविंशेवर्षे गर्भाधानाभिधायके श्लोकेऽपि एकोनत्रिंशत् त्रिंशद्वेति पाठः समीचीनोऽभविष्यत् विवाहस्य प्रयोजनमेव पित्र्य धर्मार्थकाम प्रजाः प्राप्स्यतीति" यदद्वारा सूचितत्वान्न सा कल्पना मान्यतामर्हति। "स्त्री यदि द्वादशवर्षा निर्बला वा स्यात् तथापि भाविसन्ततौ बाधा नैर्बल्यं वा न भवति" इति शास्त्रिमहोदयानां कथनमायुर्वेदविरुद्धत्वात् प्रत्यक्षविरुद्धत्वाच्च केवलमविगणनीयमुपहासजनकं च। प्राक्तनकाले याः सन्ततयो बभूवुस्ता अल्पवयो विवाहितवनिता जनिता इत्यप्यैतिहासिकदृशा सर्वथाप्यमान्यं कथनम्। प्राक्तनकालेऽस्माकं पूर्वजा वेदाननुसृत्य "समानं ब्रह्मचर्यम्"। इति श्रौतसूत्रप्रतिपादितं सिद्धान्तमभ्युपगम्य यौवन एव कन्यानां विवाहमकार्षुः स्वयंवरविधिश्च न केवलं क्षत्रियासु किन्तु ब्राह्मणादिकन्यास्वपि प्रचलितोऽभवदिति निरूपितपूर्वमेव। सीताविवाह विषयेऽपि तस्याः स्वकीयोक्तिर्दृश्यताम्।

"पतिसंयोगसुलभं वयो दृष्ट्वा तु मेपिता।
चिन्तामभ्यगमद्दीनो वित्तनाशादिवाधनः॥
बा० रामा० अयो० का० ११८।३४

("पतिसंयोगे सुलभम् अन्यथा तु दुर्लभम् इत्यर्थः। पति संयोगं विना स्थातुमशक्यं यौवनावस्थावत् इत्यर्थः इति श्रीकृष्णमाचार्यकृत टिप्पण्याम्") किं षष्ठवर्षं ईदृशं पतिसंयोगसुलभं वयो यौवनावस्था वा भवतीति श्री शास्त्रि महोदया एव कथयन्तु। विवाहानन्तरमेव श्री सीतादेव्यादि विषये रामायणे।

"अभिवाद्याभिवाद्यांश्च, सर्वा राजसुतास्तदा।
रेमिरे मुदिताः सर्वाः, भर्तृभिः सहिता रहः॥

इत्यादिकं वर्णितं किमेतदेकान्ते रमणं षड्वर्षीयबालिकया सह संभवति ?

विवाहे काले श्रीरामादीन् सम्बोधयन् जनक एवमवोचत्।
सर्वे भवन्तः सौम्यास्तु सर्वे सुचरितव्रताः॥
बा० का० ७३।३१

इयं सीता मम सुता, सहधर्मचरी तव।
पतिव्रता महाभागा छायेवानुगता सदा॥ ७३।२४

किं षड्वर्षीयबालिका सहधर्मचरी छायेवानुगता च संभवतीति निष्पक्षपातविवेचका एवालोचयन्तु। इत्यादिभिरनेकप्रमाणैः श्री सीतादेव्या विवाहो यौवन एव संवृत्त इति व्यक्तं विज्ञायते। कुन्ती देवी विषये—"तां तु तेजस्विनीं कन्यां, रूपयौवनशालिनीम्"
आदिपर्व। १२।२

दमयन्ती विषये—
"स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम्॥"
वनपर्वणि ५३।८

वसिष्ठभार्या लोपामुद्राविषये—
वैदर्भी तु तथा युक्तां, युवतीं प्रेक्ष्य वै पिता॥"
व० प० ९६।१३

ब्राह्मणवर्येस्थ—"शुक्राचार्य कन्या देवयान्या विषये।
स शीलयन् देवयानीं, कन्यां संप्राप्तयौवनाम्॥"
आ० प० ७६।२५

इत्यादिकानि निदर्शनानि श्री दीनानाथशास्त्रिणां कथनं सर्वथापि मिथ्या साधयन्तीत्यसन्देहं वक्तुं शक्यम्।

लेखान्ते श्री दीनानाथ शास्त्रिभिर्गोभिलगृह्यसूत्राद् वचनमेकमुद्धृतम् "नग्निका तु श्रेष्ठा॥" गो० ३।४।१।८

नग्निका त्वनागतार्तवेति प्रसिद्धमेवेति च तत्र टिप्पणीकृता। "वस्तुतस्तु अयं पाठोऽप्यसमीचीनः। अस्मिन् विषये बङ्गदेशीयं विपश्चिच्छिरोमणीनां सुगृहीत नामधेयानां दिवंगतानां श्री सत्यव्रत सामश्रमिणाँ भाष्यमेतस्य सूत्रस्योपरिमयाऽऽशेषतयोद्ध्रियतेऽत्यावश्यकत्वात्। तेः "अनग्निका तु श्रेष्ठा।" इति सूत्रपाठमुद्धृत्य लिखन्ति तत्र तु अपि (अनग्निका) यस्याः कन्याया ऋतुर्न भवेत् यावच्च नग्ना विचरितुं शक्नुयात् सा नग्निका तद् भिन्ना अनग्निका ऋतुमती· प्राप्तयौवना। सैव श्रेष्ठा—प्रशस्या। कन्याया ऋतौ संजाते ह्येवाग्नि भोज्यत्वमुपयुज्यते तदैव "सोमोऽददद् गन्धर्वाय" इति मन्त्रप्रयोगो युज्यते नान्यथेत्येव दारकर्मणि ऋतुमत्या प्राशस्त्यम्। अतएव मनुरपि।

"देवदत्तां पतिर्भार्यां, विन्दते नेच्छयात्मनः॥" (९।९५)

इति तदेवं प्राप्तायौवनायाम्।

आसन्नयौवनापि नोद्वाह्येति फलितम्॥

गोभिलगृह्यसूत्रं सामवेदीयमिति पण्डितप्रकाण्डानां सत्यव्रत सामाश्रमिणां भाष्यं तत्र प्रामाणिकमेव मन्तव्यम्।

इत्थं च श्रीदीनानाथशास्त्रिकृताक्षेपपरिहारपूर्वकं यौवन एव विवाहविधिमुपपाद्य विस्तर भियात्रैवोपरम्यते मया। मन्ये सर्वेऽपि विपश्चितः पक्षपातं विहाय धार्मिकसामाजिकदृष्ट्यावश्यकमिमं विषयमालोचयिष्यन्ति वैदिकं चादेशमनुसरिष्यन्तीति॥

———

# संपादकीयम्

## श्रियः पञ्चमो जन्मोत्सवः—

पाठकानां संस्कृतसाहित्य-परिषदः काश्मीर-श्रीनगरस्य सदस्यानां मनोरञ्जनाय सूचनेयं सुखावहा भविष्यति, यदत्र पाठकमहाभागाः श्रियः पत्रिकायाः पञ्चमे वर्षे प्रवेशं पश्यन्ति। यादृशीं सेवां वयं पत्रस्यास्य कुर्मः सर्वे स्वयमेव जानन्ति। भारतवर्षस्य संस्कृतवाङ्मयस्य संसारे प्रचलितपत्राणां संख्यैतेषु वर्षेषु संवर्धित इति हर्षास्पदम्।

पूर्वमपि बहुषु स्थानेषु स्वनियमं स्वमतञ्चास्माभिः प्रकटितमस्ति। वयं तु देववाण्याः सरस्वतीमन्दिरस्य पूजकाः प्राचीन-वैदिकार्येतिहासस्य अर्वाचीनहिन्दुजातेः सभ्यतायाश्च रक्षकाः। अत्र श्रीःपत्रस्य पूर्ववर्षाणां पृष्ठा एवास्माकं साक्षिणः, यत् श्रियः सर्वे लेखा हिन्दुजातिसभ्यतायाः संस्कृतवाङ्मयस्य च दृढं पोषकाः। न च वयं जीर्णहिन्दुजातेः कुरीतीनां प्रचारकाः, याभिः कुरीतिभिरस्माकं धर्मकर्म एव नष्टं स्यात्, आर्यजातेः संख्या चातिन्यूनतां गता भवेत्। न चापि वयं हिन्दुजातेः प्राणप्रियस्येष्टस्य कस्यचिद् धर्मस्य वा खण्डकाः, न च कस्यचिद् हृदयङ्गतस्य धर्ममतस्य 'सुधारकाः'। सर्वेषां लेखास्तु तेषामेव भाषया तन्मतानुसारेण च प्रकाशयामः। यथा समयं यथावकाशं यदि कस्यचिल् लेखस्योत्तरमपि प्राप्नुमस्तदपि तथैवादरेण प्रकाशयामः। उत्तरप्रकाशने भिन्न-भिन्न लेखानां स्वीकरणे अन्तिमप्रमाणं तु संपादका एव। तेषामपि प्रयोजनं सर्वसमाजस्य हितमेव न चान्यत् किञ्चिद् इति।

## वैदिकविवाह-वयो विमर्षः—

श्रियः तृतीयसंख्यायां श्रीमन्तो नडादूरस्वामिनः कृष्णाचार्याः मद्रप्रदेशाद् बालविवाहसमर्थकं लेखं लिखितवन्तः,

यस्योत्तरं श्रीमता पं० धर्मदेववेदवाचस्पतिना बङ्गलोर नगरतः श्रियः पत्रेषु प्रकाशनार्थं प्रेषितम् अस्माभिश्च पूर्वोक्तलेखद्वयं सादरं यथावदुट्टङ्कितम् । तदनन्तरं पं० दीनानाथ शर्मणा सारस्वतेन मूलत्राणवास्तव्येन पं० धर्मदेवपक्षं खण्डितुं स्वामिनां च पक्षं मण्डितुमारब्धो लेखो बृहत् । पं० धर्मदेवेन तस्यापि दीर्घेण लेखेनोत्तरं प्रकाशितम् । स्वामिपादास्त्वस्मभ्यं रुष्टाः, यतः किमर्थमस्माभिस्तेषां बालविवाहसमर्थक लेखस्य खण्डनरूपमुत्तरं प्रकाशितम् । इदानीं ते तु विरमिताः, परं पं० दीननाथ-धर्मदेवयोः परस्परं शास्त्रार्थः प्रीतिपूर्वकश्चलत्येव यथा जानन्ति श्रियः पाठकाः । इदानीमस्मदभ्यर्णे द्वयोरपि पण्डित महोदययोर्लेखौ प्रकाशनार्थमागतौ विद्येते । ययोः प्रकाशनानन्तरं पाठकैः सर्वं ज्ञातं भवेत् । इदानीं विवादोऽयं यथा समाप्तिं लभेत्तथैव वर्तितव्यमस्माभिः । एतयोर्लेखयोः प्रकाशानन्तरं प्रायशः विवादोऽयं समाप्तिमेष्यति । लेखक महाभागौ कृपया क्षमाप्रदानं कुरुतां, यदि विषयेऽस्मिन् पर्याप्त विचारानन्तरं वयमग्रे विरमामः । इदं समाजस्य हितायाहिताय वा विषयोऽयं इति सर्वे स्वयमेव ज़ानन्तु । काश्मीरनरेन्द्रेण तु ( बालविवाह-निरोधनार्थं ) नियमाः स्वीकृताः, यैर्बालविवाहकर्तारौ मतापितरौ पुरोहितश्च दण्डार्हाः स्थापिताः । लेखक महाभागानामन्तिम लेख प्रकाशनसमये वयमपि स्वविचारान् प्रकटयिष्यामः ।

## जयपुरेऽभिनन्दन समारोहः—

श्रीमता महापण्डित गिरिधरशर्मणा जयपुरराज्यसंस्कृत महाविद्यालयस्याध्यक्षेण जयपुरे चैत्रशुक्लद्वादश्यां गुरुवासरे सं० १९९३, एप्रिल २ सन् १९३६ दिवसं प्रारभ्य चतुर्थं एप्रिलं यावत् संस्कृतसाहित्यसम्मेलनस्य वृहदधिवेशनं समजनि । तत्र प्रयोजनं तु श्रीमतां विद्यावाचस्पतीनां श्रीमधुसूदनओझा महा-

नुभावानां वैदिकसाहित्यस्याद्वितीयविदुषां शताधिकग्रन्थ रचयितानां सप्तति (७०) वर्षायुप्राप्तावभिनन्दनपत्रदान-मासीत। श्रीगोकुलनाथस्वामिमहाराजाः मोहमयीत अवसर-मेनमलङ्कर्तुमागताः सभापतिपदञ्च संगृहीतवन्तः। भारतवर्षस्य जयपुरराज्यस्य च प्रचुर संख्याविदुषां समारोहोऽयम्।

प्रथमे दिवसे प्रसिद्धपण्डितानां प्रारम्भिकभाषणानन्तरं प्रौढच्छात्राणां व्याकरणसाहित्यविषयेषु प्राचीनशैलीमव-लम्ब्य शास्त्रार्थाः सञ्जाताः। निपुणतमैश्छात्रैर्मध्यस्थपण्डितानां संमत्या पारितोषिकाणि प्राप्तानि। द्वितीयदिनेऽपि व्याकरण-दर्शन-विषयात्रवलम्ब्य प्रौढछात्राणां पुनरपिशास्त्रार्थाः सञ्जाताः। मध्याह्नोत्तरकाले वेदपाठ-मङ्गलगानाद्यनन्तरं ईश्वरवादविषये पञ्चविद्वांसः स्वनिबन्धानश्रावयन्। तदनन्तरं कतिपयैर्विद्वद्भिः सुरभारतीविषये स्वकविताः पठिताः। भट्टश्रीमथुरानाथ-साहित्याचार्यस्य कवितामत्युत्तमां ज्ञात्वा सभापतिना "कवि शिरोमणिः" इत्युपाधिस्तेभ्यः प्रदत्ता। तृतीये दिवसेऽपि इत्थमेव संस्कृतोद्धाराय संमेलनं सञ्जातम्। वैदिकदेवताविषये प्रतियो-गितारूपेण निबन्धौ द्वौ पठितौ। ततो विद्यावाचस्पति-श्रीमधु-सूदनमहाशया अभिनन्दनपत्रं प्राप्तवन्तः। कुरुक्षेत्र पाणीपत्त मोहमयी-वाराणसी लवपुरेत्यादि भिन्न २ भारतप्रान्तेभ्यो महा-विद्वांसस्तत्र प्राप्तवन्त आसन्। जयपुर महाराजस्य राज्याधिका-रिणां कृपया तत्रत्यपण्डितमण्डले उत्साहेन च अतिसमारो-हेण कार्यमिदं समजनि। अहो !! कीदृशी सेवा संस्कृतवाङ् मयस्य। धन्यवादार्हाः सर्वे इमे यैः स्वसमयदानेनैतादृशो मनोविनोददः सहस्रसंख्यासंख्येयपुरुषाणां समारोहो दिनत्रयं रचित इति।

भारते भातु भारती

कुलभूषणः

# परिषद् वृत्तम्

## संस्कृतसाहित्यपरिषदः श्रीनगर-काश्मीरस्य, सं० १९९२ चैत्रमासात् ज्येष्ठ १९९३ पर्यन्तं वृत्तम्।

सौरचैत्रीयद्वाविंशे दिवसे परिषदः सरस्वतीसम्मेलनं वासन्तिकं यथासमयं सार्धद्विनाडिकायां माइसूमान्तर्वर्त्ति-हिन्दूसहायकसभामन्दिरे अन्तरङ्गपुरःसरं समजनि, यस्यां चान्तरङ्गसंसदि नियोजितसदस्यसंमत्या अधः उट्टङ्किताः प्रस्तावाः स्वीकृताः।

(१) श्रीः पत्रिकायाः काश्मीरेषु बहिश्च प्रचाराय सर्वैः प्रयतितव्यम्। गीर्वाणवाणीरसिकानां सूची संपाद्य पञ्च२ ग्राहकाः सदस्यैः संपादनीयाः॥

(२) परिषत्कायस्थसेवकानां कार्यबाहुल्यप्रयासफलात्मकं द्विगुणं वेतनं विधेयम्।

(३) संस्कृतोन्नत्यै व्यावहारिकोक्ति-प्रत्युक्ती प्राचीनार्वाचीनेतिहासादिविविधविषयमुद्रापणं पत्रिकायाम्।

(४) श्रीपत्रिकायाश्चाग्रिमं मूल्यं केवलं मुद्रिकैका इति। तदनन्तरं धर्मार्थविभागाध्यक्षाणां वार्षिक-साहायप्रदानाय शतशो धन्यवादवितरणपूर्वकं सभाविसर्जनमभूत्।

दिवाकरीय-माधवस्यैकोनत्रिंशे वासरे सार्धद्विघण्टानादकाले परिषदो मासिकमधिवेशनमभूत्। यत्र पं० जगद्धरजाडूशास्त्रिणा अवन्तिवर्मकालीन-शिवस्वामिनः काव्यमधिकृत्य, पं० कुलभूषणेन सरस्वतीयात्रा शीर्षक लेखोपहारः, पं० मुकुन्दरामशास्त्रिणा च सन्ध्यावन्दनविषये स्वविचाराः प्रकटिताः। अनन्तरं एस. पी. महाविद्यालयीय तृतीयकक्ष्याविद्यार्थिना चमनलालेन वसन्तर्तुविवरणात्मकं गद्यखण्डं श्रावितम्। यत्पश्चात् प्रधानवर्येण धन्यवादं दत्त्वान्तिमं व्याख्यानविचार प्रकटनं विधाय परिषद्विसर्जितेति।

भास्करीयशुचौ २५ शे तिथावुत्तरमध्याह्ने सार्धचतुर्थघण्टा-

वादने विद्वत्समाजोऽभूत्। यत्र राजकीयकार्यवशात् कश्मीरप्रान्तीय-संस्कृतपाठशालानिरीक्षणार्थं बहिर्गतस्य प्रधानवर्यस्यानुपस्थिता वुपप्रधानेन तदासनं सेवितं कार्यं चारब्धम्। पूर्वं मन्त्रिमहोदयेन राधी-याधिवेशनकार्यक्रममुपस्थाप्य दानशुल्क-रसीदनियमो निश्चयात्मको विनियोजितः। ततश्च वार्ताकजात्तिमता रामजी इयत्नेन सन्ध्यावन्दन-विषये, पं० श्यामलालगंजूशास्त्रिणा महात्मा तुलसीदासस्य जीवनचरित्रविषये, पं० लक्ष्मीचन्द्रशास्त्रिणा मानुष्यकृत्यविषये, तदनन्तरं परिषदुपमन्त्रिणा पं० शिवनाथ शास्त्रिणा च पुरावृत्तविषये, सारगर्भितानि व्याख्यानानि श्रावितानि। अनन्तरं मन्त्रिवर्येण काश्मीरानागतस्य भूतपूर्वविद्यासचिवमन्त्रिणे रमेशदत्तपाण्डे महाशयस्य सुस्वागतमकारि। ततश्च संस्कृतप्रचारमधिकृत्य पाण्डे महाशयेनापि स्वकीया विचारसरणी अन्ते प्रकटिता। तत अहो-रात्रसन्धौ सभाविसर्जनमभूदिति।

परिषन्मन्त्रिणौ

---

## व्यायामः

( श्री पं० रमाकान्त शास्त्री वैद्य विशारदः जम्मू )

यादृशः उपयोगः यस्य द्रव्यस्य यदि तद् द्रव्यं तदर्थम् न उपयुज्यते, ततः कालेन तत् स्वयमेव तस्मै उपयोगाय अयोग्यं जायते। यथा अभिनवानां फलानां अस्ति भक्षणे उपयोगः। तानि एव यदि अभुक्तानि कतिपयान् दिवसान् गृहे रक्षितानि विकृतिं गच्छन्ति, अभक्ष्याणि च जायन्ते।

इत्थम् एव निष्क्रियाणि शरीरस्य अङ्गानि विकृतानि भवन्ति, दुर्बलानि, अनुपयोगीनि जायन्ते। तानि एव सम्यगुपयुक्तानि पुष्यन्ति। ऊर्ध्वं बाहवः संन्यासिनः सदैव भुजम् एकम् उत्तानीकृत्य तिष्ठन्ति। परं स बाहुः अल्पेन कालेन तथा निष्क्रियो जायते, परि-शुष्यति न यथा चालयितुमपि न शक्यते, इति बहुभिः विलोकितं स्यात्

तस्मात् शरीरस्य कार्यक्षमतां पुष्टिं च वर्धयितुं निष्कर्मतां आलस्यं च निवारयितुं आरोग्य-शास्त्रविदः व्यायामं उपदिशन्ति। स च सर्वैः मानवैः प्रतिदिनं कर्तव्यः। केचित् मानवाः वृत्तेरनुरोधात् नानाविधान्परिश्रमान् ( भारवहन-कृषिकर्म लोह-काष्ठादि शिल्प कर्माणि ) सदैव कुर्वन्ति। ते चेत् व्यायामं न कुर्वन्तु, न तेषां तेन कापि हानिः भवति। परं यैः अहोरात्रे कोऽपि परिश्रमः न क्रियते ( यथा छात्राः, राजकर्मचारिणः, अध्यापकाः, बणिजः इत्यादयः ) तैः अवश्यम् एव प्रतिदिनं नियतकाले व्यायामः कर्तव्यः। तेन व्यायामेन बहवः उपकारा भवन्ति शरीराणाम्, तथा हि—व्यायाममाचरतः मानवस्य श्वासेन अधिकपरिमाणतः वायोः गमागमौ भवतः, स्वेदः च सर्वशरीरे समुद्भवति। इत्थं रक्तशुद्धिः त्वरया समधिका जायते, यया प्राणशक्तिः ( ओषजन-रूपा ) प्राचुर्येण लभ्यते, रक्तस्थं विषाक्तं मलं आधिक्येन निर्गच्छति। किञ्च शरीरस्थानि नानायन्त्राणि वेगात् संचलनात् पुष्टिं लभन्ते। व्यायाम—समुद्भूतेन ऊष्मणा भुक्तं अन्नं सम्यग् जीर्णं शरीरं पुष्णाति।

अथ व्यायाम सम्बन्धिनः छात्रैः पालनीयान् नियमान् संक्षेपतः वक्ष्यामः। तान् अनुसृत्य व्यायामः कर्तव्य :—

(१) क्रीड़नम् एव अल्पवयसां बालानां उचितः व्यायामः। तत् खलु सर्वेभ्यो बालेभ्यो रोचते च। परं क्रीड़नमपि तादृशं स्यात्, यस्मिन् तेषां परिश्रमः स्यात्।

(२) अल्पवयसां बालानां ( ९ वर्षाणि यावत् ) सम वयस्कैः बालैः सह कूर्दनं पलायनं इत्यादयः एव स्वाभाविका व्यायामाः समुचिताः।

(३) ततः ऊर्ध्वं नेत्रनिमीलन-प्रभृतीनि च भारतीयानि, क्रीड़नानि क्रिकेट-फुटबाल प्रभृतीनि च पाश्चात्त्यानि क्रीड़नानि विधेयानि।

(४) दिवसे कोऽपि कालः घण्टानां द्वयं त्रयं वा व्यायामार्थं नियोक्तव्यः। तस्मिन् नियते काले एव स कर्तव्यः।

(५) द्वारबाह्याः ( Out door ) द्वारान्तराः ( Indoor ) इति द्विविधा भवन्ति व्यायामाः। तेषु पूर्वतनाः एव प्रशस्ततरा ज्ञेयाः। गृहाद् बहिः सति सम्भवे नगराद् बहिः प्रशस्ते विशुद्ध-पवनयुक्ते स्थले द्वारबाह्याः व्यायामाः कर्तुमुचिताः।

(६) भोजनानन्तरं व्यायामः न कर्तव्यः। तेन शरीरस्य महती हानिर्जायते।

(७) पूर्वोक्तपञ्चवर्षान्तरवयस्कानां बालिकानां कृते 'रज्जु कूर्दन' नामकं क्रीडनं साम्प्रतं प्रचलितमस्ति। ताभिस्तदेव अनुष्ठेयम्।

(८) उच्चैः नादः हास्यं च अपि व्यायामौ एव विज्ञेयौ।

(९) केचित् छात्राः व्यायाममुपेक्ष्य अहोरात्रं अध्ययने एव रता भवन्ति। तत् अतीव आरोग्यनाशकं अस्ति। आरोग्येनष्टे अध्ययनं स्वतः एव नश्यति।

(१०) दुराचारैः अति क्रोधनैः विरुद्धप्रकृतिभिः समवयस्कैः सह क्रीड़नम् प्रशस्तम्।

---

## सम्पादक समितिः

१. पं० डाक्टर कुलभूषण, डी. पी. एच. (लण्डन)
२. पं० गोविन्द राजदानः, शास्त्री, एम.ए., एम.ओ.एल., एल.टी.
३. पं० जगद्धर जाडू, शास्त्री, एम.ए., एम.ओ.एल.
४. पं० शिवनाथ शास्त्री ।

---

भीमसेन विद्यालङ्कार द्वारा नवयुग प्रिंटिंग प्रैस, १७, मोहनलाल रोड, लाहौर में मुद्रित ।

# संस्कृत साहित्य परिषदः श्रीनगरस्य श्रियश्च नियमाः

**उद्देश्यः—**

परिषदोऽस्याः केवलमेक एवउद्देश्यः संस्कृत भाषार्यसभ्यता रक्षार्थं प्रचारः ।

एतत् प्राप्त्यर्थं १।) श्रीनगरात् भिन्ननगरस्थेभ्यः। १) श्रीनगरस्थेभ्यश्च शुल्करूपेण धनमपेक्ष्यते। अनेनैव पत्रिकापि लभेत सभासत्त्वमपि च भवेत् ।

श्रीः पत्रं सभासदैः सर्वैं रुप्यकेन एकेन १) प्राप्यते। संस्कृतानुरागिभिरस्याः परिषदः सभासत्वम् स्वाकर्तव्यम् पत्र लिखनेन ।

**सहायता:—**

परिषदो व्ययः पत्रिकाया अस्याः कृते शुल्कादत्यधिकं भवति परन्तु धनाभावात् बहवः संस्कृतज्ञाः छात्राः ब्राह्मणाश्च विनामूल्येनैव लभन्ते पत्रम्। अतः सहायतारूपेण किञ्चित् धनमस्यै अवश्यमेव संस्कृतोद्धारप्रणयिभिर्दातव्यम्।

**पत्रप्रकाशनसमयः—**

त्रैमासिकं पत्रमिदं सौरवर्षस्य आषाढ़, आश्विन, पौष, चैत्र मासेषु निर्गच्छति। पत्रप्रकाशनमासानन्तरमपि पत्रस्यानुपलब्धौ सूचनया पुनरपि प्रेषयिष्यते पत्रम्। मासादनन्तरं तु पत्रं न प्राप्यते ।

**पत्रव्यवहारः—**

लेखप्रेषणाय पत्रप्रबंधाय च निम्नाङ्कितेन प्रत्ययेन पत्रव्यवहारः विधेयः

आषाढ़ १९९३
जुलाई १९३६

कुलभूषणः
परिषन्मन्त्री
श्रियः सञ्चालकः
सम्पादकश्च

सुन्वार बाग़, श्रीनगर, (कश्मीर)

वर्ष ७ Vol 7
सं० २,३ No. 2,3

❀ ओ३म् ❀

काश्मीर मण्डलान्तर्वर्ति श्रीनगरस्थायाः

# संस्कृत साहित्य परिषद-स्त्रैमासिकी

पत्रिका

श्रीः

QUARTERLY JOURNAL OF THE

# SANSKRIT SAHITYA PARISHAD

SRINAGAR. (Kashmir)

अश्विनपौषांकौ

वार्षिक मूल्यम् १।)

पौष १९९५

शर्मा प्रिंटिंग प्रेस पुरानी मंडी जम्मू में पं० वत्सराज शास्त्री के अधिकार में छपा।

## विषय सूचिः

सूचना—सर्वे लेखा लेखकमहानुभावानां भाषामतानुसारेणैव प्रकाशिताः। अतस्तेषामुत्तरदायिनस्त एव नतु सम्पादकाः।





श्रीः



# आर्य सभ्यता

## भारतवर्षस्य प्राचीन इतिहासः।

## सम्राट् सिकन्दरस्य भारताक्रमणम्।

लेखकः—डा० कुलभूषण डी. पी. एच. (लण्डन)

### अर्वाचीना ऐतिहासिकदृष्टिः।

आर्यसभ्यताया यानि लक्षणानि प्राचीनकालीनानि सर्वाणि तानि नवीनेतिहासदृष्ट्या गुप्तानि। यतो महाकाव्ये रामायणमहाभारते विहाय न लभ्यन्तेऽन्यानीतिहासपुस्तकानि येभ्यः विवादास्पदविषयाणां निर्णयो भवेत्। महाकाव्ययोरेतयोरपि सन्ति स्थलानि यत्र महान् संदेहो वर्तते। केचन श्लोकाः प्रक्षिप्ताः, कानिचिद् स्थलान्येव प्राकृतदृष्ट्या असम्भवानि प्रतीयन्ते। प्रश्नस्यास्य निर्णयोऽतिदुष्करो दृश्यत इदानीम् महाभारतकालाद्भारतवर्षस्यावनतिरनुमीयते विद्वद्भिः। ख्रिष्टाब्दात् सहस्रवर्षपूर्वात् लभ्यते इदानीं भारतवर्षस्य नवीनः इतिहासः केचन वर्षा व्यतीताः पाश्चात्यैरज्ञात्वा इतिहाससामग्रीं देशस्यास्य, भारतीया असभ्या एवामन्यन्त। परन्तु रोमयूनानचीनप्रदेशेषु प्रसूताः केचन महाप्रसिद्धाः विद्वांसः भारतवर्षे ख्रिष्टाब्दात् षट्वर्षपूर्वमागताः। तात्कालीनानामत्रत्यानां राज्ञां प्रजानाञ्च सर्वं वृतान्तमपि लिखितवन्तः। तेभ्यः लेखेभ्यः तात्कालीना सभ्यता सम्यक् व्याख्याता भवति। अर्वाचीनैः ऐतिहासिकैरेषा सामग्री चतुर्भ्यः वस्तुभ्यः संग्रहीतास्ति। यथा—

१ भारतीयानां कथाकलापेतिहासपुराणग्रन्थेभ्यः।

२ अन्यदेशीयानां लेखेभ्यः।

३ अन्वेषणकार्यालयानां खननेत्यादिभिः कर्मभिः प्राप्ता या सामग्री स्तूपप्रसादपात्रनिकषादिभ्यः।

४ भारतीयतात्कालीनसाहित्यनाटकपुस्तकानामवलोकनेन।

## शिशुनागकुलम्।

महाभारते जरासन्धराज्ञः वर्णनमागच्छति। तस्य सम्बन्धिनः शेषनागकुलस्य वायुपुराणे इतिहासो दृष्टिगोचरो भवति। य इतिहासः पाश्चात्यैरपि समर्थितोऽस्ति। ख्रिष्टाब्दात षट्शतवर्षपूर्वं शिशुनागो नाम राजा बभूव। एतेषु राजसु विम्बसारस्य समये ५२८ ख्रिष्टाब्दात् पूर्वं वर्द्धमान महावीरगौतमबुद्धौ जैनबौद्धमतसंस्थापकौ बभूवतुः। बिम्बसारस्य समये (५२८ B. C.) जैनबौद्धाचार्यौ द्वावेव मगधदेशस्य समीपे (यश्चेदानीं विहारदेश नाम्ना निगद्यते) न्यवसताम्। महावीरस्य तु मगधराज्यकुलेन सम्बन्ध आसीत्। असौ पावानगरे पटनाप्रान्तमध्ये पञ्चत्वमाप। गौतमबुद्धस्य साक्यप्रदेशे नीपालराजधान्यां जन्म आसीत् परन्तु स आयुषो ऽनत्यल्पभागे मगधराज्य एव न्यवसत् अतः काशीगयानगर्योः पवित्रता प्रसिद्धता-चार्यधर्मानुयायिनां हृदयेषु जागर्ति बिम्बसारस्य पुत्रो ऽजातशत्रुस्तदनन्तरं राज्य- प्राप्तवान्।

## पारसयूनानयोरागनम्।

विम्बसाराजातशत्रोः समयेऽन्यदेशेषु पारसयूनानयोः समकालीना सभ्यता आसीत्। पारसदेशस्य सम्राड् डारेयसनामो भारतवर्षमाक्रम्य पश्चिमोत्तरभागे स्वराज्यं स्थापयित्वा सिंधु नद्याः पूर्वदेश यावत् स्वकीयाध्यक्षान् न्ययुङ्क्त। पारसाधिपतिः प्रभूत धनं स्वर्णोत्यादिकं प्रतिवर्षं भारतवर्षात् स्वदेशं निनाय। प्राचीनभारते आर्याणामत्रागमनम्विहाय पारसीराज्ञा डेरीयसा भारतवर्षस्य पश्चिमोत्तरभागे तस्मिन् काले खीष्टाब्दात् पञ्चशतवर्षपूर्व स्वकीयं राज्यं किंचित्कालपर्यन्तं स्थापितमिति श्रूयते। अस्मिन् काले ख्रिष्टाब्दात् पञ्चशतवर्षपूर्वं

(४०० B.C.) पारसीयूनानयोः परस्परकलहोऽभूत्। पारसीकैर्यूनानदेशो ऽप्याक्रान्त आसीत्। परन्तु ख्रिष्टाब्दात् चतुःशतवर्षपूर्वस्यां शताब्द्यां यूनानीयानां प्रागल्भताऽभूत्। पारसीकैश्च स्वदेशस्य राज्यं पुनः प्राप्तम्। तस्मिन् समये एतेषां मध्ये विक्रमशाली महाप्रसिद्धः फैलकूसस्य पुत्रः सिकन्दरो महाराजः सम्राड्भूत् यस्य वर्णनं विस्तरेणाग्रे क्रियते।

## नन्दकुलम्।

बिम्बसारोऽष्ट विंशतिवर्षपर्यन्तं राज्यमकरोत्। ततस्तेन सर्वं युवराजायाजातशत्रवे राज्यकार्यं प्रदाय मुनिवृत्तिः अक्रियत। अजातशत्रोः पौत्रेण उदयनाम्ना प्रसिद्धेन गंगातटे पतलीनगरसमीपे नगरमेकमकार्यत यन्नगरं कुसमपुर पुष्पपुरपाटलीपुत्रनाम्ना ख्यातिं प्राप नचैवं मगधदेशस्य राजधानी अभूदपि तु कालक्रमेण सर्वस्यार्यावर्तस्य महाराजोदयानन्तरं नन्दिवर्धनः तथा महानन्दिनः वभूवतुः महानन्दिनः शूद्रायाः स्त्रियाः महापद्मनन्दनं तनयं लेभे यश्च पितु राज्यमहार्षीत्, नन्दकुलञ्चास्थापयन्। अस्य कुलस्यान्तिमः क्षत्रियो राजा महानन्दिनोऽभूत् यस्य पुत्रः महापद्मनन्दो वृषलाया आसीत्। तस्याष्टपुत्रा आसन् एते नव नन्दा इतिहासे परम्परया राज्यं कुर्वाणाः वहूनि वर्षाणि मगधराज्यधान्यां स्वकुलं वव्रृधिरे। क्षत्रयाणां मनांसि एतेषां राज्येन मलिनानि जातानि यत एते शुद्धक्षत्रियराजानो न बभूवुः। अनया लोकोक्त्या महापद्मनन्द इति नापितेन केनचिद् महाराज्ञीं वशीकृत्य समुदपादि। अतः प्रजानां शरीरेषु न तु हृदयेषु तस्य सम्मानासीत्। वृषलायां जन्मास्य नापितात् पितुःप्रजासु कदाचित् महापद्मनन्दो न प्रतिष्ठां लेभे। तस्याष्टपुत्रानपि निन्दितवचनैः लोका सस्मरुः। नन्दानां सम्बन्धी यो महाराजस्य शूद्राया एकाया समुत्पन्नः चन्द्रगुप्तमौर्यनामा पुत्र आसीत् सन्सारे इदानीं ख्यातिं वृद्धिं च प्राप। स एवान्तिमं नन्दकुलभूतं राजानं निहत्य मगधदेशस्य राज्यं प्राप्तवान्। नन्दानां कुलं कतिपयवर्षं यावत मगधप्रान्तेषु राज्यं चकार। चन्द्रगुप्तमौर्येन

ख्रीष्टाब्दात् ३२३वर्ष पूर्वं मौर्यकुलस्य राज्यं स्थापितम्। अस्य सहायो चाणक्यो ब्राह्मण आसीत् यः कौटिल्यो विष्णुगुप्तनाम्नापि प्रसिद्धो बभूव

## सम्राट् सिकन्दरकृत भारताक्रमणम्।

यूनानदेशस्य महाविक्रमशालिनः राज्ञः सिकन्दरस्य पूर्वमपि किंचिद् वर्णनमागतम् बक्ट्र्या प्रान्तं स्वाधीनतामानीय सिकन्दरेण ख्रिष्टाब्दात् ३२७ वर्ष पूर्वं भारतवर्षं आक्रान्तः। भारतस्य पश्चिमोत्तरभागे हिन्दुकुशपर्वतेषु, खांक कशानौ पर्वतभागौ विलंघ्य षष्टिसहस्र मनुष्यसंख्यानां यूरपदेशीयानां पदातीनां घोटकानांच चमूं संगृह्य सिकंदर सम्राड् भारतवर्षमाजगाम। पूर्वं काबल नद्याः पर्वतेषु सेनां विभज्य काबल वेली इति देशं विजिग्ये। बिजनोर वेलिं विजित्य बहुसंख्यान् मनुष्यान् निगृह्य सर्वं बिजनोरप्रान्तं स्वाधीनं कृत्वा सिंधु नदीं पारयितुं स्वबलमानिनाय। हिंदु कुश पर्वतात् सिंधु नदी पर्यंतं महाबलवत्तमाः जातयः भिन्न २ प्रान्तेषु निवसन्तिस्म। सर्वाः एताः जातीः सिकन्दरः स्वायत्तीचकार। एकैसकेनयन नाम्ना ख्याता महापराक्रमशालिनी जातिरासीत् यया सम्राड् मसागादेशे स्वयं युयुधे अस्मिन् घोरसंग्रामे सप्तसहस्रभारतीययोद्धारोऽप्यासन्। तेषां सहायमुपयोगिताञ्च ज्ञात्वा सर्वास्तान् स्वपक्षे कर्तुं सिकंदरः प्रलुलुभे। नीत्यातु तैः सहायदानं स्वीकृतं परन्तु न स्वदेशीयान् द्रोग्धुं विदेशीयैश्च सम्मिल्य स्वस्वामिनं विनाशयितुं मतिं चक्रिरे। अतो सहाय्यवचनं दत्वापि सिकन्दरपक्षं नानुमुमुदिरे। तेषामीदृशीं मतिमवगत्य कुपितः सिकन्दर एकाकी तैः सहयुद्धं चक्रे। महतीं सेनां सम्राज्ञः संमुखे दृष्ट्वा एते भारतीया योद्धारः स्त्रीः शिशूँश्च एकस्मिन् प्राकारमध्ये सम्स्थाप्य, काश्चन युयुत्सवः स्त्रियोऽपि युद्धाय कृतनिश्चयाः सम्राट् सेनया योद्धुमारेभिरे। एते सप्तसहस्रवीराः संख्ये शूरतया बहूनि दृश्यानि प्रदर्श्य सिकन्दरेण स्वर्गं लेभिरे। निरर्थकशूरहत्यावहः प्रथमोऽयङ्घोरकलङ्कः सिकन्दरशिरसि भारताक्रमणकाले इतिहासिकैः प्रक्षिप्तोऽस्ति।

## सिंधुनदीतरणम्

प्रायशः वर्षमेकमस्मिन् कर्मणि सेनासमेतं स्वात्मानन्नियोज्य एप्रेलमासात् ३२७ खीष्टपूर्वाब्दपर्यन्तम् सर्वाभिः पर्वतीयाभिः ज्ञातीभिः सह संयोद्धय ताश्च स्वपक्षे संस्थाप्य सिंधुनदीमाजगाम, तक्षशिलाप्रदेशस्य राजा मिसरनामा सम्राजः कतिपयेषु स्थानेषु स्वसेनां प्रेष्य साहाय्यं चकार। सिकन्दर सम्राड् अटकप्रदेशात् १६ मील नद्या उपरि ऊहन्द-देशे नौभिः सेतुन्निर्मिमाय। तक्षशिलानरपतिसहायेन सम्राड् सिकन्दरः सिंधुनदीमवतीर्य भारतभूमौ पदं स्थापयामास। भारतवर्षस्येतिहासेऽयं प्रथमोऽवसर आसीत् यत् केनचिद् यूरोपदेशस्थेन राज्ञान्य मनुष्येण वा भारतभूमौ कदाचित् पूर्वं पदन्निक्षिप्तं भवेत्। अभिसारस्य पुत्रः अम्भिरपि पितरमनुसृत्य सिकन्दराय साहाय्यमदात्। स्वदेशे तक्ष-शिलाप्रदेशेऽपि कानिचिद्दिनानि सिकन्दरस्य तस्य सेनायाश्च आतिथ्यं चकार। सन्तुष्टः सिकन्दरस्तस्मै प्रभूतं धनं वस्त्रादिकं वस्तु सामग्रीं च ददौ। तस्मात् सम्राडपि पञ्चसहस्रसेनासमूहमन्यां सामग्रीञ्च प्राप। तक्षशिलादेशस्य राज्ञः शीघ्रतया सिकन्दरपक्षग्रहणे स्वार्थो ऽप्यासीत्। यतो तक्षशिला भूपतेः स्वनिकटस्थैः अभिसारप्रदेशस्थैः राजभिः सह कलहः वर्तते स्म विशेषतया च वितस्ताया नद्याः समीपे जेहलम गुजरात शाहपुरादीनि यानि नगराण्यासन् तेषां भूपालेन पोरसनाम्ना राज्ञा सह तस्य शत्रुतासीत्। तस्मिन् विरोधे स्वपक्षदृढीकरणाय विदेशादागतं सिकन्दरं बलवत्तरमवबुध्य तेन सह मित्रतां ददर्श। एवं भूतेन सर्वत्र जयलब्धेन लुब्धेन सिकन्दरेण सिंधुम्विलङ्घ्य वितस्ता नदीं पारयितुम् सर्वं पाञ्चालदेशञ्च जेतुमैच्छत। वितस्तासमीपे स्वबलमानीय पोरसं प्रति स्वाधीनता स्वीकारार्थं समादिदेश।

## वितस्ता नदी युद्धम्

पोरसनाम्ना महापराक्रमिणा राज्ञा सिकन्दराय साहाय्यदानं तस्याधीनताञ्च नाङ्गीचक्रे। सन्देशमपि प्रेषितवान् पोरसराजः यदवश्यमेव

सिकन्दरेण सह सम्मेलनम्भविष्यति परन्तु वितस्ता पारे स्वसेनया समेतं युद्धायागमिष्यति पोरसराजः । गर्वीटङ्कारपूर्वं वचनमिदं मत्वा सिकन्दरः तक्षशिलानगर्यां कांश्चन दिवसान् स्वसेनां विरमय्य अम्भिना सह शतक्रोशादधिकं पन्थानं महता कष्टेनातिक्रम्य वितस्तानदीपारे जेहलमनगरसमीपे प्राप्तवान् । ज्येष्ठमासस्योष्मणा पर्वतेभ्यः हिमराशयः जलप्रवाहेण नदीवेगमवर्धयन् ; पाञ्चालदेशस्य ग्रीष्मर्तुरपि उष्मणा प्रचण्डप्रतापेन रविकिरणैः बलात्कारीणां हृदयानि समतापयत् । परन्तु सम्राट् सिकन्दरो विघ्नानेतानगणयित्वा भारतवर्षस्य विजयरूपां देवीं स्वमनसि लक्षीकृत्य सर्वमिदं लीलयाद्राक्षीत् । वितस्तातरणं पोरसचमूश्च विनाशयितुमहर्निशमचिन्तयत् । नद्याः पारे पोरसराजापि महतीं सेनां संगृहीतवान् । कतिपयसहस्रपदातीन् हस्तिनः रथांश्च क्रमेण न्ययुङ्क्त सिकन्दरः महतीं सेनां वितस्तापारे स्वसम्मुखे दृष्ट्वा आसूर्योदयात्सायं वितस्तातरणावसरं न लेभे । महान्धकारयुक्तायां वायुवर्षाबहुलायां विद्युत्प्रकाशभयानकायां रात्रावेकस्यां सेनां तत्रैव सम्स्थाप्य मीलपर्यन्तन्निशान्धकारे नद्युपरि गत्वा वितस्तामवातरत् ।

सिकन्दरवितस्तातरणानन्तरं पोरसमहाराजेन वृत्तान्तमिदं विज्ञाय स्वपुत्रः कतिपयसेनासमेतः सिकन्दरपथमवरोद्धुं प्रेषितः । परन्त्विदानीं महान् समयनाशः सञ्जातोऽतः युवराजः प्रतिपक्षिणामाक्रान्तुं निरोद्धुं वाऽसमर्थो बभूव । सम्राड् सिकन्दरः कंचन दुर्गमं पन्थानं दुर्गमभूमिस्थलं स्वसादिभिः समेतः विलंघ्य पोरसमहाराजस्य सेनामुखं हस्त्यादिकं त्यक्त्वा पश्चादाक्रमितवान् । महाराजस्य हस्तिषु महान् विश्वास आसीत परन्तु करिसेना तु युद्धकाले चमूसम्मुख आसीत् । तास्तु तत्रैव स्थित्वा निरीक्ष्य त्यक्तवानसौ महाचतुरः युद्धनिपुणो सिकन्दरः कतिपय मील दूरं गत्वा पार्श्वतः महाराजस्य मध्यभागस्थायिनां अन्तस्थ-पदातींश्चाक्रमित्

मारेभे सर्वदिनं त्रिवारं महाप्रलयोपमः मनुष्यघातः सम्पन्नः महाराजपोरसः स्वसेनानाशं दृष्ट्वापि धैर्यं नतत्याज नच पारसीनां महाशक्तिशाली प्रसिद्धः डेरयसनामा सम्राड् इव युद्धं परित्यज्य पलायामास, परन्तु व्रणानि स्वशरीरे लग्नान्यपि प्रसह्य स्वगज एवारुह्य युद्धक्षेत्रे बभ्रेजे। तस्य शूरवीरतां धैर्यञ्च दृष्ट्वा सिकन्दरश्चकितो बभूव। तक्षशिलाया महाराजं प्रतिस्वजीवनरक्षणार्थं प्रार्थयितुं प्रेषितवान्। पोरसः यावत् प्राचीनशत्रुं देशद्रोहिणं तक्षशिलाधिपतिं स्वसमीपागन्तुकामं पश्यति तावत् तस्य हननार्थं वेगेन गांडीवं प्रक्षेपितुमिच्छति। कष्टेन स्वजीवनं संरक्ष्यासौ सिकन्दरं प्रति धावति। सिकन्दरोऽपि भूयोर ऽन्यानपि योधान् प्रेषयति। यावन्मेरो नामा पोरसमहाराजस्य कश्चिद् मित्रमागच्छति। तेन सह पोरसः सिकन्दरसमीपं गच्छति। आत्मानं गजादवतार्य जलं पीत्वा स्वास्थ्यं च किञ्चिद् लब्ध्वा अश्वमारुह्य सिकन्दरं प्रति गतवान् महाराजपोरसः। दूरादागच्छन्तं भूमिपालं दृष्ट्वा कांश्चन स्वकीयान् साकन्नीत्वा सम्राड् सिकन्दरो ऽभ्युत्तिष्ठति। यौवनरूप-सम्पन्नं महाराजमश्वारूढं धैर्ययुक्तं ६ २/२ फोटपरिमितं सुन्दराकृतिं सन्मुखे निर्भीकमिव क्षत्रियं स्थितमनुभूय सहर्षमवादीत्। "इदानीं भवानस्माकं हस्ते पतितोऽस्ति, भवद्भिः सह कीदृशः व्यवहारः कर्तव्यः उच्यतामिति" यथा भूपाला राजभिः सह व्यवहरन्ति तथैव भवद्भिः मया सह व्यवहारो दर्शनीयः" इत्याह स त्वरितमुत्तरम्। अनेनातिशयं तुष्टः पुनरपि सिकन्दर उवाच "एतद्वयञ्जानीमः तथापि पृच्छामः यन्नो भवतामस्ति किञ्चिद्विशेषतया इष्टं कथनं प्रार्थनीयं वा" "यदुक्तं पूर्वमस्माभिः तेनैव सर्वं कथितं भवति, नास्त्यन्यत् किञ्चित् कथनीयमिति पोरसः भूयोपि निजगाद। शूरस्यवचनमिदं श्रुत्वा सिकन्दरस्तस्मै बह्वादरं ददर्श। नच केवलन्तस्य स्वराज्यं परन्तु भूयिष्ठान्या भूमिस्तस्याधिकारे न्ययुङ्क्त। अनेनाभूच्छूरयोर्द्वयोर्मध्ये मैत्री सन्धिश्च। सिकन्दरः सर्वां भूमिं अस्मै दत्वास्य सहानुभतिं प्राप

निष्कराटकतया वितस्ता नद्याः तरणानन्तरं चन्द्रभागां ( चिनाव इति ) लक्षीकृत्य शेषं पञ्चाम्बुदेशमाक्रमितुञ्चक्रे। चन्द्रभागां नदीं विलङ्घ्य स्यालकोट समीपे ऽऽगत्य रावीनदीमवातरत। सर्वान्नगरान् मध्ये स्थितान् विजित्य व्यासनदीं पारयितुमैच्छत्। अस्मिन् स्थले सिकन्दरेणानुभूतं यत्तस्य सेनाग्रे गन्तुमसमर्थासीत्।

## सिकन्दरस्य भारतात् प्रत्यागमनम्।

व्यासनदीं पारयितुं सिकन्दरसेनया नांगीचक्रे। सिकन्दरस्य महाशूरवीराश्च श्रमेण शरीरकष्टेन च खिन्नाः बभूवुः। विविधप्रकारैः व्याख्यायमानाः सिकन्दरेण स्वयमपि सान्त्वयमानास्ते भारतस्य पूर्वपश्चिमदक्षिणभागाननुक्रांतुं मतिन्न लेभिरे। अक्लिष्टमनाः सिकन्दरस्तत्र द्वादशस्तूपान् महाकृतीन् देवतार्चनयोग्यान् निर्माप्य देवेभ्यो वलिं च दत्वा प्रतिनिवर्तनाय सेनामादिदेश। रावी-चिनावनदीतरणानन्तरं पुनरपि सिकन्दरः वितस्ता नद्याः जेहलमनगरमवाप। अत्र नावां समूहमेकं रचयित्वा वितस्तया नद्या कतिपयसहस्रचमूं समुद्रं प्राप्तुमाज्ञप्तवान्। पोरसमहाराजं समाहूय वितस्ता नद्याः व्यासनदीपर्यन्तं पूर्वदेशं ददौ। अन्ये येऽभिसारदेशस्य राजानस्तस्य पक्षे आसन् तेभ्यः राजौरीभिम्वरादयो देशाः निकटस्थाः पर्वतप्रान्ताश्च अदायिषत। भारतभूमौ यवनानां ( यूनानीनां ) स्थायि राज्यं संस्थाप्य स्वदेशं प्रत्यावर्तत। महतीं सेनां वितस्तां नद्यास्तटाभ्यां नौभिः समुद्रं प्रस्थानाय न्ययुङ्क्त। वितस्ताचिनावयोः सङ्गमं प्राप्य चिनावराव्योः सङ्गमं प्राप्तैः कतिपयराजभिः सह युयुधे। अन्ते सर्वत्र जयं लब्ध्वा सिंधप्रदेशं प्राप्य समुद्रमवाप। तस्माम्महतीं सेनां समुद्रतटात् पारसखाडीं प्राप्तुमज्ञापयत्; स्वयं तु पारसदेशं गडरोजया प्रदेशात् प्राप्तुमागात्। अनेन भूमिस्थलेन सिकन्दरस्य सेना महत् कष्टमवाप। जलमार्गगामिनामप्यतिशयेन दुःखेन सिकन्दरसम्मेलनमभूत। भागद्वयोः सम्मेलनानन्तरं पुनर्जीवनशेषाणां यवनानां

त्रिवर्षानन्तरं स्वदेशगमनमभूत् । किञ्चिद् कालानन्तरमेव सिकन्दरः पञ्चत्वमाप । तस्यागमनादनन्तरं पञ्चाम्बुदेशेषु यवनराज्याधिकारिणामवशिष्टयूनानीनां विरोधे पुनरपि भारतीया युयुधिरे । हीनबलान् स्वामिरहितान् कतिपयावशिष्टयवनान् च हत्वा शीघ्रमेव सर्वत्र स्वराज्यं स्थापयामासुः । येन स्वल्पकाल एव यवनाक्रमणस्यात्र चिह्नमपि लुलोप ।

यश्चन्द्रगुप्तमौर्यवीयः यो भारतस्य प्रथमः सम्राड् जातः सिकन्दरं पश्चिमोत्तरे भारते मिलितवान्, नन्दवंशीय मगधदेशस्यास्य महापद्मनन्दस्य दुर्वृत्तमपि तस्मै शुश्राव । परन्तु चन्द्रगुप्तः तस्मिन् समये नवयुवक आसीत् । नच तस्य सहाय्ये बलमासीत् नवा तस्मिन् समये आख्यातिरासीत् । अतः सिकन्दरेण मगधदेशराजधानीं प्राप्तुं न प्रयतितम् ।



श्रीः

# काश्मीर राजतरंगिणी

लेखकः—— पं० गोविन्द राजानकः शास्त्री
M. A. M. O. L. L. T. Prabhakar

[ पूर्वतोऽनुवर्तते ]

याकोफो ऽथावशिष्टेन सैन्यभाग्येन केवलम् ।
युयुधे विजयाकाँक्षी धूर्तो दमनतत्परः ॥
दण्डादण्डि जायमाने युद्धे तत्र समन्ततः ।
असंख्याः कुकुभि यामीं भीता इव जवाद्गताः ॥
तस्मिन्दुः संकटे धान्यधननाशविधायिनि ।
अत्यावश्यक प्रस्तावोत्सर्जनाय जनाधिपः ॥
अवत्तीर्णो वडवाया यावद्गन्तुं समुद्यतः ।
तवदश्वो ऽनुदुद्राव तां कश्चिदरिवर्गतः ॥
विचचाल तदा सेना परितस्तेन ते भटाः ।
उभयोः पक्षयोर्भीताः स्वं त्रातुं ते पलायिताः ॥
एतस्मिन्नन्तरे तत्र याकोफः पीडितस्तुतैः ।
तदीया निखला दूरं भटा जग्मुस्तदार्दिताः ॥
याकोफं ते हतं मन्यमानाश्चिन्तायुता भृशम् ।
निलीना वनदुर्गेषु कान्दिशीका दरीषु च ॥
मासद्वयाधिकं वर्षमेकं भुक्त्वा वसुन्धराम् ।
पराजितो नृपः काष्टवाटं स प्रपलायितः ॥
बाहुल्ये मासि कासीमस्त्वथ काश्मीरमण्डले ।
सिंहासनाधिष्ठितो ऽभूत्तरलायतलोचनः ॥
प्रफुल्लवदन उद्यद्यौवनेन स रञ्जितः ।
मनोहरेण वपुषा भूषितः सद्गुणैरपि ॥

बभूव कामिनीचेतो विकारकारणो भृशम् ॥
विभूषयन् तन्मुखेन्दू राकाशोभि समन्ततः ।
बभूव नितरां नृणां दुःखसंपातहारकम् ॥
ऐधिषन्तास्यापघनाः प्रत्यहं ते प्रजागणाः ।
निर्भयाः सुखिनः प्राप्तसंमाना स्वेनकर्मणा ॥
चकार राज्यकृत्यानि नूतनानि स चान्वहम् ।
प्रजातुष्टिकराण्येवं राज्यं वै पर्यवर्तयत् ॥
नाथन्ते स्म जनाः पूर्वंनृपभीता हि कातराः ।
कासीमं कर्कशाराति दावैकवारिवाहकम् ॥
अपश्यद्रष्ट्रियज्येष्ट पौरैरनुगतं पुरा ।
संमानितं सभामध्ये हैदरमागतं तदा ॥
विधाय स्वागतं तस्मै प्रायच्छदुत्तमं पदम् ।
नीतिवित्पार्थिवो वश्यं चकार विधिना तदा ॥
याकोफः काष्टवाटस्थमहीपेन तिरस्कृतः ।
प्रत्यावृत्तोऽथ काश्मीरान्पुनः राज्यजिगीषया ॥
बन्दिनस्तैः सशिविरं दाहकर्कशकर्मणा ।
कासीमनृपतेर्गाढं ममाथ धूर्तताचराः ॥
पस्पन्दे शिविरादाहाद्राज्ञः सेनातिविह्वला ।
कासीमनृपतिं चैव चिक्रन्दे शरणार्थिनी ॥
बन्दिग्राहं ग्राहयित्वा हैदरं तं रिपुं बलात् ।
शूलदण्डाय ददे क्रुद्धः कासीमपार्थिवः ॥
विचित्रैरुत्कटैरस्त्रसमूहैर्भूषितैर्भटैः ।
अधिष्ठितं शत्रुघातकाङ्क्षी युद्धं स सस्पदे ॥

सरवर्दे स सदाक्रूरः संग्रामाय मदोद्धतः ।
अनेकस्थानगोमाय्वाकुलैराकुलितायसः ॥
कूर्दाचक्रेऽथ संग्राममशनै रणकोविदः ।
सम्राट् सेनां पराजित्य क्रान्तसिंहासनस्तदा ॥
उन्ममाथाथ याकोफः पुरे चाक्भर सैनिकान् ।
ततो ज्ञातक्रियस्त्यक्तोऽनुचरैर्भयकंपितैः ॥
पलायितो निस्सहायो खूर्दतोल्लूरपर्वते ।
अथ योद्धुं भाक्तयारे ससैदहसनादिभिः ॥
अकरोत्पुनरुत्थानं स्थितः स स्वय्यपत्तने ।
शत्रुशेषे प्रत्यवायं चिन्तयन् बलिनोऽथ तान् ॥
समं गखरजातीयैः प्रेषयामास भूपतिः ।
ज्वालाज्वलद्धसन्तीभिस्तदासीद तिदारुणः ॥
द्योतितः शैशरोनेहो हिमसंघातजृम्भितः ।
तस्मिन्काले धीयुतेन याकोफेनातिकर्कशे ॥
काष्टवाटं समासादि निर्यतन रणाद्भुतम् ।
अन्ये चान्यत्र परितस्तस्थुर्विद्रोहिणो जनाः ॥
दृष्ट्वा गुहाश्रितं सिंहं भीतं यान्ति मृगा ध्रुवम् ॥
मोभार मह्मदी भाभा खलालयोसभादयः ।
प्रेषिताः सविधे राज्ञा सम्राजो राष्ट्रियास्तदा ॥
वह्न्यग्निरसचन्द्राख्ये समायाते मयो शठः ।
याकोफः कृतयुद्धस्तु कासीमेन समं ततः ॥
मन्दं मन्द समागच्छन् पर्वतं शंकराभिधम् ।
शिश्रिये मुसलमानीमेनसू विग्रवेशने ॥

अनृजुपथगतं यद्गूढभावाश्रयं चेद्,
भवति विगलितन्तद्धी विचारादिशून्यम् ।
अथ विघटमजस्रं संप्रयोगादिशून्यम्,
सुगममपि विवेकेनैव याति त्रिधानम् ॥
ब्रह्मक्षत्रियवैश्यशूद्रजनता संतारका वारिणः,
सामुद्रादपि रोधनीष्वपि दृढा छिद्रेण युक्तायदा ।
सा चैवं शनकैर्हि तोयनिवहैरंतः प्रविष्टैस्तरी,
पूर्णामध्यगताञ्जनानतितरां नाशाय नूनं मता ॥

शंसचक्रादयः स्वय्यपुरादागत्य चक्रिरे ।
स्कन्धावारं रणार्थं ते हाजीकग्रामधन्वनि ॥
कोलाहले समुत्पन्ने लोकेषु कम्पितेष्वथ ।
कोऽप्यभूद् दुर्दशाग्रस्तः कालः कष्टतरो नृणाम् ॥
विना श्रीनगरं नासीत्कासीमाज्ञापरो ऽपरः ।
देशः क्षुत्तृट् परिक्लिन्न आक्रांतश्चातिदुःखितः ॥
उद्भटो भटसंघातनाशकश्चातिदारुणः ।
सर्वतः सशिरश्छेदप्रधानप्रधनस्त्वभूत् ॥
युद्धे प्रवहति तस्मिन्कस्यापि धन्विनः शरे ।
निर्गते धनुषो दैवाद्गाढम्मर्मान्तभेदिनि ॥
याकोफसेना हृदयान्तः प्रविष्टे जवाद्द्रुते ।
बलेषु विद्रुतेष्वेव द्राक् तन्नाशविधायिनी ॥
संप्राप्तभंगो याकोफो वैवर्ण्यविवशीकृतः ।
कालापेक्षी तदा सोपि चक्रे संगं परैर्बलैः ॥
उपालब्धैर्योधबृन्दैः हाजीकग्रामसंस्थितैः ।
युद्ध्यतेऽस्माभिरित्युक्त्वा विश्वस्तैः संगतस्ततः ॥

कोटिशोऽसौ वीरभटवृन्दं संरुरुधे द्विषाम् ।
विधुन्तुदो ग्रारुकारी शीतरश्मि गणानिव ॥
सार्धद्विमासं हि तदा युद्धमासीत्तु दारुणम् ।
मूर्छिता ववमूरक्तं यत्र योद्धाः क्षतार्दिताः ॥
निराशो नृपतिरतूर्णं सम्राड्शरणमाययौ ।
पराजितो जनः सर्वः शरणं याति सर्वथा ॥
निवेदितोऽथ राज्ञैवं सम्राट् देशोपशान्तये ।
सैदमोभारकं वंगदेशं तमानिनाय सः ॥
प्रास्थानिकैरशकुनै र्योभूत्सम्भाविताशुभः ।
प्राप्तो रुजपुरे प्राणान्विजहौ हि रुजान्वितः ॥
अथ यासोभखानख्यं सम्राट् कंचनसम्मतम् ।
पञ्चविंशसहस्राणि पत्तीनां सादिनां बलम् ॥
दत्त्वा महद् खलीलभाभाभ्यामप्यानुगतन्तदा ।
काश्मीरान् प्रहिणोत्तूर्णं देशोपद्रवशान्तये ॥
तस्मिन् समागते महाद्धदे पूर्वानुरागतः ।
योधैर्जयध्वानिपरैः हृष्टैः सम्मानितस्तदा ॥
पराजितोथ याकोफः काष्ठवाटपुरं गतः ।
शंसचक्कादयश्चापि जग्मुः पर्णोत्समागतः ॥
अलेशिरादिभिस्तैस्तैरुद्धतैः सेवितः परः ।
जगाम त्वरितो भीतः कासीमो देहलीपुरम् ॥
तदाज्ञया तत्पदभाक् सैदयोसोभनानकः ।
बभूव लोकान् शिक्षासयन्नात्मीयधिया बुधः ॥
पंचाहोभिर्युतान् भूयो मासानेकादश त्वसौ ।
कासीमो रस्त राज्याधिकारे काश्मीरमंडले ॥

श्रीः 

# विवाहवयो विवेकः

लेखकः– पं० दीनानाथ शास्त्री मुलतानस्थः।

[ पूर्वतोऽनुवर्तते ]

❀–:❀:–❀

अथ च नारी बहुसमयपर्यन्तमविवाहिताऽथवा ब्रह्मचारिणी कार्येत; तया सह विवोढुरपि हानिसम्भवो भवति । तथा च सुश्रुते— अतिब्रह्मचारिणीं चिरोत्सृष्टाँ........नारीमुपसेवमानस्य... मेढ्रमागम्य प्रकुपिता दोषाः..... श्वयथुमुपजनयन्ति, तमुपदंशमाचक्षते, निदान १२।७ ऋतुकालादनन्तरं स्त्रीणां वेगा भवन्ति, १७–२४ वर्षादि पर्यन्तं तन्निरोधे कारिते आयुर्वेदे महती हानिरुक्ता, दिङ्मात्रं यथा—वेगानुदीर्णानुप-हन्धत्याः........ क्षिप्रं वातः प्रकोपमापद्यते, चरक० निदान० ३।१६ । ऋतावनाहारतया भयेन विरूक्षणैर्वेगविनिग्रहेण । संस्तम्भनोल्ले-खनयोनि दोषैर्गुल्मः स्त्रियं रक्तभवोऽभ्युपैति, चरक० चिकित्सि० ५।१६ एवं चिरकौमारधारिणीनामायुर्वेदेऽन्येप्युक्ता दोषाः प्रदरयोनिकाठिन्य-वन्ध्यात्व'सिफिलस'प्रभृतयः ॥ अथ च ऋतुमती जाता नारी नरकामा भवति; तदा सा सर्वदा मैथुनविचारं धत्ते, अत एव ला० लाजपतरायप्रणीते 'दुःखीभारत' पुस्तके २३५ पृष्ठे लिखितम् 'जब पुरुष सङ्ग करने की बालिकाओं में ऐसी प्रवृत्ति है, तब इसमें कोई आश्चर्य नहीं कि बहुत से लोगों का यह विश्वास है कि १६ वर्ष की आयु के पश्चात् कोई बालिका अक्षतयोनि नहीं रहती ( पूर्वी जर्मनी की रिपोर्ट से उद्धरण । ) ....... इसका अर्थ यह हुआ कि उल्लिखित योरपियन देशों की समस्त बालिकाएं १६ वर्ष की आयु से पहले यौवना हो जाती हैं । और कदाचित् अधिकाँश इससे बहुत ही पहले ऐसी हो जाती हैं ।

एतेन बालिकानां ११-१२ वर्षेऽपि यौगिकयौवनदर्शनात्तस्मिन् वयसि विवाहपक्षोऽस्माकं सिद्धः । तस्या ऋतुमत्याः स्वप्ना अपोद्दशा आयान्ति, ततो हानिर्जायते । तथा च सुश्रुते—

'ऋतुस्नाता तु या नारी स्वप्ने मैथुनमाचरेत् ।
आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि ॥
मासि मासि विवर्धेत गर्भिण्या गर्भलक्षणम् ।
कललं जायते तस्या वर्जितं पैतृकैर्गुणैः ॥

(अस्थ्यादिभिरित्यर्थः) ।

सर्पवृश्चिककूष्माण्डविकृताकृतयश्च ये ।
गर्भास्त्वेते स्त्रियाश्चैव ज्ञेयाः पापकृता भृशम् ॥

शारी० २।४३।४६

एवं भावप्रकाशे पूर्व० गर्भ० ६३ इत्यादिहानयः स्युः । एवमृतुमतीले मैथुनेच्छास्वभावाद्विवाहाभावेन पत्यभावाद् "यदि पुंसां गतिर्ब्रह्मन् कथञ्चिन्नोपपद्यते । अप्यन्योन्यं प्रवर्तन्ते" महा० अनुशा० ३८।२ इत्यद्यनुसारं 'जारं न कन्या' ऋ० ६।५६।३ 'योषा जारमिव प्रियम्' ऋ० ६।३२।५ 'जारिणीव' ऋ० १०।३४।५ इत्यादि वेदानुसारं, 'प्रायः स्त्रियों का स्वभाव तीक्ष्ण और मृदु होता है' सत्यार्थ० पृष्ठ० ९ इति भवदृष्यनुसारं 'जिस हेतु स्त्रियों को वहकाने वाले पुरुष बहुत होते हैं, इस कारण उन्हें कभी स्वतन्त्र छोड़ना उचित नहीं' इति ऋ० ४।५।५ मन्त्रस्याशये पं० शिवशङ्कर काव्यतीर्थेन 'वेदामृते' ३५४ पृष्ठे प्रोक्तं तदनुसारं दशा कन्यास्वत्यर्थं भवति, याऽद्यत्वेऽनुभूयते । अवि कवयस्ककन्यापहरणघटनास्तदादिमूलका एव । ला० लाजपत राय प्रणीते 'दुःखीभारत' पुस्तकेऽमेरिकास्थाऽविवाहितयुवतीनां वृत्तं पठनीयं तत्र १४ वर्षतः स्त्रीणां दुश्चरित्रं प्रदर्शितम् २३३-२३५ पृष्ठे । तत्रैवैतद्दृष्टुम् जर्ज्जलिडसे कथनम्- 'हमने मालूम किया है कि-३१३ बालिकाओं में २६५ बालिकाएं ११ और १२ वर्ष की आयु में यौवनावस्था

प्राप्त होगई थीं। इनमें से अधिकांश १२ वर्ष की अपेक्षा ११ वर्ष की ही आयु में युवति हुई थीं। ३१३ बालिकाओं को हम दो दलों में विभक्त कर दें, तो हमें २८५ ऐसी मिलेंगी, जो ११-१२-१३ वर्ष की आयु में युवति हुईं। और केवल २८ ऐसी मिलेंगी, जिन्हों ने १४, १५ और १६ वर्ष में युवावस्था प्राप्त की, दुःखी भारत पृ० २३५ एतेन शीतदेशस्य प्रत्यक्षानुभवेन उष्णदेशे तु ११।१२ वर्षे स्त्रीणां यौवनमवश्यं सिद्धं। तेन यत्र विवाहे यौवनं तत्र विवाहे ११।१२ वर्षावस्थापक्षोऽस्माकं सिद्धः। सुश्रुत उक्तं—

यदा नार्यावुपेयातां वृषस्यन्त्यौ कथञ्चन।
मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते॥

शारी० २।४३ भाव प्र० पूर्व० गर्भ० ६२

इत्येतादृश्यो हानयो जायन्तेऽधिकवयस्कानां विवाहे। अद्यत्वे त्वेतस्मादप्यधिका दुरवस्था प्राप्यते। कन्यागुरुकुलेष्वपि अद्यत्व ईदृश्यो भीषणाः समस्या भवन्ति; यास्वावरणं दीयते तदधिकारिभिरिति प्रस्फुटे विषये नाधिककथनस्यावश्यकता। बह्वीनां १३-१४ वर्षीयकुमारीणां मिशनहस्पतालेषु प्रसवा दृश्यन्ते। द्वादशवर्षे विवाहे जाते, ऋतुमतीत्वे च पति संसर्गे प्रागुक्तदुरवस्था न भवन्ति।

'समानं ब्रह्मचर्यं यदुच्यते' तर्हि ४८ वर्षीयस्त्रिया एव विवाहः करणीयो यत उत्तमं ब्रह्मचर्यं ४८ वर्षीयं श्रीमदृषिर्मन्यते पुंसः। यदि नैवं क्रियते, तदा समानं ब्रह्मचर्यं न सिद्ध्यति। यदि २४-४८ वर्षयोः स्त्रीपुंसयोः समानं ब्रह्मचर्यं तर्हि १२-२४ वर्षयोरपि तयोस्तथात्वम्। यत्पुनर्यौवने विवाह उद्घुष्यते, तत्र गताङ्कोक्तप्रमाणैरनुपदमुक्तेन "दुःखी भारत" पुस्तकप्रत्यक्षप्रमाणेन च १२ वर्षाद्यौवनारम्भात्तदैव, ऋतुकालात् पूर्वं वा विवाहमकार्षुः प्राचीनाः—इति महाभारतादौ 'नग्निका'दिपदैः स्पष्टं। अत एव गौतमधर्मसूत्रे— 'प्रदानं प्राग् ऋतोः, अप्रयच्छन् दोषी' १८।२१ 'प्रयच्छेन्नग्निकां कन्यामृतुकालभयात् पिता। ऋतुमत्यां

हि तिष्ठन्त्यां दोषः पितरमृच्छति ' वसिष्ठधर्मसूत्रे १७ । ६२ इत्यादीनि बहूनि प्रमाणानि । एवमन्यत्र । ब्राह्मणादिकन्यासु स्वयंवरो न वैधो न च सामान्यशास्त्रमिति प्राक् साधितम् । कासुचित्कन्यासु [ब्राह्मणीषु] इतिहासे व्यभिचारोऽपि दृश्येत यदि, किं तस्य वैधता धर्मशास्त्रानुकूल्यं वा भवेत् ! ।

सीताविवाहवयोविवेकः—अस्माभिर्वाल्मी० श्लोकमुद्धृत्य सीतायाः ६ वर्षावस्था साधिता; परं श्रीस्नातकेन कोऽपीदृशश्लोको न निर्दिष्टो यत्र तस्याः १७–२४ वयो विवाहकाले सिध्येत् । न च मदुद्धृतश्लोकान् खण्डयितुमशाकि । अधुनाहं तद्विषयं पुष्णामि । रामायणश्लोकेन सूच्यते यच्छ्रीरामो विवाहकाले द्वादशवर्ष आसीत् ; तर्हि किं श्रीस्नातको १२ वर्षाय श्रीरामाय १७–२४ वर्षां सीतां दिदापयिषति? स्वपक्षसाधनपरः सोऽसङ्गतिमपि न पश्यति ।

'ऊनषोडशवर्षो मे रामो राजीवलोचनः
न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः' ॥
बाल० २०।२

इदं दशरथवचो राक्षसवधाय रामं निनीषुं विश्वामित्रं प्रति; अत्र षोडशवर्षेभ्यः स न्यूनः प्रोक्तः, अग्रिमसंवादाच्च स १२ वर्षीयो मतः । '[रामो] बालो ह्यकृतविद्यश्च ' २०।७ 'बालं मे तनयं ब्रह्मन् ' २०।२५ 'अजातव्यञ्जनः श्रीमान् बाल० अरण्य' ३८।१४ 'बालो द्वादशवर्षोऽयम कृतास्त्रश्चराघवः' ३८।६ 'बालोऽप्येष महातेजाः' ३८।११ 'अदृश्यत तदा रामो बालचन्द्र इव' ३८।१५ 'अवजानन्नसंमोहात् बालोऽयमिति राघवम् '३८।१८ इति मारीचवचनम् । 'एवमस्मि तदा मुक्तः- बालेनाक्लिष्टकर्मणा ' ३८।२२ इत्यादिप्रमाणै रामस्य द्वादशवर्षता सिध्यति। विश्वामित्रेण सह यदा श्रीरामो गतो यदा च स धनुर्भङ्गं कृत्वा सीतामुपयेमे, अत्र प्राय एकमाससंख्या रामायणद्वारा सूच्यते- इति बाल० २३।१ तः ७३।२६ पर्यन्तं स्वयं दिनसंख्या गणया । अथवाऽहमेवादेश्यो

यद्धवदग्रे तानि पद्यान्युपस्थापयेयम्, विस्तरभियाऽधुनोपेक्ष्यन्ते। तर्हि किं १२ वर्षायाऽधिकाधिकं १५ वर्षाय श्रीरामाय १७–२४ वर्षां पत्नीं दापयति श्रीमान् ? वस्तुतः श्रीरामस्य १२ वर्षावस्थाऽ* सीतायाश्च ६ वर्षावस्थासीद्विवाहे। तथा च—

,मम भर्ता महातेजा वयसा पञ्चविंशकः।
अष्टादश हि वर्षाणि मम जन्मनि गण्यते'॥

अरण्य ४७।१०।११,

इति रावणं प्रति सीताऽऽत्मनः स्वधवस्य च राज्याभिषेक-सम्भवकालिकं वयो वक्ति। कैकेयीविहतराज्याभिषेकात् प्राक् तया उषित्वा द्वादशसमा इक्ष्वाकूणां निवेशने' ४७।४ इति १२ वर्षाणि श्वशुरगृहे निवासः सूचितः। 'तत्र त्रयोदशे वर्षे राजाऽमन्त्रयत प्रभुः' ४७।५ इति श्वशुरगृहगमनात्त्रयोदशेऽब्दे तात्कालिके स्वपूर्णाष्टादशे वर्षे वनवासप्रदानं निर्दिष्टम्। इत्थं तस्या विवाहसमये षष्ठवर्षारम्भः सूच्यते. रामस्य चाभिषेकसम्भावनाकाले २५ वर्षीयत्वाद्विवाहादारभ्य राज्याभि-षेककालपर्यन्तञ्च १३ वर्षव्यतिगमनाद्रामस्य विवाहसमये १२ वर्षावस्था सिध्यति। तर्हि 'द्वादशवर्षाणि वेदब्रह्मचर्यं जननात् प्रभृतीत्येके. यावदध्ययनं वा' जैमिनिगृ० १। १८ इति समाम्नाध्ययनाय तस्मै १२ वर्षाय भवन्त १७–२४ वर्षीयां पत्नीं कथं दापयन्ति? अग्रेऽपि सीतया— समा द्वादश तत्राहं' सुन्दर० ३३।१७ 'ततस्त्रयोदशे वर्षे राज्ये चेक्ष्वाकुनन्दनम्' ३३।१८ इत्याद्युक्तम्। तेनास्मदुक्तं सिद्ध्यति अयं लघुवर्षविवाहः 'ग्रहणान्तिकमेव वा' ३।१ 'यावताकालेनोक्तावधेरूर्ध्व-मधो वा वेदान् गृह्णाति तावत्काले व्रताचरणम्' इति कुल्लूकानुवादेन स्मृत्यनुकूलः।

यत्तु 'पति संयोगसुलभं वयो दृष्ट्वा तु मे पिता' अयो० ११८।३४

---

* गताङ्के ५४ पृ० 'तस्या च वयसा' अत्र 'तस्य च' इति। 'कूर्यात्' अत्र 'कुर्यात्' इति। 'रजोऽधिकतयाऽविशिष्टः' अत्र 'अवशिष्टम्' इति ज्ञेयम्। प्रूफदर्शकानवधानतया तथा मुद्रितम्।

इति सीतावचसा यौवनानुमानमुच्यते, तन्मन्दम् । एतदनुमानस्य सीतास्पष्टवचोऽग्रे किमपि न मूल्यम् । अथ चोक्तवाक्यस्य विवाहयोग्यावस्थां दृष्ट्वेत्यर्थः; पत्या–धवेन संयोगः–सम्बन्धो विवाह इत्यर्थः, तत्सुलभं वयः । विवाहावस्थाष्टमाब्देऽपि स्मर्यते, यथा —'विवाहो ह्यष्टवर्षायाः कन्यायास्तु प्रशस्यते' संवर्त ६८ [६७] 'धृतायोवसनां गौरीं (अष्टवर्षा)' व्यास० २।३ 'एष्टव्या बहवः पुत्राः... गौरीं वा वरयेत् कन्यां' बाधा० गृ० शे० सू० ३।१६।१३ 'त्र्यष्टवर्षोऽष्टवर्षां वा' मनु० ९।९४ अत्र भवन्मते 'द्व्यष्टवर्षोऽष्टवर्षां वा' इत्यपि पाठः । वेदेऽपि–'इयमग्ने ! नारी पतिं विदेष्ट सोमो हि राजा सुभगां कृणोति' अ० २।३६।३ इति सोमादिपत्येऽपि पत्ये प्रदानमुक्तम् । 'सोमो गौरी अधिश्रितः' ऋ० ९।१२।३ इति सोमस्य गौर्यामधिकारः, गौरी चाष्टवर्षोच्यते । महाभारते 'सप्तवर्षामवाप्नुयात्' अनु० ४४ । १४ इति सप्तवर्षाविवाहोऽपि दृष्टः । भवदभिमते पराशरमाधवीये – 'जन्मतो गर्भाधानाद्वा पञ्चमाब्दात्परं शुभम् । कुमारीवरणं दानं मेखलाबन्धनं तथा' । तर्हि तदादिकपारम्परिकवचनज्ञानात् 'पतिसंयोगसुलभंवयो दृष्ट्वा' इति जनकस्य 'स्वस्य च प्रियमात्मनः' म० २ । १२ [विकल्पे आत्मनः प्रियता ग्राह्या] षड्वर्षीयसीताविवाहविचारः, तन्मतपक्षपातित्वाच्च अयोनिजायाः सृष्टिक्रमविरुद्धं शरीरपरिणाहवत्याः शीघ्रमृतुकालभिया तदवस्थात्यतिक्रमे धर्मभङ्गभिया तस्य चिन्तोपपद्यत एव । श्रीरामसदृशस्य सुपात्रस्य चागमनाद्, अप्राप्तामपि (अप्राप्तकालामपि) तां कन्यां तस्मै दद्याद् यथाविधि' म० ९ । ८८ इति सप्तनादपि किञ्चिन्न्यूने वयसि तद्विवाहः सिद्धः, तेन श्री स्नातकाक्षेपो निरस्तः ।

अथ च श्री स्नातकेन विचिन्त्यं यत् सीता मैथुनान्नोत्पन्नासीत्, किन्तु पृथ्वीं भित्वोत्थितेत्यत्र 'भूतलादुत्थिता सा तु व्यवर्धत' बाल० ६६ । १४ 'अयोनिजा' ६६ । १५-२६, अयो० ११८ । २८-३०-३७ उत्तर० १७ । ३२-३६, ९८ । ७, सुन्दर० १६ । १६ एवं पाद्ये-'अयोनिजा...... सीता सुतोऽभवत्सीता' इत्यादि प्रमाणानि द्रष्टव्यानि ।

मैथुनाऽमैथुनयोन्यो रुत्पत्तिकाले वर्धनस्य शरीरपरिणाहस्य च समानक्रमो न भवति। स्त्रीगर्भाशये पारिमित्यं भवति, भुवि त्वपारिमित्यम्। अत उक्तग्रन्थेषु सीताया भूतलात्प्रकटनसमकालमेव वपुषो विशिष्टवृद्धिरुक्ता। सृष्टिनियमाद्भिन्नोत्पत्तौ सृष्टिनियमसीमितवृद्धिक्रमोपि न भवति किन्तु तद्विलक्षणः; अत्रोद्भिज्जसृष्टिर्द्रष्टव्या जरायुजतो विलक्षणा। श्रीमता स्वर्षेर्वचो द्रष्टव्यम्—'आदि सृष्टि मैथुनी नहीं होती' सत्या० ८ पृ० १३८ अत्रामैथुनयोनिसम्भवः सिद्धः, अपवादान्यायान्मध्यमसृष्टावपि भवति। 'आदि में अनेक... पुरुष उत्पन्न हुए... युवावस्था में' पृ० १३६ इति सिद्धं यत्साऽमैथुनसृष्टिरुत्पत्तिसमय एव शरीरपरिणाहवत्यासीत्, अत एव भवत्सम्मते महाभारते ऽयोनिजद्रौपद्या उत्पत्तिसमकालमेव—'कुमारी चापि पाञ्चाली वेदीमध्यात्समुत्थिता। श्यामा पद्मपलाशाक्षी...चारुपीनपयोधरा' आदि १६६। ४४। ४५ इतिशरीरवृद्धिर्दर्शिता। अयोनिजशरीरसिद्धिस्तु स्वर्षिसम्मतप्रशस्तपादभाष्ये—"शरीरं द्विविधं योनिजमयोनिजञ्च। तत्राऽयोनिजमनपेक्ष्य शुक्रशोणितं देवर्षीणां शरीरं धर्मविशेषसहितेभ्यो ऽणुभ्यो जायते" इति द्रव्यग्रन्थे पृथ्वीनिरूपणे द्रष्टव्या; एवमन्यत्र। परं तस्य [अमैथुनोत्पन्नस्य] वर्षसंख्या ऽभिमज्जगति आगमनस्य लौकिक्येव मंस्यते। एवं सीता अमैथुनयोनिरुत्पत्तिमात्रेणैवातिशय वृद्धिं प्राप। यदा तस्या जातायाः ६ वर्षाणि जातानि; तदा तद्वपुःपरिणाहः स्वयमूहितुं शक्यः। तदा च तस्याः सृष्टिक्रमविरुद्धमृतुकालः कदाचिच्छीघ्रं स्याद्यतो धनुर्भञ्जकोद्यापि न प्राप्त इति तद्भिया जनकस्य तद्विवाहचिन्ता उपपद्यत एव। एवं श्रीरामस्याप्युत्पत्तिः बाल० १६। ११। १६। १६-२० इति सृष्टिनियममतिक्रम्य विना शुक्रमभूत्। अतस्तस्यापि १२ वर्षत्वे शारीरिकपरिणाहश्शीघ्रमभूत्; अत आरण्यकाण्डे उक्तम्—'बालोऽप्येष महातेजाः समर्थस्तस्य निग्रहे' ३८। ११। तर्हि 'किं षष्ठवर्षे ईदृशं पतिसंयोगसुलभं वयो भवतीति शास्त्रिमहोदया एव कथयन्तु' इति श्रीस्नातकीयोक्तिः प्रत्युच्यते। स्मृतिष्वेतदादिकस्य पतिसंयोग-(विवाह) वयसोपि दर्शनात्।

अग्रे च यद्—' रेमिरे मुदिताः सर्वा भर्तृभिः सहिता रह' बाल० ७७। १४ अत्र श्रीमान् १७। २४ वर्षानुमानं सीताया निर्दिशति तदपि मन्दम्। रमु क्रीडायाम् । तेन 'रेमिरे' इत्यस्य क्रीडामात्रमर्थः। 'रहः' इत्यस्य भावो न पित्रादिसम्मुखे, यतः स्वस्त्रीभिर्विनोदापरपर्यायकं क्रीडनमपि पित्रोः समक्षं कथं क्रियेत ? अतो रमणमित्यस्य मैथुनार्थो नात्र, किन्तु क्रीडार्थो विनोदाशयकश्च । 'सोम रारन्धि नो हृदि' ऋ० १।९१।१३ अस्य मन्त्रस्यार्थे 'आर्याभिविनये' ४६ पृष्ठे भवत्पित्रा स्वाभ्यन्तरे परमात्मनो रमणस्य प्रार्थना कृता, भवदनुसारं कुमार्योऽप्येतत्प्रार्थयिष्यन्ते; तर्हि किं श्रीमाँस्तत्र रमणस्य मैथुनार्थं ग्रहीष्यति ? 'स (शान्तनु) तथा सह पुत्रेण रममाणो महीपतिः' महा० आदि० १००। ४४. २२४। १० 'राम' इत्यस्य व्युत्पत्तिः—'रमन्ते ऽस्मिन् योगिनः' इति; तर्हि श्रीमान् किं मैथुनं कुर्वन्त्यस्मिन्नित्यर्थं मंस्यते ? धन्यः श्रीमान् । अग्रे (सहधर्मचरी) छायेवानुगता सदा' अत्रापि श्रीमता दत्ता रेखा विफला; लघुवयस्कैव सदाच्छायेवानुगच्छति शङ्कावत्त्वात्। १७-२४ वयस्का तु नवविवाहिता स्वैरिणी भवति प्रतिकूलचारिणी वा। न जातु पतिं छायेवानुयातीति निष्पक्षपातविवेचका एवालोचयन्तु; तेन सीतायाः षड्वर्षावस्था सिद्धा। श्रीमता सीताविवाहे १७-२४ अवस्थाप्रतिपादकः कोपि श्लोको न स्वयं दत्तो नचास्मद्दत्ताः ६ वर्षावस्थाख्यायकाः खण्डिताः; तेनास्मत्पक्षः सिद्धः। अथ च १२।१५ वर्षस्यापि रामस्य कृते वाल्मीकि १।७२।७, १।५०।१८, १।४८।३ इत्यादौ प्राप्तयौवनकथनाद्भवदुक्तप्रमाणेष्वपि यौवनशब्दः पारिभाषिको न सिद्धः। वा० १।४८।२ रामस्य गजगतिकथनाद् १२ वर्षोपि गजगतिः सिद्धा। तेन 'वारणगामिनीम्' इत्यत्र १७।२४ वर्षविवाहसाधकं भवतो ऽपास्तम्।

इतिहासविवेकः—अग्रे श्रीमान् कुन्तीदमयन्तीलोपामुद्राविषयकश्लोकान् प्रदर्श्य तासां यौवनं पुष्णाति । परं श्रीमद्भिस्तत्र साधितं यदासां वयः १७-२४ वर्षस्यासीत् , इमाश्च तु मत्य आसन्निति। त्रिंशद्वर्षः षोडशाब्दां भार्यां विन्देत नग्निकां । अतोऽप्रवर्तते रजसि

कन्यां दद्यात् पिता सकृत्' इति भवदुद्धृतोद्वाहतत्त्वस्थमहाभारतीयपाठेनैतत्सिद्ध्यति यत्—प्राक्तनकाले क्वचित् स्वाभाविकमनःशुद्धिकारणात् षोडशवर्षा अपि कुमार्यो नग्निका (अनृतुमत्यो) बभूवुः। यौवनञ्च १२ वर्षान्मन्यते; तस्य मध्यभागश्च १६ वर्षमिति प्राक् साधितम्। तेन सिद्धं यत्-कुन्तीदमयन्तीप्रभृतयो द्वादशवर्षा एव स्युः; कथञ्चित् षोडशाब्दा अपि नग्निका एव स्युर्यतो महाभारतस्य नग्निका [रजोऽप्रवृत्ति] विवाहे पक्षपात इति भवता मया चोद्धृताभ्यां म० भा० पद्याभ्यां स्पष्टम्। अत एव द्रौपदी विवाहे म० भा० कारः—'सर्वाभरणभूषिता' आदि० १८७।३० इति द्रौपदीं विशिनष्टि, सर्वाभरणभूषितत्वाधिकार ऋतुकालात्पूर्वं भवतीति साधितचरम्। तेनर्तुकालात्प्राग्विवाहे ऽस्मत्पक्षस्यैव जयः। अथ च यत्र क्वचित् स्मृतिगर्हिते गान्धर्वविवाहे स्वयंवरादौ वा तासामधिकावस्थापि स्यात्तर्हि न नो हानिः, यथाहि—'मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते'। यतस्तत्र न प्राशस्त्यं नच विधिः; किन्तु तादृग्विवाहा निन्दिता इति प्रयुक्तम्। भवद्भिराप्युक्तम्—'आसुर और गान्धर्व निकृष्ट हैं' सत्यार्थ० पृ० ५५।११२।२ आदि० कुन्त्याः स्वयंवर एव 'रूपयौवनशालिनीम्' इति दृष्टम्। एतदादिके यौवनशब्दो न पारिभाषिकः ४।१ संख्याप्रयुक्तभवदीय 'प्रौढा' शब्दवत्। अन्यथा भवदीयप्रौढाशब्देनापि 'तदूर्ध्वमधिरूढा स्यात् पञ्चाशद्वत्सरावधि' इति भवत्सम्मतभा० प्र० (पूर्वख० ऋतुप्र० २७७) प्रमाणेन विवाहः कन्यानां ५० वर्षपर्यन्तं स्यात? इदं तद्यौवनं यद् १२ वर्षतश्शरीरे दृश्यते इति प्रागस्माभिर्मीमांसितम्। अग्रे पाण्डोः 'विवाहस्यापरस्यार्थे चकार मतिमान् मतिम्' आदि० ११३।१ इति द्वितीयविवाहोपि दृश्यते कुन्त्यतिरिक्तः; किं तच्छ्रीमान्मन्यन्ते! यदि न, तर्हि 'अर्धजरती' न्यायः कथमुपास्यते? 'नचाप्ययंधर्मः कल्याणि! बहुपत्नीकता नृणाम्। स्त्रीणामधर्मः सुमहान् भर्तुः पूर्वस्य लङ्घनम्' आदि० १६०।३५ 'एकस्य बह्व्यो विहिता महिष्यः कुरुनन्दन! नैकस्या बहवः पुंसः श्रूयन्ते पतयः क्वचित्' आदि० १९५।२७ 'वर्षज्येष्ठयं न बह्वीभिः

सवर्णाभिश्च जन्मतः' कात्या० ८।६ गोभिलस्य० ३।१०३ 'मनोर्वै दश जाया आसन्' मैत्रायिणीसंहि० १।५।८ 'तस्मादप्येकस्य पुंसो बह्व्यो जाया भवन्ति' शतपथ० ९।४।१।६ 'महाराजदशरथस्य तिस्रः स्त्रियः' वाल्मी० बाल० १६।२७।२८।२९। 'तमाहूय महातेजा ब्रह्मदत्तं... ददौ कन्याशतं राजा' वाल्मी० बाल० ३३।२१। तत्र ह्यस्य यतमा+ प्रिया ते' अथर्व० १२।३।१ अत्र यच्छब्दे डतमच् प्रत्ययः ॐ–'वा बहूनां डतमच्' ५।३।९३ पा०। तेन बह्वीषु तव स्त्रीषु या तव प्रियेति निर्देशात् पुंसो ऽनल्पाः स्त्रिय उपपद्यन्ते, कौशिकसूत्रानुसारं ६०।३१।३२ अनेन मन्त्रेण यजमानः प्रियया स्त्रिया सह चर्मणि तिष्ठति यज्ञे। 'सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत्। सर्वास्तास्तेन पुत्रेण प्राह पुत्रवती मनुः' ९।१८३ 'हरिश्चन्द्रो ह ऐक्ष्वाकः, तस्य शतं जाया बभूवुः' ऐत० ब्रा० ७।१३ एवमर्जुनादिपाण्डवानामपि द्रौपदी उलूपी-चित्राङ्गदा सुभद्रादय एकाधिकाः स्त्रियोऽभवन्निति महाभारते आदिपर्वणि ९५।७६ ८२, २१६।२१७।२२१ अध्यायेषु च (यतो भवता श्रीकृष्णोक्तिश्लोकः ४।४ संख्यायामुद्धृतः) द्रष्टव्यम्। अवशिष्टप्रमाणानि ५।३ संख्यायां ४३ पृष्ठे मल्लेखे दृश्यन्ताम्; तेन स्त्रा० महाशयस्य ४।४ संख्यायां पृ० २७ स्थो व्यत्ययः सर्वथैव निराकृतः। आशासे इतिहासप्रमाणवादिता-ऽपत्नी मन्येत।

'अवरोधेचैव मां बाला (दमयन्ती)' वन० ५६।२६ अत्र दमयन्त्या बालावस्था स्पष्टा; अतोऽत्र यौवनत्र पारिभाषिकम्, किन्तु १२ वर्षादूर्ध्वम्॥ लोपामुद्राविषये त्विदं ज्ञेयम्, यत् 'आत्मनः प्रस-

---

ॐ अत्र डतमच्। एवं मल्लेखेपि ५।३ पृ० ४५ पं० १६ 'एषु कतस्मिन्' इति पाठः; परं 'कतरस्मिन्' इति मुद्रितः। एवं तत्रैव ३५ पृष्ठे 'इन्द्रश्चिद् घा' अत्र 'घः' इत्यशुद्धं मुद्रितः, 'स्वचित्तु ...

वस्यार्थे नापश्यत् सदृशीं स्त्रियम् ' ६६।१६ 'स तस्य२ सत्वस्य तत्तदंग-मद्युत्तमम् । संगृह्य तत्समैरङ्गै निर्ममे स्त्रियमुत्तमाम् ' ६३।२० एतेन सिद्धं यद्—लोपामुद्रा ' यद् दुस्तरं यद् दुरापं यद् दुर्गं यच्च दुष्करम् । सर्वं तत्तपसा साध्यं तपो हि दुरतिक्रमम् ' मनु० ११।२३८ इति तपस्विनागस्त्येन तपश्शक्त्या विना मैथुनमेव स्वयं निर्ममे स्वकृते [वसिष्ठभार्यां लिखन् स्वा० बभ्राम], अत्रे ६६।२१।२२ द्रष्टव्यम् । इत्थं साऽमैथुनयोनित्वात् प्रकटितमात्रैव युवतिरासीद्; नात्र किमपि वैलक्ष-ण्यम् । अग्रेङ्कितं— सा प्रीता ...पतिं पर्यचरत् । अगस्त्यश्च परां प्रीतिं भार्यायामचरत् ' ६७।१२ ततो बहुतिथे काले लोपामुद्रां विशां पते ! तपसा द्योतितां, स्नातां ददर्श भगवानृषिः ' ६७।१३ अत्र स्पष्टं यत्तस्या विवाह ऋतुकालात्प्रागजाने, स्नाताम् ऋतुस्नाताम् । अग्रेङ्कितं –'स तस्याः परिचारेण...मैथुनाया जुहाव ताम् ' ६७।१४ अत्र स्पष्टं यद्—विवाहस्य बहुतिथकालोत्तरं तस्या ऋतुकालः प्राप्तः ; तत एव मैथुनं संवृत्तं न चतुर्थीकर्मणि, प्राक् तु संयमेन स्थितः केवलं प्रीतिपरः तेन विवाहगर्भाधानसंस्कारौ भिन्नकालिकावपि सिद्धौ ।

देवयान्या विषये मया ५।३ सम्यक् समाहितम् ; तस्या अप्यृतुकालः पश्चादेव प्राप्तः ॥ सूर्याया विषयेऽस्माभिः ५।२ संख्यायां पर्याप्तः प्रकाशोऽर्पितो यत्र सा सूर्यस्य पुत्री देवतासीन्न योनितो भिन्ना । एकस्याऽन्यस्यार्यसामाजिकस्याऽप्यत्रार्थः श्रोतव्यः- 'यहां के (आकाश के) शादी विवाहों का हाल पढिये — सोम वधू का चाहने वाला था, अश्विदेव वधू के साथ थे और सूर्य ने मन से पति की इच्छा करने वाली ? सूर्या वधू को पति के हाथ में समर्पण किया' वैदिकसम्पत्ति० पृ० ४५ । देवतात्वाच्च युवतित्वं तासां स्वाभाविकम्, सा मानुषी नासीत् । विवाहसंस्कारविधौ भव-दृषिणा १७२ पृष्ठे—' आ नः प्रजां ' इत्यादिमन्त्रचतुष्टयेनाग्नौ

वरवधूद्वारा सावित्र्यै सूर्यायै आज्याहुतिर्दापिता। इयमाहुतिर्देवतायै सूर्यायै अस्ति ? भवदनुसारं पितापुत्र्यै ब्रह्मचारिण्यै वा ? आद्ये भवत्पक्षनिरासः । अन्त्ये तु आज्याहुतिस्तस्या ब्रह्मचारिण्या मुखे दापनीयासीत् । अथच वधूः स्वयं स्वस्यै ( भवदनुसारं सूर्यायै ) आहुतिमग्नौ कथं ददाति ? अथच विवाहितत्वेपि भवन्मते सा किं सूर्या [ ब्रह्मचारिणी ] ? यद्येवं तर्हि विवाहिताऽविवाहितरवयोः को भेदः स्थितः ? यदि न सा तदा सूर्या , तदा तस्या विवाहानन्तरमपि ऋ० १०८५।७ कथं सूर्येति नाम ? तेन स्पष्टं यद् देवताविशेषस्य सूर्येतीयं संज्ञा ; एतेन भवत् सर्वापत्तीनां निरासः । ' युवो रथं दुहिता सूर्यस्य ' ऋ० १।११७।१३ ' ता वां रथं वयमद्या हुवेम... अश्विना ! ...यः सूर्यां वहति ' अ० २०।१४३।१ ' आ वां रथं दुहिता सूर्यस्य ' ऋ० १।११६।१७ इत्यादिना वेदेन तस्याः सूर्यस्य दुहितृत्वमश्विनो रथे आरोहणाञ्च संसाध्यास्मत्पक्षः पोषितः , भावत्काश्च तद्विषयकाः सर्वेप्याक्षेपाभासाः परिहृताः । ' सूर्येव नारि ' अ० १४।२।३२ अत्र इवशब्द उपमार्थकः ' साधर्म्यमुपमा भेदे ' इत्यालङ्कारिकानुशासनाद् द्वयोर्भिन्नयोः साधारणधर्मप्रोक्तसमानधर्मताया नामोपमा भवति , अन्यथा 'श्रीधर्मदेवस्नातको मनुष्य इव , इति वाक्यमपि भवेत् ? परं न भवति , एवं सूर्यानार्योर्भेदः सिद्धः — 'सूर्यो देवता' यजु० १४।२० ' सूर्याद्देवतायां चाप् ' इति वार्तिकञ्च न विस्मर्यताम् । ' सूर्या... सविता ऽददात् , ऋ० १०।८५।९ इत्यादौ सवितुरर्थः सूर्य इति नतु तत्पिता तथा च— 'असौ वै आदित्यो देवः सविता ' शत० ६।३।१।२० भवत्सम्मत ' षुञ् धातोरपि भवद्दृष्ट्या ' आख्यातिके ' यन्त्र से रस खींचना वा राज्याधिकार देना ' इत्यर्थः कृतो नतूत्पादनस्य अतश्च स धातुरतिट् । अतो भवत्पक्षो हतः। तेनेतिहासेपि ऋतुकालात्प्राक्कन्याविवाहसिद्ध्या ऽस्मत्पक्षः सिद्धः । क्वचिद् व्युत्क्रमे दृष्टेपि च नो हानि , यतः इतिहासे धर्मावलम्बः प्रामाण्यं वा नावश्य-

कत्वेन भवति। अत उक्तं गौतमेन- 'दृष्टो धर्मव्यतिक्रमः साहसञ्च महताम्' १।२। भागवतकारेणाप्युक्तम्- 'धर्मव्यतिक्रमोः दृष्टो ईश्वराणाञ्च साहसम्। तेजीयसान्न दोषाय वह्नेः सर्वभुजो यथा' १०।३३।३० 'नैतत्समाचरेज्जातु मनसापि ह्यनीश्वरः। विनश्यत्याचरन् मौढ्याद् यथा रुद्रोऽब्धिजं विषम्' १०।३३।३१ इति। 'प्रसह्य हरणञ्चापि क्षत्रियाणां प्रशस्यते। विवाहहेतुः शूराणामिति धर्मविदो विदुः' महा० आदि० २२१।२२ इति प्रसह्यहरणरूपविवाहो ऽपि इतिहासे धर्म उक्तः ; किं भवन्मते तद्वैधता ?।

गोभिलपाठविवेकः—' नग्निका तु श्रेष्ठा' इत्येव गोभिलगृह्यसूत्रे ३।४।६ प्राचीनपाठः। श्रीचन्द्रकान्ततर्कालङ्कारनिर्मितप्राचीनभाष्यसनाथे गो० गृ० सूत्रेऽप्ययमेव पाठः। यदि भवत्पार्श्वे न भवेत्तर्हि लवपुरीयपञ्जापविश्वविद्यालयीयपुस्तकालये द्रष्टव्यम् Principals of Hindu Law' G. C. Ghosh Calcutta 1903 पुस्तकेऽप्ययमेव पाठ उक्तसूत्रस्योद्धृतः। मान्य 'श्री' सम्पादकेन पं० कुलभूषण डी. पी. एच (लण्डन) महोदयेनापि प्रथमवर्षीय 'श्रियाः' ३ संख्यायां 'श्रुतिस्मृत्योर्वैभवम्' इति स्वलेखे एष एव पाठस्ततः उद्धृतः। अतएव संशोधनव्याजेन ऋतुमतीविवाहपक्षपातिना सामश्रमिमहाशयेनैव 'मातुरसपिण्डानग्निका तु श्रेष्ठा' 'मातुरसपिण्डान् नग्निका तु श्रेष्ठा' इति वा पाठेऽकारः प्रसह्य प्रक्षिप्तः। इयमेव लीला तेन गो० गृह्यसंग्रहेपि कृता ; तत्रायं पाठः— 'नग्निकां तु वदेत्कन्यां यावन्न ऋतुमती भवेत्। ऋतुमती त्वनग्निका तां प्रयच्छेत्तु नग्निकाम्' अत्र तेन तां प्रयच्छेत्त्वनग्निकाम्' इति परिवर्तनं कृतम्। तत्रैव रजो दर्शनात्प्रागेव विवाहकरणमुक्तं तथा च— 'तस्मादव्यञ्जनोपेता अरजा अपयोधरा। अभुक्ता चैव सोमाद्यैः कन्यका तु प्रशस्यते' अत्रापि तेनैव सामश्रमिणा 'तु' इत्यत्र 'न' इति पाठः कृतः ; वस्तुतस्तु पाठस्य परिवर्तनं पापमेव ; तत्र स्वकीया स्वतन्त्रसम्मतिरेव देया भवेत्।

'बन्धुमतीं कन्यामस्पृष्टमैथुनामुपयच्छेत...... नग्निकां श्रेष्ठाम् १।७।८ इति मानवगृह्यसूत्रस्य, महाभारतस्य। स्मृतीनाञ्च संवादात् स एव गोभिलेपि प्राचीनो युक्तश्च पाठः। यदि तत्र अनग्निका इति पाठोऽभविष्यत्तर्हि 'पुण्ये नक्षत्रे दारान् कुर्वीत' इत्यादि गोभिलीयसूत्राण्युपन्यसन् भवद्भिः 'संस्कारविधौ' स्वमतसाधकं तं पाठमवश्यमुदधरिष्यत्। तेन स्पष्टं यत्तत्समयेऽपि 'नग्निका तु श्रेष्ठा' इत्येव पाठ आसीत्; स्वपक्षविरुद्धत्वाच्च स तं पाठ नोज्जहार।

अथ च 'अनग्निका तु श्रेष्ठा' इति पाठो गोभिलस्याऽप्यननुमतः; तथा च—'ऊर्ध्वं त्रिरात्रात्सम्भवः इत्येके' २।५।७ इति मत प्रत्याचक्षाणः स एव स्वयमेवाचष्टे- 'यदर्तुमती भवत्युपरतशोणिता तदा सम्भवकालः' गो० २।५।८ यद्यनग्निका (ऋतुमती) विवाहस्तन्मतेऽभविष्यत्तर्हि 'ऊर्ध्वं त्रिरात्रात्सम्भवः' इति मतखण्डनस्य 'यदा ऋतुमती भवति' अत्र 'यदा' इत्याद्युल्लेखस्य च तदा नासीदावश्यकता, ऋतुकाल एव तदा तद्विवाहात्। अत एवास्य सूत्रस्य व्याख्यायां स्वपक्षपुष्ट्यर्थं मूले ऽनुक्तोपि 'पुनः' शब्दः कपोलकल्पनया सामश्रमिणा वर्द्धितः। तन्मतखण्डनं साधयति यद्गोभिलमते 'नग्निका तु इत्येव पाठः। एव मानवगृ॰ सूत्रेपि १।७।८ नग्निका विवाहमुक्त्वा संवत्सरादिब्रह्मचर्यञ्चादिश्य मैथुनम् 'ऋतावृतौ' १।१४.२० इति ऋतुकाले उक्तम्। एवं 'परिणीय तु षण्मासान् वत्सरं वा न संविशेत्' १।२७ 'ऋतुकाले तु सम्प्राप्ते पुत्रार्थी संविशेत्तदा' १।२८ इति विष्णुस्मृतावपि। तेन चतुर्थीकर्मणि मैथुनकर्तव्यतापि निरस्ता स्नातकमहाशयेष्टा; मैथुनमृतुकाले सर्वत्रादिष्टं न चतुर्थीकर्मकाले; चतुर्थीकर्म विवाहस्यांगं न गर्भाधानस्य इति समुपोद्वलितचरमस्माभिः। वस्तुतस्तु 'अनग्निका तु श्रेष्ठा' इति कथनं व्यर्थमेव; अत्र स तद्वर्षसंख्योल्लेखमकरिष्यत्। अथ चाऽनग्निका यदि श्रेष्ठा; तर्हि नग्निका श्रेयसी अवश्यं मंस्यते; तथा खण्ड्यते, भवत्पक्षहातिः। अथ चाऽनग्निकाशब्देनापि भवत्पक्ष

नग्निकाऽनागतार्तवा भवति, अनग्निका तु समुपस्थितार्त्तवा; तादृशी च १२ वर्षान्ते आयुर्वेदमतेन, १३ वर्षे वा भवन्मतेन । तर्हि तादृगवस्थ्ये विवाहेपि भवत्पक्षस्यैव पराजयः । नह्यार्तवं १७त आरभ्य २४पर्यन्तं सीमितं येन तत्र विवाहस्तदिष्टो भवेत् । अन्यथैतदृशतु मतीत्वस्य तु ३०-३५-४० वर्षेष्वपि सत्त्वात्तदपि विवाहस्वीकारे भवत्पक्षक्षतिः, तस्मात्तत्र 'नग्निका तु श्रेष्ठा' इत्येव गोभिलसम्मतः प्राचीनो युक्तश्च पाठः ।

'अनग्निका' इति क्वचिदुपलब्धे प्राचीनपाठेत्वियं व्यवस्था ज्ञेया । तत्र 'अनग्निका' इति पारिभाषिकशब्दो न, किन्तु स्त्री नग्निका कोटवी स्याद्' अमर० २।६।१७ पर्यायवती । या कन्या पिताभ्रातॄणां¶ समक्षं नग्ना भवन्त्यपि लज्जासङ्कोचं नानुभवति, सा नग्निका, ईदृश्यवस्था ८-९-१० वर्षे भवति । यावच्च कस्याप्यङ्गस्य योनिवक्षःस्थलादिकस्य नग्नीभवने पित्रादिसमक्षमपि लज्जते, संकुचति च; तदैव तदभ्यन्तरे कामवासनेषज्जागर्ति; सैव वस्त्रादिना तत्तदङ्गं पिदधानाऽनग्निका भवति; एषावस्था ११-१२ वर्षादारभ्यते, अतः तत्समय एव विवाहसिद्धिः; दिनवृद्ध्या जनवरीफर्वर्यादिमासे सत्वेपि विद्यालयेष्ववकाशास्तदारम्भिकदिवसेषु दिसम्बरान्त एव भवन्ति अत एव ११-१२तोऽग्रे न नियमः । 'यावच्च नग्ना विचरितुं शक्नुयात्, सा नग्निका, तद्भिन्नाऽनग्निका' अयमर्थः सामश्रमिणापि कृतो यो भवतोद्धृतः; तेनास्मत्पक्षसिद्धिः । तस्यार्थं ऋतुमती प्राप्तयौवनेति यः कृतस्तेन; सोपि यौवनस्य द्वादशवर्षत्वमभिलक्ष्य, अन्यथा ऋतुमतीत्वं २४ वर्षान्नारभ्यते । यत्तु तेन 'कन्याया ऋतौ जाते ह्येवाग्निभोज्यत्वमुपयुज्यते, तदैव सोमो ददद् गन्धर्वायेति' मन्त्रप्रयोगो युज्यते इति यदङ्कितं तस्यापि भावः कन्याशरीरान्तः सञ्चीयमानस्यर्तोरित्यस्माभिः ६।१ साधितचरं सा च ११-१२ वर्षावस्था । यत्तु सामश्रमिणा—' देवदत्तां पतिर्भार्यां विन्दते ' ९।९५ इति मनुश्लोक

¶ पिताभ्रातॄणाम्— 'अनङ् ऋतो' इत्यनङ् ।

उद्धृता , तर्हि देवदत्तत्वाऽवस्थाप्रतिपादके तत्पर्वश्लोके 'द्वादशवार्षिकीम्' ६।६४ इति १२ वर्षावस्था कथनादस्मत्पक्षः सिद्धः । ६।६४ सामश्रमिणा स्वपक्षपराजयभिया चोरितः , तेन 'नग्निका तु श्रेष्ठा' इति पाठः प्राचीनः सिद्धः । 'अनग्निके' ति पाठे स एव भावो यौगिकतारूपेण निबद्धः ।

श्रीसामश्रमी न प्राचीनाचार्यो नच प्रामाणिकः, किन्त्वर्वाचीनो बहुस्खलनयुक्तश्चेति वयं साधयितुं शक्नुमोऽतो न तद्भाष्यमनने बाध्या वयं । स स्वनिरुक्तालोचने वेदमन्त्रान् ऋषिभिर्निर्मितान् मेने बहुपुरुषकृतांश्च , तथा च-'एवञ्चास्मत्पूर्वपुरुषैर्ऋषिभिरेव कृत एष वेदमन्त्रभागोऽपीति ध्रुवं 'यत्र धीरा मनसा वाचमक्रतेति' २१४ पृ० । किं भवांस्तस्यैतन्मतं प्रामाणिकं मन्यते ? यदि न तर्हि वयमेव तद्भाष्यं कथं प्रामाणिकं स्वीकुर्याम ? यतस्तस्येदमेव स्वमतमासीदतस्तेन तत्र पाठः परिवर्तितः , अर्थो वाऽशुद्धः कृतः , मनुप्रमाणं ददानोपि तस्य १२ वर्षविवाहादेष्टारं पूर्वश्लोकं न्यह्नोष्ट, तथैव गोभिलप्राचीपाठमपि ।

इत्थं कन्याविवाहावस्था ऋतुकालात्प्राग् द्वादशवर्षे वा श्रौती स्मार्ती पौराणिकी ऐतिहासिकी आयुर्वेदिकी लौकिकी च सिद्धा लौकिकविषयः ५।३ संख्यायां किञ्चित्सङ्केतितः , विस्तरभिया तत्रान्यः प्रकाशो नार्पयितुं शक्यः । इत्थमस्माभिः स्नातकमहाशयपक्षः सर्वाङ्गीणं निराकृतः । अग्रे श्रीस्नानकोत्र किञ्चिल्लिखेदपि , यतः श्रीसम्पादकस्तस्यैवोत्तरपक्षतां वष्टि , तथाप्यहमग्रे तदाज्ञाऽभावादत्र पत्रे न प्रतिवक्ष्यामि किन्तु पत्रान्तरे । पाठकैः स्पष्टमनुभूतं स्याद् यत्- श्रीस्ना० महोदयेननेदृक्किमपि प्रमाणं नोपस्थापितं यत्र कन्यकानां १७।२४ वर्षेषु विवाहः सिद्धः स्यात् । 'वैदिकविवाहवयोनिर्णयः' इति शीर्षकमुपस्थापयता च वेदस्य कोपि मन्त्रः १७-२४ विवाहवयोनिर्णायको न दर्शयितुं पारितोऽमुनेति विज्ञपाठकानां प्रत्यक्षम् ।

[ अग्रे ४८ पृष्टे द्रष्टव्यम् ]

# अहिंसा

[ लेखकः—निरञ्जन हुण्डु ए, गणेशघाट, श्रीनगर, काश्मीर ]

प्रश्नः—पशुहिंसा कर्तव्या नवा ?

उत्तरं—नहि तृणेभ्यो मांसोत्पत्तिरपि तु रक्तादेव । तच्च रक्तोत्पन्नं मांसं बिना हिंसया न प्राप्यते । अतो हिंसाकरणं निषिद्धम् ।

तथाहि—

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥

[ गीता० १७।१४ ]

अनेन श्लोकेन देवीदेवयोस्तथा द्विजगुरुप्राज्ञादीनां पूजनं विधेयमिति ज्ञायते ।

शङ्का देव्याः पूजनं नहि पशुबलिं बिना भवतितीति यदि शङ्का ऽत्र वर्ततेऽपि । परन्तथाप्यस्यैव श्लोकस्य तृतीयपादान्तर्गताऽहिंसापदेन स्पष्टं प्रतीयते, यत् पशुहिंसा न कर्तव्या । अहिंसा नाम कायेन, वाचा, मनसा वा कस्यचिदपि प्राणवियोगाकरणम ।

महाभारतेऽपि-यज्ञसमये 'यज्ञे पशुहिंसा कर्तव्या नवेति' पृष्टा ऋषयो ब्राह्मणाश्च 'न यज्ञे पशुहिंसा कर्तव्येति ' प्रत्युत्तरयामासुः । तत्रैव बलिप्रसंगे मांसलोलुपैः 'अज'—शब्दस्यार्थो [अजः बकरा' इति ] क्रियते परं ' अजसंज्ञानि बीजानि त्रिवर्षोषितानि च ' इत्यजशब्दस्यार्थः ।

उक्तञ्च तत्रैव—

मानान्मोहाच्च लोभाच्च लौल्यमेतत्प्रकीर्तितम् ।
धूर्तैः प्रकल्पितञ्चैतन्नैतद् वेदेषु कल्पितम् ॥

राजा कीदृशो भवितव्य इत्यथर्ववेदेऽपि—

अयं राजा प्रियमिन्द्रस्य भूयात्

प्रियः पशूनामोषधीनाञ्च-इति

वाल्मीकीयरामायणेऽपि—पञ्चवटीप्रविष्टो लक्ष्मणः पुष्पैरेव बलिं चकार। अतः सुष्ठु प्रतीयते यत् पुष्पफलस्तवनेनैव बलिः कार्या न पशुहिंसया।

महाकालसंहितायामपि—

सात्त्विको जीवहत्यां वै कदाचिदपि नाचरेत्।
इक्षुदण्डश्च कूष्माण्डं तथा वन्यफलादिकम्।
क्षीरपिण्डैः शालिचूर्णैः पशुं कृत्वा चरेद्बलिम्॥

इति शालिचूर्णैर्निर्मितस्य पशोर्बलिर्विधेया। ननु सजीवस्य पशोरिति।

अपि च—

अहिंसा-समता-तुष्टिरित्यादि। [गीता०]

तथा च—

अहिंसा-सत्यमक्रोधस्त्यागः शान्तिरपैशुनमित्यादि।
[गीता० २३-१२]

कामक्रोधादिपशूनां त्याग एव पशुबलिः। यथा पशोर्मस्तिष्कं खड्गेन तस्य शरीरात् पृथक्क्रियते। एवं मनोबुद्ध्यहङ्काररूपं मस्तिष्कं शरीररूपेन्द्रियासक्तितो ज्ञानरूपेन खड्गेन पृथक्कृत्वा महाविद्याया अर्पणं क्रियते। अजशब्दो कामस्य, महिषशब्दो मोहस्य, उष्ट्रशब्दो हि मात्सर्यस्य, क्रोधशब्दोहि वृषस्याभिधायकः। नत्वेते शब्दाः पशूनामभिधायकाः। अपि तु कामक्रोधादीनामेव। अर्थात् षड्रिपूणां बलिदानमेव पशुबलिदानम्।

अत एवोक्तं परमार्थसारे—

मायापरिग्रहवशाद् बोधो मलिनः पुमान् पशुर्भवति।

तन्त्रेऽपि—

इन्द्रियाणि पशून् हत्वेत्यादि।



पुरुषसूक्तेऽपि—

ऐतरेयब्राह्मणेऽपि—

सर्वाभ्यो वा एष देवताभ्य आत्मानमालभते ।

तथा च—

विप्रस्तु मद्यं मांसञ्च न भक्षयेत् ।

अपि च—

पुण्यापुण्यपशुं हत्वा ज्ञानखड्गेन योगवित् ।
परे लयं भवेच्चित्तं माँसाशी स निगद्यते ॥

अन्यच्च—

कामक्रोधौ पशुतुल्यौ वलिं दत्वा जयं चरेत् ।

अथ च—

काम-क्रोध-सुलोभ-मोह पशुकां श्छित्वा विवेकासिना ।
मांसं निर्विषयं परात्मसुखदं भुञ्जन्ति तेषां बुधाः ॥

अपि च—

मानसादीन्द्रियगणं संयम्यात्मनि योजयेत् ।
स मांनाशी भवेद्देवि ! इतरे प्राणिहिंसकाः ॥

अन्यच्च—

आशातृष्णाजुगुप्साभयविषयघृणा मानलज्जाप्रकोपाः
ब्रह्माग्नावष्टमुद्राः परसुकृतिजनः पच्यमानः समन्तात् ।
नित्यं सम्भावयेत्तानवहितमनसा दिव्यभावानुरागो
योऽसौ ब्रह्माण्डभाण्डे पशुहतिविमुखो रुद्रतुल्यो महात्मा ॥

रुद्रयामलेऽपि—

आदौ भावं पशुं कृत्वा पश्चाद् कुर्यादावश्यकम् ।

इत्यादिभिः पूर्वोक्तप्रमाणैः सम्यग्ज्ञायते, यत् पशुहिंसा न कर्तव्या ।

# पुरावृत्तम्

लेखकः—विद्यावारिधिः पं० शिवनाथ शास्त्री साहित्यभूषणः
साहित्यमणिः संस्कृतविनोदः उपमन्त्री संस्कृतसाहित्यपरिषत्
श्रीनगर, काश्मीर।

देवा यत्र कृतास्पदा रुचिधरा विश्वेनिलाः कोमलाः
साध्या हस्तगताः समं वसुगणैर्विद्याधरा मानवाः।
माहाराजिकवंशजाश्च तुषिता ह्याभास्वराः किन्नराः
सेयं शक्रपुरीमतीत्य न कथं काश्मीरभू राजते॥

काश्मीरिक—श्रीवरपण्डितपादाः

नास्ति नाविदितं विश्वेषां पुरातत्वविदां पाश्चात्यानां पौरस्त्यानां वा यत्किल भारते कानिर कविरत्नान्यासन्, येषां धिषणाऽसाधारणासीत्। यैः स्वकर्तव्यकलापेनाद्भुतानि प्रत्येकविषयविभूषितानि ग्रन्थसङ्घसहस्राणि विरच्याकल्पं भुवि यशःपटं भारतीयगौरवञ्च विस्तीर्य स्थापितमिति। प्रायेण काश्मीरेषु सार्वजनिकासीत् काव्यशक्तिः यथाऽद्यापि दृश्यते, ग्रामसाहित्ये—ग्रामीणाः कृषीवलाः कृषिकर्मणि लग्नाः बीजवपनादारभ्य सस्यसञ्चयनान्तं तान्येव गीतानि गायन्ति यानि तु तत्रत्यैः साहित्यगन्धविवर्जितैः, किं बहुनाऽक्षराण्यप्यजानद्भिर्ग्रामीणैः स्वाभाविकोक्त्या कथितानि भवन्ति। विचारदृष्ट्या तेषु ग्राम्यगीतेषु निरतिशयरसभरितेषु सवासनानां पुरुषाणामलौकिकी दशा भवत्यर्थश्रवणमात्रेणैव। यतो हि ग्राम्यगीतं काश्मीरभाषायां वर्तते। काश्मीरभाषाज्ञाः साहित्यरसा ग्राम्यगीतश्रवणेन किमिव न मन्यन्ते ब्रह्मास्वादसहोदरत्वं ग्राम्यगीतजमितानन्दस्येति निरवद्यम्। किञ्च सकल

देशग्रामसाहित्यान्वेषणपरा हिन्दीसाहित्यकोविदा हिन्दीकविवराः पं० रामनरेशत्रिपाठिमहाशया उक्तकार्यार्थं मन्निकटे आगतवन्त आसन्। ग्रामसाहित्यान्वेषिभिस्तैः सर्वदेशग्रामसाहित्यं दर्शितं, मया च काश्मीरिकग्राम्यगीतानि पठित्वा श्रावितानि। अङ्गीकृतं तैः स्वाभाविकं गीतमिदं काश्मीरिकप्रतिभादर्शभूतञ्च। ततश्चोक्तमहाशयैर्बहूनि ग्राम्यगीतानि मत्तः संगृह्य स्वकृत'कविताकौमुदी,नामकस्य ग्रन्थस्य षष्ठे भागे शीर्षकरूपेण स्थापितानि। एवमेव जयपुरस्थ-श्रीगोपालनेवटियामहाशयेन स्वरचित "काश्मीर" नामके पुस्तके प्राधान्येन मद्दत्तकाश्मीरिकग्राम्यसाहित्यस्य स्थानं दत्तम्। परम्परया काश्मीरग्राम्यसाहित्यस्यालौकिकं चमत्कारं तत्रभवता भारतकविसम्राजा श्रीरवीन्द्रनाथटैगौरमहाशयेन श्रुतम् प्रेषितश्च मन्निकटे श्रीदेवेन्द्रसत्यार्थी ग्रामसाहित्यसञ्चयार्थं, गताश्च सत्यार्थी महाशयो मद्दत्तं गीतसंग्रहमुपगृह्याद्यावधि टैगौरमहाशयस्य न किमपि पत्रं प्रत्यागतम्। किं कथं वा ते मन्यन्ते काश्मीरिकग्राम्यसाहित्यम्। दिङ्मात्रेणाप्यत्र दीयते, तत् सुधियः स्वयमेव जानन्ति, कथमत्र शृङ्गारशान्त-वीर-भयानकरसस्यान्तर्भावः, कथं वा स्त्रियोक्तस्य श्लोकस्यार्थत्रयञ्च—

पन चूज करिनम कमिराज करडले
काजन करनम सूर।
काप्यय इयहम त कापुय कड़हस
कर क्या छस चालन॥

यत्र देशे ग्रामेष्वेवमासीत्काव्यरचनाशैली, तत्र के सचेतसो न जानन्ति, आचार्यभूमौ श्रीनगर्यां संख्यातिगगुणगणालंकृताः सर्वे विद्वांसः कवयो नासन्निति। यथा भारते समग्रे प्रातःस्मरणीया आसन् सन्ति कवयो विद्वांसश्च। एक एकस्मिन्विषये ऽपरश्चान्यस्मिन्विषये विशारदस्तथा नास्त्यत्र इहच सर्वे सर्वेषु विषयेष्वधिकारिण आसन् सन्त्यपि, यथा पश्य न्तु भगवन्तोऽभिनवगुप्तपादा वात्स्यायनाचार्यप्रमुखे विदेहकः शैवागमसर्या-

दासंरक्षका मम्मटभट्टस्य शृङ्गाररसेऽभिव्यक्तिपक्षं कथं समर्थयन्तीति। अनु-न्यत्रेत्थमेव मर्यादा प्रचलति। तथाहि-ये अत्रत्याः पण्डितास्ते व्याकरण-काव्य-न्याय-वेदान्त-शैवशास्त्रज्ञाः सन्तोऽपि गणितफलितशास्त्राण्येव नापितु तन्त्रमन्त्रप्रयोगानपि जानन्त्येव। अस्तु; प्रकृतमनुसरामः। काश्मीरिका आचार्यशिरोमणयः स्वरचितग्रन्थेषु आदावन्ते वा स्वनामनिर्देशं न कुर्वन्ति स्म, अत्र "पञ्चस्तवी" पुस्तकमादर्शभूतं परं प्रमाणं प्रतिभाति। अतस्तेषां नामनिर्देशाकरणान्न सर्वेषां नामानि लभन्ति समयादि चान्वेषणकर्तारः। किं बहुना, कुशलैः पण्डितैः समये काश्मीरेभ्यः पुस्तकान्यपहृत्य स्वकीयनामभिः प्रचारितो ग्रन्थराशिः। पदविन्यासो वाक्यरचनाशैली परमं प्रमाणमत्र। गवेषणाकर्तारः सर्वेषां कवीनां नामधेयानि समयादिकं तत्कृतग्रन्थनामान्यादायोपहारीकरिष्यन्ति यथाकालं प्रकाशवतां समक्षमिति प्रस्तावः।

## पण्डित-श्रीवरः* ।

काश्मीरिको ऽसौ श्रीवर आसीदत एव शिवभक्तः शैवागमानुयायो चासीत्। यतो हि ग्रन्थारम्भे कविना मङ्गलरूपेण शिव एवोपश्लोकितः-

सानन्दं हृदये विलोक्य विशदं यच्चक्षुष्कशष्पोपमं
मन्यन्ते भुवनाधिपत्यमखिलं योगेन योगेश्वराः।
ध्यात्वाप्येकनिमेषमात्रमपि यत्सौख्यं सदा प्राप्यते
वन्दे सिद्धसुरेन्द्रवन्दितमदस्तेजः परं शाम्भवम्॥
स्थैर्यं हि जगतां नैव दृश्यते वचनं विना।
शम्भुभक्तियुतं तच्चेच्छोभते साधुपूजितम्॥
मनो मे ऽस्तु सदा शम्भो भवत्सेवा पुरःसरम्।
वक्तुं गुणगणं नित्यं रसनेयं प्रवर्तताम्॥

* पण्डितश्रीवरविरचित "जैनरत्न-यूसफ" इति नामक

इत्यादि । मुहम्मदशाहनृपतिविषये चेत्थमवर्ण्यत :—

जीयान्महामदः शाहिधर्मप्रवरगर्वितः ।
श्रीमान् काश्मीरभूपालः फुल्लराजीवलोचनः ॥
यदेतन्निर्मितं धात्रा जगत्स्थावरजङ्गमम् ।
मत्राभिधानं नानार्थं नरदेववदद्भुतम् ॥
तन्महामदभूपेन सर्वभूपालमौलिना ।
अमुना शोधितं संपन्नयनेन वपुर्यथा ॥
प्रीत्यै तु गोसहस्रस्य येन धर्मपरेण च ।
ज्ञात्वापूर्वपदार्थैक्यं वधाद्गावो विमोचिताः ॥

इत्यादि बहुगुणवर्णनं कृतम् । ततश्च—

मुल्लाज्ञामेन यूसुफजुलैखानामविश्रुतः ।
रचितो ऽप्यद्भुतः पूर्वं ग्रन्थो ऽदेवमुखोद्गतः ॥
तस्मिन्मया पण्डितजोनकाख्यं
नत्वा गुरुं पण्डितश्रीवरेण ।
भूपालचतुष्टयै सुरलोकवाण्या-
रम्भोऽधुना ऽकारि मनोहरोऽयम् ॥

इत्यादिग्रन्थसंग्रहेण काश्मीरिकत्वं, शैवधर्मित्वं, काश्मीरभूपमुहम्मदशाहस्य सभापण्डितत्वं यवनभाषाकोविदत्वं च स्फुटं प्रतीयते ।

---

पारसीकभाषाकाव्यस्यानुवादभूतं "कथाकौतुकं" निर्णयसागरप्रेसमुद्रितं शोधितमपि पण्डितप्रकाण्डैरशुद्धमिव मद्धस्ते समागतम् । अधुना मया तस्य शोधनं पुनर्विधीते । निर्णयसागरप्रेसाध्यक्षस्य च पत्रं लिखितं, यत्स द्वितीयसंस्करणे मदीयं शोधितं पुस्तकं मुद्रयिष्यति । श्रीवरस्य "कथाकौतुकं" मुल्लाजामीकृतेरनुवादमेवाधाररूपं धृत्वा तत्समयादिविवेचना क्रियते ज्ञायते च पारसीकभाषानिपुणोऽप्यसीच्छ्रीवरः । मुहम्मदशाहनृपतेः सभापण्डितोऽप्यासीत् । यतो नृपतेरस्य वर्णनं बहु कृतमनेनेति ॥

समयविवेचनायां तु :—

तत्रभवाञ्छ्रीवरपण्डितो मुल्लाजामीनूरुद्दीन अब्दुररहमान विरचित "जुलैखायूसुफ" ꣸ नामकग्रन्थानुवादात्मकस्य कथाकौतुकस्य रचयिता कदा वा काश्मीरमण्डलमलङ्चकारेति जिज्ञासायां बहुपुस्तक-पर्यालोचनेन—

प्राज्ये जाग्रति राज्येऽस्य पृथिव्यां पृथिवीपतेः ।
शाके मुनिद्विवेदेन्दु [१४२७] गणिते, विक्रमोष्णगोः ॥
नेत्रषड्बाणचन्द्राढ्ये [१५६२] तथा वाणाब्धिसंमिते*
स्थितेऽपि लौकिके वर्षे चन्द्राष्ट [८१] परिपूरिते,¶
माधवे मासि राकायां रवौ मेषमुपागते ॥

इति कथाकौतुकस्य प्रथमकौतुकपद्यदर्शनतः १४२७ मिते शाकाब्दे वैक्रमीयाब्दे १५६२ मिते, लौकिके ४५८१ सप्तर्षिवर्षे तेन (A. D. 1505) ईस्वीये वैशाखपूर्णिमायामस्य ग्रन्थस्य निर्मितिसमयोल्लेखोपलम्भात्कवेरस्यायमेव सत्तासमयः प्रतीयते । अनेनैव श्रीवर पण्डितेन पण्डितजोनराजादनन्तरं (A. D. 1477) समये तृतीया जैनोल्लाभ-नाम्ना जैनराजतरङ्गिणी निर्मितासीत् । यथा—

तस्मिन्मया पण्डितजोनकाख्यं
नत्वा गुरुं पण्डितश्रीवरेण ।
भूपालतुष्ट्यै सुरलोक वाण्या-
रम्भो धुना ऽकारि मनोहरोऽयम् ॥

इति कथाकौतुकीय श्लोकतः,

---

꣸अस्य ग्रन्थस्यानुवादोऽपि आंगलभाषायां Ralph T.H Griffith महाशयवरै र्लंडननगरे A.D. 1882 वत्सरे संमुद्र्य प्रकाशितः।

*भ्रुकुटिबन्धान्तर्गतं पद्यं महामहोपाध्यायमहानुभावानां शोधन-काले मूलपुस्तके ऽप्राप्तं हस्तच्युतं वा तत्कृतसमयमीमांसायां भ्रमभाव-हति ।

श्रीजोनराजविबुधः कुर्वन् राजतरङ्गिणीम् ।
सायकाग्नि [३५] मिते वर्षे शिवसायुज्यमासदत् ॥
शिष्यो ऽस्य जोनराजस्य सोऽहं श्रीवरपण्डितः ।
राजावलीग्रन्थशेषापूरणं कर्तुमुद्यतः ॥

इति जैनराजतरङ्गिणीप्रथमतरङ्गीयश्लोकदर्शनेन च श्रीवरसत्तायामेव जोनराजस्वर्यानलेखोपलम्भाच्च जोनराजदेशकालादेव श्रीवरपण्डित देशकालौ । जोनराजश्च जैनोल्लाभदीनराज्य (A. D. 1417-1467) समये काश्मीरमण्डलं मण्डयामासेति जोनराज-श्रीवरविरचित-राजतरङ्गिणीभ्यां निश्चीयते । एतेनास्य श्रीवरस्य ख्रिस्तचतुर्दशशताब्द्युत्तरकालं सत्तासमयः प्रतीयते । तत एव (A.D. 1505) ईस्वीये कथा-कौतुकनिर्माणसमयः स्वयं निरूपित इति मन्मंतम् ।

अपरे तु:—महामहोपाध्यायपदभूषितनामानो बुधवर्याः—किमेतस्य ग्रन्थकर्तुर्नाम श्रीवर श्रीधरो वेति चतुर्दशपञ्चदशकौतुकसमाप्तिलेखदर्शनतः‡ सन्दिग्धं वर्तत इति तत्र च लेखे केनचिल्लिपिकर्त्राऽनवधानतया श्रीवरस्थाने श्रीधरनाम स्थापितमुत चान्यत्र श्रीधरस्थाने श्रीवरनाम वा स्थापितमिति । अस्य हि श्रीवरस्य श्रीधरस्य गुरुः पण्डितजोनको राजतरङ्गिणीकर्तुर्जोनराजाद्भिन्नोऽभिन्नोवेति च न निश्चेतुं शक्नुवन्ति इति* । अक्षरभ्रान्तिरियम् ।

यदि चायं पण्डितजोनको राजतरङ्गिणीकर्तुर्जोनराजादभिन्नः स्यात्, तर्हि "शिष्यो ऽस्य जोनराजस्य"—"श्रीजोनराजविबुधः"—

---

¶अत्र तारतम्यं सयुक्तिकं यथा—शाकाब्दस्य १४२७ मितस्य १३५ अङ्कसङ्कलनेन १५६२ विक्रमादित्यसंवत्सरो भवति । तस्य १५६२ मितस्य विक्रमाब्दस्य ३०१९ अङ्कसङ्कलनेन ४५८१ लौकिको (सप्तर्षिवत्सरो) भवति । तदेव ग्रन्थकर्त्रा प्रतिपादितम् । तेन (A.D. 1505) वत्सरो ऽपि प्रतीयते ।

‡मूलपुस्तकस्य शारदालिपिलिखितत्वात् तस्याञ्च प्राचीनलिपेर्धकारस्य वकारकस्य चाभेदाभासात्तत्कृत एव भ्रमो नतु श्रीवरस्थाने

इति जैनराजतरङ्गिणीपद्यवत् "तस्मिन्मया पण्डितजोनकाख्यं" अत्रापि ग्रन्थकर्त्रा 'पण्डितजोनराजं' इति स्वगुरोः स्फुटं नाम पठितव्यमासीत्, तच्छन्दो भङ्गादिदोषाभावे ऽपि विद्यमाने न पठितमतो राजतरङ्गिणीकर्तुर्जोनराजाद्भिन्न एवायं कश्चन ॥ स्वमतिविजृम्भितमिदम्। नास्ति जोनकादन्यो जोनः कश्चित् ।

किञ्च पण्डितजोनकान्तेवासी पण्डितश्रीवरः श्रीधरो वा कविर्यद्यष्टोत्तरपञ्चदशशताब्द्यां (१५०८) इमं ग्रन्थं रचयामासेत्युच्यते चेत्, तर्हि 'शाके मुनिद्विवेदेन्दुगणित' एवं श्लोकं दर्शयता ग्रन्थकर्त्रा 'शाके वसुखबाणेन्दुगणिते' इत्थं पद्यं रचयितुं नाशाकि किम्, येनेत्थमविरचय्य मुनिद्विवेदेन्दौ १४२७ रूपात्मके क्लिष्टकल्पनया चन्द्राष्ट (८१) संख्यया संकलय्य १५०८ संवत्सररूपं ग्रन्थनिर्माणसमयाधारभूतं दर्शितम् ॥१ मूलपुस्तकपद्यार्थाभाव एव समयनिर्णेतुर्भ्रमावहः, नतु स्वकीयो भ्रमः ।

किंच जैनराजतरङ्गिणीकर्तुः श्रीवरपण्डितस्य, कथाकौतुकग्रन्थकर्तुः श्रीवरपण्डितस्य वा ग्रन्थरचनायां महान् रचनाभेदोऽप्युपलभ्यते, शोभते रचनाभेदप्रदर्शनेन बुद्धिवैशद्यम् ।

अतो जैनराजतरङ्गिणी कर्तुः श्रीवरपण्डितादपरोऽयं पण्डितश्रीवरः श्रीधरो वा कविः १४२७ (A. D. 1370) वैक्रमशरदि 'चन्द्राष्टपरिपूर्तिे इति च: सायकाग्नि मिते वर्षे, इति जैन रा० त० पद्यवदेकाशीतिपरिपूर्णतां गते कस्यचिद्धरामंडलभर्तुः शाकाब्दे एनं ग्रन्थं रचयन् कं भूमिमंडलं मण्डयामासेति च न वक्तुं शक्यते, अत्रापि भ्रम एव।

एवं चास्मत्कथा कौतुककर्तुः पण्डित श्रीवरान् मुल्ला-जामी नुरुद्दीन अब्दररहमानयवनपण्डितः प्राक्कालीन इति च सिद्ध्यति। एतेव यवनपडितसमयसूचको Ralph T. H. Griffith महाशयवरलेखोऽत्र बुधैश्चिन्तनीयः—"Nuruddin Abdur Rahaman was born in the year 1414 A. D, at Jam, a little town in Khurasan, from which he took the poetic name, Jame, by



१ श्रीधर इति दृष्टं कुत्रापि मूलपुस्तके ।

which he is generally known. At the age of five he received the name of Nuruddin, or, Light of the faith; and in later life his learning, fame, and sanctity gained for him the title of Moulana, or our master. He studied at Heart and Samarkand, where he not only outstripped the ablest and most diligent of his fellow-students, but puzzled the most learned of his teachers. The fame of his learning soon spread to the most distant provinces of Persia, and into other Asiatic countries. Sultan Abusatd, Timur's uncle, invited him to his court at Harat and all the princes, noblis, and learned men of time sought the company of the distingushed poet. In 1472 A.D. Jami performed the pilgrimage to Macca, and after some stay at Baghdad returned in the following year to Harat, where he died in 1492". इति, मुल्लाजामी-यवनकवेः प्राचीनत्वं स्वयमपि निर्दिष्टं श्रीवरपण्डितेन, यतो तत्कृतग्रन्थस्यैवानुवादो रचितः।

पुनर्महामहोपाध्यायवराः श्रीवर पण्डितं यवनभाषावेदिनं न मन्यन्ते। तदपि निर्मूलं, नहि कोऽपि यावनीं भाषामजानन् पुनस्तामेवानुवदितुं शक्नुयात्। इत्यलं पल्लवितेन।

भीरूणामभयप्रदो भवभयाक्रन्दय हेतुततो
हृदाग्नि प्रथितश्च भीरवरुचामीशो ऽन्तकयान्तकः।
भीरं वायति यः वयोगिनिवहतय प्रभुर्भैरवो
विश्वस्मिन् भरणादिकृद्विजयते विज्ञानरूपः परः ॥

# संस्कृत भाषाया नित्यत्वम्

---

लेखकः पं० गङ्गादत्त शर्म्मा विनोदः श्री रघुनाथ
संस्कृत कालेज जम्मू

❀–❀–❀

अयि गुणिगणगरिष्ठाः अनवद्यविद्याविद्योतितान्तःकरणाः विद्वांसः! जगति वह्वयः भाषाः समुन्नतिशिखरमधिरूढ़ाः कालान्तरे च विलयं गताः इति परिवर्तिनि संसारे नास्त्यन्तः कस्याप्यभ्युदय इति एतासु भाषासु मुख्यतया संस्कृतभाषाऽपि पुरः कदाचिदुन्नतिशिखरमारूढासीत्। अथ तत्कृतेऽपि इदानीन्तनः भीषणसमयः संवृत्तः येनेयं भाषा पश्चमीय भाषावशात् सर्वैरवधीर्यते। परमस्यामेतादृशी दिव्यमहिमाऽस्ति येन मनुष्यमशकैः सहस्रवारमवधीरिताऽपि नेयं वस्तुतोऽवधीर्यते। जानन्त्येव विद्वांसः यदि संस्कृतेतरा काचिद्भाषोन्नतिशिखरमधिरूढाऽपि दैववशादधोगतिं गच्छेत्तदा चत्वारिंशद्वर्षेषु व्यतीतेष्वेव तस्याः नाममात्रमपि नोपलभ्यते। परमनेकसहस्रवर्षेभ्योऽवधीरिताऽपीयमद्यत्वेऽपि न्यूनाधिक्येन सर्वेषु प्रान्तेषूपलभ्यते। भारतवर्षाद्बहिर्जर्मनादिदेशेष्वप्यस्याः प्रचारो बाहुल्येनास्तीति दैनिकपत्रेषु प्रत्यहं पठ्यते, इत्यतः ज्ञायते नेयं केनाप्यपधीरितुं शक्यत इति, नापीमां मृतभाषेति वक्तुं युज्यते। मरणं हि नामात्यन्ताभावः परं यत्रस्याः सर्वत्रास्तित्वमत्रतोक्ष्यते तर्हि को नाम जानन्नपीमां मृतभाषेति शब्देन व्यवह्रियेत।

किं दिव्यगुणसम्पत्सम्पन्नानामवधीरणं भवति? इयन्तु सर्वभाषाजनन्यनाद्यनन्ता च साक्षाज्जगन्नियन्तुः मुखनिसृता तस्येश्वरस्य जीवनप्राणाऽस्ति यदुक्तं—

यस्य निश्वसितं वेदा इत्यादि।

एतस्मादस्या नित्यत्वं प्रत्यक्षसिद्धम्। यथेश्वरोऽजरोऽमरो नित्यश्च तथैवेयमपि। कश्चित्कालावस्थानो वारिदाः घनघोरगर्जनरवेन निखिलं विश्वं स्तब्धयन्ति भगवन्तं भास्करमाच्छादयन्ति च प्रभुत्वं

तथैवेमामप्याच्छाद्य जवेनेतरा: भाषा: स्वप्रभुत्वमुत्पादयन्ति, परं मेघानामिवाचिरकालीनं तासां प्रभुत्वम् । परमियं (संस्कृतवाक्) नित्यैवास्ति । यथा मृदो घटशरावादयोऽनेका विकृतयः समुत्पद्यन्ते परं यथार्थतस्तु मृदेवैकास्ति, सा एव स्वं रूपं तत्र तत्र परिणमय्य भिन्नाकारतां नयति, तद्विकाराणान्तु तस्यामेव लयः, एवमेवास्याः विकारभूता इतरा भाषा अस्याः प्रादुर्भूय कालान्तरे पुनरस्यामेव विलिप्यन्ते। अत इयमेव प्रधाना भाषास्ति । भगवान् पतञ्जलिर्लिखति, प्राधान्ये कृतो यत्नः फलवान् भवति, इति क्षणभंगुरेषु पदार्थेषु कृतो यत्नः क्षणायैव फलदो भवति ।

संस्कृतभाषा सर्वाभ्यः भाषाभ्यः प्राचीनाऽऽदिजननी चेति सर्वे ब्रुवन्ति, जननीं यथा न केनाप्यस्मिन् समये समुचितं समाद्रियते तथैवेमामपि । यथाऽऽस्या उपासकान्न कोऽपि सम्मानयते नैवास्या उपासकान् साम्प्रतं समुचितं वेतनं प्रदीयते । एतत्तु न भाषायाः वैचित्र्यमपितु कालस्यैवायं प्रभावः, कदाचिदियं धार्मिकराजनैतिकव्यवस्थासु परिगृहीता भोगापवर्गप्रदात्र्यासीत् । इदानीमिमां धार्मिकेऽपि पथि त्यजन्ता जनाः दृश्यन्ते । पूर्वं ब्राह्मणादयश्चत्वारो वर्णा इमां वृत्तिदात्रीं धर्मनिमित्ताञ्चावधार्याधिजगिरे परमिदानीमस्या अनादरमवलोक्य ब्राह्मणा अपि भाषान्तरासु पाटवमुपार्जन्ते । एभिः कतिपयकारणैरस्याः प्रचारः किंचिन्मन्दतां गतः परं न तदापीयं विलुप्तप्रायाऽस्ति । न्यूनाधिक्यन्तु वस्तुस्थितौ भवत्येव तेनास्याः प्रादुर्भावतिरोभावावगन्तव्यौ । अतः यद्यपि समयवशादस्यां काचिन्न्यूनता सञ्जाता तथाप्यस्याः न किमपि विगतम् । इयन्तु नित्याऽजरामरेति पूर्वमेवोक्तम् । तस्मादस्या अपायो न कदापि समपद्यत सम्पद्यते समपत्स्यते वा । यद्यस्या भाषायाः कृत ईदृशो भीषणसमयः समुत्तिष्ठेत्तर्हि तस्या रसातलगमनेऽपि न कोऽपि विस्मयः । अद्यत्वे यत्र चत्वारो वर्णा यस्या अभिधेयमात्रश्रवणेऽपि सभ्रूभंगं ललाटं कुर्वते यत्रास्या मुख्यासंततिर्ब्राह्मणा एनां निर्मानामिवावधार्य "ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च" । इति श्रुतिवचनमवधीरयन्तः वृत्तिलोलुपा इतरभाषासु यतन्ते । तत्रास्याः कृते

कीदृशोऽस्ति भीषणसमय इदानीं संवृत्तः । परमेतस्यामप्यवस्थायामियं सर्वत्र विराजते । इत्यस्या अलौकिकत्वं परिज्ञायास्यामवधार्य यदीयमी श्वरीया नित्या विभूतिरित्यलं पल्लवितेन ।

# उपाकर्माख्यपर्वस्य वर्णनम्

[ रखड़ी ]

—:०:—

लेखकः—पं० वत्सराज शास्त्री ।

रखडीतिनाम्ना प्रसिद्धं पर्वदिनं प्रायशः भारतस्य प्रतिकोणं विराजते चातुर्वर्णकेषु नास्ति, कोप्येतादृशो नरो नारी वा येन महास्य परिचयो नास्ति, यस्मै च नादो रोचते, यद्यप्येतन्नासत्यमस्ति, तथापि यावत्कस्यचिद् वस्तुनोऽभ्यन्तरीयरूपमविदितमस्ति, तावत्तस्य नाम्ना परिचयेन किं फलम् । नहि नाममात्रेण सिद्धिः संजायते, यावत्तस्य गुण-परिचयो न भवेत् । अत उक्तमन्यत्र 'गुणाः पूजास्थानं गुणिषु न च लिंगं नच वयः' इति । इत्यतोऽस्य पर्वस्य केचिद्गुणा वर्ण्यन्ते । पर्वो हि नाम हर्षसूचकः समयः, यतोऽसौ 'पर्व'शब्दः पर्व-पूरणे धातुतो निष्पन्नः । इत्यतः पूरयत्यानन्देन जनानिति पर्वः । अस्य प्रवृत्तिः जगति चतुर्विधा भवति । एका महायज्ञादिनिर्माणसमयसूचिका या च विश्वजिताश्वमेधपुत्रेष्टियज्ञनाम्ना प्रसिद्धा, द्वितियत्तु परिवर्तनकालबोधिका यथायनं-त्रयादयः । अन्या चामोदप्रमोदानन्दसूचिका यथा वसन्तहोलिकादयः । इतरा कस्यचिन्महात्मनो वीरस्य वा जन्मनिर्वाणसूचिका यथा राम-नवमी कृष्णजन्माष्टमी विजयदशम्यादयः । एषु प्रकृतपर्वस्य विशे

किञ्चिद्विवेचनं क्रियते, अस्य पर्वस्य प्राचीनतमं नामोपाकर्मेति, प्राचीनकाले श्रवणनक्षत्रयुक्तपूर्णिमायामौषधीनामभावे भाद्रपदपूर्णिमायां वैतत्पर्वदिनं भवतीति मन्यन्ते तत्र चाग्निहोत्रादि सकलं क्रियाकलापं कृत्वा वेदस्य पारायणं स्वाध्यायो वा प्रारभ्यते । पौषे चास्योत्सर्जनं भवति प्राचीनकालीनोऽयं विधिः ।

यथाचोक्तम्—

श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान् ॥ ४।९५
पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि ॥

अत एवोच्यतेऽन्यत्रापि स्वाध्यायानुक्रमदितव्यम् , अत्र केचिदेवं वदन्ति, यदेतदुपाकर्माख्यं कर्म ब्रह्मचारिभिरेव करणीयं नान्यैरिति तेषां मते विद्यालयानां गुरुकुलादीनामुद्घाटनकालोऽयमुत्सर्जनन्तु गुरुकुलानां सत्रसमाप्तिदिनमिति चेन्न, यतोऽस्य विचारस्य परिपुष्टिं मानवशास्त्र-गृह्यसूत्रादीनि शास्त्राणि नैव विदधति । मानवशास्त्रे च ब्रह्मचारिणां कृत्यं द्वितीयाध्याये परिसमाप्य, तृतीये च पाणिग्रहणपञ्चमहायज्ञादीनां वर्णनं कृत्वा, चतुर्थाध्यायस्य प्रारम्भे कृतदारपरिग्रहो वसेदित्यतो गृहस्थिकृत्यवर्णनं, तत्रोपाकर्मणो विधानमित्यत आयातन्न केवलं ब्रह्मचारिणां कर्तव्यमपि तु द्विजमात्रस्येति । गृह्यसूत्रेऽप्युक्तं 'छन्दांस्युपाकृत्याधीयन्ते' इति वचनादुपाकरणस्य चावसथ्याग्निसाध्यत्वात् गृहस्थिनामेव कृत्यं यतो निरग्नेर्नाधिकारात् , किन्तु वेदस्य स्वाध्यायस्तु संन्यासिभिरपि कार्यः । यथा चोक्तम् 'संन्यसेत्सर्वकर्माणि वेदमेकन्न संन्यसेत् ', यदि संन्यासिभिरपि कृत्यमेतत्कार्यं तर्हि का कथा तत्र गृहस्थिनामन्येषां वा । कथन्न स्यादयमावश्यको यतोऽयं पर्वः स्वकर्मणा सर्वेषामाश्रमिणां वर्णिनां वा कल्याणकारी । यतोऽत्र स्वाध्यायविधानमावश्यकम् । स्वाध्यायो नाम वेदाध्ययनं नतु काव्यनाटक-

दीनां विज्ञापनपत्राणां वा, वेदाध्ययनन्तु निर्भ्रान्तं कल्याणकारीति सार्वजनीनोऽयं राद्धान्तः। अथवा स्वस्यात्मनो ऽध्ययनमात्मविचारः, कोऽहं, कुत आयातः, किमर्थमागमनं मे, किं कृतमद्यावधि शुभाशुभं कर्म किञ्च कर्तव्यमस्ति मे, किं कदाचित्कर्तव्यमार्गात्तु नैव च्युतो ऽस्मि, इत्यादि विचारो वेदपारायणेन समं विधेयः तेषु दिनेषु। तेनावश्यको ऽभ्युदयः प्राणिमात्रस्येति प्रत्यक्षफलमस्य कर्मणः शास्त्रेषु सुस्पष्टतया प्रोक्तम् — मन्त्राध्ययने च तद्द्रष्टॄणामृषीणां प्रोक्तसूत्रकल्पब्राह्मणादीनामपि प्रसङ्गवशादध्ययनमावश्यकमित्यतो ऽयं पर्व ऋषिकर्तृग्रन्थानां प्रचारकत्वात्तेषां प्रसन्नतायाः पात्रमत ऋषितृप्तिकरत्वादृषितर्पणी नामतः प्रसिद्धोऽस्ति। यथा च मनुराह—

स्वाध्यायेनार्चयेदृषीन् होमैर्देवान् यथाविधि।
पितॄन् श्राद्धैश्च नॄनन्नैः भूतानि बलिकर्मणा॥

मनु० अ० ३ श्लो० ८१

यद्यपि ब्राह्मणा वेदपारगाः प्रोक्तदिने नदीतटमुपगम्योपाकर्माख्यं कर्माद्य श्वोऽप्यारभन्ते, तत्र विविधौषधिभिः पञ्चगव्यादिभिश्च स्नान्ति। तेन च चर्मणि दूषितरक्तसंशुद्ध्या शरीरस्वास्थ्यं जायते। यच्च चतुर्णां धर्मादिमोक्षान्तानां सत्कर्मणामादिमं निदानमिति, तत्रैव च जलाञ्जलिभिः ऋषीनपि तर्पयन्ति। शोभनं खल्वेतदपि कर्म स्वसिद्धान्तानुसारित्वात्। परञ्च यदि मनुप्रोक्तपथा तद्दिनादारभ्य स्वाध्यायस्यापि प्रबन्धो भवेत्तेन त्वस्मिन् कर्मणि [ एका क्रिया द्व्यर्थकरी प्रसिद्धा ] इतिवदृषीणां तर्पणमात्मज्ञानवृद्धिश्च भविष्यति। यतो ऽनेनोपाकर्मणा ऋषीणां तर्पणं जायते। अत ऋषयस्तृप्यन्ते ययेति व्युत्पत्त्या ऋषितर्पणीति नामास्य जातम्। तत्रैव च कर्मणि दीक्षितानां दीक्षाचिन्हं हस्तकङ्कनं बध्नन्तीत्यतो ऽस्य पर्वस्य नाम रक्षाबन्धनमेतदपि जातमिति। अथवास्य विधानमेवं रीत्या केचिन्मन्यन्ते भारते यवनराज्यकाले यवनोपद्रवेन पीडिता अबला आत्मरक्षार्थं कस्यचिद्वीरस्य हस्ते कङ्कनं बध्नन्ति अतस्तद्दिनादारभ्य तस्या रक्षाविधानं तस्य वीरस्यावश्यकं

कर्तव्यमाजन्म भवति । एकैतिहासिकीघटनाप्यनेन सह सम्बद्धाऽस्ति, तद्यथा यवनराज्यकाले चितौडस्य महाराज्ञी गुजराताधिपतेर्बहादुरशाहत आत्मरक्षार्थं मुगलसम्राजं हिमायुनामकं प्रेषितवती रक्षीति नामकं कङ्कनबन्धनं. तेन च तूर्णमागत्य तस्याक्रमणातः चतौडस्य रक्षा कृता, तद्दिनादारभ्यैषा प्रथा प्रसिद्धिं गता, तस्यानुकरणं कृतवती स्वसा निजभ्रातरं पुत्री च पितरं बध्नाति राखीपदवाच्यं कङ्कनं स च भ्राता पिता वा किञ्चिद्द्रव्यप्रदानेन तात्कालिकीं तस्यास्तुष्टिं विदधाति । नतु पूर्वजसमानं कठिनव्रतं धारयन्ति ते । नापिचैवं प्रतिज्ञापयन्ति यन्मनसा, वाचा, कायेन सर्वस्वप्रदानेन वाऽस्या रक्षां विधास्याम इति । यथाऽस्यकर्मणो महत्वं नष्टन्तथैवाऽस्य मूल्यमपि पणमेकं पणद्वयं वा जातम् । ब्राह्मणास्तु यजमानकरे कङ्कनं बद्ध्वा लभन्ते तस्मात्किञ्चिद् द्रव्यं । इत्यतो निस्सारतां गतोऽयं पर्वः । अत एवोच्यते -

गुणा गुणज्ञेषु गुणा भवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः ।
आस्वाद्यतोयाः प्रभवन्ति नद्याः समुद्रमासाद्य भवन्त्यपेयाः ॥

बहवस्तु नवीनशिक्षालवदुर्विदग्धा रीतिनीतिमिमां घृणादृष्ट्या पश्यन्ति, शतशः कटाक्षाञ्च कुर्वन्ति किमस्याः प्रयोजनं किं किमर्थं वा स्वीकुर्मो वयमृतेस्य मूलतत्वज्ञानादित्यादयः शतशस्तर्कास्तैः क्रियन्ते, अन्यत्र बिनाविचारं (नकटाई) नामकञ्चीवरनिर्मितं कण्ठभूषणं कण्ठे बद्ध्वाऽहोभाग्यं मन्यन्ते । अतः केनचित् साधूक्तम्–

न वेत्ति यो यस्य गुणप्रकर्षं स तं सदा निन्दति नात्र चित्रम् ।
यथा किराती करिकुम्भलब्धां मुक्तां परित्यज्य बिभर्ति गुञ्जाम्

दौर्भाग्यमस्ति देशस्य यत्प्रत्यहं संस्कृतितो देशवासिनो नैव केवलमपरिचिता भवन्ति अपि तु तां घृणादृष्ट्या पश्यन्ति ।

ये त्वशिक्षितास्ते खलु ज्ञात्वापि महिमानं पूर्वजानां कि-

ञ्चिन्मात्रमपि पदमग्रे सर्तुं न प्रभवन्ति वर्तमानशास्त्रीयदशातः ।अतः उक्तम्–

बोद्धारो मत्सरग्रस्ताः प्रभवः समयदूषिताः ।
अबोधोपहताश्चान्ये जीर्णमंगे सुभाषितम् ॥

इत्यतः प्रार्थयामो वयं जगदीश्वरं यदस्मद्देशीयानां यथा संस्कृते बुद्धिपूर्वकज्ञानं तत्र चानश्वरं भवेत्प्रेमैतादृशीं सुबुद्धिं दद्यात् सर्वनियन्ता भगवानिति ।



( ३० पृष्टतोऽग्रे )

शक्य इत्यसकृदसीषधाम ; यद्यनेनेदं वयः साध्येत; तर्हि 'बर्थकण्ट्रोल-कामा' किं बालावस्थाका मन्येत ? ' गृहपत्नी ' ऋ० १०।८५।२६ इति पदेन यत्तेन स्वपक्षो ऽपोष्यत , तस्यास्माभिः ५।२ अङ्के खण्डनं कृतम् तदृषिणा संस्कारविधौ १८२ पृ० ' मुझ घरके स्वामी की स्त्री ' इत्यर्थं कृत्वा तदभीष्टखण्डनेन तत्पक्षः खण्डितः । ' एयमगन् पतिकामा ' इति मन्त्रैरपि तदभीष्टं न सिध्यतीति साधितचरम् , नचेमे मन्त्रा विवाहे विनियुक्ताः कौशिकसूत्रेण , किन्तु विवाहानन्तरकालिकाः ; अथ च कामात्रेच्छामात्रं नतु मैथुनार्थकः अन्यथा ' कामुकी ' ति स्यात [ जानपदेति सूत्रेण ' पुत्रकामा , भ्रातृकामा ' इत्यादौ च दोषापातः नच वेदस्य विवाहावस्थाव्यवस्थापने संरम्भः , अन्यथा भवदनुमानिके आयुषि मते 'युवा सुवासाः' इति मन्त्रलिंगं दृष्ट्वा यज्ञोपवीतमपि २१तः ३० वर्ष यावत् स्यात । एवञ्च नामकरणं दशमे दिने , सीमन्तसंस्कार-श्चतुर्थे मासि कर्तव्य इत्यादिचूडाकरण-कर्णवेधादिसंस्कारान्तराणामपि वयोनिरूपणं वेदमन्त्रेषु वर्णनं दर्शितव्यं भवेच्छ्रीस्नातकेन परं स

नैवं कर्तुं जातु शक्ष्यति ; तेनास्मिन् विषये धर्मशास्त्राणामेव स्वतः प्रामाण्यं मन्तव्यं स्यात्- ' तत्रैकेन स सर्वं व्यवस्थाप्यते-इति यथा विषयमेतानि ( मन्त्रब्राह्मणा (वेद) इतिहास-पुराण-धर्मशास्त्राणि ) प्रमाणानीन्द्रियादिवदिति ' भवत्स्वाम्यभीष्टन्यायभाष्ये ४।१।६२ ।

अथ च यदि पतिकामतासमये श्रीमान् कन्याविवाहं वष्टि तर्हि स्त्रीणां लज्जास्वाभावाद् यथा सा १२ वर्षे स्वयं स्वपतीच्छां न सूचयिष्यति , तथा १७।२४ वर्षेऽपि लज्जाकारणान्न स्वपतिकामतां सूचयिष्यति ; तर्हि भवन्तः कथं ज्ञापयन्ति , यदियं पतिकामा । एवं सति किं भवन्तस्तां विवाहयोग्यां न मंस्यन्ते ? अथवा तदीयव्यभिचारादिदर्शने सत्येव तस्याः पतिकामतां मत्वा तदैव तद्विवाहमादेक्ष्यन्ति एवं तर्हि धन्या भवन्तः ! यदि नैवन्तर्हि ' पतिकामा ' पदेन १७।२४ वर्षावस्थासाधनमुपहासास्पदम् । अथ च 'पतिकामा' इति शब्दः स्वयं-स्नातकपक्षखण्डकः । तत्र प्रश्नः—यत् 'पतिकामता' कदा भवति ? यदि कथ्येत १७ वर्षे इति ; नर्हि तदैव विवाहः कार्यो भवेत् । एवं सति १८-१९ २०-२१-२२-२३-२४ वर्षाणि भवदभीष्टानि खण्डितानि वेदेन । यदि कथ्येत-अग्रिमेष्वपि वर्षेषु पतिकामत्वं तिष्ठति ; तर्हि तु २४ वर्षानन्तरमपि तु तिष्ठति तत् प्रागपि (१२ वर्षे ) ; तर्हि २४ वर्षानन्तरमेव (प्रागेव वा १२ वर्षे ) कुतो न विवाहविधिर्नियम्येत ? तेन स्पष्टं यद्वेदे एतदादिकशब्दैर्न वयः कदापि सूच्यते ; केवलं भवतो व्याजमात्रमत्र । एव ' पुत्रकामा' * दिशब्दैरप्यसङ्गतिर्ज्ञेया 'किं २४ वर्षानन्तरं 'पुत्रकामता' नश्यति ? तेनैतदादिकानां विवाहावस्थानिर्धारणे किमपि न मूल्यम् । स्नातकमहाशय एतदादिका ऽस्पष्टा ऽनैकान्तिकवार्तास्त्यजतु ; स्पष्टं वेदमन्त्रेषु १७।२४ वर्षावस्थां पुष्णातु । अथ च यत्किंचिद्वेदभिन्नानि

---

* 'यो वरः प्रतिकाम्यः' इत्यादौ णयत् प्रत्ययः 'अर्हे कृत्यतृचश्चे' ति प्रतिकामयितुं योग्य इत्यर्थः , स्वस्था दृढाङ्ग इत्यत्र च तात्पर्यम् तेनामेनापि न भवदभीष्टसिद्धिः ।

१६ वर्षसाधकानि प्रमाणानि तेन समर्पितान्यपि ; तानि तदुद्धृतायुर्वेद-प्रमाणाद् बाल्यविवाहसाधकानि तदभीष्ट १७-२४ वर्षविवाहपक्षविघातकानि च । कश्चित्कस्यचित्पुस्तकस्य पूर्वोत्तरसन्दर्भं त्यक्त्वा श्रीस्नातकेन प्रमाणानि दत्तानि येनास्मत्पक्षः साध्यते स्म; अत्र तेन स्वपैर्वचः श्रूयताम् 'जैसे शरीर के सब अङ्ग जब तक शरीर के साथ रहते हैं तब तक काम के, और अलग होने से निकम्मे हो जाते हैं, वैसे ही प्रकरणस्थ वाक्य सार्थक, और प्रकरण से अलग करने वा किसी अन्य के साथ जोड़ने से अनर्थक हो जाते हैं' पृ० १३० स० प्र० । तेन पाठकैः स्पष्टमनुभूतं स्याद्विज्ञैः ; यत्- श्रीमतो विद्यावाचस्पतिश्रीधर्मदेवस्नातकस्य पक्षो बालुकाभित्तीयितः । मया यद्यपि स्वपक्षसाधने बहूनि प्रमाणानि दत्तानि, तथाप्यन्यान्यपि प्रमाणानि वेदस्मृत्यादिकस्य (दशपृष्ठमितानि) अत्र देयान्यासन् । परं श्रीसम्पादकमहोदयेन विस्तरमभिलक्ष्यास्यां सख्यायां तत्प्रकाशनं निषिद्धम्, अत एवाहं तं लेख स्वतन्त्ररूपेण 'श्री' पत्रे प्रहेष्यामि. तेन श्रीस्नातकमहाशयेनाऽहमत्र नोपलभ्यो विषये । अग्रेऽहं मल्लेखोत्तरे प्रकाशयिष्यमाणस्य स्नातकमहाशयनिबन्धोत्तरस्य श्रीसम्पादकाज्ञा ऽभावाच्छ्रीपत्रे प्रकाशनं न कर्तास्मि, किन्तु पत्रान्तरे-इति पाठकैः स्मर्तव्यम् । श्रीसम्पादकमहोदयेनाऽहमत्यन्तसंक्षेपार्थं प्रेरितः, अतस्तदाज्ञारूपेणाऽत्र पर्याप्तसंक्षेपः कृतः, अन्यथा स्ना० महाशयलेखस्य सर्वाङ्गीणालोचनायामेतस्माद् द्वैगुण्यमिष्यते स्म, वर्तते च तथा मत्पार्श्वविद्यमाने लेखे । अन्ते च मान्यश्रीसम्पादकमहानुभावानामहं पौनः पुण्येन धन्यवादान् करोमि, यत्तैर्विभिन्नमतैरपि बन्धुनिर्विशेषं मां मत्वा मदीयाः सर्वविधाः प्रेरणमताः स्थानाभावेपि स्वपत्रे ममलेखाय प्रेम्णा स्थानं प्रदत्तमिति निवेद्य विश्रम्यते 'श्री' पाठकानां पुनः सेवायै इति ।

# परिशिष्टम्

सवितृविवेके—'सवितरासुव' अ० २।२६।२ 'सवितर्दुरितानि परासुव आसुव' तत सवितुर्वरेण्यं.. प्रचोदयात् 'सविता-अन्तः प्रेरकः स्वा० द० यजुर्भाष्ये १।२२ एतदादिकदर्शनात् 'सवितृ' शब्दे 'षू प्रेरणे' धातुरेवेष्टः। ५।२ अङ्के पृ० ४६ पं० १३ स्थाने 'श्रीमदाचार्यः सामवेदस्य 'सामब्राह्मणं' मेने, भवांस्तमत्यशेत यत्तस्य जैमिनीयोपनिषद्ब्राह्मण-ममंस्त' इति पठनीयम्। बोधायनविवेके—४।४ अङ्के 'अपस्तम्बसूत्राणां स्थाने बोधायननामनिक्षेपात्स्नातकस्य तस्मिन् श्रद्धातिशयो लक्ष्यते। तेन बोधायनेन स्वधर्मसूत्रे 'दद्याद् गुणवते कन्यां नग्निकां ब्रह्मचारिणे ४।१।२१ इति नग्निकोद्वाह उक्तः। स्वगृह्यशेषसूत्रे ५।२।३ स्वगृह्यसूत्रे ४।१ च विवाह्यकन्याया रजस्वतीभावे प्रायश्चित्तकथनेनतु दर्शनात् प्रागेवो द्वाहः साधितः। बो० ध० सू० ४।१।२१ बृहत्परा ५।३५८ च ऋतुदर्श-नात् प्राग्रेतोधारणस्य निन्दित्वादृतुतः प्राग्गर्भाधानाऽसम्भवाच्च ऋतौ समागते एव गर्भाधानं सिद्धम्, ततः प्राक्तने संवेशने च मैथुनम्। पररात्रे- रात्रेः पर इति विग्रहे 'अहः सर्वैकदेश—' इति समासान्तो ऽच् प्रत्यये तत्सिद्धिः। तेन रात्रेरन्तिमे प्रहरे चतुर्थीकर्मविशेषः। अत एव आ० ध० सू० १।१।१२ 'अपररात्रे' इत्यस्य पश्चिमे यामे' इत्यर्थो हरदत्तमिश्रेणाप्यूरीकृतः। अन्येषां साक्ष्यं ७।१ अङ्के ४६।५० पृष्ठे दर्शितम्।

यज्ञोपवीतिनीविवेके—स्त्रिया यज्ञोपवीतसूत्र क्वापि नोक्तं तेन वरदत्तं वस्त्रमेव तया यज्ञोपवीतवत् स्थाप्यते, तदपि विवाहयज्ञे। अतो गोभिल २।१।११ हारितादिवचने एतद्वस्त्रप्रदानोत्तरं विवाहारम्भो निर्दिष्टः। हारीतस्य 'सद्यो वधूशब्दो विवाहारम्भमेव सूचयति। तेना त्रत्यवैवाहिकोपवीतित्वस्य न ब्रह्मचर्याश्रमवेदादिमूलकत्वम्। अतो मीमांसार्थभाष्ये ३।१।२१ आर्यसामाजिक पं० आर्यमुनिनाप्युक्तम् 'याग में सूत्र के स्थान में प्रायः बिना सीयन वस्त्र ही उक्त प्रकार से (वाम कन्धे में) डाला हुआ उपवीत कहा जाता है, पृ० २६६।

आपस्त० ध० सू० १।१५।१ भाष्ये हरदत्तमिश्रेणाप्युक्तम्-'वासो विन्यासविशेषो यज्ञोपवीतम्' तत्र तेन तै० आ० २।१ प्रमाणमपि दत्तम्। एवं जैमिनी गृ० सू० व्याख्यात्रा श्री निवासाध्वरिणाप्युक्तम्-'स्त्रियाऽपि यज्ञोपवीताकारेण उत्तरीयं कर्मांगं भवति' १।१ । एवम् उद्धृते दक्षिणे पाणावुपवीती' ति मनु- २।६३ व्याख्याने कुल्लूकेन 'वामस्कन्धस्थिते....यज्ञसूत्रे वस्त्रे वोपवीती'ति वस्त्रस्याप्युपवीततोक्ता । तेन गोभिलसूत्रे स्त्रीणां ब्रह्मचर्याश्रममूलभूतयज्ञोपवीतं निरस्तं प्रमाणान्तराणि ६।१-२ अङ्क उक्तान्येव ।

यौवनविवेके-१२।१५ वर्षस्यापि रामस्य कृते वाल्मीकि १।४८।३, १।५०।१८, १।७२।७ श्लोकेषु 'प्राप्तयौवन' कथनाद्भवत्प्रमाणेषु 'यौवन' शब्दो यौगिकः । वाल्मी० १।४८।२ रामस्य 'गजगति' कथनाद् १२ वर्षेऽपि गजगतिः सिद्धा । तेन 'वारणगामिनीमित्यादिना १७।१४ वर्षे विवाहसाधनं भवतोऽपास्तम्। एवमत्र 'दुःखीभारत' पुस्तकस्य प्रमाणमस्माभिर्दर्शितमेव । गोभिलपाठविवेके—अनग्निका इति पाठेऽपि तदर्थोऽस्मदनुकूल इत्युक्तम् । अतो जै० गृ० सू० व्याख्यात्रा श्रीनिवासाध्वरिणाऽपि-'अनग्निका यस्मिन् वयसि स्वयमेव लज्जया वासः परिदधाति, तद्वयस्का' १।२० इति व्याख्यातम् । 'नग्निका ब्रह्मचारिणी' ४।१।१२ इति बौ० ध० सू० विवरणे 'नग्निका वस्त्रपरिधाना भावेपि लज्जाशून्या' इति गोविन्दस्वामिना व्याख्यातम् । एवमनग्निका-शब्देनापि ११।२२ वर्षावस्था सिद्धा । हृद्यत्वविवेके-हृद्यत्वन्तु सपदि जातबालिकायामपि भवति। १७।२१ वर्षे न तद्व्याप्तिः, अनैकान्तिकत्वात्। 'द्वादशवार्षिकी' मित्यनेनेतरावस्थानां बाधो जातः।

यद्यपि मया स्वपक्षे प्रमाणानि मध्येऽ निर्दिष्टानि, तथाप्येतद्विषये पृथक् प्रमाणोपेतनिबन्धः १५ पृष्ठपरिमितो मत्पार्श्वे वर्तते यदि सम्पादकमहाभागः श्रीस्नातकश्चाज्ञापयेत् तर्हि स प्रकाशयेतेत्युक्त्वा विरम्यते ।

## सम्पादक सम्मतिः

पं० कुलभूषणः डी. पी. एच (लण्डन)

पं० गोबिन्द राजदान शास्त्री, एम. ए. एम. ओ. एल.

पं० जगद्धर जाडू शास्त्री, एम. ए. एम. ओ. एल.

पं० शिवनाथ शास्त्री साहित्य-भूषणः, साहित्यमणिः



# संस्कृत साहित्य पारिषदः

## श्रियश्च नियमाः

**उद्देश्यः—**

परिषदोऽस्याः संस्कृतभाषार्यसभ्यताप्रचारात्मकः केवलमेक एव

**प्राप्तिशुल्कः—**

श्रीनगराद्वहिः सपादरूप्यकम् १।)

श्रीनगरीयेभ्यः परिषत्सदस्येभ्यस्तु रूप्यकैका १)

**सदस्याः-**

संस्कृतभाषानुरागिणः पत्रशुल्कं प्रेष्य सदस्या भवन्ति।

**साहाय्यम्-**

श्रीः पत्रिकाप्रकाशने बहुधनमपेक्ष्यते मूल्यन्त्वस्य नाम मात्रमेव

**विशेषसूचना—**

पत्रिकाप्रकाशने ऽत्यधिकव्ययकारणेन संस्कृतोद्धारप्रणयिनो जन्मभूमिभाषाप्रचारकटिबद्धा महानुभावाः साहाय्यार्थं सविनयं प्रार्थ्यन्ते । कृपया ते दानरूपेण धनं वितरेयुः ।

**पत्रप्रकाशनसमयः—**

त्रैमासिकमिदं पत्रं सौरीयेषु आषाढाश्विनपौषचैत्रेषु क्रमशो निर्गच्छति। पत्रप्रकाशनसमयादनन्तरमपि पत्रानुपलब्धौ सूचनया पुनरपि प्राप्यते पत्रम्। मासादनन्तरं तु न प्राप्यते।

प्राप्तिस्थानम्—श्री कार्यालयः, सुन्वारबाग श्रीनगर (काश्मीर)

वर्ष ७
सं० ४

* ओ३म् *

Vol. 7
No. 4

कश्मीर मण्डलान्तर्वर्ति श्रीनगरस्थायाः

# संस्कृत साहित्य परिषद-स्त्रैमासिकी

पत्रिका

# श्रीः

QUARTERLY JOURNAL OF THE

# Sanskrit Sahitya Parishad

SRINAGAR ( Kashmir )

वार्षिक मूल्यम्
१।)

चैत्र
१९९५

दी आर्य प्रैस, लिमिटेड, लाहौर में श्री प्रकाशचन्द्र के अधिकार से छपी।

# विषय-सूची



## सम्पादक समितिः



पत्रव्यवहारादेः पत्रिकाप्राप्तेश्च संकेतः—

पं० कुलभूषणः

'श्री' सम्पादकः

कुल्वाग बाग, श्रीनगर, कश्मीर



## सम्पादकीयम्

### लवपुरे भारतीय सभ्यताया केन्द्रम्

१९३९ जनवरी मासस्यान्ते लवपुरे मित्रेणैकेन संस्थैकाश्चर्यजनिकात्रैव दर्शिता। न केनापि प्रायशः पूर्वं श्रुतमासीत् यल्लवपुरेऽपि बीजरूपेण शांतिनिकेतनमेकं विद्यते। अन्येद्युः निमंत्रण पत्रमागतं यत् फीरोज़पुर रोड उपरि कृत्रिमनदी निकटवर्ति (irrigation canal) भूमि स्थलमेकमस्ति यत्र भारतीय सभ्यतायाः सार्वभौमिका परिषत् पं० रघुवीरमहाशयेन निर्मायि तत्राधिवेशनं भविता। तत्र प्राप्य शनैः शनैः भूमि स्थले तस्मिन् १५० स्त्री पुरुषाणां सम्मेलनमासीत्। पं० रघुवीरः पी० एच० डी० (लण्डन) डी० लिट् एट फील (हालंड) स्थानीय सनातन धर्म महाविद्यालयस्य संस्कृताध्यापको वर्तते। भारतीये साहित्ये तस्य प्रेम चानन्यसदृशं दृश्यते।

यत् विवरणं तेन तत्र पठितं तस्मात् ज्ञायते यत् १९३८ खृष्टाब्देतु परिषदियं कार्यक्षेत्र आगतास्ति। अस्य सहायकाः बहवः विद्वांसः पुरुषाः भारतीया-विदेशीयाश्च विद्यन्ते। यथा सर रिचर्ड वर्नः सम्पादकः केम्ब्रिज हिस्टरी आफ़ इन्डिया, सर जाहन मार्शल भूत पूर्व डारेक्टर आर्क्योलोजिकल डीपार्टमैंट आफ़ इंडिया, प्रोफेसर चैटर्जी यूनीवर्सिटी आफ़ कलिकाता, प्रोफेसर एण्ठा यूनीवर्सिटी येल (अमेरिका), श्रीमान् फ़ामीत्री आफ़ इटली प्रोफेसर कीथ एडंबरा

अन्येच कतिपये महाविद्वांसः संस्कृतमनीषिणः जापान, चीन, लंडन, पञ्चाल, पेरिस, नार्वे, कोलम्बा, निवासिनश्च, स्वर्गीय प्रोफेसर वूलनर भूतपूर्व रजिस्ट्रार पञ्चनद विश्वविद्यालयस्य संस्थाया अस्या प्रथम प्रधानमासीत् १९३४ वर्षे। अस्याः उद्देश्या—

(१) तु प्राचीन भारतीय साहित्य प्रकाशनम्।

(२) अर्वाचीन भाषासु प्राचीन ग्रन्थानां अनुवादः।

(३) प्राचीन भारत वर्षस्य भारतीयानां भारतात् वहिर् निवासस्थानैः (विशालभारतेन सह) सह सम्मेलनं सहयोगश्च। यथा बर्मा, लङ्का, मालया, सयाम, आसाम, समाटरा, बाली, चीन, मांगोलया, त्रिष्टुप इत्यादि स्थानेषु प्राचीन भारतस्य पूर्वमासीत् राज्यं तत्र च भारतीय सभ्यतायाः सततं प्रचारः तैस्सह आधुनिक समये भारतीयानां भारतीयसाहित्य द्वारा सम्पर्कः।

(४) तत्स्थानेषु प्राचीन भारतीय साहित्यस्य स्थानानाञ्चान्वेषणं तद्ग्रन्थानाञ्च प्रकाशनम्।

(५) प्राचीन भारतीय सभ्यतायाः साहित्यस्य च रक्षणम्।

उद्देश्यानामुपरिप्रकाशितानां सम्पूर्त्यै महानुभावैः पं० रघुवीरै स्तत्र भूमिस्थलमेकं क्रीतमस्ति यत्र कतिचित् आगाराणि कुटीराश्च निर्मिताः। स्वनिवासस्थानं विदेशीयानां छात्राणां निवासमप्यत्रैव विद्यते। अधिवेशनदिने जापानदेशस्य कश्चित् स्नातकः (graduate) भारतीय साहित्यशिक्षणार्थमत्र निवसतिस्म तत्राधिवेशने सम्मिलितश्चासौ।

महाशयस्यास्याधिवेशने भाषणमप्यभूत् यस्मिन् जापान देशीय नवयुवकेनेतेन श्री रघुवीरस्य महती प्रशंसाप्यकारि।

## ग्रन्थ प्रकाशनं मुद्रणालयश्च

संस्थाया अस्याः स्वकीयो मुद्रणालयोऽप्यत्रैव वर्तते। संस्थयानया १९३७ खृष्टाब्दात् १९३८ पर्यन्तं Journal of Vedic studies नाम्ना पत्रमेकं प्रकाश्यते यस्मिन् कृष्णयजुर्वेदस्य गोनामिका तैतिरीयभारद्वाज श्रौतसूत्रं, यजुर्वेदशाखा कथक श्रौतसूत्रं, महाभारत

विराटपर्व,पञ्जाबी प्रकाश इत्यादीनि पुस्तकानि प्रकाशितानि परं स्पष्ट, मुद्रण कार्यं अन्य मुद्रणालयेषु दुष्करं दृष्ट्वा १९३६ खृष्टाब्दे स्वकीयो मुद्रणालयो—आर्य भारती प्रैस इतिनाम्ना स्थापितः महानुभावेनानेन। स्वमुद्रणालये सरस्वती विहार माला पुस्तकानि मुद्रितानि येषु मध्ये अथर्ववेद पैप्पलादसंहिता अति प्रल दृष्ट्या महाप्रयासेन मुद्रितास्ति। जैमिन्या सामवेद उद्धारकोश दक्षिणापूर्ति बुद्ध तथा बौद्धिसत्व, बाल्मीकीय रामायण आदीनि बहूनि काव्यानि प्रकाशितानि। कानिचिदन्यानि प्रकाशितानि स्युः शीघ्रमेव। भारतवर्षस्य प्राचीन साहित्य रक्षणं भारतीय सभ्यताया विस्मृत गौरवस्यपूर्व विद्वानामन्वेषणं, को न जानात्यस्ति महत् कार्यम्। यस्यास्य कृते श्रद्धा प्रयासः प्रयत्नश्च यात् स एव भारतीयानामार्याणां पूज्यः पुरुषः।

अधिवेशनेऽस्मिन् पं० विश्वबन्धु एम० ए० शास्त्रिणां पं० भगवद्दत्त वैदिक स्कालर इत्याख्यानामपि भाषणान्यभूवन्। जस्टिस मनरो लवपुरीय हाईकोर्टस्य न्यायाध्यक्षो सभा प्रधानं आसीत्। पं० विश्ववन्धोरपि संस्थस्थेयं प्रशस्ता महाशय रघुवीरस्योद्योगोऽतिशयेनोत्साहितः। तदनन्तरं प्रकाशित पुस्तकानां लब्ध पत्राणां भोज पत्रेषु लिखित पुस्तकानां शिलानां केषांचिद् प्रदर्शनमासीत्।

दिष्ट्या वर्धते श्रीयुत रघुवीर पण्डितः धन्यवादान् आशीर्वादा श्चं तस्मै दद्मः। भारते जयतु, भारती।

## विवाहवयो विवेक—आक्षेप परिहारश्च

श्री पाठकानां विदितमेव यत् १९९६ विक्रमाब्दे श्री नादूर कृष्णस्वामिना मद्र प्रदेशात् श्रीः पत्रिकायां बालविवाह समर्थको लेखः प्रकाशितः यस्योत्तरं श्रीस्नातक धर्मदेवेन बंगलौर निवासिना दत्तम्। नादूर मठ कृष्णस्वामिनां तु तदनन्तरं लेखो न प्राप्तः परं पं०दीनानाथ सारस्वत शास्त्रिणा सनातन धर्म संस्कृत विद्यालयाध्यक्षस्यास्य प्रत्युत्तरं मूलस्थानात् (Multan) प्रेषितम्। तदनन्तरं श्रीः पत्रि-

कार्यां वाद विवादोऽस्मिन् विषये श्रीस्नातक धर्मदेव श्री पण्डित दीनानाथयोः प्रचलितः । यस्मिन् काले पूर्वं लेखस्योपर्यास्माभिः विदुषां सम्मतिः प्रार्थिता तस्मिन् समये कदाचिदपि ज्ञानं नासीत् यत् उत्तर प्रत्युत्तरे वर्षाः व्यतीताः भवेयुः । त्रैमासिके पत्रे त्वेतादृशानां दीर्घलेखानां प्रकाशनमसमीचीनम् । यद्यपि स्याथानं भवितु मर्हति तथापि वाद विवादरूपेण वर्षं प्रतिवर्षं स्थानं लब्धु मति दुष्करम् अतोऽस्माभिः सन्तोषेण प्रकाशितः पं० दीनानाथस्यान्तिमः लेखः । पं० धर्मदेवस्य अन्तिम लेखात् पूर्वःलेखश्चाङ्केऽस्मिन् प्रकाश्यते । पं० धर्मदेवस्यान्तिमो लेखोऽपि आगामिष्वङ्केषु शीघ्रं प्रकाश्य वयं भारादस्मात् मुक्ताः भवेम ।

बालविवाह समर्थनं त्वस्मिन् काले न केवलं सुधारकानां मत-विरुद्धं परन्तु ज्ञान विज्ञानशीलानां संसारस्य महापुरुषाणां सम्मति निराकरणम् । वेद शास्त्र स्मृति पुराण प्रमाणानि तूभय पक्षयोः पाठकानां दृष्टिगोचरं जातान्येव तदुपरि न वयं कांचित् स्वकीयां टिप्पणीं कुर्मः परं पं० धर्मदेवस्य पक्षं विज्ञान रुपेण पाश्चात्य वैदिक विद्या ज्ञानेन दृढं समर्थयामः । यद्येवं न स्यात् तर्हि कथं केन्द्रीय राज्यसमित्याः (Legislative council) शारदा एक्ट इति नाम्ना नियमबंधः स्वीकृतः सर्वत्र भारते हिन्दु मुसलमानेषु प्रचालितः । काश्मीर राज्येन तु नियमोऽयं बहु कालात् स्वराज्ये कट्टर हिन्दु राज्ये विशेषतया जम्मू प्रदेशीयासु प्रजासु प्रसारितोऽस्ति, यत् १४ वर्षीय न्यूनवयस्कः कन्याया अष्टादशवर्षेभ्यो न्यूनवयस्कस्य च वरस्य यदि पितृभ्यां पाणिग्रहणं चेष्टितं स्यात्तदा द्वयोः पितरौ दण्डनीयौ । वेदशास्त्रप्रमाणानां निश्चयं तु पाठक महाभागाः उभय-पक्षप्रकाशित प्रमाणेभ्यः स्वयं कर्तुमर्हन्ति ।

पं० दीनानाथस्य विशाल शास्त्रज्ञानस्य न केवलं वयं प्रशंसैवकुर्मःपरं पण्डित वर्यं दिष्टया आशीर्वचनैः धन्यवादैश्च सम्मानयामः प्रार्थया-मश्च यत् पण्डित प्रकाण्डस्यानन्य सदृश संस्कृतज्ञान शास्त्रज्ञानञ्च

वैदिक धर्माय भारतवर्षाय च लाभकरं स्यात्। नवीने कलिकाले ऽस्मिन् सङ्कुचित हृदयेन मास्तु विदुषां दृष्टिकोणं येन जाति धर्मस्य च हानि र्भवेत् परं विशाल दृष्टया सर्वं प्रश्नानालोचनं भवेत् येन शुद्धार्यधर्मस्य वैदिक सभ्यतायाः न केवलं भारत एव परन्तु सर्वस्मिन् संसारे प्रचारः स्यात्। पं० धर्मदेवायापि अतिशयेन धन्यवादान् वितरामः यस्य वेदशास्त्रज्ञानं पाठकैः स्वयमेवानुभूतम्। यद्यपि स्नातक महोदयस्य स्वधर्म प्रचारात् समयो न मिलति तथापि धर्मबुद्धया संस्कृत पत्रस्यास्य सेवायै बहु समय दानेन कृतार्था वयम्।

कुलभूषणः

# संस्कृतसाहित्यपरिषदः श्रीनगरस्य श्रीः

## पात्रकायाश्च वृत्तम्

(१९९५ वि० आब्दे)

### हर्ष समाचाराः

पं० शिवनाथ शर्मा उपमंत्री अस्माकं परिषदः साधारण पुरुषेभ्योऽत्यधिकः पुरुषार्थी संस्कृतरसिको विद्यते। महाशयस्यास्य सम्पादक समितेः सदस्य भावैनैव ज्ञायते यत् सर्वथा परिश्रमेण पण्डित वर्येन सभा कार्यं कृतम्।

श्री पत्रिकायां अपि बहवो लेखाः प्रायशः प्राचीन काश्मीरे इतिहास पूर्वका- पण्डित महोदयेन लिखिताः पठ्यन्ते। अस्मिन्नप्यङ्के लेख द्वयं "ऋषि प्रवीर", "बौद्ध दर्शन" संम्बन्धशीर्षकं दृष्टिगोचरं भवेत्। कतिपयमासेभ्य पूर्वं पण्डित महोदयैः भारतधर्ममहामण्डलात् काशी प्रदेशतः विद्यावारिधीति उपाधिः प्राप्ता। तदर्थं हर्षं प्रकटयामः पण्डितवर्यश्च दिष्टया वर्धतां इति आशीशब्दान् पत्रिकाद्वारेण प्रेषयाम इति।

(२) द्वितीयः समाचारो हर्षस्य पं० जगद्धर जाडू एम० ए० शास्त्री सम्बद्धोऽस्ति। पं० जगद्धर जाडू अस्माकं परिषदः प्रधानं।

पं० नित्यानन्द शास्त्रिणो रोगग्रस्तस्यानन्तरं पं० वर्येणानेन संस्कृत परिषदि शोभनं कार्यं कृतमस्ति।

श्रीः पाठका अपि गवेषणपूर्वकान् लेखान् पण्डित महोदयस्य पत्रिकायामस्यां सदैव पश्यन्ति।

श्री प्रताप कालेज श्रीनगरस्य संस्कृत प्रोफैसर (महाध्यापक पदम्) पं० काञ्जीलालस्य पदात् विराम (पैनशन याप्तेन) ग्रहणेन रिक्तमासीत् तत्पदं श्री जगद्धर जाडूना प्राप्तम् तदर्थं प्रसीदामः।

(३) तृतीय हर्ष समाचारः—पं० गोविन्दराजदान शास्त्री, एम० ए० विषयकोऽस्ति। प्रिंस आफ़ वेल्ज़ कालेज जम्मू प्रदेशे यत् हिंदी अध्यापकस्य (लैक्चरार इत्यस्य) पदं रिक्तमासीत् तस्मिन् श्रीमान् पण्डित गोविंद राजदान शास्त्री एम० ए० परिषद उपप्रधानं नियुक्तः। महानुभावस्यास्य राजतरंगिण्यादि कविता सुन्दरा लेखाश्च बहवः श्री पत्रे दृश्यन्ते। धन्यवादार्हाः काश्मीर राज्य मन्त्रि वर्याः यैः द्वौ परिषदः प्रधान पुरुषौ सम्मानितौ।

## शोक समाचारः

काश्मीरेषु स्वर्गीय लाला शिवदासस्य नाम को न जानाति। बहुवर्षेभ्यः जम्मू काश्मीर न्यायालयेषु उच्च न्यायाधीप पदवीमारूढः (Dist. Session Judge) सर्वलोकप्रिय आसीत्। कतिपय वर्ष-समयं स्वर्गतस्य प्रातः स्मरणीय भूतपूर्व महाराज श्री प्रतापसिंहस्य राज्य मन्त्री च आसीत् (State Secretary)। स्वकार्येषु सदा निपुणः बुद्धि प्राचुर्येण सम्पन्नः श्री शिवदासः मित्राणां चक्षूंषि सदाह्लादयत्। १४, १५ वर्षाः व्यतीताः यदा मया श्रीनगर्यां कोठी-बाग़ प्रदेशे स्वनिवास स्थाने संस्कृत साहित्य परिषद् स्थापनार्थं सभाकारि तदा महानुभावो ऽयं प्रचोदितस्तस्मिन् समये मयोपरिसं-तुष्टः संस्कृतप्रियोऽसौ परिषदः प्रधान पदमङ्गीचकार। ८ १० वर्ष-कालं तत्पदं शोभयामास। राजकीयं पदं त्यक्त्वापि पाञ्चालेषु मयानी प्रदेशे ज़िला शाहपुरे निवसन्नपि ग्रीष्मर्तौ श्रीनगरीमलञ्चकार।

परिषदश्च प्रधानं आसीत् कतिपय वर्षकालम्। ग्रीष्मर्तौऽत्रागत्य सभाकार्येषु च सदैवोत्सुकोऽभूत्। अत्यन्तं दुःखं यदीदृशः विद्वान् सज्जनः गत नवम्बर मासे पटियाला प्रदेशे दैवयोगेन पञ्चत्वं प्राप। हार्दिकं शोकं प्रकटयामः कुटम्बिनश्च परिषदः शोकनिमग्नस्य सहानुभूतिं प्रेषयामः।

## परिषद् अधिवेशनानि

परिषदधिवेशनान्यप्यऽस्मिन् वर्षे केवलं त्रीणि सञ्जातानि। वैशाख ज्येष्ठ मार्गशीर्षमासेषु मासिकान्यधिवेशनानि अभूवन्। विशूचिका रोगेनास्मिन्नपि वर्षे पीड़िताऽभूत् श्रीनगरी येन राज्यकार्यवशात् मम त्वति स्वल्पोऽवकाशो मिलितः। अन्यैश्च सभासद्भिः यथा शक्ति कृतेऽपि प्रयत्ने त्रिवारंविहाय सरस्वती सम्मेलनं न समजनि। आशासे १९९६ वि० अब्दे इदानीं ग्रीष्मर्तौ बहुवारं सम्मेलनं स्यात्। राजकीय संस्कृत पाठशालायाः छात्राः श्री प्रताप महाविद्यालयस्य एफ़० ए०, बी० ए०. एम० ए० श्रेणीषु पठितारा विद्यार्थिनो यदि संस्कृत साहित्य परिषदः साहाय्यं स्वयंकुर्युस्तेषां लाभायैव स्यादयं प्रयत्नः इत्यस्ति अस्माकं दृढो विश्वासः।

## श्रीः पत्रिका

स्वायुषः सप्तमे वर्षेऽस्मिन् श्रीः पत्रिका पदमाधत्ते। प्रथमं पञ्च वर्षा आयुषः क्रमशः समयेऽगात् पत्रिका, अन्य संस्कृत पत्राणां भारत वर्षीयानामासीदग्रेसरा समये प्रकाशने परं खेदास्पदं यत् षष्ठे वर्षे कतिपयैः कारणैः वारयोर्द्वयोः प्रकाशिताभूत् चत्वारा अङ्काः। प्रसीदयामः यत् सप्तमे वर्षे ऐषिमे चतुरङ्कानां प्रकाशनं त्रिवारेषु जातम्। आशासे यदिदानीं १९९६ वि० आब्दे यथा पूर्वं यथा क्रमं प्रतिज्ञातं तथैव चत्वारः अङ्का स्व समये प्रकाशयेरन्। वह्वत्र तु लेखक महोदयैः सभासद्भिः ग्राहकैश्चान्यैः कर्तव्यम्। यदि लेखाः समये न प्राप्ताः स्युः महानुभावैश्च स्वशुल्कं नार्पितं स्यात् तर्हि कथं प्रकाशनं समये। सत्यपि लेखसंग्रहे समये प्राप्यते स्यादपि धनं

ग्राहकैः साहित्यशीलपुरुषैश्च, यदि कार्यकर्तारः दत्तचित्ताः प्रकाशन कार्ये न लग्नाः स्युस्तथापि चास्याः कीर्ति समय प्रकाशनं च भवितुमर्हेत्। अतो प्रार्थ्यते सर्वे महानुभावाः लेखकाः (काश्मीरिकाः जम्मू प्रदेशीया अन्यभारत प्रान्तीयाश्च) यदनुग्रहेण संस्कृत भाषार्यसभ्यता प्रचारकाः शोभनान् नातिदीर्घान् लेखान् प्रेषयन्तु येन कार्यं सफलं स्यात् शीघ्रं प्रकाशनस्य। अन्य ग्राहक महानुभावाः स्वकीयं शुल्कं १) त्वरया प्रेषयन्तु। द्वयोर्वर्षयोः प्रायशः ग्राहक महाशयै सभासद्भिः स्वशुल्कं न प्रहितं। कृपयेदानीं स्वकर्तव्यं पालयन्तु सदस्या इति।

# समालोचना

## वाणी निवन्ध मणिमाला

पण्डित श्रीकर्णवीरनागेश्वररावः संस्कृतमनीषी पञ्च भाषा भाषी भाषात्रय प्रवीणो महाशयः हिन्दी भवन जाण्ड्पेट पो० चीराला जि० गुण्टरतः (मद्रास प्रान्तात्) वाणी निबन्ध मणिमाला पुस्तकं प्रकाशयति। "श्री वेंकटेश्वर स्वामिनां पवित्र-तीर्थ-स्वरूप चरण नलिनेषु" समर्पितं पुस्तकमिदम्। वहवः, शोभना नातिदीर्घाः शिक्षादायकाः रुचिकरा लेखाः पुस्तकेऽस्मिन् प्रकाशिताः सन्ति।

'अहम् रूपकः', 'स्वदेशोद्यमे खादी प्रचारः', 'संस्कृतभाषाया महत्वं', 'वोटः' (राज्यसभा निर्माणार्थं स्वसम्मति, अधिकाररूपः आङ्गलभाषायां 'वोट' इति शब्देन प्रसिद्धः 'गोमातारक्षा', 'संस्कृत प्रचार साधनानां वर्णनं' इत्यादिकान् विषयान् अवलम्ब्य पण्डित वर्येण स्वाभिप्रायाः सुन्दरशब्दैः प्रकटिताः। लेख एकस्मिन् श्रीयुत पं० जवाहरलालं प्रति सद्भावात्मकाः पं० वर्यस्य संक्षिप्त जीवनचरित्र मुल्लिख्य निबंधिताः सन्ति। संस्कृत पाठशालासु संस्कृत पुस्तकालयेषु पुस्तकमिदं शोभायुक्तं स्यात्। उपरि निर्दिष्ट संकेतेन प्राप्तुं शक्यते।

कुलभूषणः

# ग्रहण मीमांसा

ले० प्रो० गोविन्द राजदान शास्त्री M. A., M. O. L. L. T.
Prabhakar P. W. College. Jammu.

परिवर्तिनि संसारे न केवलं देशकालावेव परिवर्तनशीलौ किन्तु दुस्त्यजा प्रकृतिरपि जन्तूनाम् । मानसिका हि भावाश्चञ्चलेन मनसा सह परिवर्तनं यान्ति—इति सर्वसंमतम् । एवं हि व्यतीतासु नीरद-प्रायासु वर्षासु समागते काशकुसम विकसितेऽनभ्रे शरदि मित्रवरस्य प्रोफेसर गिरधारीलालस्य प्रचोदनेनोद्युक्तोऽस्मि जातो विषमायां ग्रहण-मीमासायाम् । "पृथिव्या इयं छाया या भानौ विधौ वाक्रम्य किञ्चि-त्कालं तिष्ठति सैव ग्रहणमित्युच्यते स एव राहुः केतुर्वा"—इति यद्भौ-तिकविषयं भौतिक विज्ञानचणैरुपन्यस्तमस्तु तत्तथैवेति—परं ऋग्वे-दीयेऽनेहसि राहोः प्रसिद्धं नाम 'स्वर्भानु' रभूत्—तथा च श्रुतिः—

यत् त्वा सूर्य स्वर्भानुस्तमसाविध्यदासुरः ।
अक्षेत्रविद्यथा मुग्धो भुवनान्यदीधयुः ॥
स्वर्भानोरधयदिन्द्र माया आवो दिवो वर्तमाना आवहन् ।
गूढं सूर्यं तमसा पव्रतेन तुरीयेण मनसा विन्ददत्रिः ॥
मा मा मिमं तव सन्तमत्र इरण्या द्रुग्धो भियसा निगारीत् ।
त्वं मित्रो असि सत्यराधास्तौ मेहावतं वरुणश्च राजा ॥
ग्राव्णो ब्रह्मा युयुजानः सपर्यन् कीरिणा देवान् नमसोपशिक्षन् ।
अत्रिः सूर्यस्य दिवि चक्षुराधात् स्वर्भानोरप माया अघुक्षन् ॥
यं वै सूर्यं स्वभानुस्तमसा विध्यदासुरः ।
अत्र यस्तमन्व विन्दन्नह्यन्ये अशक्नुवन् ॥—इति

एवमत्र वै चिन्त्यं यत् असुरादुत्पन्नः स्वर्भानुः सूर्यं तमसा आविध्यदिति तत्र तु भूतकालीनीयेऽस्मिनितिवृत्ते चन्द्रमसो ग्रहण-विषयको निर्देश एव न दृश्यते न वा चन्द्रं स्वर्भानुर्विव्याधेति । अपव्रतेन तमसा गूढं हि सूर्यं अत्रिः तुरीयेन मनसा अविन्दत् सूर्यस्य हि अत्रिरेव दिवि चक्षुर्ज्योतिराधात् स्वर्भानुश्च अक्षेत्रवित् मुग्धो यथा

भुवनानि अदीधयुः । परन्तु यत् तत्रभवता डाक्टर सिद्धेश्वरवर्मणा एव मुच्यते—यत्—"I have gone through the passage from the Regveda. It is probably a reference to eclipse but I cannot say that it is so. According to German authorities it possibly mentions a demon (for आसुरः is the epithet of स्वर्भानुः) who obscured the sun with darkness. The peculiarity of the text is that all the verbs used are in the past tence. So possibly it is a legend. The last verse mentions this who found out the sum after it had been obscured with darkness by स्वर्भानुः। As regards the literal meaning of स्वर्भानुः I should translate it—not as "to shine" but "to appear" and so the literal meaning in my openion is "appearing in the sky" heavenly nominal. In the 6th Verse the माया of स्वर्भानुः has been described the माया destroyed by Indra. There is nothing in the test which could show that there was light in the body of स्वर्भानुः" सत्यं त्वेतद्यत्तमसैव स्वर्भानुः सूर्यं विव्याधेति तस्मान्माध्यन्दिनी श्रुतिरपि 'स्वर्भानुर्वा आसुरिः सूर्यं तमसा विव्याधेति' परन्तु कथमसौ स्वर्भानुः सूर्यं तमसा विव्याध ? कथं वासौ राहुरिति नाम्ना लोके प्रसिद्धः कथं वासौ सूर्यमेव विव्याध न तु चन्द्रमिति सन्देहदोलायिते मनसि त्रिविधेन आधिभौतिकाधिदैविकेनाध्यात्मेन च पथा समाधानाय प्रयत्येत चेत्तर्हि स्यादेव सन्तोषः।

आध्यात्मिकाधिदैविकाधिभौतिक दृष्ट्या त्रिविधा हि सृष्टिः। आधिभौतिक व्यवहारेण तु रविभूम्योर्मध्ये पतिते चन्द्र मण्डले सूर्य ग्रहणं भवति पृथिव्याश्छायया च अन्तर्हिते चन्द्रबिम्बे चन्द्रग्रहणमिति

यत्पदार्थ विज्ञानवादिना गोल विद्याचणानां मतं, यच्च छायाया न्यूनाधिक्येन ग्रहणोऽपि न्यूनाधिक्यमिति तज्ज्योतिर्विदामपि संमतं तथा च प्राच्यपराच्यानां वाचस्पति भास्करादीनापि तदेवानुमतम्। भास्कराचार्यस्तु सूर्य सिद्धान्ते स्वर्भानुं ग्रहस्वरूप मन्यग्रहवदेवाङ्गी करोति तेषां च शीघ्रोच्चमन्दपातादिगत्या संचारः तथाहि—

अदृश्यरूपाः कालस्य मूर्तयो भगणाश्रिताः

शीघ्रोच्च मन्दपाताख्या ग्रहाणां गतिहेतवः ॥ इति सूर्य सिद्धान्ते

आधिदैविकनिरीक्षणेन स्वर्भानुः सूर्यं चन्द्रमसं वा ग्रसतीति लोकवादः भगवती ऋगात्मिका श्रुतिरपि 'यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः -अत्रिः सूर्यस्य दिवि चक्षुराधात्—स्वर्भानोश्य माया अघुक्षन्—स्वर्भानोरधयदिन्द्र माया आवो दिवो वर्तमाना आवहन्। गूढं सूर्यं तमसापव्रतेन तुरीयेण मनसाविन्दरत्रिरिति तथा च माध्यन्दिनी श्रुति रयि—स्वभानुर्ह वा आसुरिः सूर्यं तमसा विव्याधेति समुद्रमथनान्तरं भगवान् मोहिनी स्वरूपोऽमृत प्रदानावसरे देवतावेशधारिणो दैत्यस्य राहो शिरश्चिन्छेद राहुरपि पर्वणि पर्वणि उपस्थितोऽत एव सूर्याचन्द्रमसौ ग्रसति—इति तथा च कश्यपः—

"छिन्नोऽपि विष्णुचक्रेण सुधामयशिरास्तमः।

केशवस्य वरेणासौ तथापि ग्रहतां गतः ॥"

वक्रोऽसौ सदा पात एव वर्तते। द्वावपि राहुकेतू पातत्वात् अस्तमितौ सूर्याचन्द्रमसौ तु नित्यूदितौ। स्वर्भानुश्च नारदोक्त्या "इन्द्वर्कमण्डला कृतिरसितत्वान्नदृश्यते गगने।" स्वर्गे एव भानवः किरणा यस्य न तु भूमौ तत एवासौ पार्थिव शरीरधारिणामदृश्यः।

राहुकेतू ३/११ वक्रगत्या संचरन्तौ ग्रहावेव। राहुस्तु 'चन्द्र बिलमंडक्रान्तिमंडलस्वस्तिके' निवसति तथा च केशवाचार्यः "वैशमचास्य शशभृद्विमंडल क्रान्ति मंडलमिलच्चतुष्पथः" इति

आध्यात्मिक सरण्या तु दैवीसंपद्युक्तं मनः आसुर्या सम्पत्त्या आक्रान्तं देवासुरसंग्रामपरमिद्धान्तं हि शास्त्रेषु प्रसिद्धम्।

+ इदं मम...



ग्रहणप्रभावस्तु पृथिव्यां मानसिको दैविकोभौतिकश्चे तित्रिधा सर्वसाधारणोमहोत्पातादिसूचकः। निदर्शितं च शास्त्रेषु सिंहिकापुत्रश्छायासुतो दैत्य आसुरीप्रकृतिरात्म बुद्धिरूपौ सूर्याचन्द्रमसौ यदा आक्रामति तदा आसुरीमायापरवशो लोक उत्पातानेवाचरतीति नियमः। एवमेव आकर्षण विकर्षण शक्ति प्रणाल्या परस्परं सम्बद्धाः सन्तो ग्रहा उपग्रहाश्च स्वं स्वं प्रभावं दर्शयन्ति—इति वैज्ञानिकानां मतम्। सर्वं खलु वस्तुजातं चान्द्रमसेन ज्योतिः पुञ्जेन प्रभावितं मनस्येवाधिष्ठितमत एव-'चन्द्रमा मनसो जात' इति श्रुतिः। चान्द्रश्च मार्ग अतएव पितृयान इति कथ्यते। सौरस्तु प्रभावो 'धियो यो नः प्रचोदयादि' ति बुद्धिपर एव देवयानात्मकः। चन्द्रमसः पृथिवी बलमादधाति पृथिव्यास्तु सौषम्णः सूर्यरश्मि रत एव सूर्यं परितः पृथिवी तस्याश्चपरितः चन्द्रः परिक्रमां करोति। जलमयेऽम्भोनिधौ दृष्टस्तु पूर्णिमायां उच्चलनात्मकश्चान्द्रः प्रभावो ग्रहणकालीनं विकार मपि पृथिव्यां साधयति अत एव पक्कमन्नादिकं ग्रहणेन विकृतं परित्याज्यमिति मन्यते। ग्रहणकाले प्रभावविकारयो रावश्यकत्वान्मनो बुद्धी चञ्चल एव पाचनादिकार्ये प्रबलां शक्तिं न जनयत इति यच्छारीरिकविज्ञानवादिना संमतं तत एव भोजनादीनां ग्रहणकाल अनभिसंधिः। मनसो बुद्धेश्च तस्मिन्समये आकर्षणादि सम्बन्धस्य सम्यगसत्त्वात् संकीर्णतादोषेण धावनोत्पतनादिकाः क्रियाः शास्त्रैः निषिध्यन्ते केवलं सरलेन स्वस्थिरेण मनस्केन भाव्यं तदानीमित्यपि आध्यात्मिकसम्पदनुसारिभिर्भारतीयैर्निश्चितम्।

रजोवीर्यौ तु चान्द्रसौर प्रभाव प्रभावितौ। दिवसे वीर्योत्कर्षाद्बलाधिक्यं रात्रौ तु रजोगुणाधिक्येन मनसि शृङ्गाराद्युद्दीपनं भवति— मनसि तु चान्द्रमसः प्रभावोऽधिक इतिहेतोर्ग्रहण कालेषु काम्यकर्मसु प्रवृत्तिर्निषिद्धा—इत्यतो निश्चलेन मनसा स्थिरया च बुद्ध्या आसुरीमाया विनश्यति—तत एव "इन्द्रः स्वर्भानोर्मायामधयत—अत्रिश्च स्वर्भानोर्माया अधुक्षन् दिवि सूर्यस्य चक्षुराधादि" ति श्रुति रित्यन्यदन्यदेति॥

# सन्तति-निरोधः ( Birth Control )

( लेखक—कविराज—रमाकान्त भारद्वाज शास्त्री, आयुर्वेदविशारदः आयुर्वेदाध्यापकः, श्री र० न० संस्कृत कॉलेज, जम्मू । )

"अति सर्वत्र वर्जयेद्" इति लोकोक्तिरियं खलु मानवजीवन-सम्बद्धासु समस्तास्वपि तासु तास्ववस्थासु निरपवादं चरितार्थेति सर्वेऽप्यभ्युपगच्छन्ति । परम्, नितान्तदीर्घकालाद् भारतेऽत्र सर्व-मान्योऽप्ययम् 'अतिवर्जन' मूलक सिद्धान्तः पुत्रोत्पत्तिमधिकृत्य सर्वथाऽप्युपेक्षित एवानुभवपथमारोहति तदनुशीलनपराणाम् । पश्याम स्तावदिह दुरन्तदारिद्र्य दैन्यपरिमुषित जीवनसौख्या अपि जनाः पुत्रोत्पत्तौ सत्याममन्दानन्दसन्दोह वशंवदा विस्मरन्ति सर्वमपि दुःख जातम् । 'पुत्रोत्सव' शब्दएव सर्वोत्कृष्टहर्षातिशय सूचक इति "अर्धमात्रा लाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः" इति शाब्दिक प्रसिद्धेरवगम्यते ।

तदद्य वयं पुत्रोत्पत्ति नियमनमेव विषयमधिकृत्य किमपि वक्तु-मिह समीहामहे । परम् लिखितुमुपक्रामता न्नो स्मृतिपथमुपगतवती श्रुतिरियं हठाल्लेखनीं रुणद्धीवः—

"इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु ।
दशास्यां पुत्रानाधेहि·········।" ऋ० १० । ८५ । ४५ ॥

कृतोद्वाहा हिन्दवः 'पत्नी दशपुत्राणां जननी भूयाद्" इत्यनया ऋचा इन्द्रमभ्यर्थयन्ति । इत्थमेव धर्मशास्त्रादि विविध प्राचीन साहित्यग्रन्थानामनुशीलनेनापि सर्वथा, सर्वदा, सर्वत्र, सर्वैरपि पुत्र बाहुल्यलाभाय प्रयतनीयमित्यवसीयते । अद्यापि हिन्दूनां गृहेषु 'बहु-पुत्रो भव' इत्याशीर्वचसा लघूनभिनन्दयन्तोऽवलोक्यन्ते गुरुजनाः ।

तदित्थं पुत्र प्राचुर्य्य लिप्सेयं धर्मैकप्राणानां हिन्दूनां, विषम ज्वरानिर्विशेषं शुक्रधातुगतेव संवृता प्रतिभाति । सा चेयं निखिले ऽपि देशेऽस्मिन्समन्तात् प्रसरन्ती पुत्रप्राचुर्य्याभिलाषा, सुसमिद्ध

X ... बहुच ... ।



हुतवहज्वालेव जलाञ्जल्या, वधिरितदिगन्तरालो बलवदाहतपटहसहस्रघोषोऽकिञ्चिनेन वीणारवेणेव कथमिव प्रतिकर्त्तव्या तावदस्माकीनेनानेनावलेन शब्दजालेन ? विशेषतस्तु 'सन्तति रल्पैव श्रेयसीति सिसाधयिषूणामस्माकमयं निबन्धः पैतामह कूपात् क्षारजलास्वादपक्षपातकलुषितमतिबहुलेषु 'पण्डितेषु' कथमिवादृतः स्यादिति दुनोतिनोऽयकिकर्तव्यविमूढता ।

तथापि "न्याय्यात्पथः प्रविचलन्ति पदं न धीराः" इति सद्भिरादृतां सरणिमनुसरद्भिः वक्तव्य एव तावत्स्त्रीयऽभिप्रायोऽस्माभिरिति संक्षेपतः प्रोच्यते किमप्यस्मिन्विषये ।

प्रचलितेऽस्मिन्नांग्लशासने दशभिर्दशभिर्वत्सरै परिगण्यन्ते देशस्यास्य निवासिनः सेयं परिगणन क्रिया लोकभाषया 'मर्दुमशुमारी' 'सेन्सस-census इत्यादि शब्दै व्यवह्रियते । विगतेषु ४० ५० वर्षेषु सम्पादित जनगणनाऽङ्कानां परीक्षणेन भारते जनवृद्धिक्रमोऽतिवेगेन प्रचरतीति सम्यगनुमातुं शक्यते । १६०० तमे खीष्ट सम्वत्सरे समनुष्ठितायां गणनायां पञ्चविंशति कोटिमिता जनाः परिगणिता अभूवन् । प्रतिवर्षदशकानान्तरं वृद्धिं दर्शयन्तीयं संख्या १६३० तमे खृष्टाब्दे पञ्चत्रिंशत् कोटिमिताऽभूत । Public health commissioner नामको राज्याधिकारी १६३७ मितखीष्टवत्सरीयायां वार्षिकसूचनायां कथयति—

"The population of India as a whole is likely to reach by 1941, a figure approximate to 40,00,00, 000. So far as the existing trends indicate, there is little reason to doubt that this figeure will be reached" From the "Tribune" Dated 27 August 1933

१६३१ तमे खीष्टवत्सरे भारते चत्वारिंशत्कोटिमिता जनसंख्या भविष्यतीति दृश्यमानेभ्यो हेतुभ्योऽनुमीयत इत्यस्य लेखस्याशयः ।

यद्ययं जनवृद्धिक्रमोऽनेनैव वेगेनोत्तरमुन्नतिं गच्छेत् तदा स्वल्पैरेव वर्षैः कोटिसंख्यका जना अत्र देशे भवितार इति नात्र कोऽपि सन्देहः। यैः किल विद्वद्भिः अर्वाचीनविज्ञान साहाय्येन भारतदेशस्येदानीन्तनाया आर्थिकस्थितेः सूक्ष्म गवेषणमनुष्ठितम्, तेषां मतानुसारेण प्रति शत संख्याकेषु जनेषु ६० संख्याका जनाः तृप्तिक्षममशनमपि नो लभन्ते, का कथा वस्त्रादेः? तत्र चायं हेतु स्तैर्विद्वद्भिरुच्यते-इयं भारतभूः पुरा जनसंख्याया अल्पत्वात् देशवासिभ्यः पर्याप्तान्नपान वितरण क्षमाभूत्। तयैवेदानीं प्राचीन जनसंख्यापेक्षया त्रिगुणाधिकेभ्यो जनेभ्योऽशनादिकमुपकल्पनीयम्। कथमत्र सा क्षमा स्यात्? ससीमा हि भुवः समुत्सृजनशक्तिः।

एतन्मूलक एव साम्प्रतं सर्वत्र श्रूयते महाञ्जन कोलाहलः। वृत्यभावो नाम (unemploymont) दुर्दान्त दैत्यो देशवासिनो ग्रसितुं सर्वत्र समुद्यतोऽवलोक्यते। शासकै र्विधीयमाना स्तदुन्मूलनोद्योगा बहुधा समनुष्ठिता अपि वैफल्यगर्तगा एव वीक्ष्यन्ते। वृत्यभावकष्ट पीड़िता असंख्या युवका आत्महत्या महापातकेनात्मानं विलयं नयन्तः प्रत्यहं समाचार पत्रेभ्यः श्रूयन्ते। व्यवसाय-क्षेत्रेष्वपि सर्वतो दारुणा अहमहमिका, इतरेतरेण प्रचण्डः संघर्षश्च, व्यवसायतो र्थोत्पादनसामर्थ्यं क्षपयन्तनु भूयते। इत्थं सन्ततिप्राचुर्यजे महाकष्टे सर्वत्र विजृम्भमाने ऽपि अज्ञान तिमिरावृतमतप्रज्ञानेत्रैः आलस्य प्रमादादि विविध दोष सन्दुष्टैः दैवावलम्बनग्रहनिग्रहीतोद्योगवलैः असंख्यकुसंस्कार विषावेशाविष्टविग्रहै र्जनैराकीर्णेऽस्मिन्देशे पुत्र बाहुल्य लिप्सा न मनागपि ह्रासोन्मुखी दृष्टिमेति। ततश्च क्षीणरोग्यानां बलनाशकारणाद्विपयवासना तैक्ष्ण्यं सन्तति वृद्धयै प्रचुरमाचरति साहाय्यम्। इत्थं जनसंख्यावृद्धिः देशकष्ट परम्परामुत्तरोत्तरमुत्तेजयति।

अथेदानीं सन्ततिबाहुल्य सम्भवान् (व्यक्तितोऽनुभूयमानान्) हानिकरानभावानत्र

(१) समस्त कुटम्ब सौख्याधारभूताया जनन्या गर्भोद्वहन प्रसववेदनादि हैतुकं दौर्बल्यमारोग्य हानिरल्पायुष्ट्वञ्च।

(२) मातुर्दौर्बल्य निमित्तजं सन्ततेरपि हीनवीर्य्यत्वं रोगाकरत्वं, वालमृत्यु संख्यावृद्धिः, तत्कारणकं गृहस्थस्य कष्टमयत्वम् दौर्बल्ये हि सर्वेऽपि शारीरिका, धार्मिकाः, सामाजिका दैशिकाश्च दोषाश्च नरानाक्रामन्ति।

(३) पितुः सन्ततिपोषण चिन्ता, तदनुबन्धिनी अर्जन प्रयासाधिक्यम्, तेन शरीरमानसोभयविधारोग्यनाशः। सर्वमप्यर्जितं प्रचुरसंख्यक सन्तत्यै अपर्य्याप्तम्। तेनापि पित्रोरस्वास्थ्यवृद्धिः।

(४) अर्थदारिद्र्य जनितः सन्तत्या यथोचितशिक्षणाद्यभावः तेन तस्या मौढ्यं वृत्तिलाभाक्षमत्वञ्च।

(५) दारिद्र्यवृद्धेः सर्वपातकोत्पत्तिः तन्मूलकः सर्वनाशः इत्येते संक्षेपतो दोषाः समुपवर्णिताः सूक्ष्मतरगवेषणेनान्येऽप्यसंख्यका दोषाः परिज्ञाताः स्युः।

यूरोपदेशेऽपि विगतशताब्द्यामेतादृश्येवाभूद्दशा। तत्रत्याश्रपिः सन्ततिबाहुल्यनैमित्तकैरनेकदुर्वारयन्त्रणानिचयै भृंशमपीडयन्त। तां च हृन्मर्मोत्पीडनीं दुर्दशामालोक्य मानव हित साधनैनक व्रतिनो भूतदयाभृतपरिपूतमानसा स्तत्रत्या वैज्ञानिकपुङ्गवाः स्वबन्धूनां कष्टापनोदाय वद्धपरिकराः विज्ञानालोकेन परीक्षामस्य प्रश्नस्या कुर्वन्। दीर्घकालप्रयत्नोत्तरं तैर्महानुभावै रिदन्निर्धारितमभूत्--सन्ततिरल्पैव, न वा स्यात्। तन्निमित्तका वहव उपायास्तैराविष्कृताः। गृहस्थ धर्मपालन परैरपि तेषामुपायानामवलम्बनेन सन्तते नियन्त्रणं सम्पादयितुं शक्यते।

इदानीमेतावदेवोक्त्वात्र विरम्यते। 'श्री' पाठकाना मेतद्विषय ज्ञानोत्साहविशेषं विज्ञाय पुनः सत्यवसरे सन्ततिनिरोधोपायानां विषये विमर्षं करिष्यामः।

# बौद्धदर्शननिदर्शना

(अनु० विद्यावारिधिः पं० शिवनाथशास्त्री साहित्यभूषणः साहित्यमणिः संस्कृतविनोदः काश्मीर)

झाय भिक्खू ! मा च पामदो
मा ते कामगुणे भमस्सु चित्तं ।
या लोहगुलं गिली पमत्तो
मा कंदी दुक्खमिदन्ति डय्यमानो ॥

जगति बौद्धधर्मज्ञान हेतोर्बुद्धस्य चत्वारो मूलसिद्धान्ता अवश्यं परिशीलनीयाः । येषां ज्ञानेन पाठकानां बुद्धोपदेशज्ञाने सहायता भविष्यति । तत्र त्रयः अस्वीकारात्मकाः, एकस्तु तदन्यथा । ते च—

(१) "मनुष्यः स्वयं स्वस्याधीश्वरः" अस्य सिद्धान्तस्य विरोधो माभूदित्यतो "नास्ति मन्तव्यो ईश्वरः" । (२) नित्यत्वे एकरसत्वे तस्य मुक्तौ परिशुध्यां वा न किमपि कारणं स्यादित्यतः "आत्मा अनित्यः" । (३) बुद्धेरनुभवस्य च प्रामाणिकत्वं न नश्येदित्यतः "कस्यापि ग्रन्थस्य स्वतः प्रामाण्यं नास्ति ? (४) जीवन-तद्वैचित्र्यस्य कार्यकारणनियमेन राहित्यं, आकस्मिक घटनातारतम्यं वा मास्तु इत्यतो "जीवनप्रवाहो वर्तमानशरीरान्तमेव न परिमितः" । इति चतुर्षु बौद्धसिद्धान्तवाक्येषु पृथक्-पृथग् (यथा बौद्धसाहित्यपरिशीलनतो विविच्य) पाठकेषु यथा बौद्धाचारज्ञानसारल्यं भवेत्तथोपढौकयामि ॥

## (१) ईश्वरो न मन्तव्यः ।

पाठकाः ! यतो हि सर्वं कार्यं कारणजन्यमतोऽस्य विश्वरूपि-कार्यस्य सकारणत्वेन भवितव्यम् । कारणं तु जगत ईश्वरः इतीश्वर-वादिनां मतम् । तत्र कारणबुद्धत्वे किं प्रकारत्वं कारणमस्य जगदुत्प-त्तावीश्वरस्य ? । घटे मृत्तिकावत् कुण्डलादिषु सुवर्णवदुपादानकारणत्वं चेदस्ति, तर्हि रूपान्तरमीश्वरो विश्वस्येति मन्तव्यतायां जगति सुखदुखं-क्रूरमृदुता-सत्यानृतं सर्वं यत्किञ्चिद्वस्तुजातमीश्वरादीश्वरेऽस्ति । प्रत्यक्षे

च—संसारश्च सर्वतो दुःखमय एवात ईश्वरोऽपि सुखमयत्वापेक्षया दुःखमयो दयालुत्वापेक्षया क्रूरः। यतो हि संसारे सर्वतो दुःखस्य क्रूरतायाश्च राज्यमस्तीति। वनस्पति-कीट-पक्षि-मत्स्य-सर्पश्रृं-गाल-सिंह-व्याघ्र-सभ्यासभ्यमनुष्याश्च सूक्ष्मदृष्ट्या वीक्षणेन परस्परजीवनग्राहका दरीदृश्यन्ते। वास्तविकदृष्टिनिक्षेपेण पर्यालोचयामि, दृश्यादृश्यं सर्वमिदं जगद्रोमाञ्चकारि युद्धक्षेत्रमस्ति। यत्र सबलाः प्राणिनो निर्बलान् ग्रसन्ति। विनैव प्रौडवादं पुनर्जन्मानङ्गीकुर्वाण अवश्यं स्वीकरिष्यंतीति। पुनर्जनवादिनस्तुः—सुखदुःखादिकं सर्वं पूर्वजन्मकृतकर्मणां फलमिति ब्रुवते। ते तु पृष्टव्याः। सुकृतदुष्कृतकर्मफलभोगस्तु कर्त्तव्याकर्त्तव्यज्ञानविशिष्टानां मनुष्यानामेव भवितुमर्हतीति न्याय्यः। न चोन्मत्तो बालः सुरापानमत्तो वाज्ञानकृतहत्यापापदण्डभागी भवति क्वचन। नास्त्यत्र सन्देशलेशच्छायापि यन्मनुष्यैर्विना सर्वे प्राणिनः सुकृतदुष्कृतज्ञानरहिता एव। तेषां जन्मैव परप्राणिहिंसायां यावज्जीवं निर्भरः। अतस्ते मेधाभावात्स्वकर्मफलभोगभागिनो न भवितुमर्हन्तीति निर्विवादमेतत्। मनुष्येभ्यो निर्मेधसो बाला उन्मत्ता पृथक् कृताश्चेत्तर्हि पुण्यपापज्ञानवतां मनुष्यानामत्यल्पा संख्या भविष्यति। यदि संसारे तादृशानां मनुष्यानां शतकोटिसंख्यासंख्येयत्वं मानयामः। तदा फलभोक्तॄणां संख्या परार्धपरा कुतश्च ते समागताः। संख्यायां द्विशतकोटिपरिमितत्वं कूर्माणामेव भविष्यति, ये च मनुष्येभ्योऽपि दीर्घजीविनः। कीटाणूनां हस्तिनां (ह्वेल) मत्स्यादिविशालकायानां जन्तूनां संख्यायां कैव कथा। अत ईश्वरस्य नोपादानकारणत्वं जगति निर्विकारत्वात्॥

चेन्निमित्तकारणत्वमस्तीति मन्येत। कुलालो घटस्य, स्वर्णकारः कुण्डलादीनां यथा साधक एवमीश्वरोऽपि जगन्निर्माता। तत्रोच्यते—किं सोपादानकारणमुत निरुपादानकारणं रचयति जगत्। यदि विनैवोपादानकारणेन साधयति, तर्ह्यभावाद्भावस्योत्पत्तिरपि निर्विवादं मन्तव्यमस्ति। तथा च कार्यकारणसिद्धान्त एव गलितः, दृश्यमाने च

जगति तथा च तत्कारणभूतस्येश्वरस्यास्तित्वाशंकैव वा। यदि विना कारणेनेन्द्र जालवन्मायामयं जगद्रचयति, तर्हि प्रत्यक्षस्य जगद्रूपवस्तुनो मायामयत्वे ईश्वरसत्तायामनुमान एव कां सामग्रीमधिष्ठाय तिष्ठति। यदि च कुलालवदुपादानकारणतो तत्र किं कुलालवद्घटभिन्नो भूत्वा वा तत्सव्याप्य। भिन्नत्वे सर्वव्यापकता दुष्येत, सृष्टिकरणेऽन्यसाहाय्यस्य सामग्रीणां सापेक्षिता स्यात्। तथा च विद्युत्कणेभ्यः सूक्ष्मतर नवकणा (Neutrons) न्तं तथा तेषां मिश्रणात् क्रमशः स्थूलतरवस्तूनां प्रतिपादने स्वर्णकारस्य कूट-टंकावत् कस्योपकरणसंभारस्य प्रयोगं कुर्यात्। तथा च सवशक्तिमत्तायां व्याघातः स्यात्। यदि वोपादानकारण एव सर्वशक्तिमत्तां स्वीकुर्मस्तथापि विनोपादानकारणेनोत्पादनेऽक्षमः सन् न सर्वशक्तिमान्। अपवित्रता-क्रूरतादिदुष्कर्मस्रोतःदोषदुष्टत्वमपि एवंरूपावस्थायामीश्वरस्यैव प्रसज्येत। न चैवमीश्वरसोपादानकारणत्वं निमित्तकारणत्वं वा सिद्धम्॥

जगदादिकर्ता कोऽपि भवितव्य एव, इत्यस्मिन् विषये न काप्यावश्यता, विवेचनायां किमस्य कारणं किमस्य कारणमिति परंपरया सूक्ष्मतमवस्तुनि विशेषशक्त्यां वा किं निवृत्तिपारवश्येनेश्वरत्वस्वीकारः। किं न मन्यामहे ईश्वरस्यापि कर्त्ता कोऽप्यस्ति, अत ईश्वरस्यादिकारणत्वं न युक्तियुक्तम्॥

यदि सर्वशक्तिमान् कर्त्ता धर्त्ता च ईश्वरो, मनुष्यस्तु तस्य विधेयः शालभञ्जिकावत् तदापि मनुष्यस्य कर्मफलभोक्तृत्वं कथं संभवत्यस्वातन्त्र्यात्। संसारे दुःखदातृत्वं किमीश्वरस्य दयालुतालक्षण द्योतकम्॥

ईश्वरः सृष्टिकर्ता इत्यप्यमाननीया शैली। यदि सृष्टिरनाद्या, तर्हि नास्ति कस्यापि कर्तुरावश्यकता। यतः कर्तृत्वप्राप्त्यर्थं तस्य कार्यात्प्रथमोपस्थितिः संभाव्या। यदि च साद्या सृष्टिस्तदा चिन्त्यानन्तवर्षेभ्यः सृष्ट्यन्तं तस्य क्रियारहितस्येश्वरस्य सत्तायां किं प्रमाणं? क्रियैव तस्यास्तित्वे परं प्रमाणम्॥

ईश्वराङ्गीकारकरणे यथा च पूर्वं कल्पना कृता, तथात्वे मनुष्यस्तु ईश्वराधीनो नास्ति। स्वयमेव स्वस्य स्वामी, यथेच्छति तथा स्वात्मानं स्थापयति इति नैतन्मन्तव्यकोटिमारोहति। तथा मनुष्यस्य शुद्ध्यर्थं मुक्त्यर्थं च प्रयत्नो व्यर्थः, धर्म्या मार्गा धर्ममपि निष्फलमेव। अनीश्वराङ्गीकारवादे वर्तमानदशायां यथास्ति मनुष्यस्तत्तु स्वकीय पूर्वकृतकर्मणा, यथा वा भविष्यति तदपि वर्तमानकृतकर्मणा। मनुष्यस्य कर्मकरणस्वातन्त्र्ये सति धर्ममार्गाणां धर्मस्यापि सार्थक्यम्। ईश्वरवादिद्वारेणानेकशतसहस्रशतकेभ्यो धर्मस्य कृते अशान्तिरूप रुधिरनद्यो वहन्ति, तथाप्येश्वरः शान्तिं न संस्थापयति किं ?। वस्तुत ईश्वरो मनुष्याणां मानसिकसृष्टयङ्कूर एव केवलम् ॥

## (२) आत्मा न नित्यः ॥

पूर्वमस्मिन्विषये ज्ञातव्यमस्ति, बौद्धाः कथमनात्मतां साधयन्ति इति। तत्र—बुद्धसमये ब्राह्मणाः परिव्राजकास्तथान्यान्यमताचार्या एवममन्यन्त, शरीरान्तर्वर्तमाना शरीराद्भिन्ना चैका नित्या चेतनशक्तिरिति। यस्याः प्रवर्तनात् शरीरे उष्णता ज्ञानपूर्विका चेष्टा च दृश्यते। सैव यदा कर्मानुसारेण शरीराच्छरीरान्तरं गच्छति, तदैव पूर्वशरीरे शीतलत्वं चेष्टाराहित्यञ्चापतते। इमामेव नित्यचेतनाशक्तिं जीव इति ते मनुते स्म। सामीय (Semitic) धर्मपराणां तु विहाय पुनर्जन्मेदमेव मतम्। अस्मात्परं बौद्धकालेऽन्येऽप्याचार्या आसन्, त इत्थं समामनन्ति, शरीराद्भिन्नो नास्त्यात्मा किमपि वस्तु। शरीरे हि भिन्नभिन्नपरिमाणवतां रसाणां संमेलनेनोष्णता चेष्टा च समुत्पद्यत इति। रसपरिमाणस्य न्यूनाधिक्येन विनश्यते च। इत्थं शरीराद्भिन्नो न किमपि वस्त्वात्मा। बुद्धेन चः—एकस्यात्मनो नित्य-कूटस्थाङ्गीकारः, शरीरविनाशे आत्मा च नश्यतीत्युभयचरमवचनानि हित्वा मध्या सरणिरित्थं प्रदर्शिताः—नास्त्यात्मा नित्यः कूटस्थो वस्तुविशेषः। विशेषकारणवशात् भूत-मन (स्कन्धानां) आदीनां संयोगादुत्पद्यते शक्तिरेका, या चान्यबाह्यभूतवत् प्रतिक्षणं उत्पद्यते विलीयते च,

यावच्च चित्तं प्रतिक्षणमुत्पत्तिलयदशायां वर्तमानः स्वप्रवाहं शरीरे निरनुबन्धं धारयति, तावदेव सजीवत्वं देहस्य, अस्मदध्यात्मपरिवर्तने शरीरपरिवर्तने च समानतैवास्ति ॥

यथा चः—शरीरमिदमस्माकं प्रतिक्षणं विकृतिं प्राप्नोति चत्वारिंशद्वर्षदेशीयमिदं शरीरं नास्ति तादृशं यथा दशवर्षावस्थायामासीत्, न च सप्ततिवर्षसमाप्तौ वा तादृग्यादृग्वा भविष्यति । सन्ततं नवोत्पत्त्यर्थं स्थानं त्यजति । सत्यां च तादृगवस्थायां विगतशरीरनिर्वापकपरमाणूनामुत्तराधिकारी सामान्यतया सादृश्यं भजते । अत एव यद्यप्यस्माकं पंचवार्षिकशरीरो न दशमे वर्षे नापि दशवार्षिकः षष्टितमे सप्ततितमे वा वर्षे, तथापि सदृशपरिवर्तनकारणतः स्थूलदृष्ट्या शरीरमेकमेवेति संभावयामः । एवमात्मापि प्रतिक्षणं परिवर्तनं भजन्नपि सदृशपरिवर्तनत एक एव कथ्यते । भवन्तः स्वजीवनदशामेव विचारयन्तु, दशवर्षपूर्वं यद्यद्वस्तु रुचिकरमासीत्तदिदानीं न रोचते, ये विचारा यौवन आसन् किं त इदानीमपि समुल्लसन्ति । पृच्छायां तु भवन्तः स्फुटं कथयिष्यन्ति, न मदीयोऽयं विचारो न च कदाप्यासीदिति, सत्यमेव भवद्वचनं, यतो गतविंशतिवर्षानुभवेनैव त्वमतत्कृत इति ॥

चेदेवं कथयिष्यति, मनस्तु विकारं प्राप्नोति, नात्मा । तत्र चेदुच्यते—मनसस्तु न पर आत्मा किमपि वस्तु । चित्तं विज्ञानमात्मेति पर्यायः । यथा च चक्षुःश्रोत्रघ्राणजिह्वात्वक्पञ्चेन्द्रियाणि प्रत्यक्षतयानुभवामो, न तथा मनोऽनुभवः । मनसः सत्ताङ्गीकार्या स्यादित्थम्—नेत्र आमलकीं पश्यतः, जिह्वया जलस्रावो भवति । नासिका दुर्गन्धं जिघ्रति, हस्तश्च सुतरां नासिकानैकट्यं भजति । अतश्चैतयोरिन्द्रिययोर्मेलापकस्तृतीयोऽपि भवितुमर्हति, तदेव मनः । यश्चैवेन्द्रियाणि स्वस्वज्ञानं यत्र प्रापयन्ति, यस्माच्च शरीरस्थ भिन्नभिन्नगत्यनुशासनं मिलति, तदेव मनो ग्रहण-चिन्तन-निर्णयादि करोति । कथं चामूर्तत्वादुक्तकार्यं करोतीत्युच्यते—नैव सेनानायक (कमाण्डर) वद्विभिन्नो भूत्वा सेनानिर्णयं करोतीति । यथा पञ्चसु काचनालेषु (Tube) रक्त-

श्वेत-नील-पीत-कृष्ण वर्णानां चूर्णं (Lime) स्थापितं स्यादधस्ताच्चैकया काचनालिकया जलं प्रस्रवन्त्या युक्तं स्यात्, पञ्चैव काचनाला मुखेन परस्परं संगताः क्रमशः स्वं स्वं मुखं विस्रिण्वन्ति। यदा च यो रागो जले पतति, तदा तद्वर्णमेव जलं भवति। एवं यदास्माकमक्षिणी कृष्णसर्पं प्रति गते, तदा कृष्णसर्पस्य दर्शनं भवति। तद्दर्शनजनितज्ञानं शीघ्रं मनसि गच्छति। मनस्तु स्वकारणभूतपूर्वपूर्वानां मनसा मानुभविकबीजं गृह्णन् नवीनज्ञानरूपिचूर्ण (Lime) पतनात्तदाकारतां प्राप्तो दर्शनजनितभयरूपवर्णेन रक्तो भवति। यदि क्षणमेकमेव सर्पदृष्टिः स्यात्तथापि विगतनेमिवद्धक्षणान्तं मनः पुनः पुनर्भूत्वा भयेन भीतो भवति क्षणिकत्वाच्च। किं पुनर्दर्शनार्थमागतश्चेद्दृश्येत। या दशा भयप्रदवस्तुदर्शने सैव प्रीतिप्रदवस्तुदर्शनेऽपि समनुसन्धेयेति॥

(क्रमशः)

---

## बहुसन्ततिसम्भवमीमांसा

निबन्धा—श्री दीनानाथ शर्म्मा शास्त्री सारस्वतः। (स० ध० कालेजोपाध्यायः)

मुलतान सिटी।

पौराणिकेतिहासेषु एवं तु स्थाने स्थाने संशेरते संशयानाः; परं यदा तदीय वर्णनं तैः स्वबुद्धिगम्यं नाऽवगम्यते; तदा ते तत्राऽकृत्वैवविशिष्टविचारम्, अनुपास्यैव वा वृद्धजनान्, अननुसन्धायैव विज्ञानम्, असम्पाद्य च स्वबहुश्रुततां, बौद्धाः सन्तस्तद्-वर्णनस्य मूल्यं मृषोद्यादनतिशायि मम्मन्यन्ते। तादृक्ष्वेव सन्दिग्धविषयेषु बहुसन्ततीनां विचारोऽप्यन्तः पतति। सन्देहिनो देहिनोऽत्र तद्वर्णयितुनैरङ्कुशयमात्रमेव मन्वते; न वास्तविकताम्। वयमप्यत्र स्वविचारं चिरपरिचितानां 'श्री' पाठकमहानुभावानां समक्षं समुपस्थापयामः। तथाहि—

वार्त्तमानिकाऽशक्तिमयेऽपि समये २०० पर्यन्तं पुत्रपौत्रसङ्ख्या श्रूयते। प्राचीनसमये यत्र खल्वमोघवीर्यताऽत्यन्तशक्तिश्चासीत्; तत्र

तु खलु किमु वक्तव्यम्। अवधेयम्—अद्यत्वे पुरुषाणां वीर्य्यं प्राक्तनी अमोघता नास्ति—अतएव बहुकृत्वो* गमनेनाऽपि तत्पत्नी नाऽन्तर्वत्नी जायते, कदाचिदेव सा गर्भं धत्ते। तत्कारणमेतद् यत्—कायिक-वाचिक मानसिकसंयमाऽभावात् 'श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः। न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः' मनु० २।९८ 'इन्द्रियाणां हि चरतां यद्येकं क्षरतीन्द्रियम्। तेनाऽस्य-क्षरति प्रज्ञा दृतेः पादादिवोदकम्' २।९९ इत्येतद्विरुद्धतादर्शनाद् अपथ्य-दूषितभोजनसेवनाच्च तच्छुक्रस्थाः कीटाणवः सबला न भवन्ति।

केचित्तत्र कारणं कौमार्य्यविवाहादिकं कल्पयन्ति; तद्भावे च तारुण्यविवाहं निदानं मन्वते। परं नैतद् युक्तम्। यावत् संयमो नास्ति, तावच्चिराद् विवाहो विवाहाऽभावोऽपि वा न शुक्रत्राता। अद्यत्वे विनाऽपि विवाहं शुक्रस्य मानसिककामाग्नौ स्वाहाकर्त्तारो विविधान् कृत्रिमोपायान् प्राणेषुरेव, यैः स्वकीयं सर्व्वनाशं विदधति, बहिश्च ब्रह्मचारिपदवाच्या भवन्ति। बाह्यस्थौल्येन तेषां ब्रह्मचर्यस्याऽक्षुण्णता नाऽनुमेया। अस्मदीयाः पूर्णब्रह्मचारिणो व्यासादयो† वपुष्टः पुष्टा नासन्। तेन तादृशाऽविवाहस्य चिरविवाहस्य वाऽपेक्षया विवाह एव श्रेयान्। संयमे सति तु बाल्यविवाहोऽपि न हानिप्रदः। अयं भिन्न-विषयः, अतोनाऽत्र प्रपञ्चयितुं शक्यः। अस्तु।

एकवारं प्रस्खलिते शुक्रेऽनन्ताः कीटाणवो भवन्ति; ते च गर्भाशयप्राप्तौ सत्यां दौर्बल्यात् प्रायो म्रियन्ते एव तेषु कश्चिदेक एव कीटो-यः सबलो भवति—गर्भाशयडिम्बे (अण्डे) स्थिरो भवति। तस्य च वृद्धिः प्रारभ्यते। एवं कस्यचन द्वयोस्त्रयाणां वा कीटानां प्रबलत्वात् तेषाञ्च तावत्सङ्ख्याकस्त्रीस्थडिम्बसंयोगाच्च द्वौ त्रयो वा पुत्रा जायन्ते। यथा—ज़िला २४ परगना पो० सुनारपुर महीनगरग्रामे प्रभासचन्द्रवन्द्योपाध्यायपत्न्यामन्नपूर्णायां शिशु त्रयं यस्मिन् द्वौ



* बहुकृत्वः। बहुशब्दस्य संख्यात्वात् ततः कृत्वसुच् प्रत्ययः † वपुष्टः—शरीरात्।

बालकौ एका कन्या चोत्पन्ना २६।१२।३४ तिथौ। एवं मदीय जन्मभूमावपि। बर्लिननगरे ४।१।३६ 'वेरूथ' समीपे 'कूप्स' ग्रामे एकस्य तक्ष्णः ३८ वर्षीय पत्नी 'जोहान्ना जिमरलीन' नाम्नी युगपच्चतस्रः कन्या उदपीपदत्। सारमेयीणां पञ्चषाः शिशवो युगपज्जायन्ते—इति तु लोकविदितमेव। एवं सर्पिणी शताण्डं ददातीत्यपि विश्रुतम्। धृतराष्ट्रस्य शतं, सगरस्य च षष्टिसहस्रं, रावणस्य च ततोऽपि बहुसङ्ख्याका यत् पुत्राः पुराणेतिहासेषु प्रतिपादितास्तत्र तत्संख्याककीटडिम्बानां प्राबल्यमवसेयम्।

एतदुक्तं भवति। आयुर्वेदस्य मतमिदम्, स्त्रीपुरुषसंयोगकाले शरीरस्य वायुस्तत्र व्याप्य वीर्यं यदा भिन्नभिन्नभागे विभजति, तर्हि यावद्भागविभागं* द्वौ वा त्रयो वा ततोऽधिका वा गर्भा अन्तर्जायन्ते। १९३१ ख्रिस्ताब्दे ब्रिटिशकोलम्बिया-स्थाने युगपच्चत्वारो बाला उदपद्यन्त। सन् १९२३ अब्दे 'न्यूब्रिन्सविक' प्रदेशे यौगपद्येन चत्वारः शिशव उत्पेदिरे। स्काटलेण्डस्थया एककृषककन्यकया षड् बालका यौगपद्येन जनिताः। सा बालिकाऽपि स्वमातुर्यमजकन्याऽऽसीत्। षड्बालकानां जनयित्र्यास्तस्या एकवर्षोत्तरं पञ्च बाला युगपदजायन्त। तस्मात् कियत्कालादनन्तरं तस्यास्त्रयो बाला यौगपद्येनोत्पद्यमाना अभवन्। पुनश्चत्वार एककालेऽजनिषत। अयं क्रम इत्थं प्रावर्त्तत अधुना तदीया बालकाः ६२ सङ्ख्याका जाताः। 'स्काटलेण्ड' स्थया एकतन्तुवायपत्न्या एवं षष्टिर्बाला जनिताः, येषु ४६ बालाश्चत्वारो बालिकाश्च जीविताः, इतरेऽम्रियन्त।

एतद्विषये डाक्टर बर्नरमकफैडन नामकस्य नीलनीरधरधीरगर्ज्जना श्रोतव्या। स आचष्टे यद्—यौवनसमये स्त्रिया डिम्बकोशेषु न्यूनान्न्यूनं षष्टिसहस्रम् ६०,००० अधिकाधिकं सप्ततिसहस्रं ७०,००० वा डिम्बा भवन्ति। एष्वन्यतमडिम्बः २८ दिनैः पक्वतामेति। डिम्ब प्रणालिकया च गर्भाशयमेति। यदि तत्समये पुरुषशुक्रकीटाणु-



* यावद्भागविभागम्। अत्र अव्ययीभावः।

डिम्बेन संयुज्येत; तदा स सहसा डिम्बस्य 'जैलीटीने' प्रविशति। तेन सह मिलित्वा च 'म्यूलं' निर्म्माय गर्भं करोति। कदाचिद् द्वौ त्रय एतदधिकाश्च डिम्बाः पक्वीभूय गर्भाशयमायान्ति—पुरुषस्य स्त्रीसहवाससमये शुक्रतः प्रायश्चतुष्कोटिकीटाणवः स्खलन्ति। ईदृगवस्थायां यावन्तः किल एकस्यादधिका डिम्बा गर्भाशयमागताः स्युः; तावन्त एव प्रबलशुक्रकीटा अपि तैः संयुज्येरन्; तदा गर्भस्थितौ सत्यां यावती डिम्बासंख्या भविष्यति; तावन्त एव गर्भास्तथा बालकाश्च भवन्ति। प्रकृत्या स्त्रियां ६०,००० अथवा ७०,००० डिम्बाः पुरुषशुक्रे कोट्यधिकाः कृमयः स्थापिताः। एकगर्भस्थित्यर्थमेकस्य डिम्बस्य, एकस्यैव च शुक्रकीटाणोरावश्यकता भवति। यदा किल बहवो डिम्बाः स्त्रियां स्थिताः; तेन प्रतीयते—स्त्रिय एककाले एकबालकमेव नैव, किन्तु बहून् बालानप्युत्पादयितुमलम्। एतदर्थमेव पूर्वकाले स्त्रियो यौगपद्येन अनेकान् सन्तानान् उत्पादयाञ्चक्रुः। यस्याः स्त्रिया अण्डपाचिका शक्तिर्यावदधिका भवति; तावदधिका डिम्बाः परिपाकं प्रपन्नाः सन्तो गर्भाशयमापद्यन्ते, तावन्त एव च सन्ताना भवन्ति। इयं परिपाकशक्तिर्यस्यां यावन्न्यूना भवेत्; तत्सन्ततिरपि तावन्न्यूना भवति। यस्याश्च सा शक्तिः सर्व्वथा न्यूना भवति; तस्यां गर्भस्थितिर्भवत्येव न। यदि तत्र पित्ताऽधिक्यं भवेत्; तदा तत्र एककाल एवैकाऽधिकडिम्बाः परिपच्यन्ते। यासु पित्ताग्निरत्यन्तन्यूनो भवति; ता वन्ध्या भवन्ति। वार्त्तमानिकविलासितादशायामियं शक्तिर्दिनन्दिनं ह्रसति। इमामाङ्ग्लस्यैकस्य मीमांसां श्रुत्वा वितण्डावादिनां वादिनां तद्विप्रतिपन्नतारम्भे चिकीर्षिते कण्ठे कासविकास एव भवेत्।

एतत् प्रागुक्तम्—सकृत् पतिते शुक्रे चतुष्कोटिपरिमिताः कृमयो भवन्ति। तत्र प्रबला एव शिष्यन्ते, इतरे च म्रियन्ते। एवं धृतराष्ट्रस्य शुक्रे शतं कृमयः सबलाः स्थिताः स्युः; तत्स्त्रियाश्च पित्ताधिक्यवशाच्छतं डिम्बाः पक्वा गर्भाशयं प्राप्ताः स्युः। एवं सगरस्य षष्टिसहस्रं

कीटास्तत्स्त्रियाश्च तावन्तः पक्वडिम्बाः स्युरिति पूर्वकालिकसंयमे सम्भवि प्रतीयते। तेषाञ्च परस्परसंयोगेन तावन्त एव गर्भा जाताः स्युः*। पञ्चषबालकानान्तु पृथक् पृथग् धारणशक्तिरद्यत्वेऽपि गर्भाशयस्य दृष्टा। प्राक्तनकाले आकारप्रकारादिसर्व्वविधोन्नतिवशात् किञ्चिदधिकाऽपि भवेन्नाऽत्र चित्रम्। अत एवाऽथर्ववेदे—'पर्शुर्ह नाम मानवी साकं ससूव विंशतम्' २०।१२६।२३ अस्य प० राजाराम शास्त्रिणा कृतोऽर्थः—'पर्शु नाम मनु की कन्या ने बीस पुत्रों को इकट्ठा जन्म दिया।'

परं शतबालकानां षष्टिसहस्रबालकानां वा पृथक् पृथक् स्थितिर्गर्भाशये न सम्भविनी। परं सबलकीटपरिपक्वडिम्बैरपि स्वकीयकार्य्यं कार्य्यमेव। अत एव तत्रैकमेव बृहन्मांसपिण्डं मधुचक्रवद् बीज समूहवद् वा क्रमशः प्रवर्द्धते। तत्फलस्वरूपेणैवाऽद्यत्वे क्वचित् परस्परं युगपत्संश्लिष्टानां बालकानामुत्पत्ति र्दृश्यते। प्रसवसमये च समासन्ने लघुरपि 'भग' भागो 'रबड़' वदत्यन्तविस्तीर्णो भवतीति सर्व्वेषामेव विदितम्। तत एव तु पर्य्याप्ताकारोऽपि बालको ह्रस्वादपि तत्प्रदेशाज्जायते-इति लोकसिद्धम्। एवं शतादिपुत्राणां स मांसपिण्डस्सुविधायां सत्यां योनिप्रदेशाद् बहिरेति। यदि तत्र सुविधा न भवति; तत्र गर्भिण्या नाभितोऽधस्तनं कौशलेन यन्त्रद्वारा विदार्य्य (ऑपरेशन करके) स पिण्डो बहिर्निष्कासनीयो भवति, स्त्रीं मोहकौषधेन (क्लोराफार्म) मूर्च्छयित्वेत्यद्यऽप्यद्यत्वे लोकविदितम्। एवं प्राक्तनेऽपि विज्ञानबहुलकाले आसीदितिनाऽसम्भवि।

अथ चैतदपि विदितं जनानां यद्—येषां द्वौ त्रयश्चत्वारो वा बालका एककालेऽल्पकालान्तराले वा उत्पद्यन्ते; ते नियतपरिमाणकशिशोरपेक्षया किञ्चिद्-ह्रसीयोवपुष्का एव भवन्ति। एवं धृतराष्ट्रसगरादिस्त्रीणामपि भूयिष्ठसङ्ख्याकपुत्राणां गर्भपिण्डः सर्व्वेषां ह्रस्व-

---

* एतद्विषये यदि वैद्यशास्त्रीयमथवा कोकशास्त्रीयं प्रमाणमुद्धृतमभविष्यत् तर्हि सम्यगभविष्यत् इति। —सम्पादकः।

शरीरत्वाद् गर्भाशये स्थानसङ्कोचाच्च परिमिताकारो बीजरूप आसीत्। यथा बीजे कतिविधाः स्कन्धा बहूनि पत्राणि वह्व्यश्च शाखाः सङ्क्षिप्ता भवन्ति अव्यक्ता वा; तथा तत्पिण्डेऽपि अङ्गानि अव्यक्तानि अनुद्भिन्नानि वा ज्ञेयानि।

यदा च तत्पिण्डस्य बहिरुद्भवो जातः, तत्र सर्व्वेषामेव शिशूनां युगपत् संश्लिष्टत्वाद् भिन्नता नाऽऽसीत्। न च स्थानसङ्कोचाद् अभ्यन्तरे तस्य पिण्डस्य पृथक् पृथक् पोषणमेव जातम्। तत्काले योग्यवैद्यानां योगिनां वाऽऽवश्यकता भवति। तत्फलस्वरूपे तदा धृतराष्ट्रस्य श्रीवेदव्यासेन सगरस्य च और्वेण मुनिना तस्य पिण्डस्य यथायोग्यं रासायनिकप्रक्रियाद्वारा विभागं कृत्वा ते ते भागास्तत्तदुपयुक्तविविधौषधियुक्त-सर्पिः-पात्रेषु* स्थापिताः। येन तेषां तत्रैव गर्भाशये इव वृद्धिर्भवितुमारभ्यत। यथा बीजं पृथिवीजलतेजोवाय्वाकाशाद्याश्रयेण बृहद्वृक्षतामेति; तथाऽत्राऽपि ज्ञेयम्।

प्राक्तना ऋषिप्रभृतयो वर्त्तमानजनाऽपेक्षया सर्वविधकलासु अधिकनिष्णाता आसामासुरिति सर्व्ववादिसम्मतमेव। तथा च वेदे—या—मृषयो भूतकृतो मेधां मेधाविनो विदुः। तया मामद्य मेधयाऽग्ने! मेधाविनं कृणु' अथर्व० ६।१०८।४ 'यां मेधामृभवो विदुर्यामसुरा विदुः। ऋषयो भद्रां मेधां यां विदुस्तां मय्यावेशयामसि' अथर्व० ६।१०८।३ 'इन्द्रवरुणा यद् ऋषिभ्यो मनीषां वाचो मतिं श्रुतमदत्तमग्रे। यानि स्थानान्यसृजन्तधीरा यज्ञ तन्वानास्तपसाऽभ्यपश्यम्' ऋ० ८।५६।६ 'तज्जयात् प्रज्ञालोकः' योगदर्शने विभूतिपादे ५ म सूत्रे। 'तथाऽस्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्ममनस्सु च अन्यनिमित्ताऽसम्भवाद् येभ्यो निमित्तेभ्यः प्रत्याधारं विलक्षणोऽयं, विलक्षणोऽयमिति प्रत्ययव्यावृत्तिः, देशकालविप्रकर्षे च परमाणौ स एवाऽयमिति प्रत्यभिज्ञानं च भवति तेऽन्त्या

* युक्तसर्पिः पात्रेषु। अत्र उत्तरपदस्थत्वाद् 'नित्यं समासे' इति षत्वं न।

विशेषाः' इति प्रशस्तपादभाष्ये विशेषनिरूपणे योगिनोऽस्मद्विशिष्टा मताः 'योगोऽप्यणिमाद्यैश्वर्यप्राप्तिफलः स्मर्यमाणो न शक्यते साहसमात्रेण प्रत्याख्यातुम्। श्रुतिश्च योगमाहात्म्यं प्रख्यापयति—'न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम्' श्वेता २।१२ ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं नाऽस्मदीयेन सामर्थ्येन उपमातुं युक्तम्। तस्मात् समूलमितिहास पुराणम्।' वेदान्तदर्शने शाङ्करभाष्ये १।३।३६।

एवं यदि प्राक्तनानां केषाञ्चिद् (अपवादस्थलमवलम्ब्य) भूयिष्ठाः पुत्रा जाताः स्युरिति नाऽसम्भवि। केवलमत्र दूरदर्शिताया बहुश्रुततायाः, शारीरिकविज्ञानस्य, पक्षपातोपनयनाऽपयनस्य, 'येन केन प्रकारेण कुर्य्यात् सर्वस्य खण्डनम्' इति व्यसनत्यागस्य, सर्वातिशायिपरमात्ममहिम* मननस्य चाऽऽवश्यकता। अतएव वेदे—'तोकञ्च तस्य तनयञ्च वर्द्धते यं यं युजं कृणुते ब्रह्मणस्पति' ऋ० २।२५।२ परमात्मा यं यं युजं करोति, तस्य सन्ततिर्वर्द्धते इत्यर्थः। 'अरिष्टः स मर्त्तो विश्व एधते प्र प्रजाभिर्जायते धर्म्मणस्परि। यमादित्यासो! नयथा सुनीतिभिरति विश्वानि दुरिता स्वस्तये' ऋ० १०।६३।१३ हे देवाः! यं मनुष्यं सुनयनैर्दुरितान्यतोत्य सन्मार्गं नयथ स पुरुषः प्रजाभिः प्रकर्षेण वर्द्धते इत्यर्थः। 'आ पुत्रा अग्ने! मिथुनासो अत्र सप्तशतानि विंशतिश्च तस्थुः' अ० ६।६।१३ अत्र ७२० पुत्राणां सङ्केतः। इह दिनस्य रात्र्याश्च यद्यपि ३६० संख्यां मेलयित्वा ७२० पुत्रा वक्तुं शक्याः; तथाप्यत्र वादिनस्तुमुखोद् घाटनं कर्त्तुमनलम्। तेषां नेत्रा 'द्वादश प्रधयः चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत। तस्मिन्त्साकं त्रि-शता न शङ्कवोऽर्पिता षष्टिर्न चलाचलासः' ऋ० १।१६४।४८ अत्र संवत्सरात्मककालस्य देवतात्वेऽपि तेनाऽत्र वायुयानस्यार्थः कृतः। तद्दिशाऽत्राऽपि ज्ञेयम्। वस्तुतस्तु यदि

* महिममननस्य। महिमन्शब्दः। अत्र समासः। 'महिमा' शब्दस्तु न भवति।

७२० पुत्राणामसम्भवो वेदमतेऽभविष्यत्; तर्हि तेषां पुत्ररूपेणोक्ता संख्या तेन नाऽकथयिष्यत्। सम्भवित्वात्तु तेन पुत्रस्य रूपकयत्र बद्धम्। अथ च प्रत्येकमन्त्रस्याध्यात्मिकाधिभौतिकाधिदैविकास्त्रिविधा अपि भावा भवन्ति; तेन नाऽत्राऽसम्भवाः। अत एव 'आसन् वर्षसहस्राणि तथा पुत्रसहस्रिणः। निरामया विशोकाश्च रामे राज्यं प्रशासति' इति वाल्मीकिरामायणे युद्धकाण्डस्याऽन्तिमे सर्गे १०१ श्लोके रामराज्ये सहस्रपुत्रवतां सत्ता दर्शिता।

इतो रावणस्य बह्व्यः स्त्रिय आसन्। तास्वेकस्याऽपि धृतराष्ट्रादिवच्छतं शतं पुत्राणां जातं स्यात्, तत् किमाश्चर्य्यम्। अद्यत्वेऽशक्तिभूयिष्ठेऽपि समये पुरुषाणां बह्व्यः स्त्रियः। अद्यत्वेऽशक्तिकारणादेव बहुवारं स्त्री गमनेऽपि तस्या गर्भो न जायते। परं स्त्रीगत्वरास्त्वद्यत्वेऽपि अहरहश्चतुर्वारं स्त्रीगमनं कुर्वन्ति। तर्हि प्राक्तने शक्तिभूयिष्ठेऽमोघवीर्ये कामशास्त्रोययुक्ताऽऽसन्—वाजीकरणाद्यौषध-यौगिकप्रक्रियाद्यस्मिन् युगे यदा ऋतुकालगमनमात्रमासीत्, वीर्यस्य चाऽवैयर्थ्ये पर्य्याप्तं प्रणिधानमासीद्, राज्ञाश्च वर्त्तमानकालादपि भूयस्यः स्त्रियो भवन्तिस्म; यासु अण्डपाचनशक्तिरत्यर्थमासीत्; तदा केषाञ्चिद् यदुवंशीयादीनां राज्ञां पुत्रपौत्रप्रपौत्रादिसन्ततिततिरत्यन्तवृद्धिं प्राप्ता भवेत्, किमाश्चर्यं नाम? किमत्र नाश्चर्यं यद्—अद्यत्वे संसारस्य जनसंख्या कियती वर्त्तते? सा च मनुस्मृत्यनुसारं १।३२ शतपथब्राह्मणानुसारं १४।४।२।४।५ च एकस्य युगलस्यैव सन्ततिः। कालस्य विचित्रस्थितयो भवन्ति—इति विविच्य तादृशीषु प्राक्कालिकवार्त्तासु सहसैवाऽविश्वासो मा कारि* नाम। किञ्चित्तत्र विचारदृक् पूर्वकं मस्तिष्क प्रवर्त्तनमपि कार्य्यम्। अथ चाऽत्र सामान्येन सर्वत्र सन्तानाधिक्यं न प्रदर्शितम्, प्रत्युवाऽपवादरूपेण। सामान्यशास्त्रस्याऽपवादाः प्राप्तुं सुशका भवन्ति। तेन वादिभिः प्रच्छन्नबौद्धतामात्रं हित्वा 'तस्मात्तिष्ठेत्तु मतिमान् आगमे नहि हेतुषु, सुश्रुतसंहि-



* मा कारि। न कर्तव्य इत्यर्थः। माङि कर्म्मणि लुङ्।

तायां सूत्रस्थाने ४०।२१ 'शब्दप्रमाणका वयं यच्छब्द आह तदस्माकं प्रमाणम्' इति महाभाष्यपस्पशाह्निकानुसारं चाऽऽगमस्याऽपि आदरो विधेयः; अन्यथा तदीया अन्या अदृष्टवार्ता अप्यप्रामाण्यकोटिमारोकेरन्; परमनिष्टमेतत्। एतावदुक्त्वा कृतपूर्वविवेचने च पुनः पाठकानां प्रणिधानमाकृष्याऽत्रविरम्यते। ॥ शम् ॥

---

## ऋषिप्रवीरादिसिद्धानां जीवनचरित्रम्

(पूर्वतोऽनुवर्तते)

(ले०—विद्यावारिधिः शिवनाथ शर्मा शास्त्री साहित्यभूषणः साहित्य मणिः संस्कृत विनोदः उपमन्त्री संस्कृत साहित्य परिषदः—काश्मीरस्य)

देवा यत्र कृतास्पदा रुचिधरा विश्वेनिलाः कोमलाः
साध्या हस्तगताः समं वसुगणैर्विद्याधरा मानवाः।
माहाराजिक वंशजाश्च तुषिताः साभासुराः सज्जनाः
सेयं शक्रपुरीमतीत्य न कथं कश्मीरभू राजते ॥

१९९३ आश्विनात्संबद्धोऽयं लेखः ॥

### पुरावृत्तम् :—

सप्तादश-शताब्द्या मध्यकाले जहांगीर शासनसमये काश्मीर-श्रीनगरान्तर्गत (बुद्धिमठ) वृद्धीमर मुहल्लेति निर्दिष्टे स्थाने मालदेव वात्स्यगार्ग्यगोत्रः रखशीजात्यङ्कितो गोविन्दरामा ब्राह्मणो बभूव। यस्त्वतिदारिद्र्याद्विवाहकरणाशक्त अष्टषष्टि (६८) वर्षान्तमकृतपाणिग्रह एव कालं निनाय। ततो दैवात् स्वयय्यपुर (सोपोर) ग्रामस्थ (यस्तु श्रीनगराद् द्वात्रिंशन्मैलदूरे प्रतीचीतोऽद्यापि वरीवर्ति) राजकीयद्वारेण (कारदार) कृषीवलाधिकृतो बभूव। तस्मै च दूरीकृत विपज्जालाय सोपोर प्रदेशादुत्तरे द्वादशक्रोशदूरे उत्तरमछीपुरजनपदान्तर्गत-घोषग्रामे केनापि फतेहचन्दनाम्ना ब्राह्मणेन सर्वगुण संपन्नोऽयं ब्राह्मण इति ज्ञात्वा वैवाहिकेन विधिना स्वकीया कन्या प्रदत्ता।

शोभने दिवसे वररूपेण आगतस्य जन्यैरावृतस्य गोविन्दरामस्य योषानिवासिनो जना वरदर्शनेप्सवः समाययुः। अष्टषष्टिवर्षवयस्कं पलितव्याप्तशरीरं अभूतपूर्वं वरं दृष्ट्वा कन्यापितरं ब्राह्मणा निन्दन्तः किं कथं वेति परस्परं विचारयामासुः।

काश्मीरेष्वियं रीतिरस्ति, कन्यका गृहाङ्गने कन्यासम्बन्धिन्यः स्त्रियः समेत्य विचित्रैर्वर्णैर्मण्डलमेकं संपादयन्ति, यस्त्वत्र (व्यूग इति) देशभाषया प्रथितोऽस्ति। अत्र प्रथममेव वर आगत्य पूर्वाभिमुखो जन्यावृतस्तिष्ठति। अनन्तरं तण्डुलपूर्णं सलवणं साक्षोटं सपणद्वयं शरावद्वयं कन्याबान्धवा आदाय वरपुरस्तादधः प्रकोष्ठे मण्डलोपरि स्थापयन्ति, पश्चाद्वधूं विवाहयोग्य वस्त्र प्रावृताचरणचूडापर्यन्तशरीरां मण्डलोपरि कन्यामातुलो वरवामतः स्वांभागिनेयीमवधृत्वा तिष्ठति। ततः श्वश्रूः नववस्त्रपरीधाना पूर्वं वराभिमुखमुपागत्य मूर्ध्नि जिघ्रति, स्वकन्यकाहस्तस्थ मण्डनमालां तद्दत्तां हस्ताभ्यां वरशिरसि सर्व जनसमक्षं बध्नाति च। पश्चाच्छर्कराविकृतं (नाबद) इति मिष्टं वस्तु वरमुखोच्छिष्टं कन्यामुखे कन्यामुखोच्छिष्टं वरमुखे त्रिष्कृत्वा पुनः शिरस्युपाघ्राय वधूवरयोःशिरस्यारात्रिकां कपोत विसर्जनं च करोति। तदनु द्वारपूजान्तरं गृहमध्यमण्डपे आर्षविधिना दैवविधिनादिना च संस्कारो भवति, विवाहविधिस्तु प्राचीनः काश्मीरेष्वेवाद्यापि वर्तते। इति पुरावृत्तविद्भिः सूक्ष्मदर्शिभिर्द्रष्टव्यः इति अलं, प्रकृतमनुसरणीयमस्ति।

इत्यतः कन्यामाता वरसमीपमागतवती तादृशं विवाहफलासमर्थं वरं दृष्ट्वा शोकाकुला सती लज्जयैव रीतिपालनमकरोत्। विवाह संस्कारानन्तरं कतिचिद्दिनान्यतिवाह्य स्वां नवपरिणीतां कन्यकामाधाय घोषीग्रामात् त्रिंशत्क्रोशदूरस्थं शारदादेवी सिद्धक्षेत्रं गत्वानशनव्रतं चकार सकन्यका माता सप्तदिवसान्।

अष्टमरात्रौ काश्मीरजननी श्रीशारदा स्वप्ने समागत्याकथयत्। किमर्थमत्रागत्य कठिनशरीरोपार्जनसमर्थमिममनशनव्रतं कोमल-

शरीरेण स्वात्मघातपापफलं कर्तुमुद्यतासीति। व्रतस्था तु:-देवि अजानत्या मया मद्भर्त्ता कस्मै चिद् वृद्धायेयं दत्ता। अत अहमस्याः सन्ततिहीनाया वैधव्यदुःखं न शक्नोमि द्रष्टुमित्यतः कन्यां देवीचरणे समर्पितां करोमि। तच्छ्रुत्वा स्वप्नगता देवी तामाश्वासयन्ती "त्वं श्वः मदीयामृतकुण्डे कन्यकां स्नापय, तत्रागतं पुष्पं च जिघ्रापय मा कुरु शुचम्, अस्या गर्भात्पुत्र रत्नमेकं भविष्यति, तस्य च ऋषिरिति नाम करणीय" मित्युक्त्वादर्शनं गता देवी। प्रातर्यथोक्तविधिना पुत्रीं सुस्नाप्य दैवादागतमेकं पुष्पं च जिघ्रापयित्वा दिनद्वयं तत्रोषित्वा गृहप्रत्यावर्तनाय मतिं बबन्ध। शारदापीठाद् गृहमागत्य देवीप्रसादाद्-हृष्टा सती स्वां दुहितरं सोपोरप्रदेशे स्वभर्तृसन्निधौ च प्राहिणोत्। पुत्र्यपि पतिदेवमासाद्य यथोचितभक्त्या तं सेवमाना कालं निनाय। कतिचिन्मासानन्तरं गार्हस्थ्यधर्मं आचरन्तौ दम्पती शारदानुग्रहेण कुलवर्धकौ बभूवतुः। वधूर्गभवतो दिनाद्दिनं गर्भं पुपोष, षट्सु मासेषु गतेषु सापन्नसत्त्वा पूर्वोक्तं मातृगृहं जगाम, माता चैतद्दृष्ट्वा न मातिस्म। ततो नवमे मासि प्रचलितदेशरीत्या तां सुसंपाद्य मातृगृहे प्रथमा प्रसूतिर्लज्जावहेति भर्तृनिकटं नीत्वा स्वजामातरं श्रीनगरस्थ गृहगमनाय बाधितवती। सायं च "डूंगा" नामधेयं नावमेकं श्रीनगरगमनाय कृत्वा भोजनावसरानन्तरं संभारादिकं नौकायां निःक्षिप्योपविष्टास्तेसर्वे। अर्धरात्रिवेलायां सोपोरे तत्रस्थप्रतरणाधः सा कन्या पुत्ररत्न प्रसूतवती। तदैव सोपोरस्थेन केनापि सिद्धेनोक्तम्। अहो पृथिव्यां !!! सूर्योदयः सञ्जातः तच्छिष्यैरेतच्छ्रुत्वा बहिरन्धकारमयीं रात्रिं समुपलक्ष्य सिद्धाय विज्ञप्तम्। स्वामिन् न सूर्य उदितः रात्रिरेव वरीवर्तते। नच कस्यापि अग्निरुत्थितो गेहे। श्रुत्वैतत्सिद्धः स्वयमेव कुटीतो निर्गत्य सोपोरप्रतरणाधः स्थितनौकायां प्रविवेश, पुत्ररत्नमातामहीं प्रोवाच। दर्शय पुत्ररत्नम्। सा तु यवनराज्यदुराचारपरित्रस्ता मा कदाचिदेष पुत्ररत्नं नयिष्यतीति खिन्ना पुरस्कृतवती भयेन स्तनन्धयम्। सिद्धस्तु:-मातर्नाहमपहरिष्यामि बालं केवलमस्य पादौ स्पृशा-

मि, तथानुष्ठिते स्वकन्थातः स्वर्णमुद्राद्वयं गृहीत्वा बालस्य हस्तयोः पुरस्काररूपेण निधाय तन्मातरं प्राहः—बहुमानेन वर्धनीयोऽयं बालः, पुत्रदृष्ट्या च न निरीक्षणीयः, ऋषिरिति नामास्य करणीयमित्युक्त्वा यथागतं गतः सिद्धः। ततः सोपोरप्रदेशात् त्रिभिर्दिनैर्वितस्तामार्गेण श्रीनगरं प्राप्तो गोविन्दरामः सकलत्रः। गृहे चागत्योत्सवं कृतवान्। गते च वर्षचतुष्परिमिते समये ऋषिनामकबालकस्य पिता गोविन्दरामः सप्ततिवर्षपरिमितमायुरुपभुज्य स्वर्गतः। पत्नी च तस्य वैधव्यदुःखमनुभवन्ती पुत्रं न शशाक विनयशिक्षादानादि कर्तुं दारिद्र्यात्। सोऽपि बालैः सह दिने क्रीडां कुर्वन्नतीव दुर्वृत्तः कलहप्रियश्च तथा बभूव, यथा सायं तत्प्रदेशस्थाः सर्वे प्रातिवेश्मिकास्तस्या मातृसकाशमुपागत्य, "अनेन तव पुत्रेण मम पुत्रस्य वस्त्राणिच्छेदितानि, मम पुत्रस्य शिरः शिलया भेदितं, मत्पुत्रस्य कन्दुकमपहृतमित्यादिभिः" साक्रोशैर्वाक्यैस्तां भर्त्सयन्तिस्म। केवलमस्य बाल्यात्प्रभृति द्वावेव सुहृदौ "नाकः पेतश्च" इत्येनावास्ताम्। नानयोः साकं कदाचन कलहायतेस्म। क्रमेण चातिदुर्वृत्तं बालमुपलक्ष्य शोकाकुला माता मातामहप्रदेशघोषीग्रामावर्ति (जिनमर) भूतवासनामकगृहे यस्त्वद्यापि तत्र विद्यते नीत्वा स्थापितवती, द्वारं च तस्य पिधत्तवती। गतेषु कियत्सु दिवसेषु नायं भक्षितो भूतैर्न च तस्माद्भूतगृहान्निर्गतश्च। इतः श्रीनगरे बहुभ्यो दिनेभ्यस्तंक्रीडास्थलेऽनपश्यतां बालानां मनसि शङ्का समुत्पन्ना। क्व गतः स बालो यस्त्वस्मान्सदाताडयतिस्मेति। बाल्यमित्रौ नानक-पेतौ मनसा खिन्नौ तन्मातरं पृष्टवन्तौ। मातः कास्तेऽस्मद्भ्राता ऋषिरिति। सा प्राह, नाहं जाने क्व गत स्तत्प्रतीक्षा लग्नैवाहमपि। ततस्तौ दुःखितौ वितस्तातटे सिद्धलक्ष्मीक्षेत्रे (सिद्धयार 4th Bridge) निषण्णौ मनसा चिन्तयामासतुः। क्व गतोऽस्मत्सुहृदृषिरिति रुदन्तौ निद्रामुपगतौ तत्रैव। जागरणकाले श्रीनगरात् त्रिंशतक्रोशदूरं यत्र ऋषिर्निक्षिप्त आसीत्तत्रैव भूतमन्दिरद्वारे स्वात्मानं ददृशतुः। तत्र च अकस्मादिव प्रावर्तिमित्रस्याह्वानं, मित्रौ! युवामागच्छ-

तमिति शुश्रवतुः। ततः परस्परमालिङ्गनादिकं कृत्वा ऋषिराह। बहुदूरान्मदर्थमागतौ श्रान्तौ युवामतः विश्रामं भजतां मुहूर्तमात्रम्। अनन्तरं मन्मातामहगृहे गत्वा भोजनादिकं कुरुताम्। तथानुष्ठिते ताभ्यां तत्र गत्वौदनपात्रं सर्वं भक्षितं परं तृप्तिर्नायाता, ऋषिरेतद्दृष्ट्वा ग्राममेव सर्वं (सदा बुभुक्षितं*) इति शशाप। अनन्तरं तैस्त्रिभिस्तद्दिनं तत्रैवातिवाह्य सायं ऋषे- (अनुवर्तते)

---

# वैदिक विवाहवयो निर्णयः

## (आक्षेपपरिहारः)

(लेखकः—प्र०ला० धर्मदेवः सिद्धान्तालङ्कारो विद्यावाचस्पतिः, संस्कृतधुरीणः, तर्कमनीषी, साहित्यभूषणः वैदिक धर्म प्रचारकः, बंगलौर)

मूलस्थानस्थ सनातनधर्ममहाविद्यालयोपाध्यायानां श्री दीनानाथशास्त्रिणां विवाहवयोविमर्श-विवेक-विवेचनाशीर्षकान् लेखान् स्त्रियोऽनेकाङ्केष्वधीत्य नूनं चकितचकितोऽहमभवम् महिलाजातिविषयेऽतीव कुत्सितांस्तिरस्कार सूचकांश्चतेषां विचारानालोकमालोकम्। स्त्रियः सर्वथाप्यविश्वास्या अस्वतन्त्राश्च दास्यः, न तासु विश्वासः कदापि करणीयः, एकस्य पुरुषस्य पञ्चाशत्पर्यन्तं विवाहा अपि वेदानुमोदिताः। पिता यस्मै कस्मैचिदपि (व्यभिचारिणेऽन्धाय सर्वगुणहीनाय वृद्धाय) कन्यां दद्यात्तस्याः स्वल्पमपि "ननु न च कर्तुं" नाधिकारः—इति भावो भूयो भूयः प्रकाशितस्तैरेषु लेखेषु। यदि वस्तुत आधुनिकस्तयाकथित सनातनधर्म इमानवैदिकान् बुद्धिविरुद्धान् सामाजिक हितविघातकांश्च भावान्प्रतिपादयति तर्हि तद्विषये जुगुप्सा सर्वेषामपि समाजहितैषिणां विवेकशीलानां मनीषिणां मनस्सु स्वाभाविक्येव। क नु खलु 'शुद्धाः पूता योषितो यज्ञिया इमाः' (अथर्व ११।१।१७) इत्यादिका महिलाजातिविषये गौरवसूचका

---

*अद्यापि घोषनामके ग्रामे दृश्यते। यदपूर्वा सस्यराशिः प्रत्यब्दं समुत्पद्यते, परं षण्मासानन्तरं सर्वे कथयन्ति, नास्ति किमपि धान्यादिकं फलं: शुष्कं वर्तते कुर्म इति।

वैदिकाशयाः क्व च सनातनधर्ममहाविद्यालयोपाध्यायमहोदयैः प्रकाशिता नीचभावा ये तत्प्रचारितं मतं विवेचकानां दृष्टौ पातयितुमलम्। वैदिकमन्त्राणां यथार्थाभिप्रायमविज्ञाय स्वकीयाभिप्रायानुमोदन प्रयत्नस्तु तेषामतीव चिंतनीयः। यद्येवंविधभावनाभिपूरितमानसा महानुभावा बाल्यविवाहपद्धतिं समर्थयितुं प्रयतेरंस्तर्हि किं तत्राश्चर्यम् ?

एवं भूमिकारूपेण श्री शास्त्रिणां संकीर्णप्रगतिशीलाभिप्रायविषये निवेद्य तत्प्रस्तुत मुख्याक्षेप विषये समासतः किञ्चिद् विविच्यते। यदि तु मयापि श्री शास्त्रिमहोदयवद् वेदेष्वितिहासानेकविवाह विधवा विवाहादिविषयविमर्श उपक्रम्येत तदुल्लिखित सर्व वाक्यविवेचना च प्रयत्येत तर्हिलेखोऽयं पृष्ठानां शतद्वयीमप्यतिक्रमेत किन्तु तथा करणं न सर्वथाप्युचितं, तस्मात्समासत एव कतिपयमुख्याक्षेपपरिहारं चिकीर्षामि स्थालीपुलाकन्यायेन, अवशिष्टानामप्रकृतानां सर्वथापि सारविरहितानां च विषयानामुत्तरणे न व्यर्थं कालं यापयितुमीहे (कामं श्री शास्त्रिमहाभागाः प्रमुदिता भवेयुस्सर्वेषामपि तैः प्रस्तुतानामसार विषयानांप्रत्यक्षरमुत्तरमनालोक्य स्वकीय विजयं मन्वमानाः)। विवेचकमहाभागास्तु लेख विस्तृतिभिया सम्पादक महोदयादेशपरिपालनायैव च मया संक्षिप्य लिख्यते न तूत्तरणासामर्थ्य वशादिति नूनभवगमिष्यन्तीत्यत्र न मे संशीतिलेशोऽपि।

(१) तत्रायमाद्यो मुख्यः प्रश्नः किमृग्वेदीयान्यथर्ववेदीयानि वा विवाहप्रतिपादिकानि सूक्तानि विवाह विषयकाणीतर वचनानि निष्पक्षपातं विविच्यमानानि बाल्यविवाहपक्षंसमर्थयन्ति यौवन विवाहपक्षं वा। कस्मिन्पक्षेऽभ्युपगते क्लिष्टकल्पना न कर्तव्या भवति मन्त्रान्तर्गता निर्देशाश्च सुसङ्गततयोपपद्यन्ते। तत्रपूर्वलेखेषुमयोदाहृता सोमोवधूयुरभवदश्विनास्तामुभावरा। सूर्यां यत्पत्येशंसंतीं मनसा सविताऽददात् ॥ (ऋ० १०।८५।९) (अथर्व १४।१।९) ॥

गृहान्गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमावदासि

( ऋग्वेद १०।८५।२६ । अथर्व १४।१।२० ) एनापत्या तन्वं संस्पृशास्वाथ जिर्निर्विदथमावदासि । (अथर्व १४।१२१ ऋ० १०।८५।२७ )

"तांपूषन् शिवतमामैरयस्व यस्यांबीजं मनुष्या वपन्ति। या नऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम्। (ऋ० १०।८५। ३७ । आरोहोरुं इत्यादि अथर्व १४।२।३९)

एयमगन् पतिकामा जनिकामोऽहमागमम् (अथर्व २।३०।५)

"अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानाम्। उप मा मुच्चा युवतिर्भूयाः प्रजायस्व प्रजया पुत्रकामे। " (ऋ० १०। १८३।२) इत्यादयो मन्त्रा अतीवस्पष्टतया विवाहार्थिनोः स्त्रीपुंसोर्यौवनं परस्पराभिलाषं मैथुनयोग्यतां सन्तानकामनां चाभिव्यञ्जयन्तीति विषये कस्यापि निष्पक्षपातस्य मनीषिणो मनसि नहि सन्देहलवोऽपि सम्भवति । अतिस्पष्टार्थकत्वादेते मन्त्रा भाष्यमपि न विशिष्टतया पेक्षन्ते, तथापि तथाकथित सनातनधर्मानुयायिभिः प्रामाणिकत्वेनाभ्युपगतस्य श्री सायणाचार्यस्य भाष्यमनेकत्रोद्धृतमासीन्मया विशदीकरणार्थम् । तत्रापि बाल्यविवाहपक्ष समर्थने नैराश्यमावहन्तः श्री दीनानाथ शास्त्रिणः "सनातनधर्मस्याधारस्तम्भं न कोऽपि सायणं मनुते सनातन धर्मा।... ..सायणऋषिर्मुनिर्नासीत्।" (पृ०३९) इत्यादि रूपेण लिखन्ति यदर्थं ते सर्वेषां विशुद्ध वैदिकधर्माभिमानिनामार्य सामाजिकानां धन्यवादततिमर्हन्ति । इतरानपि पौराणिकमहानुभावान् श्री शास्त्रिमहाभागाः सायणभाष्यप्रामाण्यनिराकरणार्थं प्रेरयिष्यन्तीत्याशासे । 'तस्यां ( सूर्यायाम् ) नित्ययौवनदर्शनात् तत्र यदि सूर्याया यौवनं सायणेन दर्शितमपि तथाप्यस्माकं न क्षतिः" (पृ०३९) इति श्री शास्त्रिणा कथितं तन्नसमञ्जसम् । सूर्यस्यानित्य यौवने श्रीसायणाभ्युपगते सति-कुतः 'पर्याप्तयौवनाम्' इति पत्येशंसन्तीमित्यस्य विवरणोऽलेखिष्यत्सः यदि आप्त प्राप्तं यौवनं मयेत्यर्थसूचकम् । "नमो महद्भ्यो नमो अर्भकेभ्यः" इत्यादयो देव विषयका मन्त्रा अपि नहि शास्त्रिमहोदयाभ्युपगतं नित्ययौवनपक्षमनुमोदयन्ति ।

षोडशाब्दे वयः प्राप्ते संज्ञायास्तत्पिता सुखी।
विवाहार्थी सुरान् सर्वान्, आह्वयन्मेरुमूर्धनि॥

भविष्य पुराणे प्रतिसर्गपर्वणि ३ ख० ४ अ० १८।४

इत्यादयः श्री शास्त्रिसदृशपौराणिकाभिमतपुराणस्थश्लोका अपि संज्ञादीनां देवतानां यौवन प्राप्ति षोडशवर्षानन्तरं विवाहं च व्यक्तं प्रदर्शयन्ति। तस्मात् 'न वो अस्त्यर्भको देवासो न कुमारकः। विश्वे सन्तो महान्त इत।' इत्यादयो मन्त्रा दिवु धातोर्विजिगीषार्थमादाय विजिगीषु सैनिकपरत्वेन योजनीयाः।

इत्थं यौवने स्त्रीपुंसोर्विवाह द्योतकेषु परश्शतेषु निर्देशेषु सत्स्वपि ये मन्दबुद्धित्वात् तद्विषये सन्दिहाना वर्तन्ते तदर्थं युवा युवतिः, इत्यादि शब्दप्रयोजकाः गायत्रीत्रिष्टुब्जगत्यनुष्टुबादिछन्दोद्वारा विविध ब्रह्मचर्यत्वाधिद्योतका वेदमन्त्रा उदाह्रियन्ते निदर्शनरूपेण।

"तमस्मेरा युवतयो युवानं, मर्मृज्यमानाः परियन्त्यापः"। (ऋ० २।३५।४) अस्मिन् मन्त्रे युवतयः, युवानमिति शब्द प्रयोगोऽवधेयः। नात्र विवाहावस्थागन्धोऽपीति श्रीशास्त्रिणां कथनमयुक्तम्। "योषा वै आपः।"

इत्यादिप्रमाणबलादप्शब्दो योषिदर्थमुपयुज्यत एव वेदेषु। शान्ततां च कन्यानां द्योतयितुं मयोपमामात्र प्रयुक्ता। अत्र अपां न पाद् देवता, इति श्रीशास्त्रिणः कथयन्ति तस्य च शब्दस्यार्थो भाष्यकृद्भिः 'अग्निः' इति क्रियते अग्निवत् तेजस्विने ब्रह्मचारिणे वराय तस्य शब्दस्य प्रयोग-समीचीन एव। तस्मादयं मन्त्रो यौवने विवाहं व्यक्ततया बोधयति।

आ धेनवो धुनयन्तामशिश्वीः सबर्दुघाः शशया अप्रदुग्धाः। नव्या नव्या युवतयो भवन्तीर्महद् देवानामसुरत्वमेकम्। (ऋ० ३।५५।१६)।

अयं मन्त्रोऽपि 'युवतयः' इति पदप्रयोगपुरस्सरं यौवने विवाहं गर्भधारणं च प्रतिपादयति। अशिश्वीः—बाल्याव स्थारहिताः।

अप्रदुग्धा धेनव इव वर्तमानाः सम्पूर्णपुष्टावयवसम्पन्ना ब्रह्मचारिण्यः (शशयः) कुमारावस्थामुल्लंघयन्त्यः (शबर्दुघाः) गृहव्यवस्थासन्तानपोषणादि सर्वव्यवहार सम्पादन निपुणाः।

इत्यादीनि विवाहार्हयुवति विशेषणान्यतीव महत्त्व पूर्णानि।

वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वद् रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदादित्यास्त्वाः धूपयन्तु जागतेन छन्दसाङ्गिरस्वद् विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वत्। (यजु० ११।६०)।

पञ्चदशस्त्वा स्तोमः पृथिव्यांॅश्रयतु। यजु० १५।११

सप्तदशस्त्वा स्तोमः पृथिव्यांॅश्रयतु। यजु० १५।१२

एकविंशस्त्वा स्तोमः पृथिव्यांॅश्रयतु। य० १५।१३

इत्यादिका मन्त्रा जगती त्रिष्टुभादि छन्दोनिर्देशद्वारा ब्रह्मचर्यावधिं निरूपयन्ति—

| | | अक्षरशः | आयुः |
|---|---|---|---|
| वसवः | गायत्रीछन्दः | २४ | २४ |
| रुद्राः | त्रिष्टुपछन्दः | ४४ | ४४ |
| आदित्यः | जगती ,, | ४८ | ४८ |
| वैश्वानराः | अनुष्टुप् | ३२ | ३२ |

कन्यानां ब्रह्मचर्यं च पञ्चदशस्तोमः सप्तदश स्तोमः एकविंशः स्तोम इत्यादिभिरभिव्यज्यते। स्तोमशब्द एवं त्रिधस्थलेषु वै वीरजननम् इत्यादि ब्राह्मणग्रन्थस्य वचन प्रामाण्याद् ब्रह्मचर्यवाचकः इत्थं च १५, १६, २१ इत्यादि वर्षीय ब्रह्मचर्यावधिरेषु मन्त्रेषु कन्यार्थं सूच्यते कनिष्ठपक्षे पुरुषश्चतुर्विंशतिवर्षं ब्रह्मचर्यं कन्या च पूर्णपञ्चदशवर्षपर्यन्तं ब्रह्मचर्यं चरित्वा वर्षपर्यन्तं पित्र्यादीनामपि साहाय्येनानुमत्या वा योग्यसम्बन्धमन्विष्य ततो गृहस्थाश्रमे प्रविशेतामिति

वैदिकाशयः। वर्तमानस्मृत्यादिषूपलभ्यमानानि यानि वचनान्युपर्युल्लिखितवैदिकाशयविरुद्धानि तानि सर्वाण्यपि 'या वेद बाह्य-स्मृतयो याश्च काश्च कु दृष्टयः। सर्वास्ता निष्फलाः प्रेत्य, तमोनिष्ठा हि ता स्मृताः। उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित्। तान्यर्वाक्कालिकतया, निष्फलान्यनृतानि च। (मनु० १२।९५।९६)

इत्याद्युक्त्यनुसारं सर्वथाप्यप्रामाणिकानीत्यस्माभिः सघण्टाघोषं जोघुष्यते। युवा, युवतिः, इत्यादिपदानामर्थ निर्देशेऽनावश्यके सत्यपि "बालेति गीयते नारी, यावद्वर्षाणि षोडश। (भावप्रकाशे)

षोडशवार्षिकं यावद्, बाल्यं तावत्प्रवर्तते। (हारीतसंहितायां शारीरस्थाने) 'वयस्तु त्रिविधं' बाल्यं मध्यं वृद्धमिति। तत्रोनषोडशवर्षा बालाः। सुश्रुत संहितायां सूत्र स्थाने अ० ३५।४८।

इत्यादिभिः श्री दीननाथशास्त्रिणां बाल्यार्थं साधन प्रयत्नस्यानौचित्यं स्पष्टतयोपपद्यते। दशैकादशवर्षदेशीयापि प्राप्तरजस्का युवतिरेव भवतीति तेषां कथनस्यासामञ्जस्यमप्येवं व्यक्तं विज्ञायते। हन्तैवं स्पष्टशब्दानामनर्थंकरणेऽपि न सङ्कोचमावहन्ति सनातनधर्ममहाविद्यालयोपाध्याया इति चित्रम्। वैदिक मन्त्राणामभिप्रायसमर्थकानि ब्राह्मणग्रन्थानां वचनान्यपि (यानि श्री दीनानाथशास्त्रिप्रभृतिभिः पौराणिकैर्वेदत्वेनैव मन्यन्ते) प्राप्तरजस्कानां सम्भोगार्हाणां युवतीनामेव विवाहं स्फुटं द्योतयन्तीति स्पष्टमनेकैः प्रमाणैरुपपादयितुं शक्यम्। अस्माभिस्तु ब्राह्मणानि वेदभाष्यत्वेनमन्यन्त इति तदाशयसमर्थनाय कतिपयवाक्यानि निदर्शन रूपेणोदाह्रियन्ते यथा तस्माद् रूपिणी युवतिः प्रिया भावुका। शत० १३।१।९।६

तस्मात् स्त्री युवतिः प्रिया भावुका। तै० ३।८।१३।२।

एवमेव हि योषां प्रशंसन्ति पृथुश्रोणिर्विमृष्टान्तरांसा मध्येसंग्राह्येति। शत० १।२।५।१६ पश्चाद् वरीयसी पृथुश्रोणिरिति वै योषां प्रशंसन्ति। शत० ३।५।१।११।

श्री दीनानाथ शास्त्र्याद्यभिमते तैत्तिरीय ब्राह्मणस्य निम्नवचन-मप्यस्मिन् विषयेऽवधेयम् ।

सकूतिमिन्द्र सच्युतिं सच्युतिं जघन च्युतिम् । कनात्काभां न आभर प्रयप्सत्त्विव सक्थ्यौ ।" तै० ब्रा० काण्ड २।१३

सायणीय भाष्यम् – हे इन्द्र ( कनात्काभाम् ) कनकवद् भास-मानाम् रूपवतीं कन्यां ( नः ) अस्मदर्थम् (आभर) आनय (सकूतिम्) कूतिः आ कूतिः –सङ्कल्पः तेन सहिताम् —अस्मास्वनुरक्तामित्यर्थः। ( सच्युतिम् ) च्युतिः—क्षरणं वीर्य स्यन्दनं तेन सहिताम्—अनुरागा-तिशयेन हि तदस्य वीर्यं स्यन्दनं । एतदेव पुनः सच्युतिमित्यनूद्य जघन च्युतिमित्यनेन व्याख्यायते ........ ।

इत्यादीनि वाक्यानि स्पष्टं युवतिविवाहं प्रतिपादयन्तीति न कथनमपेक्षते । सा च युवतिर्न केवलं मद्यः प्राप्तरजस्का किन्त्वनुराग सहिता पतिमभिलषयन्ती पूर्णंदृढाङ्गेत्यत्र व्यक्तं यावस्था न ह्यूनषोडश-वर्षवयसि सम्भवति ।

कियती योषा मर्यतोवधूयोः परिप्रीता पन्यसावार्येण । भद्रा वधूर्भवति यत्सुपेशाः स्वयं सा मित्रं वनुते जनं चित् ॥ ऋ० १०।२४।

इति स्पष्टं स्वयंवर प्रतिपादक ऋग्वेदीयमन्त्र उद्धृतो मया सायणभाष्यसहितं तत्र १६६२ चैत्राङ्के मुद्रणदोषवशात् 'सायणीय-भाष्ये यसयन्ती औपरतदिकोदहिरय निर्देशस्तु सुप्रसिद्धत्वेन क्षत्रि-यास्वेव स्वयंवर विधानं सीमयितुम् । इति ।

इतिपाठः प्रकाशितः अयं मुद्रणदोष एव वस्तुतस्तुमया सुप्रसिद्धत्वेन' 'इत्येतदनन्तरं न तु क्षत्रियकन्यैव स्वयंवर विधानं सीमयितुम' इत्येत-लेखीति श्री शास्त्रिमहोदयैस्तत्पूर्ववर्तिना 'अत्र मूलमन्त्रे क्षत्रियकन्यैव स्वयं वरार्हेति सूचकं न किमपिपदं प्रत्युत भद्रावधूर्भवति यत् सुपेशाः इति साधारण्येनैव स्वयंवर विधानम्' इति वाक्येन नूनं ज्ञातुं शक्यते स्म तथापि छिद्रान्वेषण पटवस्तेमहानुभावाः 'द्रौपद्यादिकोदाहरण निर्देशस्तु सुप्रसिद्धत्वेन क्षत्रियास्वेव स्वयंवर विधानं सीमयितुम्।

इतिस्वयमेव श्रीमाम् आत्मना प्रत्युक्तः, वयमत्र किं वदेम। धन्याः ! यदि श्रीमतैत्र स्वयंवरः क्षत्रियासु सीमितः क्रियते तर्हि ब्रह्मणोदाहरणां वेदाद् विरुद्धमेव दत्तम् ।" इत्यादि लिखन्ति यन्नतेषां सत्यजिघृक्षां किन्तु केवलं छिद्रान्वेषणतत्परतां स्फुटं द्योतयतीति तद्विषये न किमपि-लिलिखिषामि । 'पत्ये शंसन्तीम् । इत्यत्र यद्यपि न यौवन पदं स्फुटमुपलभ्यते तथापि विशेषण प्रकरण पौर्वापर्याद्यनुशीलनेन सूर्याय यौवनं तत्रास्तीन्दग्थमित्यभ्युपगम्यैव सायणाचार्यादिभिस्तथा विवृतम्। स्तुतिपरामिति भवत्प्रतियादितेऽर्थेऽभ्युपगतेऽपि नास्माकं हानिर्यद्यपि धातूनामनेकार्थकत्वं छन्दसि सर्वे विधयो विकल्पन्ते' इत्यनुसारं च सायणस्य 'पत्ये शंसन्तीत्यस्य" पतिं कामयमानां पर्याप्तयौवनाम्' इति व्याख्यानस्यासामञ्जस्यं न प्रतिपादयितुं शक्यम् । अस्मिन् मन्त्रे युवतिरिति पदेऽनुपलभ्यमानेऽपि 'अपश्यंत्वामनसा दीध्यानां स्वायां तनूं ऋत्व्ये नाधमानाम् । उप मा मुचा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रकाम ।" ऋ० १०।१८३।२ इति मन्त्रे व्यक्तं युवतिपदमुपयुक्तं दरीदृश्यते । मन्त्रोऽयं विवाहाच्चतुर्थनिशायां वरेण वधूं समीक्ष्योच्चार्यते जप्यते वेति प्रायः सर्वाण्यपि बौधायनादीनि गृह्यसूत्राणि प्रतिपादयन्ति । "अत्र वध्वायुवतित्वं न निर्दिष्टं किन्तु 'युववतिर्बभूयाः इति वैदिकाशीर्लिङ्गा तस्यै आशीर्दत्ता। आशीश्चा भूतवस्तुनः कृते भविष्यत्कृते च भवति, एतेनप्रतीयते यत सा विवाहकाले युवतिर्नासीत्। इति श्री शास्त्रिमहोदयानां कथनं सर्वथाप्यसमञ्जसम् । दीध्यानां, नाधमानाम् । इत्यादौ वर्तमान कालिकः शानजत्र स्फुटमुपलभ्यते युवतिरिति च तद् विशेषणं वर्तमान कालिकं तथा च श्री हरदत्तभाष्यं मन्त्रानुसारि । वरो वधूमीक्षते अपश्यं त्वेति

'(त्वा) त्वरां अहं मनसा ( अपश्यम् ) पश्यामि

(दीध्यानाम्) दीप्यमानां ध्यायन्तीं वा (स्वायां तनू) स्वायां तन्वां (ऋत्व्ये) ऋत्विये-ऋतुकाले भवोगर्भः ऋत्वियः तं (नाथमानाम्) प्रार्थयमानां स्वशरीरे मत्तो गर्भप्रार्थयमानाम् इत्यर्थः। उपेत्ययम्

अनुशब्दस्यार्थे द्रष्टव्यः। (माम्) (उच्चा) उच्चं-सम्भोगकाले उपरि सन्तम् (युवतिः) यौवनावस्थां प्राप्ता त्वम् (उपब्रभूयाः) अनुभूयाः। अनुभूय च (प्रजया प्रजायस्व) हे (पुत्रकामे)। अत्र मूले व्याख्यायां च वर्तमान प्रत्यय एव शानजादि दृश्यते इत्थं च श्री दीनानाथ शास्त्रिणामभिप्रायस्यासामञ्जस्यं मन्त्रस्थपदेभ्यः (मनसादीध्यानाम्—स्वायां तनू ऋत्व्ये नाथमानाम्—युवतिः इत्यादिभ्यः) श्री हरदत्ताचार्यादि भाष्याच्च सम्यगुपपद्यते। विवाहाच्चतुर्थ्यां निशायां मिथः समीक्षणसमये वरस्य वधूमुद्दिश्येयमुक्तिः प्राय. सर्वत्रापस्तम्बादि गृह्य सूत्रेषु विहिता या वध्वा यौवनं विवाह समयं, व्यवायकामनां च स्फुटं द्योतयति तस्मात् "मिथः समीक्षणं तु विवाह संस्कारेऽपि भवति कानाम चतुर्थी कर्मणितद्विशेषता? अथ च पुत्रकाम, युवतिर्वभूयाः पुत्रकामे इति रेखाङ्कितानामृचां तत्र जपनमात्रमेवाभीष्टम्।" इत्यादिकं श्री शास्त्रिमहोदयानां कथनं सर्वथापि निस्सारम्। बालिकामुद्दिश्य यत्र 'मनसादीध्यानाम्—ऋत्व्येनाथमानाम्—इत्यादीनि विशेषणान्येव न संघटन्ते तादृशजपमात्रस्य किंफलम्? सर्वेष्वप्येषु लेखेषु श्री दीनानाथ शास्त्रिणः "अत्रसमावेशनम्—वध्वा सह वरस्य सर्वेषां समक्षे शयनमात्रमेव कारयत्याचार्यो न तु मैथुनम्। इदं तु रीति (रस्म) मात्रमेव यदस्मद्देशेऽपि सर्वेषां समक्षेऽभिनयरूपेण क्रियते क्वचिदत्रापि लज्जया वधूवरयोः शिरोमात्रमेव संगमयन्ति तत्स्थाने।" "इमे खट्वास्पर्श तदारोहण—तदुपवेशन—तत्संवेशन संगमन वधूत्थापनादिकाः तत्काल करणाय रीति विशेषाः सन्ति नात्र मैथुनवर्णनम्। "तदिदं रीतिमात्रम्" इत्यादिकानि वाक्यानि भूयोभूयो लिखन्ति किन्तु न ते विचारयन्ति यदिदं यद्रीतिमात्रमवशिष्टं क्वचित्, यस्मिंश्चापि शिरोमात्रसंगमनादिरूपं परिवर्तनं बोभवीति तस्य मूलं किम्? कस्याः प्राचीनपद्धतेरयं सर्वोऽभिनयः? अस्मिन् विषये निष्पक्षपातं विविच्यमाने तु वस्तुतो वेदेषु गृह्यसूत्रादिषु च यौवन एव

विवाहो विहित आसीत्कालान्तरे त्वज्ञानवशाद्विशिष्टपरिस्थिति वशाद्वा (मुहम्मदीयाक्रमणादिकालेषु तदत्याचारकारणात्) बाल्य-विवाह पद्धतिः प्रवृत्ता प्राचीनपद्धतेरवशेपास्तु सर्वत्र यस्मिन् कस्मि-न्नपि रूपे दरीदृश्यन्त इति विशदमवगम्यते विवेचकैः सुधीभिः। तस्मान्मूलवेदमन्त्र गृह्यसूत्रविधानविरुद्धम् 'एतत्सर्वमाशीर्वादमात्रम्, रीतिमात्रम्, अभिनयमात्रम्, इत्याद्यभिधाय क्लिष्टकल्पना जातं च विधाय यौवनविवाहविध्यपलाप प्रयत्नः श्री शास्त्रिमहोदयानामित-रेषां च सुतरामनुचित इति निश्शङ्कं वक्तुं शक्यम्।

(२) इत्थं प्रसङ्गोपात्तं प्रथमप्रश्नं विविच्याथ "किमृग्वेदीया-न्यथर्ववेदीयानिवा विवाह सूक्तानि कल्पित देवदेवीपरकानि मानवेभ्यो वा बोधप्रदानीति" द्वितीयः प्रश्नो विमृश्यते।

तत्र श्री दीनानाथ प्रभृतयः सोम सवितृसूर्यादयः शब्दा देवता-विशेषप्रतिपादका इति साधयितुं वद्धपरिकरा दरीदृश्यन्ते। इत्थं कल्पितदेवतावादेभ्युपगते तु महत्यनर्थं परम्परापतेन्मन्त्रार्थ विमर्शा-वसरे कथमितिचेत्, 'सोमोवधूयुरभवदश्विनास्तामुभा वरा। सूर्यां यत्प-त्ये शंसन्तीं मनसा सविता ददात्॥ (ऋ० १०।८५।९ अ० १४।१।९) इत्यत्र सोमः सूर्याया भर्ता प्रतिपाद्यते। पूषा त्वेतो नयतु हस्तगृह्य (ऋ० १०।८५।२६) इत्यत्र पूषा देवः सूर्यायाः पाणिग्रहणकर्त्ता। भगस्ते हस्तमग्रहीत सविता हस्तमग्रहीत्। (अ० १४।१।५१) अत्र भगस्य सवितुश्च (यः सूर्यायाः पितेति कल्प्यते) पाणिग्रहणम्। देवस्ते सविता हस्तंगृह्णातु (अ० १४।१।४९) इत्यत्रापि सविता देवः सूर्यायाः पाणि-ग्रहणकर्तेतिसूच्यते। एवमनर्थपरम्परा भूयस्यापतेदित्यविचार्य श्री दीनानाथ शास्त्रिणां सोम सूर्या सवितृभगादिशब्दानां कल्पितदेवता-परत्व प्रतिपादकत्व मसमीचीनमेव। "सूर्या--सूर्यस्यपत्नीति निरुक्तम्। सूर्यस्य स्त्री सूर्या इति महाभाष्यम् "सविता सूर्यां प्रायच्छत् सोमाय राज्ञे प्रजापतये वा" इति निरुक्तस्थं ब्राह्मणम्। प्रजापतिर्वै सोमायराज्ञे

इत्यैतरेयब्राह्मणम् ४।७ पुनाति ते परिस्रुतं सोमं सूर्यस्य दुहिता। ऋ० ९।१।६ इत्यादीनि यानि वाक्यान्युदाहृतानि शास्त्रिमहोदयैस्तान्यपि कल्पिते देवतावादेऽभ्युपगते सूर्या-सूर्यस्य स्त्री वा पुत्रीवेति सन्देहं, प्रजापतिः सूर्यायाः पतिर्वा पितावेति च संशयं जनयन्ति। तस्माद् यौगिकार्थमादायैव सोमसूर्यादि पद व्याख्यानमुचितं नहि कल्पित देवतावादमाश्रित्य। सूर्याशब्दस्य मया सूर्यवत् तेजस्विनीति क्वचिद् व्याख्यानमकारि तत्खण्डयितुं प्रवृत्ताः श्री शास्त्रिमहोदयाः "सूर्य की किरणवत् सौन्दर्यगुण युक्त वधू" इतिमहर्षिदयानन्द निर्दिष्टमर्थं प्रदर्श्य 'अधुना न ज्ञायते कतरो वैदिकः" इति पृच्छन्ति। महर्षिदयानन्द प्रतिपादितमर्थं शिरसावहाम्यहम्। मया प्रदर्शितार्थस्य तस्य च तात्पर्ये नान्तरमिति तु विशदमेव। सूर्यस्य पत्नी दुहिता वा सूर्येति मन्यते चेच्छ्रीशास्त्रिमहोदयैस्तर्हि सूर्यसदृश्य पत्युः पत्नी सूर्यतुल्यस्य तेजस्विनश्च पितुः पुत्रीति सूर्यार्थः काममभ्युपगम्येत तथा। सवितृपद-स्यपितृवाचकत्वं सायणभाष्याद्याधारतोऽपि मया प्रत्यपादि तत्पदं न षुञ् धातोरपितु षूङ् प्राणिगर्भ विमोचने-अथवा षूङ् प्राणिप्रसवे इति धातोर्निष्पद्यते इतिशास्त्रिमहोदयैर्निरदेशि यदर्थं तेभ्यो धन्यवाद ततोवितरामि। "परं स षूङ् प्राणिप्रसवे इति धातुरपि वेड् भवति परमैतदादिक मन्त्रे सर्वत्र 'सविता' इत्येव दृष्टं न तु क्वचित् सोता इत्यपि अन्यथा वेट्कत्वस्य किं फलम्।" इतितेषां कथनं त्वसमी-चीनं प्रतीयते ऋ० १०।८६।१ इत्यत्र "वि हि सोतोरसृक्षत" इत्यादि मन्त्रेषु तथा दर्शनात्। तस्मात् सविता इत्यत्र षू-प्रेरणे इति तौदादिकः सेड् धातुरेव ग्राह्यः सुवति कर्मणि लोकमिति सविता। इति तत्प्रतियादितव्युत्पत्तिस्वीकरणे नास्माकंक्षतिः। शुभकर्मणि प्रेरकत्वादेव पितुः सवितृत्वम्। "सवितृसुतायाः सूर्याया आर्षम्।" सूर्यासावित्री। "इत्यादौ शुभकर्मसु प्रेरकस्य पितुः पुत्री इत्यर्थग्रहणे न दोषः। तत्र "पितुः पुत्री ब्रह्मचारिणी

ऋषिः" पितुः पुत्री सूर्या ऋषिः हन्त हन्त वास्तविकतानिह्नवार्थं प्रयतमानाः स्नातकमहोदया जायमानामसङ्गतिमपि न विचारयन्ति। इत्याद्युपहासपूर्वकः श्री दीनानाथ शास्त्रिमहोदयस्य लेखस्तु निस्सार उपर्युक्तव्याख्यानस्यसङ्गतत्वात् 'मातृमान् पितृमानाचार्यवान् पुरुषो वेदेति' वचनानुकूल्याच्च। शब्दानामनेकार्थत्वान्महर्षिदयानन्द कृतः सवितृपदस्य परमात्मेत्यर्थोऽप्यभिमत एवास्माकम्। "आरोहत् सूर्या-सावित्री बृहते सौभगाय कम्।" (अथर्व १४।२।३०) इत्यादौ सावित्री शब्दः सूर्या विशेषणत्वेनप्रयुक्तस्तस्य व्याख्यानं च जैमिनीयोपनिषद् ब्राह्मणे ४।२७।१७ 'स्त्री सावित्री' ति रूपेणोपलभ्यते इति मया स्वकीये द्वितीयलेखे १९९२ चैत्रमासाङ्केऽलेखि तत्र श्री दीनानाथ शास्त्रिणः "स्त्री सावित्री इत्यस्य सावित्र्या स्त्री आसीत् सोमस्येति शेषः" इति क्लिष्टकल्पनां कुर्वन्ति या निराधारा। उत्तम स्त्रीवाचकत्वं तु तस्य 'स्त्रीसावित्रीति' वाक्य द्वारा स्फुटमुपपद्यते। "आरोह सूर्ये अमृतस्य लोकं स्योनं पतिभ्यो वहतुं कृणुत्वम्" (अथर्व १४।१।६१ ऋ० १०।८५।१०) इत्यादिकेषुमन्त्रेष्वपि वध्वर्थं सूर्या शब्द प्रयोगः कल्पितदेवतावाद-मुच्छिनत्ति। नृणां विवाहमन्त्रान्तर्गतत्वं त्वस्य मन्त्रस्य सर्वसम्मतम्। प्रायः सर्वेष्वपि गृह्यसूत्रेषु वरवध्वोः रथारोहणे विनियोगोऽपि सूर्यापद-स्यवधूपरत्वं समर्थयति। तत्रोत्तरं किमप्यलभमानाः श्री दीनानाथ शास्त्रिणो राजाराममहोदय वचनमुदाहरन्ति विनियोगानां मन्त्रैरस-मानार्थत्वं द्योतयितुं, तादृशवचनं तु नास्मभ्यं प्रामाणिकं वेदवत्। एवं श्री राजाराम श्री सातवलेकर दयानन्दर्षि वाक्यानि मुहुर्मुहुः स्वकीयलेखेषु स्वपक्ष समर्थकत्वेनोदाहरन्तोऽपि शास्त्रिमहोदयाः सायणभाष्याद्युदाहर्तुं मामेव दूषयन्तीति चित्रम्। अस्मिन् विवाह सूक्तव्याख्याने तु सायणाचार्येण 'विनियोगस्तु लैङ्गिकः' इति स्फुट-मेव निर्दिष्टम्। न जाने वेदानुकूलं तद्वचनं शास्त्रिमहोदया अभ्युपगच्छन्ति न वा सत्स्वपि स्पष्टार्थकेषु मन्त्रेषु। वस्तुतो विनियोगानां मन्त्रैः समानार्थकत्वं भवत्येव क्वचिद् व्यक्तं क्वचिच्च पारम्पर्येण नो चेद्वै-

यर्थ्यम प्रामाण्यं च तेषां स्यात्। "इमं ते उपस्थं मधुना संसृजामि–काम वेद ते नाम मदो नामासि" इत्यादयो मन्त्रा विवाहात्पूर्वकालिक वधूवर स्नाने विनियुक्ता वधूवरयोः परस्परं कामनां मैथुनादियोग्यतां चाभिव्यञ्जयन्ति न तेषां तत्र वैयर्थ्यम्। एवमन्यत्रापि। तस्मात् 'तेन मनुष्य विवाहे विनियोगमात्रेण सूर्याया मनुष्यता न भविष्यतीति' श्री शास्त्रिणां कथनं निराकृतं भवति। 'सावित्री सूर्या' इत्यत्र सावित्रीति विशेषणं सवितुः—शुभकर्मसु धर्मेषु वा प्रेरकस्य पितुः पुत्रीत्यर्थं प्रति पादयत्सार्थकमेवेति निरूपितमेव प्राक्। कथंचिद् दुर्जनतोष न्यायेन सूर्याया भिन्नयोनिमत्वेऽङ्गीकृतेऽपि 'सूर्येव नारि विश्वरूपा महित्वा' (अथर्व १४।२।३२) 'तेनेमां नारीं सविता भगश्च सूर्यामिव परि धत्तां प्रजया।' (अथर्व १४।१।५३) इत्यादि मन्त्र प्रामाण्येन वध्वाः सूर्यवद् यौवनादिकं स्फुटमेवोपपद्यते इति मयालेखि। तत्र श्री शास्त्रिमहोदयाः 'अत्र मन्त्रस्थ इव शब्दो भवत्पक्षं भित्त्वा सूर्यां नारीतो भिन्नां मन्यते' इत्यादि लिखन्ति। सूर्या शब्दस्यानेकेऽर्था भवन्ति यथा सोमादीनामपि। तत्र भवादृशा ये सूर्याया विशिष्ट देवतात्वं मन्यन्ते तद् दृष्ट्या मयालेखि दुर्जनतोषन्यायेन यत्प्रस्तुतायां वध्वामपि सूर्यावद् गुणैर्भवितव्यं ( यौवनमुशतीत्वं पतिशंसनादिकं च तत्सूक्तस्थ मन्त्रेषु वर्णितं गुणजातम्) वयं तु सूर्यापदस्य यौगिकार्थमादाय 'सूर्यस्य पत्नी' इति भवदुल्लिखित निरुक्तादिवचनानि चाश्रित्य सूर्यवत्कान्तिमुषसं वेत्यर्थं कुर्मो महर्षि दयानन्दवचनं भवदुल्लिखितमपि च तमेवार्थं परिपुष्णातीति 'तर्हि विवाह्यमाना नारी अब्रह्मचारिणी मंस्यते' अन्यथा ब्रह्मचारिण्या ब्रह्मचारिण्युपमा व्यर्था इति भवतामुक्तिर्निराक्रियते। "सविता भवन्मतानुसारं पिता मन्तव्यो भविष्यति तर्हि पितैव विवाह्यां नारीं प्रजया परिधत्तां किम्।" इत्युपहासपूर्विकोक्तिः श्रीशास्त्रिकल्पित देवतावादे चरितार्था भवति वस्तुतस्तदनुसारं सवितुः सूर्या पितृत्वात् सविता हस्तमग्रभीत्' इत्यत्रापि सूर्या पितुः सवितुः स्वकीय पुत्री

पाणिग्रहणं स्वीकर्तव्यं भविष्यति। यौगिकार्थवादिनो वयं तु सवितृ पदस्यानेकार्थकत्वमभ्युपगम्य प्रकरणानुसारं तस्य परमेश्वरः, पिता, पतिः इत्यादिकार्थान् करिष्याम इति न दोषः। "सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात्।" ऋ० १।११५।२ इत्यादि मन्त्र प्रामाण्याच्चोषसोऽपि सूर्यपत्नीत्वेन कल्पनं नायुक्तं तत्तुल्यां च वधूमिति तदाधारेण "सूर्यामिव" इतिपद व्याख्यानं समीचीनमेव। सूर्याया-यौवनादिकं न 'सूर्यामिव' इत्युपमया ग्राह्यमिति श्री शास्त्रिणां कथनं तु कपोलकल्पितमेव। तदनुसारं प्रजाविषये विश्वरूपत्वविषये चोभयोः साधारण्येऽभ्युपगम्यमानेऽपि यौवन एव विवाह संस्कारः सिद्ध्यत्य-न्यथा सत्सन्तानोत्पादनसामर्थ्याभावात्। द्वादशे वर्षे ऋतुमतीत्व समकालमेव वा सत्प्रजोत्पादन सामर्थ्यं भवति कन्यास्विति श्री शास्त्रिमहोदयानां कथनं तु वेदायुर्वेदादिविरुद्धं प्रत्यक्षानुभव विरुद्धं चेतिसप्रमाणमुपरिष्टान्निरूपयिष्यामि।

सोमशब्द विषये शास्त्रिमहोदयाः "नवममण्डले पवमान सोमस्य—देवविशेषस्य रसविशेषस्य वा वर्णनम्, न तु श्रीमदभिमं-तस्य स्नातकस्यमनुष्यस्य।" इतिलिखन्ति एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः, एते (सोमाः) मृष्टाः अमर्त्याः, प्रयोनृभिरमृतो मर्त्येभिः इत्यादिकानि कतिपयानि वैदिकानि वाक्यानि चोदाहरन्ति स्वकीय-मभिप्रायं पोषयितुम्। एषु सर्वेष्वपि लेखेषु शब्दानामनेकार्थत्वं यौगि-कार्थं वा वयं मन्यामहे शास्त्ररीत्येति विस्मृत्यैव शास्त्रिमहोदयाः आक्षे-पान् कुर्वन्तीति चित्रम्। सोमशब्दः "सोमः पतिः जनिता मतीनां जनिता दिवोजनिता पृथिव्याः" आयस्तस्थौ भुवनान्यमर्त्यो विश्वानि सोमः ६।८४।२ इत्यादिकेषु मन्त्रेषु परमात्मवाचक इति मन्यत एवा-स्माभिः किन्तु सर्वत्रैव परमात्मवाचको रसविशेषवाचको वा सोम-शब्द इति शास्त्रिमहोदयानां कथनं त्वसमञ्जसम्। सोमानां मर्यत्वस्य विशेषणबलात्स्फुटं च प्रतिपादितत्वात्। कथमितिचेत् प्रसोमासो विपश्चितो अपां न यन्त्यूर्मयः। (ऋ० ६।३३।१) पवमाना असृक्षत

सोमाः शुक्रास इन्दवः । अभि विश्वानि काव्या । (ऋ० ६।६३।२५) यूयं सोम पितरः । (ऋ० ६।६६।५) "एते सोमास इन्दवः । इन्द्रं वर्धन्ति कर्मभिः" (ऋ० ६।४६।३) "इन्द्रं वर्धन्तो अप्तुरः कृण्वन्तो विश्वमार्यम् । अपघ्नन्तो अराव्णः । (ऋ० ६।६३।५ सोमा ऋतस्य धारया ६।६३।४ इत्यस्यानुवृत्तिः) इत्यादिषु मन्त्रेषु सोमशब्दस्य बहुवचने प्रयोगात् विपश्चितः, विश्वानि काव्या असृक्षत, विश्वमार्यं कृण्वन्तः, यूयं पितरः विशेषणदर्शनाच्च न सोमस्य देवविशेषवाचकत्वं (यो देव एक एव) रसविशेषवाचकत्वं वाभ्युपगन्तुं शक्यम् । एतेषां सोमानां मर्त्यत्वं मनुष्यत्वं वा स्पष्ट शब्देष्वपि "अनुप्रत्नास आयवः पदं नवीयो अक्रमुः ।" (सोमा असृग्रमाशवः इति ६।२३।१ ऋ० ६।२३।२ मन्त्रस्यानुवृत्तिः) अभि सोमास आयवः पवन्ते मद्यं मदम् (ऋ० ६।२३।४ इत्यादिषु मन्त्रेषु 'आयवः' इति शब्दस्य प्रयोगः यो निघण्टौ २।३ मनुष्यनामसु न पठितः । 'अत्योन क्रदौ हरिरासृजानो मर्यादेव पस्त्यावान् ।" (ऋग्वेदः) अस्मिन् मन्त्रे तु मर्यपदं तस्मै देवाय स्पष्टमुपयुक्तं सदत्र सोमपदस्य मनुष्यवाचकत्वे स्वल्पमपि सन्देहं न जहाति 'पस्त्यावान्' इति विशेषणं च गृहस्थत्वं गृहस्थाश्रमप्रवेशोन्मुखतां वा द्योतयति । मर्त्यत्वे सत्यपि क्वचित् 'अमर्त्यः' (६।३।१) इत्यादि विशेषण प्रयोगः ।

"जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशः काये, जरामरणजं भयम् ।"

इत्याद्युक्तदिशाऽमरत्व सूचकमिति न विवरणमपेक्षते । स वन्हिः सोम जागृविः (ऋ० ६।३६।२) विचक्षणः (६।३७।२) कविः (६।६२।१४) चेतनः प्रियः कवीनाम् (६।६४।१०) पवस्व विश्वचर्षणेऽभि विश्वानि काव्या ( ६।६६।१ ) नृचक्षाः कविः ( ९।७८।२ ) स्वायुधः (६।८७।२) रेतोधाः सुवीरः विश्ववित् (६।८६।३६) इत्यादीनि सोमविशेषणानि रसविशेषं कथं संघटन्त इति शास्त्रिमहोदया एव जानीयुः ।

ते न 'इत्यादिषु बहुषु मन्त्रेषु सोमस्य देवत्वं निरूपितं, तेन श्रीमतो मनुष्यार्थं करणं खण्ड्यते 'इत्यादिकः श्री शास्त्रिमहोदयानां वादोऽपि सर्वथोच्छिद्यते। 'सत्यसंहिता वै देवाः। ऐतरेयज १।६ सत्यमेव देवा अनृतं मनुष्याः। श० १।१।१।४ सत्यमया उ देवाः। कौ० २।८ विद्वांसो हि देवाः। शत० ३।७।३।१० इत्यादिप्रामाण्यात्सत्यसंहिता विद्वांस एव देवपदवाच्या भवन्तीति स्पष्टं विज्ञायते तेषाममरत्वं त्वात्मदृष्ट्या कीर्त्यविंत्युक्तन्तरमेव। सोमस्य तत्पर्यायस्येन्दोर्वा युवत्वं वधूयुत्वं च 'सोमो वधूयुरभवत्' इतिवत् 'ता अभिसन्तमस्तृतं महे युवानमादधुः। इन्दुमिन्द्र तव व्रते।' इति (ऋ० ६।६।५ पवमानः सोमो देवता) 'उपप्रियं पनिप्नुतं युवानमाहुतीवृधम्। अगन्म विभ्रतो नमः (६।६७।२६ पवमानः सोमो देवता) अव्ये वधूयुः पवते परित्वचि (ऋ० ९।६६।३) मर्यो देव पस्त्यावान् (६।६७।१८) इत्यादिकैर्मन्त्रैः स्फुटमुपपद्यते। पस्त्यावान् इत्यस्यगृहस्थ इत्यर्थः इदानीमपि यदि संशयः श्री शास्त्रि महोदयानां मनसि सोमशब्दस्य मनुष्यार्थकत्वे तर्हि वेदत्वेन स्वाभिमत ब्राह्मणग्रन्थस्यानि सोमो वै ब्राह्मणः। ताण्ड्य ब्रा० २३।१६।५ पुमान् वै सोमः। तै० १।३।।३।४ एष वै यजमानो यत्सोमः। तै० १।३। ३।५ क्षत्रं वै सोमः, (शत० ३।४।१।१० इत्यादीनि वाक्यानि तैरवधेयानि। यत्तु मनुष्ययोनिजाया अपि सूर्यकान्तिवच्छोभनाया ब्रह्मचारिण्या देवतात्वं द्योतयितुं मया दक्षस्मृतेः।

'अनुकूला त्ववाग् दुष्टा, दक्षा साध्वी प्रियंवदा।
आत्मगुप्ता स्वामिभक्ता, देवता सा न मानुषी ।।४।४

इति वचनमुदाहृतं निदर्शनरूपेण तच्छ्रीदीनानाथ शास्त्रिस्थ पुस्तके न तथा वर्तत इति तैरुच्यते। मयात्वयं पाठः श्रीवेंकटेश्वर यन्त्रालये श्रीक्षेमराज श्रीकृष्णदासश्रेष्ठिना सं० १९८१ तमेऽब्दे प्रकाशितात् 'अष्टादश स्मृतयः' इति पुस्तकस्य ३६५ पृष्ठादुल्लिखितः। स एव पाठः आनन्दाश्रममुद्रणालये १६२६ ख्रिस्ताब्दे प्रकाशिते "२७

संख्यामितानां स्मृतीनां समुच्चयः" इति नामके ग्रन्थेऽपि ७९ तमे पृष्ठे तथैव विद्यते। मनुष्ययोनावेवसत्यनिष्ठा विद्वांसो विदुष्यश्च श्रीकृष्णोक्तदैवीसम्पत्सम्पन्नत्वाद् देवतापदवाच्या भवन्तीत्युपपादितमेव प्रागिति न पिष्टपेषणं क्रियते। मानुषीतिपदं तत्र 'अनृतं वै मनुष्याः' इति वचनेनासत्यनिष्ठस्वार्थं पर स्त्रीपरम्। न मनुष्यदेवतयोर्योनिभेदः किन्तु गुणभेदः। एवं विधदेवतायै 'सूर्याद् देवतायाँ चाप् वक्तव्यः' इति व्याकरण नियमानुसारं सूर्या शब्दप्रयोगः सर्वथाप्युपपन्नः। "अत्र देवताशब्दो नगौण्यावृत्त्याऽभिहितः शब्दशास्त्रे किन्तु मुख्यया शब्दवृत्त्यैव तेन न श्रीमदिष्टसिद्धिः' इति शास्त्रिमहोदयानां कथनं निस्सारं, गौण्यावा मुख्यया वा वृत्त्या यत्रापि देवतात्वं तत्र चाप् प्रत्ययोभवति गौणीमुख्यवृत्त्योर्भेद प्रतिपादकमथवा गौण्या वृत्त्या देवतात्वे निषेधसूचकं पदं तु न तस्मिन् सूत्रेवार्तिके वा क्वचिदप्यस्ति। पूर्वोक्तप्रमाण बलाच्च सत्यविद्यादि-निष्ठानां देवतात्वं मुख्यमेव न गौणं तस्माज्जरादिनिदर्शनानि विषमानि। इत्थं चर्ग्वेदीयान्यथर्ववेदीयानि च विवाहसूक्तानि न कल्पितदेव देवी परव्यानि किन्तु मानवेभ्यो बोधप्रदानीति सुतरामुपपादितमस्माभिराक्षेपपरिहारपुरस्सरम्। गृहान् गच्छ गृहपत्नी यथासः, वशिनीत्वं तां पूषन शिवतमामेरयस्व—एना पत्यातत्वं संसृजस्वे" संपितरावृत्विये सृजेथां मातापिता च रेतसो भवाथः" इत्यादयो विवाह सूक्तक्यण्डमन्त्रास्तथा स्पष्टार्थकास्तद्विषये बाल्यविवाहाग्रहग्रस्तशास्त्रिणां तद्विषयको विमर्शस्तथोपहासाजनको यत्तस्य समोक्षायां न मुधाकालं यापयितुमीहे कामं श्रीशास्त्रिमहोदयाः स्वकीयं विजयं मत्वा प्रमुदिता भवेयुः। "द्वादशवर्षविवाह काले ऋतुकालस्य निकटत्वाद्, ऋतुकाल एव ऋतुदानस्येष्टत्वादस्मत्पक्षे न कोऽपिदोषः परापतति तेन 'तां पूषन्निति' विवाहे मन्त्रपाठो भावि-नादूर-मैथुन-सूचकत्वाद् द्वादशवर्षा विवाहेनाप्रकृतः।" इत्यादिकः श्री शास्त्रिणां लेखो नितरामुपवेद भूतायुर्वेद प्रोक्तानाम्—

ऊनषोडशवर्षायाम्, अप्राप्तः पञ्चविंशतिम्।
पद्याधत्ते पुमान्गर्भं, कुक्षिस्थः सविपद्यते।
जातो वा न चिरंजीवेज्जीवेद्वा दुर्बलेन्द्रियः॥

इत्यादि श्लोकानां भावविरुद्धत्वादमान्यस्तिरस्करणीयश्च। अस्य श्लोकस्य उल्हणाचार्य व्याख्यायाम् "अप्राप्तपञ्चविंशतेरूनषोडश वर्षया सह संयोगेदोषं दर्शयन्नाहेति' स्पष्टं दृश्यते। कलौ वाग्भट्ट संहितेति 'वाक्यं मत्वा प्रायशस्तथाकथितसनातनधर्माभिमानिनो यां वाग्भट्टसंहितां कलियुगार्थं प्रामाणिकीं मन्यन्ते तस्यामपि पूर्ण षोडश वर्षयैव सह संयोगोऽनुज्ञात इति

"पूर्ण षोडशवर्षा स्त्री, पूर्णविंशेनसंगता।
शुद्धे गर्भाशये मार्गे, रक्ते शुक्लेऽनिले हृदि।
वीर्यवन्तं सुतं सूते, ततोन्यूनाब्दतः पुनः।
रोग्यल्पायुरधन्यो वा, गर्भो भवति नैव वा॥"

शारीरस्था० अ० १ श्लो० ८।९

इत्यादिश्लोकैर्विज्ञायते। 'ऊनषोडशवर्षायाम्' इति सर्वत्राप्युपलभ्यमानस्य प्रत्यक्षानुभवसिद्धस्याधुनिक सर्वभिषग्वरसाक्ष्यनुमोदितस्य च पाठस्यानार्षत्वं साधयितुं श्री शास्त्रिणां प्रयत्नः केवलमुपहासजनकः। "पञ्चविंशेततोवर्षे पुमान्नारीतु षोडशे। समत्वागतवीर्यौ तु जानीयात्कुशलोभिषक्॥"

इति श्लोकस्य तत्कृतां व्याख्यामवलोक्य नूनं सर्वेऽपिवैद्यविशारदा हसिष्यन्तीति मन्ये। तत्र वीर्यधातु परिपाकः समत्वेन प्रोक्तः पुरुषस्य २५ तमेवर्षे स्त्रियाश्च १६ षोडशे वर्षे प्रशस्यत्वं च तस्यानुपातस्य प्रतिपादितं यस्यार्थमविज्ञाय नपुंसकोत्पत्तिमाशङ्कन्ते श्री शास्त्रिमहाभागाः। "समन्वागतवीर्यो तु" इत्यपि पाठः क्वचिदुपलभ्यकामं शास्त्रिमहोदयास्तं पाठमङ्गीकुर्वन्तु नपुंसकसन्तत्युत्पत्तिभयभीताः सन्तः। यस्यवृद्धवाग्भट्टस्यवचनं शास्त्रिमहोदया उद्धरन्ति सप्रमोदं "वृद्धवाग्भटेनाप्युक्तम्— 'पुमानेक विंशतिवर्षः कन्यां द्वादशवर्ष देशी-

यामुद्वहेत् " तेनास्मत्पक्षः सबलः सिद्धः" स० १९९४-पृ० ५१ इत्यादि लिखन्त, तेनैव 'तस्यां षोडशवर्षायां पञ्चविंशतिवर्षः पुरुषः पुत्रार्थं यतेत तदाहितौ प्राप्तवीर्यौ वीर्यान्वितमपत्यं जनयतः इति" सुस्पष्टमुदीरितम् । मन्ये नात्र नपुंसकसन्तत्युत्पत्तिशङ्कां करिष्यन्ति शास्त्रिमहाभागाः स्वकीयलेखस्य तद्विरुद्धतां चाभ्युपगमिष्यन्त्येव । "पञ्चविंशे ततोवर्षे पुमान्नारीतु षोडशे ।" इति श्लोकस्य श्री उल्हणाचार्य व्याख्या मन्ये न दृष्टा सावधानं श्री शास्त्रिमहाभागैरन्यथा न तेषां मनसि नपुंसकसन्तानोत्पत्ति शङ्काऽभविष्यत् । सा त्वित्थम्—......तत्र स्त्री-श्रोणिपुरुषोरः प्रभृतीनां यौवन एव यथोक्तप्रमाणताभवति न स्वल्पे वयसीत्याह—पञ्चविंशे इति । एतेन पञ्चविंशेवर्षे पूर्णे पुरुषं समत्वागतवीर्यं जानीयात् ; षोडशेवर्षे नारीं च समत्वागतवीर्यां जानीयात् । तयोश्च समत्वागतवीर्ययोरेव यथोक्तं प्रमाणं भवति । अन्यत्राप्युक्तम्—"वर्षेऽथ पञ्चविंशे, नरः समन्वितबलः षोडशेनारी । अर्हति मानोन्मानं जोवित भागे चतुर्थेवा ॥ इति समत्वागतवीर्यौ—रसादि धातुपरिपूर्त्या वीर्यपूर्तिः परिपूर्णसर्वधातुकावित्यर्थः । अन्ये त्वेवं पठन्ति 'समन्वागतवीर्याविति । सम्यगनु—पश्चादागतं वीर्यमुपचयलक्षणं ययोरिति व्याख्यानयन्ति । "ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम् ।" पञ्चविंशे ततोवर्षेपुमान्नारी तु षोडशे ॥ वर्षेऽथपञ्चविंशेनरः समन्वितबलः षोडशे नारी ॥ इत्यादिकेषु सर्वेष्वप्यन्यत्र लभ्यमानेषु श्लोकेषु पञ्चविंशति षोडशवर्षयोरुत्तमानुपातदर्शनात् 'अथास्मै पञ्चविंशतिवर्षाय षोडशवर्षां पत्नीमावहेत् । इति पुरुषार्थप्रकाशादावुपलभ्यमानः पाठएव समीचीन इति मे द्रढीयान् विश्वासः । या तु "१९४७ संवत्सरात्प्रागेवोत्पन्नेन स्वा० दयानन्देन 'सत्यार्थप्रकाश संस्कार विध्योः' ऊन षोडशवर्षायाम् इत्युद्धृत्यापि अथास्मै ..षोडशवर्षां पत्नीम् इति पाठः क्वापि नोद्धृतः तेन स्पष्टं यत् तत्र द्वादशवर्षामित्येव पाठ आसीदतः स्वपक्षक्षयभिया नोद्धृतः" इत्याद्युक्तिः शास्त्रिमहोदयानां साप्यसङ्गता । गर्भाधान प्रकरणे संस्कार विधौ 'ऊनषोडशवर्षायाम् । इत्यादयः

श्लोका उद्धृता महर्षिणा प्रसङ्गोपात्तत्वात् किन्तु तत्रैव स्पष्टमिदं तेनोल्लिखितम् "अब देखिये सुश्रुतकार परम वैद्य कि जिनका प्रमाण सब विद्वान् लोग मानते हैं वे विवाह और गर्भाधान का समय न्यून से न्यून १६ वर्ष की कन्या और पच्चीस वर्ष का पुरुष अवश्य होवे यह लिखते हैं।" (संस्कार विधि गर्भाधान प्रकरण स० १६६१ वि० वैदिक यन्त्रालय अजमेर १६वां संस्करण पृ० ३२) अर्थात् परमवैद्यः सुश्रुतकारो यस्य प्रामाण्यं सर्वसम्मतं, विवाहस्य गर्भाधानस्य च न्यूनतममायुः कन्यार्थं षोडश पुरुषार्थं पञ्चविंशतिश्चेति प्रतिपादयति। तेन स्पष्टमिदं विज्ञायते यन्महर्षिदयानन्दकाले मुद्रिते सुश्रुतग्रन्थेऽपि "षोडशवर्षां पत्नीम् आवहेत्" इत्येव पाठ आसीत्। "ऊनषोडशवर्षाणां स्त्रीणां जाता बालकाः पितुः २०-२५ वर्ष निकृटत्वे चिरंजीविता दृष्टा दुर्बलेन्द्रिया अपि न दृष्टाः। १५ वर्षीयाणां १४ वर्षीयाणां तु जीविताः स्वस्था दृढ़ाश्च बालका बाहुल्येन दृश्यन्त एव। १३ वर्षीयामुत्पन्ना अपि अनल्पा १२ वर्षास्वृतुमतीषु जाताः सन्ततयोऽपि मया दृष्टाः।" इत्यादिकः श्री शास्त्रिमहोदयानां लेखस्तु तेषां कूपमण्डूकतां प्रामाणिकानुभविभिषग्जनाभिप्रायानभिज्ञतां च द्योतयति यतो हि न केवलं प्राचीना वैद्या अपित्वाधुनिकाः 'मद्रास संस्थानन्यायविधायक सभाध्यक्ष डा० यु० रामराव डा० एस० के० मुकर्जी (प्रयागमातृ संस्थाकार्यकारिणी सदस्यः) कैप्टेन् डा० पी० वी० राममूर्ति M. B. (भू० पू० I. M. S.) डा० जादव जी हंसराज D. O. M. S. (London) डा० करन्दे डा० बी० तंगम्मा F. R. C. S. E. W. M. S. बनारस, डा० वकील पूना किंग एडूवर्ड स्मारकौषधालय मुख्याधिष्ठात्री मेजर प्रतापसिंह डा० रवीन्द्रनाथ बैनर्जी M. D. डा० डौगूलस डा० मर्फ़ी, डा० सथना डा० पैडरले डा० मुथु M. D. इत्यादयः सर्वेऽपि सुप्रख्याता अनुभवशालिनो रात्रिन्दिवमौषधालयेषुमातृसंस्थासु (Maternity Leagues) च बाल्यविवाहपरिणामान् परिशीलयन्तो भिषग्वराः 'बाल्यविवाहस्य कारणादेव बाल्यमरणं

मातृमरणं च प्रसवादिकाले, भयङ्करदशायांवर्ततेऽस्मद्देशे ? महिला-सु क्षयरोगवृद्धेरपीदं प्रधानं निदानम् । बालकेषुनैर्बल्यस्य प्रधानं कारणं बाल्यविवाह पद्धतिरेव । विवाहार्थं गर्भाधानं च कनिष्ठं वयः कन्यायाः षोडशेति सुस्पष्टं प्रतिपादयन्ति प्रबलरूपेण । ऋतुप्रादुर्भावो न गर्भा-धानयोग्यता चिह्नं किन्तु कनिष्ठपक्षे तस्य वर्षत्रयानन्तरमेव गर्भा-धान समयः । षोडशवर्षसमाप्तेः पूर्वं कन्यायां विवाहस्तु नितरां हानिकारक इति सर्वेऽप्यैकमत्येन स्वकीयमनुभवसिद्धमभिप्रायं प्रकाश-यन्ति । स्याच्चेदत्र सन्देहः श्री शास्त्रिमहोदयानां मनसि ते Age of Consent Committe विवाहादिवयोनिर्णायकसमितेः साक्षि-समुच्चयं सावधानं पठन्तु यत्र बाल्यविवाहदुष्परिणामाः—

'The growing increase in the maternal and infantile mortality.' The Poor physique and low vitality of the child mothers. Thus 30 percent of all deaths between the years of 15 and 25 are dues to Pulmonary toberculosis alone.

'I don't consider the attainment of puberty is a sufficient indication of physical maturity to justify consummation of marriages. At least 3 years should elapse after puberty for the girl's body to develop and to stand the strain of the child bearing without impairing her own health and that of her progemy.' (डा० रावराव M. D.) इत्यादिकशब्देषु प्रतिपादिताः ।

बाल्यविवाहः स्त्रीणां शक्तिं नाशयतीति भिषग्रूपेण भवतोऽभि-प्रायः किम् ? इति प्रश्नोत्तरे डा० रावराव महोदयेन "त्रिंशद्वर्षाणा-मनुभवस्याधारेणायं मे निश्चितोऽभिप्राय इत्युक्तम् । क्षयरोग विषये प्रामाणिकत्वेन सर्वत्रापि स्वीक्रियमाणो डा० मुथु महोदयः ।

"बाल्यविवाह पद्धतिरतीव दुष्टा या बालमातॄणां शक्तिं सर्वथापि नाशयति। निर्बल बालजनने च कारणं भवति। इत्थं नैर्बल्यवृद्धिः परम्परया संजायते क्षयरोगश्च प्रसरतीति" स्वकीयमाशयं प्राकाशयत्। पुण्यपत्तनस्थ किंग् ऐड्वर्ड स्मारकौषधालस्य मुख्याधिष्ठात्री मिसेज़ वकीलेति नामी भिषग्वर्या महिला I have come across girls aged about 15 or under becoming mothers and their babies were often weak and did not thrive." अर्थात् दृष्टा मया पञ्चदशवर्षीयास्ततोऽपिवान्यूनवयस्काः मातरः किन्तु तासां बालाः प्रायो दुर्बला अस्वस्थाश्च भवन्तीत्यनुभवसिद्धं स्वकीयमाशयं प्राकाशयत्। श्री दीनानाथ शास्त्रिणां भैषज्यज्ञानविरहितानामभिप्रायस्य कियन्मूल्यमेवंविधसुप्रख्यातभिषगभिप्रायतुलनायामिति विवेकशालिनो वाचक महाभागा एव विचारयन्तु। त्रिचतुराणि निदर्शनानि दत्त्वा तदाधारेण सत्यापलापप्रयत्नस्तेषां सर्वथाप्यश्लाघ्यो नितरां निन्दनीयश्च। लेखविस्तरभिया नान्यभिषग्वर्याभिप्रायोऽत्र प्रकाश्यते। इदं त्वेकं सत्यमवश्यमुल्लेख्यं यत्कालिकातायां १९२८ खीष्टाब्दे दिसम्बर मासे प्रवर्तितेऽखिलभारतीय भिषक्सम्मेलने प्रस्तावोऽयं सर्वसम्मत्या स्वीकृतोयत् "बालकानां तज्जननीनां च स्वास्थ्यं लक्ष्यीकृत्य वैज्ञानिकदृष्ट्या न्यूनविंशानां पुरुषाणामूनषोडशवर्षाभिः स्त्रीभिः सह संयोगः सर्वथाप्यवाञ्छनीयो हानिकारकश्चेति।"

इत्थं श्री दीनानाथशास्त्रिणामेतद्विषयकस्य विचारस्य निस्सारता हानिकारकता तिरस्करणीयता च सम्यगवगन्तुं शक्यते सुधीभिरिति विस्तरभियात्रैवोपरम्यते। बाल्यविवाहस्य परिणाम रूपेण भारतीयानामायुषो मध्यमा केवलं २३ वर्षपरिमितेत्यपि न जानन्ति शास्त्रिमहोदया इति चित्रम्। तस्माद् बाल्यविवाह पद्धतिरियं वेदविरुद्धाऽऽयुर्वेदविरुद्धा प्रख्यात भिषग्वर्याभिप्रायविरुद्धा नितरां हानिकारिणीति सुतरामुपपद्यते। वेदसंहिताभ्योऽनेकानि यौवने विवाह

समर्थकानि प्रमाणान्युपन्यस्तान्येव मया पौराणिकाभ्युपगत सायणाचार्य हरदत्ताचार्यादि भाष्यसहितानि, येषां प्रत्याख्यानं कर्तुं यथाकथमपि प्रयतमानाः श्री दीनानाथशास्त्रिणोऽति दयनीयां दशां गता इति निष्पक्षपातमालोचयद्भिर्विपश्चिद्भः स्वयमवगंस्यते । इदमेकं निदर्शनं तु भूयोऽप्युल्लेख्यम् । 'गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विद्थमावदासि' इति मन्त्रः सुस्पष्टार्थको वध्वा गृहशासनयोग्यतां व्यनक्ति विवाहसमये सायण भाष्यमपि (गृहपत्नी) गृहस्वामिनी (वशिनी) सर्वेषां गृहगतानां वशं प्रापयित्री इत्यादि पद व्याख्यान द्वारा तमेवाभिप्रायं परिपुष्णाति । वशिनीतिपदस्य सायणाचार्येण "पत्युर्वशेवर्तमाना वा" इति द्वितीयोऽप्यर्थः कृतो यमेव श्री शास्त्रिणो 'वास्तविकमर्थं' मन्यन्ते । मन्ये "अहोरात्राणि विदधद्विश्वस्य मिषतो वशी । सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् "।(ऋ० १०।१९०।२-३) इत्यस्मिन् मन्त्रेऽपि समागतस्य वशीति पदस्यार्थं शास्त्रिमहाभागाः सर्वेषां वशे वर्तमानः परमात्मेति करिष्यन्ति । तथैव 'एकोवशी सर्वभूतान्तरात्मा' इत्यत्रापि भगवान् सर्वेषां वशे वर्तमानः इत्येव वास्तविकोऽर्थस्तेषां मते प्रतिभाति । धन्या एते वास्तविकार्थप्रकाशका महाभागाः । एवंविधानां महानुभावानां विषये किं वक्तव्यमित्येव क्वचिन्न विज्ञायते ये कदाचिद् "युवा" "युवतिः" इत्यादि शब्दैर्बाल्य विवाह पक्षखण्डनं दृष्ट्वा युवपदस्य बाल्यमित्यर्थं साधयितुं बद्धपरिकरा भवन्ति 'अलङ्कृतां कन्येति' पदं दृष्ट्वा तद्बलादेव तस्या अनृतुमतीत्वं साधयितुं प्रयतन्ते, यस्मै कस्मै (वृद्धाय मांसमद्यदुराचारादिप्रवृत्ताय सर्वथा गुणहीनायापि पुरुषाय) चिदपि पित्रादिः कन्यां दातुमिच्छेत्कन्यया तत्र "ननुनच" न कर्तव्यमित्येव निन्दनीयं वादं "यो वरः प्रतिकाम्यः" अयमेव मे भर्तास्यादिति प्रतिनियतं काम्यमानो योवरः— इत्याद्यर्थं प्रतिपादकं सुस्पष्टं पदजातमालोकमालोकमपि समुपस्थापयन्ति । एषां वैतण्डिकत्वस्यान्त एव न क्वचिद् दृश्यते । गृह्यसूत्र विहितचतुर्थी कर्माद्यवशिष्ट विषय विमर्शोऽग्रिमे लेखे साक्षेपपरिहारं विधास्यते लेखदैर्घ्यभीत्येति पाठकमहोदयाः सधैर्यं तत्प्रतीक्षन्तामित्यत्रैव विरम्यते साम्प्रतम् ॥



---

# शोधन सूचना

सूचयिता—श्री दीनानाथ शर्मा शास्त्री सारस्वतः

गताङ्के 'प्रूफ' शोधकानामुपेक्षया मम लेखे काश्चिदशुद्धयः स्थिताः। तत्र यत्र भ्रमसंभावना, तदुल्लेखो विधीयते। गताङ्के 'विवाह वयोविवेकः' इति शीर्षकं मुद्रितम्, वस्तुतस्त्वत्र ७।१ संख्यासम्बन्धाद् 'विवाहवयोविवेचना' इति शीर्षकं ज्ञेयम्। अस्माभिः 'विवाहवयोविचारः' ४।२–३ 'विवाहवयोविमर्शः' ४।२–३ 'विवाहवयोविवेकः' ६।१–२ 'विवाहवयोविवेचना' ६।३–४, ७।१–२–३ इति भिन्नभिन्न शीर्षकोपन्यासः सौविध्यायैव कृतः। समानशीर्षकत्वे तु विषयस्य दैर्घ्यादसुविधाऽभविष्यत्। अस्तु–गताङ्कस्थ (७।२–३) मुद्रकदोषाणामत्र सूचना दीयते। अत्र त एव दोषाः प्रदर्शिता यत्र भ्रमसम्भवः, नाऽन्ये। तथाहि—

पृ० २० पं० १ 'इति सीतावचसा यौवनानुमानमुच्यते' अत्र—'सीतावचसा १७–२४ वर्षयौवनानुमानम्……' इत्यादि ज्ञेयम्। पृ० २३ पं० २३ 'श्रीमान् मन्यन्ते' अत्र 'श्रीमान् मन्यते' इति। पृ० २४ पं० १८ 'नयोनितो भिन्ना' अत्र 'नृयोनितो……' इति। पृ० २६ पं० २ 'पितापुज्यै' अत्र 'पितुः पिज्यै' इति। पृ० २७ पं० २ 'धर्मव्यतिक्रमोः दृष्टो' अत्र 'धर्मव्यतिक्रमो दृष्ट' इति। पृ० २८ पं० ४ 'उपन्यस्यन्' इति। २६ पृष्ठस्ह टिप्पण्याम्—'अनङ्' अत्र 'आनङ्' इति। पृ० २३ पं० १ 'उद्धृताः' इति पाठो ज्ञेयः।

४८ पृष्ठे मल्लेखस्यारम्भिकपङ्क्तौ 'शक्य' इत्यस्मात् प्रागेका पङ्क्तिर्न मुद्रिता, साऽइयम्—'पुत्रकामा' इत्यादिभिः १७–२४ वर्षे कन्याविवाहो न कदाप्युपोद्बलयितु……' अवशिष्टं मुद्रितमेव। पृ० ४८ पं० ८ 'कामात्र' अत्र 'कामोत्र' इति। पं० १० 'अनुमानिके' अत्र 'आनुमानिके' इति। पं० १४ 'दर्शितव्यं' अत्र 'दर्शयितव्यं' इति ज्ञेयम्।

पृ० ४६ पं० २ 'तत्रैकेन स सर्वं' अत्र 'तत्रैकेन न सर्वं' इति। पं० ६ 'स्वाभावाद्' अत्र 'स्वाभाव्याद्' इति। पं० ८ 'ज्ञापयन्ति' अत्र 'ज्ञास्यन्ति' इति। पं० २३ 'यत् किंचिद्' अत्र 'यत् कचिद्' इति। तत्रैव टिप्पण्यां 'स्वस्था' इत्यत्र 'स्वस्थो' इति।

पृ० ४० पं० १४ 'नोपलभ्य:' अत्र 'नोपालभ्य:' इति पं० १५ 'प्रकाशयिष्यमाणस्य' अत्र 'स्य' इति न पठनीयः, समासोऽत्र। पं० २१ 'पौनः पुण्येन' अत्र 'पौनः पुन्येन' इति ज्ञेयम्।

परिशिष्टे ४१ पृ० पं० १ 'सवितुर्दुरितानि' अत्र 'सवितर्दुरितानि' इति पाठो ज्ञेयः। पं० ६ '४।१।२१' अत्र ४।१।१२ इति। पं० १० 'रजस्वलीभावे' इति। पं० १३ 'ततः प्राक्तने संवेशने च मैथुनम्' इति ज्ञेयम्। पं० ११ 'समासान्तोचप्रत्यये' इति। पं० २१ 'गोमिल २।१।१ हारितादि' अत्र 'गोभिल २।१।१६ हारीतादि' इति।

पृ० ४२ तृतीयपङ्क्तौ एका पङ्क्तिर्न मुद्रिता, सेयम्—कर्तुः वासोविन्यासमात्रं गुणो भवत्युपवीतं नाम' मीमांसादर्शने शाबरभाष्ये ३।१।२१।

पृ० ५२ पं० ४ 'स्त्रियाऽपि' अत्र 'स्त्रियाअपि' इति ज्ञेयम्। पं० १३ '१७।१४ वर्षे' अत्र '१७।२४' इति पठनीयम्। पं० २० '११।२ वर्षावस्था' अत्र '१२।१२ वर्षावस्था—इति पठनीयम्। पं० २१ '१७।२' अत्र '१७।२४' इति। पं० २५ 'स प्रकाशयेतेति' अत्र 'स (निबन्ध) प्रकाश्येतेति' ज्ञेयम्। सामान्या मुद्रकाशुद्धयो न निर्दिष्टाः। पदान्ते मोऽनुस्वारः, परसवर्णाभावः, अनुस्वारस्थानेऽनुनासिकः ठकारस्थाने टकारः—इत्यादिष्वस्माभिरुपेक्ष्यते।

---

वर्ष ६ Vol. 6
सं० ३,४ ❀ ओ३म् ❀ No. 3,4
वर्ष ७ सं० १ Vol. 7 No. 1

काश्मीर मण्डलान्तर्वर्ति श्रीनगरस्थायाः

# संस्कृत साहित्य परिषद

## त्रैमासिकी

## पत्रिका

# श्रीः

Quarterly Journal of the

# SANSKRIT SAHITYA PARISHAD

SRINAGAR. (Kashmir)

पौष चैत्राषाढ अङ्का सं १९९४-९५ वि०

वार्षिकम् मूल्यं १।) सपादरूप्यकं

केवलं प्रतिशुल्करूपम्

प्राप्तिस्थानम्—पं० कुलभूषणः श्री कार्यालय, सुन्दरबाग

श्रीनगर (काश्मीर)



मुद्रक पं० लब्धराम शास्त्री, शर्म्मा प्रिंटिंग प्रेस, पुरानी मन्डी जम्मू ।

## सम्पादक समितिः

पं० कुलभूषणः डी. पी. एच. (लण्डन)

पं० गोविन्द राजदान शास्त्री, एम. ए. एम. ओ. एल.

पं० जगद्धर जाडू, शास्त्री. एम. ए. एम. ओ. एल.

पं० शिवनाथ शास्त्री साहित्य-भूषणः, साहित्य-मणिः



## विषय सूची

सूचना—सर्वे लेखा लेखकमहानुभावानां भाषामतानुसारेणैव प्रकाशिताः। अतस्तेषामुत्तरदायिनस्त एव न तु सम्पादकाः।







# सिन्धु सभ्यता.

## भारतीय सभ्यता कियत् काल प्राचीना ?

भारते वर्षे आर्यैरेव प्रथमं सभ्यता स्थापिता—आर्यसभ्यतेति नाम्ना याचेदानीं प्रसिद्धा—अथवा तस्मादपि कालात् पूर्वमत्रासीत् काचन जाति र्यामिदानीन्तना अपि सभ्याः पुरातत्वदर्शिनः सभ्य-जातिरिति नामधेयं ददति ? भारते वर्षे हिंदवः (आर्याः) एव प्रथममासन थवा तेभ्योऽपि पूर्वमासन् जातयः यासां कर्माण्यद्यापि सगौरवं पश्यन्ति लोकाः ? सन्ति काचन जातयः यद्येतादृश्यः तर्हि कीदृश आसीत् सम्बंधस्तासां आर्यैः सह आर्यैः पराजितास्तज्जातीया भारत एवावसनथवा देशात् देशान्तरान् जग्मुः ?

उत्तरभारते खृस्टाब्दात् १५००—२००० वर्ष पूर्वमार्याणामागमनं सिंधु नदतीरेषु पञ्चापदेशे वा तेषां प्रथमं निवास स्थानं तदनन्तरञ्च गंगायमुनानद्योर्भू मिभागेषूपस्थितिरित्यस्ति ऐतिहासिकानां मतम् । ऋग्वेदसभ्यता त्वेतेषां मते ४ सहस्रवर्ष प्राचीना । वेदानां प्रादुरभावोऽपि ४,००० वर्ष पूर्वम् खृस्ताब्दात् २,००० वर्ष पूर्वम् । बेबीलोनया मध्ये या च सुमेर सभ्यता प्रसिद्धा सा तु ५ सहस्र वर्ष पूर्वा खृस्टाब्दात ३ सहस्र वर्ष प्राचीनेति निगद्यते । अतो भारतवर्षीयार्याणां ३½ ऋग्वेदीय सभ्यतामैतिहासिकाः केवलं ३½ सहस्रवर्षायुषकां प्रकीर्तयन्ति । तस्मात पूर्वां सुमेर सभ्यतेति च कथयन्ति । सुमेरसभ्यतेयं भूगोलेऽस्मिन् सर्वासां सभ्यतानां मध्ये प्राचीनतमा वर्तते । १६२२ खृस्टाब्दात पूर्वमस्याः केन्द्रस्थानं असिरिया (Assyria—Babylonia) आसीत् ।

भारतीयाधुनिक राज्यपुरातत्वकार्यालयस्य भूतपूर्वाध्यक्षेण सर जान मारशलेन बृहत् पुस्तकमेकं लिखितं यस्मिन् सिंधु प्रदेशे 'मोहजों दारो' स्थाने खनिकै र्या नवीना सामग्री प्राप्ता सा सम्यक् निर्दिष्टा ,

तदाधारेण यः परिणाम-स्तै निष्कासितः स सर्वः विस्तरेण लिखितः। पुरातत्व विद्या विद्वांसो निश्चयेन कथयन्ति यत् मोहञ्जो दारो स्थाने प्राचीन नगर्यां पुरातत्व सुमेर ( बैबिलोनियन ) सभ्यताया लक्षणानि दृष्टिगोचराणि भवन्ति। यत् किञ्चिद् तत्र निष्कासितमासीत् सर्वं तत् वैदिकार्यसभ्यतायाः पूर्वं सुमेरसभ्यता (Assyrian—Babylonian) तुल्यमस्ति।

भारतीयाः बैबिलोनिया निवासिनां समकालीना एव सभ्यजातीयाः; भारतवर्षे आर्याणामागमनकालात् पूर्वमपि सभ्या आसन्। तेषां नगराणि आधुनिकपाश्चात्य सभ्यनगरेभ्योऽपि ज्ञानपूर्वकं निर्मितान्यासन्। तेषां वेषभूषाहारव्यवहारोऽपि शोभन आसीत्; गृहानि आपानानि कलाकौशलानि वस्त्रास्त्रशस्त्राणि चातीव सुन्दराणि विज्ञान पूर्वक विचारेण सम्पादितान्यासन्। अद्भुतमाश्चर्यजनकं सर्वं तत्र प्राप्य विद्वद्भि भारतवर्षस्य पूर्वसम्बन्धः मैसोपोटेमिया (Mesopotamia) देशेन सह नियुक्तोऽस्ति। मोहञ्जो दारो स्थाने खृस्टाब्दात् १६२२-१६२७ यावत् खननेन भारतीयपुरातत्व विभागेन या क्रान्तिः संसारस्य विदुषां विचारेष्वानितास्ति सा त्वाश्चर्यजनका। १६२२ खृस्टाब्दे भारतीयपुरातत्वकार्यालयस्याधिकारिणा महाशयेन आर० डी० बैनर्जी इत्यनेन मोहञ्जो दारो नगरे खननमारब्धम्। रायबहादुर दयाराम साहिनिना-यो मांटगुमरी प्रदेशेऽन्यत्र हरप्पा नगरे खनन क्रियां नियुक्ता असीत्—तद्वत् चिन्हानि वस्तुजातानि हरप्पा स्थानात् प्राप्तानि यानि मोहञ्जो दारो स्थाने मिलितान्यासन्। विद्वद्भिरेतेन सिद्धं यत् सैव ऋग्वेदकालात् पुरातना सुमेर सभ्यतात्र पञ्चाम्बु प्रदेशेऽपि वरिवर्ति। वस्तुजातानामैक्येन गृहानां नगराणां आकृतिसादृशेन एक एव परिणामः। सिंधु पाञ्चाल देशेषु यत् प्राप्तं तत्तु सुमेर सभ्यता दर्शकमेव। अतो उत्तर भारते आर्याणामागमनादपि पूर्वमासीत् महत्येका सभ्यजातिः यस्याः संबन्धः द्राविड सभ्यतया सह या च दक्षिणे भारते तथा मेसीपोटेमीयया सभ्यतया च सह (सुसम्बद्धा) दरिदृश्यते। केषांञ्चिद् मते द्राविड

सभ्यतापि आर्यसभ्यतायाः पूर्वं प्रादुर्बभूव। अतस्ते तु सुमेर सभ्यतामपि द्राविडसभ्यतावदार्यसभ्यतायाः शाखामेवुररीकुर्वन्ति। परमेतादृशानां विदुषां संख्या स्वल्पैव, बहुपक्षस्य मते तु सुमेर सभ्यतार्यसभ्यतायाः प्राचीना पूर्वा च।

## सिंधु नदस्य परिवर्तित प्रवाहः.

नदी नदानां प्रवाहः कालात् कालान्तरे परिवर्तिताः भवन्ति। महा प्रचीनस्य सिंधु नदस्यापि सैव दशा। बैनर्जी महाशयेन पुरातत्वखननविभागस्याध्यक्षेण १८ स्थानेषु सिंधु नदस्य प्राचीन प्रवाहेषु खनित्वा पूर्वमन्वेषणा कृता, १८ च स्थानानि निर्दिष्टानि येषु महानदस्यास्य पूर्वप्रवाहस्य चिन्हान्यासन्। १६२२ खृस्टाब्दे बैनर्जी महाशयेन पुराणाधिष्ठानस्यैकस्य चिन्हानि 'द्वीपे' एकस्मिन् प्राप्तानि यानि सिंधु नदस्य पश्चिम भागे वर्तन्ते। तत्र वहवः स्तूपा आसन् २०, ३० फीट परिमिताः उच्चैस्तराः, एकस्तु ७० फीट परिमित उच्चैस्तर आसीत्। तेषां खनमेन नगरस्य गृहानि वीथ्यः रथ्याः आपानानि कूपाश्च मिलिताः।

## पुरातन नगरस्य भवनानि.

केषुचित् स्थानेषु विशेषतया ७० फीट उच्चैः स्तूपखननानन्तरं चत्वारि स्थलानि प्राप्तानि। तदुउपरि कुशन जातीय चक्रवर्ति महाराज वासुदेव प्रथमस्य समये गृहानां भित्तयस तस्य समयस्य स्थूलताम्रमुद्राः ( रूप्यकादयः )। तस्मादधस्तात् तृतीयस्य कालस्य भित्तयः नवीना मुद्राश्च प्राप्ताः। अस्याधो द्वितीयस्य समयस्य भित्तयः येषु मध्ये सहस्रशः स्थूल ताम्र मुद्राः निर्गताः। एता ( मुद्राः )—तक्षशिला मध्ये याः मुद्राः प्राप्ताः—तादृश्यः एव। मुद्रासु तासु मनुष्याकारदेवतायाश्च मूर्तयः सन्ति। चतुर्थं स्थलं यत् सर्वेषां निच्चैः वर्तते तत्र भिन्ना एव भित्तयः। एताः भित्तयः तृतीयस्य कालस्थलस्य स्तूपस्य भूमिभागे यत्रास्थीमृतं वर्तते

तस्मादपि नीचैः आसन्। एतासां भित्तीनामुपरि बौद्धकालीनः *स्तूपः निर्मित आसीत्। स्तूपस्यास्य भूमिभागे प्लेटफार्म ( उच्चैः स्थलं ) वर्तते स्म यत्रास्थीमृतमासीत् रचितम्। अधस्तादस्य भीत्तिषु चत्वारो मुद्रा मिलिता १½"×२" लम्बायमान। यासु मूर्तयः खन्निता आसन्। एताः मुद्राः प्रायशः भूगोलस्य प्राचीनतमाः मुद्राः सन्ति। बैनर्जी महाशयेन बहूनि वस्तूनि प्राप्तानि तेषां नामानि आंगलभाषायां पुरातत्वविद्याज्ञै रित्थं वर्णितानि---Flint, scrapers, cores, bouchers dice of polished marble and terra cotta, umbrellas of white marble, oblation vessals of couch shells, bangles and ornaments of canch, beads of various stores pipes of cornelians and pottery of various shapes.

एतानि वस्तूनि अद्भुतान्याश्चर्य जनकानि च। बहुमूल्य वस्तुजात एकश्चित्रमयो मुद्रासमूहोऽस्ति। मुद्रा एताः करिदन्त, पाषाणादि वस्तुभिः निर्मिताः सन्ति। एतासु मुद्रासु विविधानां पशूनां चित्राणि सन्ति तथा चाति प्राचीन भाषया खनितान्यक्षराणि। चित्राणि च मृगवृषभमेषादीनां पशूनामतिसुन्दररीत्या कृन्तितानि। भाषेयं या कुन्दिता मुद्रासु न केनचिद् भाषाविशेषज्ञविदुषापि बुद्धेदानीम्। एतादृश्य एव मुद्रा हरप्पा प्रदेशे मिलिताः। हरप्पा स्थानं पाञ्चालदेशीय मांटगुमरी नगरात् १२ मील विदूरे वर्तते। प्रोफैसर ए. एच. सेस. असेरया ( Assyria ) देशपुरातत्वविद्यायां विशेषज्ञोऽस्ति। महाशयेनानेन संभृतमेवेतेषां वस्तूनां दक्षिण मेसोपोटेमया भागे यानि पूर्वं प्राप्तान्ययासन् ज्ञातमुदघोषितञ्च सिन्धु नदस्य सभ्यतया बेबिलोनिया

---

*स्तूपः———मृत्तिमयराशीति स्तूपः, आंगलभाषायां mound (माऊंड) इति स्तूप शब्दस्य साधारणार्थः। परं एतावतस्तु बौद्धकालस्यैव स्तूपाः खनिता आसन् परं मोहञ्जो दारो हरप्पा स्थानेषु एषु स्तूपेषु प्राचीनतरा सभ्यतापि लक्षीकृतेदानीम्।

सभ्यतायाः परस्परं सम्बन्धः । मृन्मयो भाण्डागार श्चित्रमया मुद्रा भित्तयो गृहानि द्रव्यादीनि सर्वाणि मेसोपोटेमया सभ्यता सदृशानि ज्ञातानि सन्ति । मेसोपोटेमया अथवा सुमेर असिरया शब्दा बदलोनयन सभ्यता पर्यायवाचकाः । एतासां सभ्यतानां प्रकाशः भूतले विद्वांसः २४०० ३००० वर्षे खृस्टाब्दात् पूर्वं मनुते ॥

## वस्तूनि

प्राप्त वस्तूनां मध्ये यथोक्तं पूर्वं धातुमयं पाषाणोपृष्टंकितं मृण्मयं मानुष्य देवतानां जीवन चरित्राणि ( Statues ) ताम्र स्वर्ण रजतमयान्यलङ्काराणि भूषणानि च गोधूमयवतुण्डलानां राशयः शस्त्राणि मानुष्यास्थीनि च लब्धानि । परं नैकमपि शस्त्रं लोहमयं दृष्टिगोचरमभूत् । लोहस्य ज्ञानं तावत् काल पर्यन्तं भारतीयैरज्ञातमासीत् । स्वर्णभूषणानि पटुतर स्वर्णकारैः निर्मितानि कुन्दन विशेषज्ञैरतीवसुन्दर कृतानि सन्ति । मृत्तिका भाण्डानां राशयस्तत्र मोहञ्जोदारो कौतकागारे एकत्रीकृता येषु बृहदाकार भाण्डानां बाहुल्यमस्ति । केचन भाण्डाः गोधूम तण्डुल यवानां संग्रहार्थं भारतीयैः निर्मिताः । केषाञ्चिद् बहिः स्थिते भागे चित्राणि दर्शितानि यान्यतीव सुन्दराणि शिक्षादायकानि नवीनभाव प्रदर्शिकानि अन्यदेशेभ्यः प्राप्तान्यासन् ।

## अद्भुत नगराणि गृहानि च

सर्वं खननानन्तरं प्रतीयते यत् नगरस्योपरि नगरं वरिवर्ति । पूर्वनगरी भूकम्पेन जलोपसदेन वा नष्टा त्वन्या तदुपर्येव निर्मिता । इत्थं चतुर्णां भिन्नानां नगरीनां एकस्या उपरि द्वतीयस्याः चिह्नानि दरिदृश्यन्ते । गृहानां निर्माणमप्यद्भुतम् । भित्तयः केषाञ्चिद् गृहाणां ३.४ फ़ीटतः ६,७ फ़ीट परिमिताः सन्ति । ऋद्य प्रथशस्तु प्रायः २ फीट अपि न भवन्ति । सर्वत्र गृहेषू कूपाः जलार्थं विद्यन्ते । महान्तः पन्थानः २५,३०

फ़ीट परिमिताः सन्ति। गृहजल निष्कासनार्थं नालिकास्त्वतीव सुन्दरा उपयोगिनश्च। वृहदाकारा परिपक्व सुन्दर भित्तिनिर्मिता उच्चैः नीचैः सम्यक् लग्ना जलप्रवाहनालिका यथा सुन्दर नवीन नगरेषु तथैव तत्र स्वास्थ्यरक्षणानियमानुसारेण निर्मिता सन्ति। नवीन नगराणां निर्माणाय ये नियमा चारु दृश्यन्तेऽद्यशः त एव ५ सहस्र वर्ष पूर्वं सम्यक् ज्ञाता आसन्। सभा भवनान्यपि लोक सम्मेलनाय निर्मितानि सन्ति। पूजा स्थानानि, आपनानि स्नानागाराणि कूपाः सरांस्यपि नगरे विशेष २ स्थानेष्वासन्॥

## भोजनवेशपोषक्रीड़ाव्यवहाराश्च।

मोहन्जोदारो प्रदेशात् अन्नं गोधूमं यवादिकमपि खनित्वा प्राप्तम्। वस्त्रादि सामग्री कार्पास चौमूर्णामयी खनित्वा मिलिता। वेशार्थे शरीरे वस्त्राणामपि प्रयोगं कुर्वन्तिस्म। शरीरे धौत (धोती) लेहंगा तथा चादर तथा वेशार्थं स्वर्णरजतालङ्काराणि धारयन्तिस्म। स्त्रीणां बाहु कंग चूडादि बहुभूषणादि मिलितं करणादिरूपा रीतिरासीत्। प्रायशः हस्तिदन्त स्वर्ण रजत निर्मितान्येतानि भूषणानि मिलितानि। महार्घ नीलमणि भूषणान्यपि प्राप्तानि। शस्त्रेषु बहुप्रकारकाणि शस्त्राणि ताम्रमयानि मिलितानि। आयसधातु प्रयोगो न कश्चिदपि दृष्टः न किमपि शस्त्रमायस निर्मितं प्राप्तम्। यानि शस्त्राणि अद्यशः आयस्कृतानि सर्वाणि तानि तस्मिन् काले प्रायशः ताम्रमयान्यासन्। मानपरिमाणादिनिश्चयार्थं च मानानि लब्धानि। न केवलमिदमेव परन्तु लेखनकार्यमपि जानन्ति स्म।

## पशवः

महिष गौ वृषभ हिरण मृग द्विप सिंह वराहाश्व शृगाल अज हस्त्यादयो बहवः पशवस्तेषां वनेषु नदीतटेषु गृहेषु निवसन्ति स्म परन्तु अश्वाः नासन्। अश्वानां भारते आगमनं तदनन्तरं प्रतीयते यतो न हि अश्वस्य कस्यचिद् अस्थीनि न वा तस्य मूर्तिरुपलभ्यते। सर

जान मारशलस्य मते या दशाद्यशः वर्षतां भारतवर्षे ऽस्ति तस्मिन् समये विपरीतासीत् । सिंधु प्रान्ते वर्षा तु स्वल्पाद्यशो भवति । तस्मिन् काले दक्षिणपश्चिमाभिग्जो वायुः प्रावात् ( monsoon ) सिंधु प्रदेशे वर्षा ऽऽधिक्येनासीत् । नद्यः बहु जल प्रयुक्ता आसन् । तासां तटेषु वनान्यासन् येषु बहवः पशवः निवसन्ति स्म । परमद्य तु पशूनां प्रायशो ऽभाव एव दृश्यते ।

महतीयं नगरी महदस्यां दृश्यं, आश्चर्य जनकानि शोभनानि च खनितानि वस्तूनि । पुरातत्वविद्याविद्यार्थिनां शिक्षाज्ञानाय मोहञ्जोदारो हड़प्पा नगरे तीर्थ स्थाने द्वे विंशिति शताब्द्यां संसारे ऽस्मिन्नतीवाद्भुद्धदृश्ये भारतवर्षस्य गौरवप्रदे । गच्छन्तु श्रीमन्तः विद्यारसिकाः दृष्टिगोचरं कुर्वन्तु प्राप्नुवन्तु चामोदरसं दर्शनेन प्राचीन भारतीय सभ्यतायाः ।

## मोहञ्जोदारो

उत्तर पश्चमीय ( North Western Railway ) रेलवे इति प्रसिद्ध बाष्पमहायानं पञ्चाम्बु देशमतीत्य सिंधु प्रदेशस्य लड़काना प्रान्ते लड़काना रेलवे स्टेशनतः द्विस्टेशनगरे लड़काना नगरात् १४ मील दूरे डोकरी नाम्ना रेलवे कटकः वर्तते यतः मोहञ्जोदारो 8½ मील परिमितं विदूरेऽस्ति । रूपकद्वय प्रदानेन टांगा वाहकः ( अश्वाकर सारथी ) यात्रिणो मोहञ्जोदारो स्थाने प्रापयति । डोकरी रेलवे स्टेशनस्य स्टेशनमास्टर महाशयो गुलराजचन्द्रः सज्जनः पुरुषो ऽस्ति । महानुभावेन अनेन बह्वादरेण वेटिंगरूमागारे ऽस्माकं निशायां वासस्थानमदीयत । भोजनादिपाकार्थं स्नानार्थञ्च सम्यक् प्रबंधः कृतः । या काचिदावश्यकतासीत् सापि महाशयेनानेन सम्यक पूरिता । द्वे मित्रे आवां आस्व सिंधु नदस्य सभ्यता ज्ञानाय प्रदेशे शीततौ अस्मिन् यात्रां कुर्वन्तौ महाशयाय गुलराजचंद्राय स्नेहाय ददावः । मम सुहृद् बावा बलवंत सिंहः एम. ए. बी. टी. भूतपूर्व इन्स्पैक्टर आफ़ स्कूलस काश्मीर राज्यस्य मया

सह यात्रानन्दानुभवे ऽस्मिन् सम्मिलित आसीत्। तस्य विशाल ज्ञान-विज्ञान विनिमयेन परिचयेन च यात्रायां द्विगुणतर आनन्दो ऽजनि। सोऽपि महानुभावो शतशो धन्यवादर्हः।

## हड़प्पा नगरी

पाञ्चाल देशे हड़प्पा नगरी मान्टगुमरीं नगरात् १२ मील दूरे वर्तते। हड़प्पारोड स्टेशन कटको लवपुरतः कराची ट्रेन गच्छन्ती ५ नादानन्तरं मांटगुमरी अथवा हड़प्पा रोड स्टेशनं प्राप्नोति। हड़प्पा-रोड स्टेशनतः ½ मील दूरे पुरातत्व विद्याकार्यालयः खनितानि भवनानि च विद्यन्ते। तत्र पं० केदारनाथ शास्त्री महाशयो जम्मू निवासी अध्यक्षोऽस्ति। सर्वं दर्शनीयं खनित भवनानां तथा च निष्कासित वस्तूनां सम्यक् ज्ञानं तस्य कृपया प्राप्तम्। महानुभावेनानेन बहु समयं दत्वा हड़प्पा स्थानेभ्यः प्राप्त वस्तूनि दर्शितानि। यथा मोहञ्जोदारो स्थाने स्वर्ण पाषाण मृत्तिका ताम्र वस्तूनामासीत् प्रदर्शनमत्रापि बहुमूल्य रत्नानामेतादृशानामासीत् समूहः। तेषां सम्यक् ज्ञानं कारितं शास्त्रि महाशयेनातस्तस्य कृतज्ञोऽहंबाहुल्येन। तादृश्येव सभ्यता यादृशी मोहञ्जोदारो प्रदेशे दरिदृश्यते ऽत्रापि प्रतिभाति। सम्बंधो ऽस्यास्तया सह अथवा विदेशेभ्यः विद्वद्भिर्निश्चितो ऽस्ति।

## कराची कारपोरेशन

समुद्र तटे नवीनवासस्थानं वाणिज्यार्थे सिंधु प्रांते आंग्लैर्निर्मितं कराचीत्यभिधानं वर्तते। लवपुरतः कराची रेलशकटः २२ वादनेषु प्राप्नोति ७५० मील विदूरे यद्यपि सिंधु प्रदेशस्य ग्रामा नगराणि प्रायशः प्राकृतिक मानुष्यकृत सौन्दर्य रहितानि तथापि कराची नगरमतीव शोभन सुन्दरं स्वास्थदायकं च विद्यते। कराची नागरिक सभा ( म्यून्सिपल कारपोरेशन ) जीविता जाग्रती सभैव वर्तते यस्या अधीनस्थो सर्वः प्रबंधः कराची नगरस्यास्ति। पश्चिमोत्तर भारतवर्षे कराचीतः शुद्धस्वास्थ्यदायकं

निर्मलं स्थानं न विद्यते। बृहंतः पन्थानः विशाला वीथयः सुन्दर भवनानि विशेषतो विशाल समुद्रतटं नगरस्य शोभां वर्धयन्ति। ४ लक्षं यावत् पुरुषाणां निवासस्थाने मलमूत्रोच्छिष्ट दूषितवस्तूनां नगरतः निष्कासनार्थं सम्यक्प्रबंधः बहुप्रकारेण, सर्वत्र पुस्तकालयानामुद्धाटनं, उपवनानां लोकोपकाराय सुन्दर २ स्थानानां च बाहुल्यं, समुद्रतटे स्त्रीपुरुषाणामर्थं स्नानागाराणि उद्यानानि आसनानि च भ्रमणार्थं स्वल्पार्घेन बसट्रेमादि विद्युत शकटानां सर्वसाधारण लोकहिताय क्षणे २ प्राप्तिः, भोजनादि सामग्री च नातिमूल्येन सर्वमिदं नगरस्य शोभा वृद्धयै हि सर्वथा।

## सक्खर बेरेज ( Sukkhar Barrage )

मिशर देशे यथा नील नदीं निरुध्य क्षेत्रसिञ्चनाय कुल्याः सन्ति तथैव सिंधु सेतुरूपेण सिंध प्रदेशे सिंधु नदस्य सेतु प्रबंधो ऽतीवाद्भुतः विज्ञानस्य विजयः सक्खर नगरे दरिदृश्यते। सप्त नद्यः स्थानादस्मात् नदीशिल्पवैज्ञानिकैः निष्कासिताः सन्ति। सिंधु नदस्य विशालतटो १ मीलं यावत् सेतुबन्ध रूपेण बद्धोऽस्ति। महानदस्यास्य शोभा शालिदृश्यं दर्शनयोग्यमेव न तु वर्णयितुं शक्यते। स्वल्पेन लेखनानेन सिंधु नदस्य सभ्यता सम्बन्धे ऽद्य किञ्चिद् वर्णितं मया। अन्यथा सिंधु सभ्यता वर्णने महान् कालोऽपेक्षते यस्यार्थे नास्ति मम सम्यक् ज्ञानं न चेदानीं प्राप्त्यर्थे समयः। कदाचित् पुनः दृश्यते किंचिदन्यत् पाठकानां योग्यं मया लिखितुं शक्यते इति शम्।

कुल भूषणः



# भास कविः

(ले०—पं० जगद्धर जाडू शास्त्री एम. ए., एस. पी. कालेज श्रीनगर)

---

*महामान्याः महाशयाः !

अद्याहं महाकविं भासकविम् अधिकृत्य किञ्चित् वक्तुकामोऽत्र भवतां सन्निधौ। विषयोऽयं महामहोपाध्यायवर्यैः टी. गणपतिशास्त्रिवर्यैः भास नाटक चक्रसंपादनकाले निपुणतया विचारितः। तदनन्तरं वहुभिः प्राच्यैः पाश्चात्यैः च विद्वद्वरैः सम्यगनुशीलितः। परन्तु अद्यापि अयमेव सन्देहो मनसि स्थानं बहूनां विचारशीलानां पण्डितानां करोति यत् श्रीगणपतिशास्त्रि संपादितान्येतानि नाटकानि भासकविप्रणीतानि नैव विद्यन्ते इति। अत्र ते एवं व्याहरन्ति—यत् पण्डित गणपतिशास्त्रि समुपलब्धेषु नाटकेषु भासकवेः प्रणेतृत्वेन नामनिर्देशः न कृतोऽस्ति। यत् भासकविः एतेषां नाटकानां रचयिता इति स्पष्टं तेषु अमुद्रितेषु पुस्तकेषु नैव लिखितमस्ति आदौ अन्ते वा। येन विदुषां अस्मिन् विषये संशयलेशोऽपि न भवेत्। अतः पं० टी. गणपतिशास्त्रि कथनं अस्माभिः न मन्यते। एवमेवान्ये पण्डिताः एतेषां नाटकानां अन्य नवीन दाक्षिणात्य कविनिर्मितत्वं स्वीकुर्वन्ति। यदि च सन्देह-दोलाधिरूढोऽयं विषयः बहूनां प्राच्यप्रतीच्यविदुषां गवेषणास्पदीभूतः तथापि अत्र एतच्चिन्त्यं यत् एतादृशेषु विषयेषु बहूनां पण्डितानां युगपत् सम्मतिः तादृशी न बलीयसी यादृशी अल्पसंख्यकानामेव विदुषां सम्मतिः, यदि सा युक्तियुक्ता, सतर्का, सुविचारानुशीलिता स्यात् खलु। वैज्ञानिकेषु विषयेषु अनुमतिप्राचुर्यं तथा न स्वीक्रियते यथा सद्युक्तिबाहुल्यम्। भासकवेः यदि च अमुद्रितेषु नाटकपुस्तकेषु कर्तृत्वेन नामसंकीर्तनं न कृतमस्ति, तथापि 'भास एव एतेषां नाटकानां रचयिता' इति विचारशीलैः विद्वद्भिः गवेषणा द्वारा आन्तरिक साक्ष्येण च निर्णीतमस्ति। आन्तरिक साक्ष्यदृढीकरणे तैः बह्व्यः युक्तयः व्याहृताः सन्ति, याभिः गणपतिशास्त्रिवर्येण समुपलब्धे

---

* १९९४ वि० आब्दे परिषदि पठितः लेखः।

संपादिते च नाटकचक्रे भासकविनिर्मातृता एव निर्व्याजं प्रकटी क्रियते। यदि च अन्येषु नाटकेषु सन्देहलवच्छाया स्यादेव, परन्तु स्वप्नवासवदत्त नाटकविषये कोऽपि संशयो न विद्यते। 'स्वप्नवासवदत्तं भासकविना प्र निर्मितम्' इति आन्तरिक साक्ष्यं अन्यार्वाचीनकविकथनं च विशदत द्रढयति। स्वप्नवासवदत्तनाटक पुस्तकानुस्यूतमेव अन्यत् नाटकच गणपतिशास्त्रिवर्येण अलभ्यत, यत् (नाटकचक्रं) स्वप्नवासवदत्तस्य भाषां, शैलीं, कवितां, सन्दर्भं सर्वथा अनुकरोति। येन सर्वेषां नाटकाना एक एव कर्ता भासः इति धीमद्भिः मन्यते। सन्त्यन्यानि अपि अ महान्ति युक्तियुक्तानि द्रढानि कारणानि, येषां विस्तारभयेन अत्र निर्दे न क्रियते, यानि उपर्युक्तनाटकचक्रस्य एककर्तृ रचयितृत्वं निर्बाधं निष्प दयन्ति।

प्रथममत्र कविवर राजशेखरोक्तं सन्निधाप्यते। अयं राजशेख कविः ख्रैस्त नवमशतकान्नैवाऽर्वाचीनः। उक्तं चानेन—"भासनाटक चक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम्। स्वप्नवासवदत्तस्य दाहकोऽभू पावकः।" अस्याऽयमर्थः—यदा सर्वं भासनाटकचक्रं समालोचकैः सम लोचनावह्नौ प्रक्षिप्तं परीक्षार्थं, तदा वह्निः स्वप्नवासवदत्तं दग्धुं सम नाभवत्। अनेन स्पष्टं निश्चीयते यत् राजशेखरकविः नाटकचक्रनिर्मात भासकविं अजानात्, यस्मिन् नाटकचक्रे समालोचकवृन्दैः स्वप्नवासव प्रशंसाकथनोत्तरं अन्येषु नाटकेषु दूषणानि अपि प्रकटीकृतानि सन्ति राजशेखरस्य कथनमविचारतां पण्डितानां जिह्वाग्रे इयमेव कथा वर्तते य सत्यमेव भासकवेः नाटकानि अग्निसात् कृतानि अभवन्, येभ्यः स्वप्नवासव विहाय अन्यानि सर्वाणि दग्धानि। अलं बहुना—पर्याप्तमेतत्—राजशेख कविरपि अत्र साक्षी—यत् स्वप्नवासवदत्तं लोकविख्यातं, विद्वत्समाद भासकविप्रणीतं च। "सूत्रधारकृता०" इत्यादिना बाणभट्टेनापि, सप्त शतके क्रैष्टे भासकवेः नाटकाचार्यत्वं वर्णितमस्ति। तत् पूर्वं क्रैस्टीय पञ्चमशतकस्य प्रारम्भे महाकवि कालिदासेनापि "प्रथितयशसां भा कविपुत्र-सौमिल्लादीनां" इत्यादिना भासकवेः समादरेण नामनिर्दे

कृतोऽस्ति। कालिदाससमये भासकविः प्रथितयशाः अभवत्। अनेन ज्ञायते यत् भासकवेः नैपुण्यं नाटकरचनायां निर्बाधं आसीत्—नहि नहि—विद्वत्समाजेषु च समादृततां अभजत्। भासकवेः रचनाशैली प्रस्रवत् पार्वतं स्रोतः इव वर्तते। या सर्वथा प्रसादगुणमयी वैशद्योपोद्वलिता च विदुषां चेतांसि आह्लादयति। कालिदासग्रन्थेषु इयमेव शैली परिपक्वतां संसेव्य उज्ज्वलतां प्राप्ता। इत्येतत् सर्वं अग्रे आगामिनि अधिवेशन-दिवसे परिषदः वर्णिष्यते।

---

## जननी जन्मभूमिश्च स्वर्गादपि गरीयसी

(ले०—पं० गोविंद राजानकः शास्त्री एम. ए. रणवीर हाई स्कूल जम्मू)

---

अहो आश्चर्यम् यत्किल निखिलेऽस्मिन् भूमण्डले समोऽपि जनो न केवलं जननीमेव सत्करोति आदरेण पश्यति विनयेन मातुरादेशं पालयति शिरसा नमति प्रेम्णा विलोकयति सर्वथैव तस्या मानमर्यादानतिक्रमणे कटिबद्धो भवति प्रत्युत स्वदेशरागं जन्मभूमि त्राणाय स्वशरीरदानेन दर्शयति। किन्तु भारतेऽस्मिन् यादृशी कष्टकल्पना, विषमादशा, कठिनावस्था दौर्भाग्यपरिभवः, सत्कारविकल्पः, अविद्यान्धकारः, मोहभ्रमो विवेकापूर्णता, पादप्रहारः स्त्रीणामद्यश्वो भवति, न तादृशः पुंसां विवेकभ्रंशात्स्वधर्माननुष्ठानजोऽयं परिपाकः कुत्राप्यन्यत्र जगतीतले वर्तमानभविष्यदन्यतरेऽनेहसि कदाचिदपि दृष्टः श्रुतोवेति हा कष्टं, कलिकालप्रादुर्भावस्य परिणामोऽयं सर्वथासह्यः। कथं स्यात्स्त्रीजनस्योन्नतिः, मातुः भारत्याः आदरः आर्यललनाया विशिष्टो समादर इति हि विवेक पथानुसारी साम्प्रतं विमर्शः। याहि भारतभारती आत्मनश्चिच्छक्तिः, ब्रह्मणो गायत्री, विष्णोर्वक्षसि अचला श्रीः शिवस्य सव्येतरो भागः सुकृतिनां भवनेषु लक्ष्मी इति कथ्यते, भिन्नभिन्नव्यपदेशेन मानार्हं पूजार्हं सत्कारार्हं पदमभजत सैवेदानीं विदेशीयभाषावेषादिभिः परिष्कृता न्यक्कृतियोग्यमासनमास्थितेति विदीर्यते हृदयेन, परिभूयते लज्जया, दुःखीयते सुखेन,(?)

कान्दिशीक इवायं जनो न कुत्रापि आस्थां लभते धैर्यं भजते, स्थितिमाप्नोति, सहाय्यं प्राप्नोति, सहानुभूतिं वा कस्माचिदन्यस्मान्नाधिगच्छति। परन्तु किमियमेवेदृशी अवस्था प्रतिपदं सदैव नीचैर्नीचैर्भारतीयानां योषितां स्यादुत चक्रनेमिक्रमेणोपर्यपि गच्छेदिति हि सन्देहदोलाधिरूढो वितर्कः।

यस्या ऋते धर्मकर्मणोऽननुष्ठानं, यत्सन्निधानेन पूर्णफलावाप्तिः, यस्याः प्रभावेण भगवाननन्यजन्मा स्वात्मानं कृतकृत्यं मन्यते, यस्याः प्रतिमया मर्यादापुरुषोत्तमो रामः यज्ञदक्षिणामधिगच्छति, यस्यास्तपसा भगवान् शंकरोऽपि स्वात्मानं क्रीतमिव दासमङ्गीकरोति सैवेदानीमाङ्ग-कलाशालासु शिक्षिता भवति, विदेशीयवस्तूनामनुरागं दर्शयति।

भारतान्यदेशेष्वधिभौतिकीमुन्नतिं प्राप्तुमिच्छति, स्वकीयां स्वात्म-जन्यां, स्वप्रकृतिसाधारणां, स्वाभाविकीमवस्थां विस्मरति—इति नायं सोढव्यो भारतेऽस्मिन्नभूतपूर्वो विकारः। इयं हि आसुरी संपत् अयं हि भोगनिमित्त उपदेशः, अयमेव कामक्रोधलोभमोहादिभिर्बन्धः, अयमेव विनाशस्य मार्गः यतो हि विनाशकाले विपरीतैव बुद्धिर्भवति। अर्धाङ्ग-भूता वधूः धर्मे च अर्थे च कामे च मोक्षेऽपि च भवति सैव दैवी संपदि-त्युच्यते। सैव यदि भारतभारती परिष्कृता, भारतीयव्यवहारकुशला, भार-तीय गृहे लक्ष्मीरूपा स्वगृहव्यवहारदक्षा स्वसन्तानसमुन्नतिपरायणा, स्वपतिभक्तिरता, स्वदेशाचारपरम्परानुगता स्यात् स्वकुलाचारयुता, स्वकीय बन्धुजन मध्यगता सर्वथैवाह्लादयित्री सुमङ्गलीरियं वधूशब्देन सुपुत्रा वीरप्रसूः गृहपत्नी भवेत् दीर्घायुरस्याः पतिः स्यात् तामेव

'इमां त्वामिन्द्र मीढ्वः सपुत्रां सुभगां कृणु।'

दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि। येन सा अपश्यन्त्वा मनसा चेकितानं तपसो जातं विभूतम्। इहप्रजां इहरयिं रराणः प्रजायस्व प्रजया पुत्रकाम इति आशंसन्ती मैत्रेयी इव, सावित्री इव सत्यकामस्य सुवर्चलेवार्कस्य रोहिणीव चन्द्रस्य अरुन्धतीव वसिष्ठस्य गौरीव महेशस्य शचीव स्वर्गपतेः लक्ष्मीव नारायणस्य सर्वसौख्यसमन्विता अतिथीनागतान् साधून् बालान् वृद्धान् गुरूंस्तथा पूजयन्ती यथान्यायं श्वश्रदेव सुखिनी मनोज्ञा ज्ञानसम्पन्ना स्यादिति गोविन्दराजानक आशसते।

# आयुर्वेदे शल्यतन्त्रम्

( ले०—पं० नन्दलाल कौल वैद्यः श्रीनगर )

---

आयुर्वेदस्याष्टाङ्गानि सन्ति। एतेषामष्टानां नामानि, यथा— १ शल्यतन्त्रम्, २ शालाक्यतन्त्रम्, ३ कायचिकित्सा, ४ भूतविद्या, ५ कौमारभृत्यम्, ६ अगदतन्त्रम्, ७ रसायनतन्त्रम्, ८ वाजीकरणतन्त्रं च इति। एतेषां चिकित्साङ्गानां मध्ये रसायन-तन्त्रं तु स्वस्थस्य स्वास्थ्य रक्षणार्थं तथा वाजीकरणं च जीर्णशीर्ण निस्तेजसां रोगिनां चापि बल-वर्णादि वर्धनाय। शेषाङ्गानामुद्देश्यं रोगिनां रोगनिवारणमेवास्ति। एतेषां मध्ये शल्यतन्त्रं तु सुश्रुते उत्तमं सर्वोत्कृष्टाङ्गं च उच्यते। एतत्तुवेदशास्त्र प्रत्यक्ष, प्रमाण, अनुमान, उपमानानामविरोध्यस्ति। सुश्रुते वर्णितमस्ति— 'यत शल्यतन्त्रं नाम विविध तृण काष्ठ पाषाण पांशु लोहलोष्टास्थि बाल-नख पूयास्रावान्तर्गर्भशल्योद्धरणार्थं यन्त्रशस्त्रक्षाराग्नि प्रणिधान व्रण-विनिश्चयार्थञ्च।'

यस्यायुर्वेदग्रन्थस्य नाम सुश्रुतमस्ति तद्गुरु शिष्ययोर्मध्ये प्रश्नोत्तर रूपेनायुर्वेदस्यैकमत्यमुत्तमं प्राचीनं पुस्तकमस्ति। शिष्यस्य नाम 'सुश्रुत'-इति गुरोर्नाम 'दिवोदास धन्वन्तरिरित्यस्ति। वस्तुतो मेऽल्पज्ञस्य बुद्ध्या-नुसारेण श्रीगुरोर्नाम 'दिवोदासः' इति आसीत्। तस्य सार्थिका उपाधिः (Degree) धन्वन्तरिरिति आसीत्। धन्वन्तरि शब्दो वस्तुतः एवमस्ति। धन्वं शस्त्रसंज्ञकं शल्यतन्त्रं अन्तं पारमियर्ति गच्छति इति निर्वचनेन धन्वन्तरिः। स्पष्टमस्ति य'द्दिवोदासः' एकः उत्कृष्टः शल्यचिकित्सकः धन्वन्तरि ( Surgeon ) आसीत्।

सुश्रुत सूत्रस्थानस्य अष्टमे अध्याये एवं लिखितं विद्यते यत् अस्मिन् शास्त्रे शस्त्रकर्म प्राधान्याच्छस्त्रकर्मैवतावदुपदेक्ष्यामः तत् सम्भा-राश्च। तच्च शस्त्रकर्माष्टविधम्। तद्यथा—छेद्यं भेद्यं लेख्यं वेध्यमेष्यमा-हार्यं सीव्यमिति। सुश्रुते छेद्यादि कर्मसाधनानि शस्त्राण्युपर्युक्तानि सुश्रुत-सूत्रस्थानस्याऽष्टमे अध्याये लिखितानि। 'विंशति शस्त्राणि। तद्यथा—

मण्डलाग्रं ( A round edged knife ), करपत्रं ( Saw ), वृद्धिपत्रं ( Probabaly a Razor ), नखशस्त्रं ( Nail clipper ), मुद्रिका ( Finger shaped a single edged knife ) उत्पल-पत्रं ( A knife shaped like a lotus petal ), अर्धधारं ( Lancet ), सूची ( Needle ), कुशपत्रं ( A long thin knife shaped like the blade of kusha grass ), आटीमुखं ( Long pointed knife ), शरारिमुखं ( Scissors ), अन्तरमुखं ( A kind of Scissor ), त्रिकूर्चकः ( An instrument consisting of three needles ), कुठारिका ( Probabaly an axe shaped instrument ), व्रीहिमुखः ( Trocar ), आरः ( An awl ), वेतसपत्रकः ( A long lance shaped instrument probably used in venesection and tapping of Ascites and hydrocele) बडिशं ( Fishhook shaped instrument ), दन्तशंकः ( An insrument like tooth pick ), एषणीः ( Probe )। दुर्भाग्यवशात् सम्प्रति भारतखण्डे अथवा भूमण्डलस्यऽन्यस्मिन् कस्मिश्चित् खण्डे एतानि शस्त्राणि यथावत् एतैर्नामभिः नैव उपलभ्यन्ते, तथापि येन २ शस्त्रेण यत् यत् कर्म साध्यते तत् तदपि शास्त्रेषु अभ्यस्तकर्मैः चिकित्सकैः उक्तं स्यात्। तद्यथा—मण्डलाग्र करपत्रे स्यातां छेदने ( Incising ) लेखने च ( Scraping )। वृद्धिपत्र, नखशस्त्र, मुद्रिकोत्पलपत्रकार्धधाराणि छेदने ( Incising ) भेदने ( Excising ) सूचीकुशपत्राटीमुख शरारिमुख त्रिकूर्चकाणि विस्रावणे ( Lething out pus as for example from a deep seated abscess ) कुठारिका व्रीहिमुखारा वेतसपत्रकाणि व्यधने ( Puncturiug ) सूची च। बडिशं दन्तशंकश्चाहरणे ( Extracting solid bodies )। एषणी एषणे (Probing) आनुलोम्ये च। सूच्या सीवने (Stiching)। इत्यष्टविध कर्मसूपयोगः शस्त्राणां व्याख्यातः। ( सुश्रुत सूत्रस्थान ८ अध्याय )।

न केवलं एतेषां शस्त्राणां कर्मस्वैवोपयोगः उपदिष्टः स्यात् । अत्युन यासू यासू व्याधिषु यद्यच्छस्त्रकर्मोचितं तदप्युक्तम् । यथा—"छेद्या भगन्दरा ग्रन्थिः" इत्यादि ।

शल्यचिकित्सा तु केवलं सुश्रुत एव नोपलभ्यते, किन्तु सर्वेषु आयुर्वेदस्य मूलग्रन्थेषु अपि । यथा—

पाटनं व्यधनं चैव छेदनं लेखनं तथा ।
प्रच्छन्नं सीवनं चैव षड्विधं शस्त्रकर्म तत् ॥

के रोगाः च पाट्या के च वेद्या इत्यादि इत्यपि शास्त्रेषु लिखितं विद्यते, तद्यथा—

'नाडीव्रणाः पक्वशोथास्तथा ज्ञातगदोदरम् ।
अन्तः शल्याश्च ये देश्याः पाट्यास्ते तद्विधाश्च ये ॥
वृकोदराणि सम्पक्वा गुल्मा ये ये च रक्तजाः ।
वेध्याः शोणितरोगाश्च वीसर्पिपिडिकादयः ॥
अर्शं प्रभृत्यधीमांसं छेदनेनोपपादयेत् ।
उद्वृत्तान् स्थूलपर्यन्तानुसन्नान् कठिनान् व्रणान् ॥
किलासानि सकुष्टानि लिखेल्लेख्यानि बुद्धिमान् ।
वातासृग्ग्रन्थिपिडकाः सकौठा रक्तमण्डलाः ॥
कुष्ठान्यभिहतं चाङ्गं शोथांश्च प्रच्छयेद् भिषक् ।
सीव्यं कुक्षिदरान्त्रं तु गम्भीरं यद्विपाटितम् ॥
इति षड्विधमुद्दिष्टं शस्त्रकर्ममनीषिभिः ॥"

चरक० चि० ५ अ० ॥

वृद्ध वाग्भट्टादीनामायुर्वेदिक ग्रन्थानाम् अवलोकनमात्रेणापि स्पष्टं भवति । यदायुर्वेदे शल्यचिकित्सायाः स्पष्टतया निरूपणं अस्ति, पुनश्च यत्तस्मिन् समये शल्यचिकित्सायाः प्रयोगाः स्पष्टतया प्रचलितः आसीत् ।

जगतोऽति प्राचीन ग्रन्थस्य ऋग्वेदस्यावलोकनादपि एतत् स्पष्टं भवति, यत्तस्मिन् कालेऽपि धन्वन्तर्यादीनां ( वैद्यानां ) शल्यचिकित्सा

क्रियायां अधिकार आसीत्। यथा च--'सद्यौ जङ्घामायसीं विश्पलायै धने हिते सर्त्तवे प्रत्यधत्त। ऋ० १।११६।१५।' 'हे अश्विनौ युवां छिन्नजङ्घायै विश्पलायै गमनार्थं लोहमयीं जङ्घाम् कृतवन्तौ।' अनेन विधिना ऋग्वेद १। ११६। १५ मन्त्रस्य अवलोकनादपि स्पष्टं निर्णीयते। यत् भारतवर्षे तदानीं अपि कृत्रिम नेत्राणां प्रयोगः प्रचलितः आसीत्। यथाह डा० मैक्स निव बरगर ( Dr. Max Nevburghar ) स्वकीये सुप्रसिद्ध "हिस्ट्री आफ़ मिडिसन" ग्रन्थे—

"The apparently spontaneous appearance in sicily in the 15th century, of Rhino—plastic Surgery bespeakes a long period of previous Indo—Arabian influence. The plastic Surgery of the 19th century was stimulated by the example of Indian methods, the first occasion being the new, derived from India, that a man of the brick maker caste had by means of flap from the skin of the focehead fashioned a substitute for the nose of a native."

शवच्छेदन क्रियायाः विना शल्यचिकित्सायाः प्रयोगोऽसम्भवोऽस्ति। तथा च सुश्रुत शारीरस्थानस्य पञ्चमे अध्याये लिखितं विद्यते—

"तस्मान्निसंशयज्ञानं हर्त्रा शल्यस्य वाञ्छताम्। शोधयित्वा मृतं सम्यग् द्रष्टव्योङ्ग विनिश्चयः॥ प्रत्यक्षतो हि यद्दृष्टं शास्त्रदृष्टं च यद्भवेत्। समासतस्तदुभयं भूयो ज्ञानविवर्द्धनम्।" तस्मात्समस्त गात्रमविषोपहतमदीर्घव्याधिपीडितमवर्षशतकं निसृष्टांत्रपुरीषं पुरुषं वहत्यामापगायां निबद्धं पञ्जरस्थं मुञ्जवल्कलकुशशणादीनामन्यतमेनावेष्टितांगमप्रकाशे देशे कोथयेत्। सम्यक् प्रकुथितं चोद्धृत्य ततो देहं सप्तरात्राद्उशीरवालवेणुवल्कलकूर्चीनामन्यतमेन शनैः शनैरवघर्षयंस्त्वगादीन् सर्वानेव बाह्याभ्यंतरांगप्रत्यंगविशेषान् यथोक्तान् लक्षयेच्चक्षुषा। "शरीरेचैव शास्त्रे च दृष्टार्थः स्याद्विशारदः। दृष्टश्रुताभ्यां संदेहमवापोह्याचरेत् क्रियाः।"

आधुनिक यूरोपीयवैज्ञानिकैः स्पष्टशब्दैः उक्तं स्यात यत् प्राचीन भारतवैज्ञानिकाः शवच्छेदनक्रियाविषये निपुणाः आसन्। यथा आह डा० वाइज़ ( Dr. wise quotud in Kunja Lal Bhishagratna's English translation of the Susruta Samhita introduction page 20.) 'The Hindu philosophers undoubtedly deserve the credit of having, though opposed by strong prejudice, entertained sound and philosophical views respecting the use of the dead to the living and were the first scientific and successful cultivators of the most important and essential of the departments of medical knowledge practical Anatomy.

तथैव च डा० हारनले एम. ए. पी. एच. डी, सी. आई. ई, स्वकीये 'स्टडीज़ इन दि मेडिसि आफ एनशियण्ट इन्डिया' पुस्तके वदति- Dr. A. F. R. Hoernle. M. A, Ph. D., C I E, says in his studies in the medicine of Ancient India,:- 'Probably it will come as a surprise to many, as it did to myself, to discover the amount of anatomical knowledge which is disclosed in the works of the earliest medical writers of India. Its extent and accuracy are surprising... ......' इत्थं एव शल्यक्रियाया अन्येषाम् उपाङ्गानाम् अपि स्पस्ष्टतया निरूपणं कृतमस्ति। आयुर्वैदिकः ग्रन्थानामवलोकनेन निश्चीयते यत् शस्त्रप्रक्षालनादिविधिरपि शास्त्रेषु लिखितोऽस्ति। एतैरन्यैपि बहुभिः प्रमाणैः स्पष्टं भवति यत् न केवलम् आयुर्वैदशास्त्रेषु सर्वाङ्गशल्यतन्त्रं ( Surgery ) स्पष्टतया अस्ति। प्रत्युत धन्वतरीयाणां (वैद्यानां) शस्त्रक्रियाविधौ अपि अधिकारः आसीत् सर्वथा शल्यतन्त्रस्य सुप्रचारः आसीत्।



श्रीः

## ॥ हरतु विपदो नः प्रतिदिनम् ॥

( महेश्वरनाथ रैणा ग० घा० )

जगद्बीजन्त्वाद्यं, वहति निगमोक्तं शयतले
मिषाच्छंखस्यादौ दनुजवपुषो लब्धजनुषः ।
सिसृक्षुर्यो विश्वं प्रकृतिगुणसंचोदनकरः
स देवो व्योमात्मा हरतु विपदो नः प्रतिदिनम् ॥ १ ॥
स्मृतोऽमर्त्यैं नित्यं भृगुतनयशिष्याहृतभगै-
र्दधौ तेजोरूपं दितिजपतिवंशक्षयकरम् ।
करे चक्रं यो वै जगदपरबीजं रविभवं
स ब्रह्मात्मा देवो हरतु विपदो नः प्रतिदिनम् ॥ २ ॥
नभस्वद्रूपां यो वहति रिपुविद्रावणपरां
गदां हते वामे दनुजपतिरक्तच्छविधराम् ।
स्वभक्त्यासक्तेभ्यो ऽनुपमफलदः कल्पतरुवत्
स वाय्वात्मा देवो हरतु विपदो नः प्रतिदिनम् ॥ ३ ॥
पयोरूपं पद्मं द्रुहिणजनिहेतुं करतले
दधार श्रीविष्णुर्मुनिहृदयवासी भवहरः ।
स्वभक्तानन्दं यो दिशति परमानन्दवपुषा
सतोयात्मा देवो हरतु विपदो नः प्रतिदिनम् ॥ ४ ॥
गले माला दिव्या वनकुसुमयुक्ता क्षितिमयी
सदामोदासक्तभ्रमरवलिता सौरभयुता ।
धृता येन छन्दोमयगरुडरूढो यदुपतिः
स भूम्यात्मा देवो हरतु विपदो नः प्रतिदिनम् ॥ ५ ॥
पंचभूतात्मकस्यास्य श्रीविष्णोः सुस्तुतिः परा
कृता महीन्द्रनाथेन शास्त्र्युपाधिवता त्वियम् ॥ ६ ॥

---

॥ श्री गोपालाय नमः ॥

गवापचारं विलोक्य कस्यचिद्गोभक्तस्य तन्महिमोद्गारः ।

( महेश्वरनाथ रैणा, गणेशघाटीयः )

मातेति नम्ना जगति प्रसिद्धा
मातेव या गौर्मनुजान्पयोभिः ।
आज्यादिना देवगणान्पितृंश्च-
प्रीणाति, सा हा किमु नो न वन्द्या ॥ १ ॥

श्रौतैः प्रशस्यैर्वचनैर्यथार्थै-
रघ्न्येति नाम्ना भुवि या प्रसिद्धा ।
आर्यैरशेषैः किमु हा न रक्ष्या,
हित्वाप्यसून्धर्मधुरन्धरैः सा ॥ २ ॥

गोलोकधामा भगवानशेष-
देवाधिपः श्रीपतिरप्यसौ याः ।
गाः सेवमानः कृतकृत्यमानी,
तुष्टिं परामाप सुरार्चिताङ्घ्रिः ॥ ३ ॥

तत्राप्यसन्तुष्ट इवावतीर्य-
श्री राधिका भूषितवामपार्श्वः ।
वंशीरवाह्लादितचित्तवृत्ती-
गाश्चारयन् गोकुलकाननेषु ॥ ४ ॥

यत्पादपद्मोत्थ परागमपूता
भागीरथी पावयति त्रिलोकीम् ।
पूर्णावतारोऽपि स कृष्णचन्द्रो-
गा अन्वगात्पावयितुं स्वमंगम् ॥ ५ ॥

श्रीः

उद्धृत्य गोवर्धन पर्वतेन्द्रं
या गा अरक्षन्मुरलीनिनादैः ।
आनन्दयन्वृष्टि भारार्दितास्ताः-
कृष्णोमरेन्द्रार्पित चित्तमोहः ॥ ६ ॥

न्यक्कृत्य पीयूषमपीह तज्ज्ञै-
रुत्कर्ष्यते यन्नवनीतचौरः ।
हित्वापवादं च नवोद्धृतं तद्-
दध्यादि चाचोरयदाप्तकामः ॥ ७ ॥

मातुश्च यस्या महिमा गरीयान्-
एवंविधोऽनन्त उदारकीर्तिः ।
मान्या च सेव्या च समर्चनीया
मातेव सा गौरखिलैर्जनौघैः ॥ ८ ॥ कुलकम्

स्वर्लोकसाहाय्यकरो दिलीपो
राजापचारात्सुरभेः स शप्तः ।
जेतारमिन्द्रस्य रघुं समाप्नोत्,
गोसेवयैवेष्टमनन्त कीर्तिम् ॥ ९ ॥

परीक्षणे स्वस्य च राजवर्यः-
सज्जोऽभवत्यक्तु मुदारवृतः ।
नवं वयो राज्यमदं वपुश्च
तां मोचयन्गां हरिणा गृहीताम् ॥ १० ॥
युग्मम् ।

दृप्तोऽभिमानी दशकन्धरादीन्-
जेता वियातः कृतवीर्यपुत्रः ।

× अहो महाऽविवक्षितो नाऽवाह्य कविना।

सहस्रबाहुर्बलमानदग्धोऽ-
जुर्नोऽपि वंश्यैः सह कामधेनोः-॥ ११ ॥
रुषाय नाशं युधि रेणुकायाः-
पुत्रस्य तीक्ष्णैः परशुप्रहारैः ।
त्रिसप्तकृत्वोऽभवदस्य जाते-
र्नाशश्चतस्याः सुरभेश्च कोपात् ॥ १२ ॥
युग्मम् ।
विश्वम्भरा रत्नधराप्यशेष-
तीर्थाश्रया भूर्यदपि प्रशस्ता । तीर्थाश्रय इति पुंसि प्रयोग एव साधुः।
तथापि तावन्न पवित्रमूर्ति-
र्यावन्न लिप्तामलगोमयेन ॥ १३ ॥
धेनोर्मलं गोमयमप्यनल्पा-
घौघस्य नाशे नितरां प्रसिद्धम् ।
कायस्य शुद्धेश्च निमित्तभूतं
रोगापहं शोकहरं पवित्रम् ॥ १४ ॥
गोमूत्रमेवं दुरितापहारि
पवित्रतापादकमेव शस्तम् ।
अन्तः स्थितस्यापि बहिः स्थितस्य
दुष्टस्य रोगस्य विनाशकारि ॥ १५ ॥
गव्यानि पञ्चैव हि पावनानि
पापापनुत्तौ श्रुतिचोदितानि ।
गङ्गाम्भसोऽपि प्रयतानि शुध्दयै
चान्द्रायणादौ विविधे प्रयोगे ॥ १६ ॥

(१-

श्रीः

यस्यामलं मूत्रमपीह लोके-
सर्वोत्तमं स्थानमुपैति शस्तम् ।
तस्या जगन्मातुरिवात्र मातुः-
किंवर्ण्यतेऽयं महिमा गरिष्ठः ॥ १७ ॥
कुलकम् ।

प्रत्यङ्गमस्याः श्रुतिषु प्रसिद्धा
गन्धर्वविद्याधरकिन्नराणाम् ।
सर्वामराणां च तथा प्रतिष्ठा
गोर्गौरवं किं गुरुणापि गीयते ॥ १८ ॥

पात्राय दत्तं समयानुरूपं
दानं च यस्याः सुरभेः समेतम् ।
सम्भारभारैर्मणिमुक्तरौप्य-
कांस्यादिभिरुद्धरति प्रपन्नान् ॥ १९ ॥

लोकं गतांवापि परं यदीयं
दानं कृतं पुत्रवरैर्वरिष्ठम् ।
पापिष्ठमप्येतदघौघ सिन्धोः-
संतारयत्येव महामहिम्ना ॥ २० ॥

उद्दिश्य या गा अवगूर्यदण्डं
क्षिपेज्जनो वर्ष्मणि पूजनीये ।
न निष्कृतिस्तस्य भवेत्कदापि
भवत्यवश्यं नरके च दण्ड्यः ॥ २१ ॥

जलं पिबन्त्याश्च यदा कदाचित्
कृतान्तरायस्य भवेद्बुद्धिः ।

पिशाचवद् भ्राम्यति निर्जले स
स्थाने तृषार्तो गुरुवेदनाङ्गः ॥२२॥
हिंसाधिया कृन्तति निष्ठुरो गो-
रोमान्यपि क्रूरतरोऽधमो यः ।
तस्य ध्रुवं दण्डधरश्च देहं
छिनत्ति खड्गैर्निशितैश्च कुन्तैः ॥२३॥
पुष्पैः फलैः स्वादुतमैश्च भक्ष्यैः-
कण्डूयनैश्चारुतमैर्विहारैः-
पूज्या च या गौर्हरिणार्चिता सा
हा खिद्यते हा मिषतां पुरो नः ॥२४॥
कदाचिदासन्नचरान्स कृष्णो
गोतर्णकान्गोकुलकाननेषु ।
गोपालबालैः सह केलिसक्तो-
मायाहृतान्केन च निश्चिकाय ॥२५॥
विधातृमायामवमत्य यासां-
ससर्ज प्रीत्यै पुनरप्यमून्सः ।
वयः प्रमाण-स्वगुण-स्वमातृ-
प्रेमानुरुपानिव भीतभीतः ॥२६॥

सुधास्रुतिसुधास्वादन्यक्कारकरणोद्यतैः ।
मुरलीनिनदैः कृष्णो गोपगोपीजनप्रियः ॥२७॥
या गा आनन्दयत्स्वाङ्गाश्रिततदङ्गयोगजैः ।
अमृतैरिव संस्वीन्नो हर्षास्त्रैर्जगतां प्रभुः ॥२८॥

श्रीः

दुष्टापचरितास्त्राश्चदष्टा श्री नन्दनन्दन ।
दूनान्तःकरणाः खिन्ना भवामः करुणानिधे ॥२९॥
गोलोकेशैर्हि गोविन्द स्वाङ्घ्रिपावितगोकुल ।
गोपाल ! शरणं भूया यशोदानन्ददाशुनः ॥३०॥

❀ इति गो महिमा ❀



# संस्कृत भाषैव भारतीय व्यवहारिक भाषा स्यात् किम् ?

(ले० पं० रमाकान्त शास्त्री वैद्यरत्न जम्मू)

श्रियः विगते (आश्विनमासीये) ऽङ्के सम्पादकीयस्तम्भे संस्कृत-भाषा एव राष्ट्रभाषापदे समारोढुमर्हेति विमर्षमधिकृत्य संस्कृतपत्रसम्पादकैः श्रीकालीप्रसाद शास्त्रिभिः प्रेषितात् पत्रात्समुद्धृतः कोऽपि सन्दर्भोऽवतीर्णो मे दृक्पथम। पाठकानां परिचयाय तमत्रोद्धरामिः—

"भारते वर्षे संस्कृतमेव राष्ट्रभाषा भविष्यति भवितुमर्हा च, न चान्या काचिद्भाषा। सिद्धान्तस्यास्य पूर्त्यर्थे सर्वैर्हिंदुभिर्नितान्तं प्रयत्नः कार्य्यः। ये च हिन्दवः हिन्दीभाषार्थे प्रयतन्ते तेऽपि हिन्दुसमाजस्य शत्रवः राष्ट्रसभापि (कांग्रेस इति ख्याता) हिन्दुसमाजस्य विद्रोहिणी, न च हिन्दुभिः कदाचित्सम्मान्या महात्मा गान्धी इत्यादयो राष्ट्रसभाया नेतारश्च सनातनधर्मोच्छेदकाः "। इति।

भारतमिदं पञ्चत्रिंशत्कोटिमितै र्नानाधर्मजात्युपजातिसम्प्रदायादि पक्षपातदूषितान्तः करणै धर्मान्ध्य पराराज्य दारिद्र्य शिक्षाऽभावा

दिपातकपरम्परासन्दुष्टजीवनै रसंख्यभाषाभाषणादुरूहै र्जनैः परिपूर्णम्। एतादृशे देशे कथमिव संस्कृतभाषेयं राष्ट्रीत्यभाषत्वेन संग्राह्या ? कोऽसौ वीरपुङ्गवो यो वै दुस्साध्येऽस्मिन्नर्थे सिद्धिमासादयितुं क्षमः ? इत्यादीनां परमावश्यकानां प्रश्नानां पक्षपातमिथ्याभिमानतिमिराशून्येन चेतसा समाधानमविधायैव हिन्दी पक्षपातिनां, गान्धीमहानुभावस्य, राष्ट्रमहासभायाश्चायुक्तिसंङ्गतं गर्हणं साम्प्रतमसाम्प्रतं वेति विचारणीयं मनीषिभिः।

अद्यापि हिन्दुसमाजस्य, सनातनधर्मस्य संस्कृतभाषायाश्च परमहितैषिभि रेतादृशैः ('संस्कृत' सम्पादकप्रमुखैः) सौहार्दसुधा निस्यन्द सरसमानसै रशून्येयं भारतभूरिति सत्यमेवावसरः किल प्रचुरस्य प्रमोदस्य। परमेते एव महानुभावास्तात्विकाः सनातनधर्मप्रतिनिधयः ; गान्ध्यादयो नेतारः, हिन्दीपक्षपातिनो हिन्दवश्च नास्तिकाः सनातनधर्मोच्छेदकाश्चेत्यत्र का युक्तिः ? विगते राजसभानिर्वाचनावसरे ( General Election ) कथमेते गाढनिद्रावमूढा अभूवन् ? गेहेनर्दित्व मन्तराऽजन्म सार्वलौकिकलाभाय कदा प्रपतितमेतैः ?

एकदा कश्चित्परिहासप्रियः प्रयागविश्वविद्यालयच्छात्रो मम सयात्रिकत्वेन रेलारूढः एतादृङ्महानुभावानां प्रशस्तिप्रसङ्गे श्लोकमपठत् कश्चित् ; सोऽद्यापि मे स्मृतिपथवर्ती-

"परान्नभोगः किल दक्षिणा च
भवेत्सुलभ्या यदि नः सदैव,
देशोऽथ राष्ट्रञ्च तथैव धर्मो
नश्यन्तु कामं, नहि कापि हानिः।"

'संस्कृत' सम्पादकमहेच्छानां मतानुवर्तिभिः श्रीमान्मालवीयमहोदयः, विद्वत्सार्वभौमो भारतभूतिलकस्तिलकः, कविसम्राट् टैगोर इत्येते सर्वेऽपि सनातनधर्मविद्रोहिणः एव मन्तव्याः।

यद्धर्मानुवर्तिभिः स्वीयाः सधर्मिणोऽद्यापि अस्पृश्या मन्यन्ते,

यद्धर्मानुगो विप्रोऽपि अन्यप्रान्तस्थेन सर्वथा सदाचारपरिपूतेनान्येन विप्रेण साधितमन्नन्नोपभुंक्ते तत्र मोहम्मदीयाः क्रिश्चीनाश्च संस्कृत भाषां माप्रलयमपि राष्ट्रभाषात्वेनाभ्युपगमिष्यन्तीति संशय एवासन्छेद्यः।

ग्रामस्यैकस्य भाषापि यदि संस्कृतभाषा कर्तुं पार्य्येत एतै र्हिन्दु-समाजहितेषुभि स्तर्हि खल्वनुमातुं शक्यते कदाचिद्वारतस्य राष्ट्रभाषा भविष्यति संस्कृतम्। अन्यथा तु 'भविष्यति' इत्यादि कथनं सर्वथापि प्रलापनिर्विशेषमिति।




॥ ॐ श्री गणेशाय नमः ॥

# शास्त्रेषु स्त्रीणां पूजाविधिः

लेखकः—निरञ्जन हुण्डू, गणेशघाट, श्रीनगर, काश्मीर।

अहो खेदास्पदमेतत्। यत् स्वार्थसाधनतत्पराणां विधर्मिणां मिथ्या-प्रचाररूपे पाशे पतिता इदानीन्तनाः केचनजनाः 'अस्ति हि सनातन-धर्मावलम्बिनां धर्मशास्त्रैः स्त्रीजातिरपमानिता' इति कथयन्ति। परं तेषा-मर्थे श्रुतिरपि स्वयमेव 'यद्यन्मनुरब्रवीत्तद्भेषजम्' इति दर्शयति। उक्तं

हि श्रीमता कालिदासेनापि—' माननीयो मनीषिणामिति ' । अपि च—ग्रमेवाद्यतनीयाः केचन जनाः स्त्रीजात्याः शत्रुं कथयन्ति । तेनैव मनीषिणा भगवता पूज्यतमेन मनुना स्त्रीणां विषये मानसत्कारादिशब्दानामेव प्रयोगो न कृतः । किंतु ' पूजाशब्दप्रयोगमपि कुर्वता तेन कथितमस्ति= यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ' ॥१॥ इति

तथाचान्यान्यधर्मशास्त्रेष्वपि—' यत्र नार्यो न पूज्यन्ते श्मशानं तत्रवै गृहम् ॥ इत्यादि ॥ कीदृशी भीषणा विस्मृतिरन्यायस्य पराकाष्ठाच वर्ततेऽधुना यत् स्वार्थिनांविधर्मप्रचारकाणांअन्तेवासित्वं प्राप्ताः केचनजना एतादृशानि धर्मशास्त्राणि निन्दित्वा एतादृशं मनुं च ' अन्धेनैव नीयमानाः यथान्धाः ' इतिन्यायेन स्त्रीजात्याः शत्रुं कथयन्ति । अपि च ' सर्वस्त्रीनिलया ' ' जगदाम्बामयंपश्य स्त्रीमात्रभविशेषतः ' इत्यादिभिः प्रमाणैः जगन्मातेव स्त्री अपि सनातनधर्मावलम्बिनां शास्त्रेषु माननीया पूजनीया च कथिता । स्त्री तिरस्कारश्च तेष्वेवशास्त्रेषु—

स्त्रीणां निन्दां प्रहारं च ,
कौटिल्यंचाप्रियं वचः ।
आत्मनो हितमन्विच्छन् ,
देवीभक्तो विवर्जयेत् ॥१॥

—इत्यादिभिः प्रमाणैः निषिद्धः ।

' वयं हि विष्णुभक्ताः शिवभक्ताश्चेत्यतो नैतं स्त्रीतिरस्कारनिषेधं स्वीकुर्मः । यत एतद्देवीभक्तामेवार्थे ' इति यदि पूर्वपक्षिणा आशंकन्ते । तर्हि तेषामर्थेऽस्त्येतदुत्तरम् तथाहि यतो हि महाकाली, महालक्ष्मी, महासरस्वती, रूपेण त्रिशक्त्यात्मिकायाः गायत्र्या उपासकाः भवन्ति प्रायशः द्विजन्मानः । अतस्तैरात्मनि देवीभक्तत्वं शीघ्रं स्वीकरणीयम् ( गायत्र्युपासकत्वादिभि भावः ) । येतु नगायत्री उपासकाः सन्ति । ( किंतु विष्णुभक्ताः शिवभक्ता एव ) तैरप्येतत्स्वीकर्तव्यम् । यतः शक्तिविना ईश्वरस्य प्रभुत्वमेव नास्ति । इत्युपर्युक्तवचनैः स्त्रीनिन्दापातकादवश्यमात्मा रक्ष-

णीयः । इति ।

अपि च—

(२) ईसाई अथवा क्रिस्तन धर्मावलम्बिनां धर्मपुस्तकेषु स्त्रीजातिः उच्चतरा प्रतिष्ठितपदा च कथिता, न सनातनधर्मावलम्बिनां मनुस्मृत्यादि-शास्त्रेषु' इति च ये केचन कथयन्ति तत्रैतत् पूर्वं द्रष्टव्यम् । यत् क्रिस्तननां पुस्तकेषु कथं स्त्रीजातेरुत्पत्तिः । कथं च सनातनधर्मावलम्बिनां पुस्तकेषु इत्यत्रविषये सनातनधर्मावलम्बिनां भागवतादिपुस्तकेषु इत्थं वर्णितमस्ति —.

(३) 'कस्य कायमभूद्द्वेधा' भगवान् हि यस्य मनोः सृष्टिं पूर्वमेव निर्ममे, तस्यैव मनोर्दक्षिणभागं, स्वायम्भुवमनुरूपिणं पुरुषं, वामभागं च शतरूपाभिधानां स्त्रीमरचयत् । इत्यतः स्पष्टतया प्रतीयते । यत् सनातनधर्मावलम्बिनां ग्रन्थेषु स्त्रीपुरुषयोरैक्यं वर्णितमास्ति । अत एव च शंकरस्या प्यर्धनारीश्वरत्वम् । इति ॥

(४) क्रिस्तनानां 'बैबिल' इत्याख्यस्य धर्मपुस्तकस्य प्रथमभागस्य प्रथमेऽध्याये 'भगवान् हि सर्वं जगदिदं च सर्ववस्तुजातं स्वसंकल्पेन निर्माय,स्वप्रतिविम्बेनैव मनुष्यमप्यरचयत् । ततश्च तस्यैव पृष्ठदेशादेकम-स्थिशकलमादाय स्त्रीं निर्ममे' इति 'बैबिल सिद्धन्तानुसारेण स्पष्ठतया प्रतीयते । यत् भगवान् सर्वेषां पुरुषाणामेव न किन्तु पशुपक्षिकृमिकीट वृक्षपाषाणादीनामपि सृष्टिं स्वसंकल्पेनैव रचितवान् । केवलं स्त्रीमेव पुरुषशरीरान्तर्गतास्थिशकलेनारचयत् । न स्वसंकल्पेनेतिभावः ॥

(४) यवनादि धर्मावलम्बिनस्तु क्रिस्तानमतानुसारिणएवेति ॥

जानन्तु स्वयमेवोपरिलिखितैः प्रमाणैः सर्वे विद्वांस. पण्डिताः छात्राः सतीर्थ्याश्च । यत् सनातनधर्मावलम्बिनां शास्त्रेषु स्त्री जातेरुत्पति-स्थानं कीदृशं माननीयं पजनीयं च । क्रिस्तनादिधर्मावलम्बिनां पुस्तकेषु कीदृशं घृणाजनकमिति नास्ति पुनः कथनस्यावश्यकता ॥

५ तथा च सनातनधर्मानुयायिनां वैवाहिक मन्त्रैः सुष्ठु प्रतीयते । यत् स्त्री भर्तुगृहे सर्वोत्त माधिकारिणी भवति । यतस्तस्मिन् समये सम्राज्ञी भव इति वरेण धर्मपत्नी कथ्यते । इत्यतो न भर्तुगृहे स्त्री नीच पदवीं

प्राप्नोति । अपि तु सर्वोत्तमामेव ।

अपि च 'गृहिणी गृहमुच्यते' इत्यादिभिर्वचनैः स्त्रियैवगृहस्य गृहत्वं भवतिन पुरुषेणेति ॥ पत्युः प्रवासे स्त्रीएव गार्हपत्याग्नेः पूजाकर्तुं शक्नोति । परं स्त्र्यभावे पुरुषो गार्हपत्याग्नेः पूजां कर्तुं नशक्नोति । इत्थमेवास्माकं शास्त्रेषु 'स्त्रीं विना पुरुषस्य तीर्थयात्रादि कार्याण्यपि निषिद्धानि सन्ति । इति ॥

अन्यच्चास्माकं शास्त्रेषु भगवान् जगत्पितैव न मन्यते किंतु मातापि । उक्तं च—त्वमेवमाता च पिता त्वमेव । माता धाता पितामहः । इति ॥

तथा च भगवतोऽवतारेषु मोहिन्यवतारोपि स्त्री रूपेण गण्यते । इति नास्ति सनातन धर्मावलम्बिनां शास्त्रेषु स्त्रीजातिरपमानिता ।

अपि च—यथा शरीररूपेणरथेन सारथिरूपायाः बुद्धयाः सम्बन्धो भवति । तथैव मनुष्यजातावपि दम्पत्योः परस्परं सम्बन्धो भवितव्यम् ।

अत एव च सनातनधर्मावलम्बिनां शास्त्रेषु 'गौरीशंकर' 'लक्ष्मीनारायण' 'सीताराम' राधाकृष्णोत्यादि दम्पतीनां उपासनायाः विधिरपीत्थं प्राप्यते ।

'अस्तिहि सनातनधर्मावलम्बिनां शास्त्रेषु स्त्रीजातिरपमानिता' इति येकथयन्ति । नैतद्युक्तं पूर्वोक्तैः हेतुभिः ॥

॥ इति शम ॥



# का नाम हिन्दुता कथं चेयमुपकरोति लोकस्य.

निबन्द्धा—पं० चारु देव शास्त्री, एम. ए. एम ओ. एल.
संस्कृत प्रोफैसर डी. ए. वी. कालेज लाहौर।

हिन्दुता नामेह भरतभुवि काले काले लब्धोदयानां विचारविकल्पानां समन्वय इत्यभ्युपगमो विपश्चिताम्। रुचिवैचित्र्यात्प्रातिस्विकप्रतिपत्तिसामर्थ्यानुरोधाच्च येन केनर्षिदृष्टेन मार्गेण प्रस्थातुमभ्यनुज्ञायन्ते स्म लोकाः।

उक्तं च वैयासिक्यां संहितायाम्—

वेदा विभिन्नाः श्रुतयो विभिन्ना,
नैको ऋषिर्यस्य मतं न भिन्नम्।
धर्मस्य तत्त्वं निहितं गुहायाम्,
महाजनो येन गतः स पन्थाः ॥

इति। हिन्दवो हि सर्वं मतद्वैधं सहन्ते। अत्रैकत्र मते स्थितो यथा वाक्कर्मणोः स्वातन्त्र्यं भजते तथैव मतान्तरे स्थितः। नैतावतैकस्यापरोऽधिगतो भवति। एकत्र मते मतसमुदये वा ऽकुर्वाणः प्रत्ययं न जातु हीनः परस्तान्न चावस्तात्। यथा जैमिनीयस्याभ्युपगतो मोक्षोऽप्रतिहतः तथैव काणादस्य तथैव च कापिलस्यानीश्वरस्य। न खलु मतविशेषाङ्गीकारानङ्गीकारान्वायत्तौ स्वःप्राप्तिनिरयपातौ। न हि केवलं मतविशेषमार्षं श्रद्दधानः सुकृती भवति। यावन्न विहितं धर्ममासेवते न तावद्धार्मिक इति समाख्यां लभते। न च कापि कर्मणाऽसद्वचरितं मन्मेव समाद्रियमाणो जनोऽभि हिन्दुत्वशास्त्रेण। हिन्दुषु धर्मस्यैव प्राथम्यं सर्वकालमासीत्, न मतस्य। अतस्ते मतविषयिणीमसहिष्णुतां बलवत्

गर्हन्त। एवन्तर्हि यदा मतधर्मयोर्गुणप्रधानभावः प्रतिपद्येत, निराक्रिया च मतस्यानुज्ञायेत, कामचारो वा तदुपेक्षायामनुमन्येत। तदाऽसहिष्णुताऽनवकाशा सती विलयं यायात्। न हि मतभेदस्य हेतोः कलहायेत लोकः, अन्योन्यं वा सम्प्रहरेत्, प्रतिपक्षशोणितेन वा पाणी शोणायेत्। योऽयं रुधिरपातो धर्ममुद्दिश्य चिरायाभूद् भवति चेदानीं येन चेतिहासपत्राणि दिग्धलोहितानि स मतप्राधान्यमनुबध्नाति न कारणान्तरम्। तस्माद्यदीच्छन्ति भवन्तो विविधमतानुगाः सुखमविरोधेन च सुभ्रातर इव संवसेयुः, एवञ्जातीयका जनकायाश्च न मिथो वैरायेरन्, धार्मिकाभिमताः श्रद्धालवोऽधार्मिकोत्प्रेक्षितानश्रद्धान्न चोरघातं हन्युस्तर्ह्यविलम्बितमपनेयं मिथ्यारोपितं गौरवं मतस्य, प्रबोधनीया च ग्रामे ग्रामे निगमे निगमे च जनता धर्मः प्रधानं मतमप्रधानमिति।

विधान्तरेणाऽपि हिन्दवः स्वर्यपि मतद्वैधेऽसहिष्णुत्वं स्म वारयन्ते। ऐकात्म्यमिदं सर्वम्, नेह नानास्ति किञ्चनेति ते प्रतिपेदिरे। एक एव न आत्मा, नानात्वं तु देहनिबन्धनम्। देहा भिद्यन्ते न देही।
तथा हि वाजसनेयिन आमनन्ति

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥इति॥

यः परः स द्वेष्यो भवति। पर एव मे नास्ति यमहं द्विष्याम्। आत्मानं कथं द्विष्याम्। अहमन्यमाहन्यामित्युद्यन्नेव विलीयते भावः। कथङ्कारमात्मानमाघ्नीय। कथमहमन्यस्मिन् व्यलीकं कुर्याम्। अलीकं तदन्यत्वं वास्तवं चैकत्वम्। न जातुचित्कुतश्चिद्बिभीयाम्। परस्माद्धि भयं भवति। मम च परो नास्ति। सर्वो देही ममात्मनोऽव्यतिरिक्त इति। एवं दृढभूमिं गते सर्वात्मताविश्वासे सर्वसत्त्वानामहिंसनीयताऽर्थादापद्यते। न खलु कश्चनार्यः क्षोदिष्ठमपि जन्तुं हन्तुमीष्टे। एकात्मत्वं हि वारयति।

एवं चाहिंसा परमो धर्म इति फलितम्। आचर्य्यमाण एष धर्मः सर्वत्र भुवि भावुकं भावयेत् कलिं विकलयेत् शमं च प्रतिष्ठापयेत्।

ऐकात्म्यवादश्च विधिप्रतिषेधात्मकं शास्त्रं सम्यगुपपादयति । दरिद्राति मे प्रतिवेशो स मयोद्धरणीय इति शास्त्रं विधत्ते । कया रीत्येदं मत्कर्तव्यतामियर्तीति न बुद्धिमुपारोहति । कथमहमविषह्यवेदनया क्रोशन्त मनुक्रोशेयम् । अहं क्षुत्क्षामं भोजयेयम्, अनावृतकलेवरं शीतार्तं वा प्रावृत्य सुखयेयम्, प्रमीतपितृकस्याऽसाधनस्य च्छात्रस्योपकुर्यामित्यादिविधानं परम्परीणमपि युक्तिविरहान्न बुद्ध्युपग्राह्यं भवति । तस्य तस्य विधुरस्य जनस्यानुग्रहाय मयेदं विधेयमिति तु स्वप्रकर्षपरं परापकर्षपिशुनमिति नितान्तमरुच्यम् । नक्तन्दिवमभियुञ्जानेन विगलत्स्वेदकायेन विविधं व्यथमानेन यन्मयार्जितं तदहमन्यस्य यस्य कस्यचित्कृते कथं विनियुञ्जीय । मदीयं मदर्थं च तद्धनं न जनकीयं भवति । अन्योहमन्ये च ते । सम्प्रत्युपकृताः कालान्तरे प्रत्युपकरिष्यन्ति तवेत्येवमपि व्याख्यायमान उपकारो न मत्कर्तव्यतामापद्यते । प्रत्याशया चानुष्ठीयमानः पण्यविनिमयान्नातिभिन्नोऽप्रणाय्यो भवति । एवं स्थिते शास्त्रेणाऽनुशिष्यमाणो लोकेन चाद्रियमाण उपकार उपपत्तिमपेक्षते । न च लभते । ऐकात्म्यस्वीकार एव तस्योपपत्तिः । यद्यहं परं दुर्गतमुद्धरामि, आत्मानमेवोद्धरे । परञ्चेदनुगृह्णामि, आत्मानमेवानुगृह्णे । परस्य साचिव्यं चेत्करोमि, आत्मन एव साचिव्यं कुर्वे । इत्थं च शास्त्रविधिरुपपन्नो भवति । परेण केनापि कर्तव्यभारोयं मयि न्यक्षेपीति नेदानीं क्लिश्यति चेतः । सर्वोपक्रियात्मोपक्रियेति सिद्धेऽजस्रं जागरिष्यत्युपचिकीर्षा मयि । नात्र शास्त्रचोदनामपेक्षिष्ये नोत प्रयुक्तिं लौकिकीम् ।

सन्तोषमूलं सुखं दुःखमूलं विपर्यय इति च हिन्दुत्वस्वालक्षण्यम् । तृष्णां छिन्धि, जहि कामं, विरक्तिमापादयेत्युपदिशन्ति तन्त्रकर्तारः, न चात्र विवदन्ते । गृहिणापि स्वार्थं समीहमानेनात्यन्तमपेक्षितमेवोपार्जनीयं यदन्तरा लोकयात्रा नार्हति निर्वोढुम् । न खलु तेन तृष्णावल्ली वर्धनीया । अपेक्षितातिरिक्तमुपार्जयन्तो वयं शतशो जनान् अपेक्षिततमैरर्थैर्विनाकुर्मः । तावदेव हि जगति संविधीयते विधात्रा यावच्छरीरस्थित्यर्थं नितान्तमपेक्ष्यमह इत्याचार्याग्रेसरः श्रीमान्वी । न च तृष्णा

वृद्धिसैपकारिकी । न हि सर्वे कामाः समृध्यन्ति । वहव उत्पद्य च्यवन्ते । यत्ननैरन्तर्येणाप्याराध्यमाना न सर्वे समृध्यन्ति । असमृद्धाश्च दुन्वन्ति मनो गल्पयन्ति च । ग्लानं च मनो न समश्नुते सुखम । न चोपभोग एव कामानां परिणतौ शमयिष्यति कामानिति वाच्यम् । विपरीत फलदर्शनात् । स्मरति च मनुः—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ इति ॥

एवं च तृष्णाच्छेद एवैकान्तिकमात्यन्तिकं च सुखमिति स्थितम् ।

अनियन्त्रितं वर्धमानासु तृष्णासु लोकः परकीयमर्थमभिध्याये दिति नाति चित्रम् । एक देशमधिवसन्ती जनताऽन्यत्रवर्तमानामास्कन्देत् कदर्थयेद्वेति न विस्मरणीयम ।

तृष्णासंवृद्धिश्च न केवलं दुःखा परिणति विरसा च । इयं हि पातित्यजननी । आचारवन्तमपि दूषयति । दृश्यते हि तृष्णातुरोजनः समर्थतरानधिकृतान्वोपतिष्ठासुरनिशमाहिण्डमानः । एकस्य स्तुत्याऽपरस्य निन्दया चाटूक्तिभिश्चाधिकाधिकं लिप्समानः सर्वथा मानाद्धीयते । अभिजातमनभिजातं वा समुद्धतमनुद्धतं वा सर्वं समर्थं इत्येवोपतिष्ठते । निकृतोऽपि न तत्प्रतिहारं जहाति ।

छिन्नप्रायतृष्णेन परिच्छिन्नर्द्धिना गृहिणा विरक्तिरप्यभिलषणीया । एतदर्थं तेन पुत्रेषु निक्षिप्य कार्यभारं स्वयं वनं प्रस्थानीयम् विविक्तं च स्थानीयम् । सम्प्रति तेन हन्तव्यौ रागद्वेषौ । प्रस्मरणीयाः पूर्वे प्रीतिगोचरा द्वेषगोचराश्च । विस्मरणीयाः पूर्वे बन्धवो रिपवश्च । विच्छेत्तव्याः स्नेहबन्धा अर्थबन्धाश्च । यथा स्वीयेषु तथा स्वेषु सर्वथोदासितव्यम् । ऐकात्म्यमिदं सर्वमिति सम्यग्ज्ञातुमनुभूतिविषयतां वा नेतुं निरन्तरं यतनीयम् । अलङ्कारोऽयं हिन्दुतायाः यद् तात्र भरत खण्डे भुवः परिवृढा अपि विरक्तिं चक्रिरे । जनकोटिष्वस्खलितशासना, निग्रहानुग्रहयोः प्रभवः प्रजानां योगक्षेमस्य प्रतिभुवोगण्यवैभवा अपरिमेयपरि-

च्छदाः सम्राजश्चिरं प्रजास्वतन्त्रयित्वा सुखशतानि च भुक्त्वा विरक्तिकामा वनिनो बभूवुः। सर्वं स्वापतेयमहिरिव निर्मोकं विहाय तूलमिवेषीकाया आत्मानं सर्वस्मादिष्टजनात्पृथक्चक्रुः। इत्थं पितापुत्रयोर्विग्रहैरिह खपुष्पायितम्। नह्यत्र पुत्रेणावनिपस्य पितुर्बन्ध एषणीयः, न वाऽस्य बलादवरोपणं राजासनात्, न च निर्वासनं देशान्नचापि छद्मवधः। महन्नामोपकृतं लोकव्यवस्थितेर्वैराग्येण।

व्यक्त्युपकारकं वैराग्यं प्रकारान्तरेणापि बलवदुपकरोति समष्टेः। वनौकसो हि चिरमात्मानं सेधयित्वा नैःस्पृह्यस्य परां कोटिमधिरूढाः समलोष्टाश्मकाञ्चना, निर्ममा, निरहङ्काराः समा मानापमानयो लोकसंग्रहमात्रं चिकीर्षवो राज्यतन्त्रस्योपचक्रुः। राज पारिषदतां गता अधदर्शकतां वा प्राप्तास्तेऽकुतोभयाः साध्वपश्यन् हितं च समाचरन्। समं सर्वेषु निर्बाधमवर्तन्त। न तेषां राजसम्भावना राजावमानना वा प्रयोजिकाभूत्। अवधूतरागद्वेषास्ते नाक्षमन्तान्याय्यमाचरितुम्। येषामयमात्माऽयंलोकस्तेऽनर्हा एकत्र पक्षपातिनो भवितुम्। अपरिग्रहा अनपेक्षास्ते राजप्रभावे प्रचण्डजनकोपेऽपि नितरामनादराः।

इदं तर्हि व्यक्तम्—

वीतरागेणाविर्भूतज्योतिषाऽऽरण्यकेन यथोपक्रियते लोकस्य न तथा प्रयोजनवता मतिमता संसारिणा नरेण। इदं च व्यक्ततरं यावद्देशे सन्तोषवैराग्ययोरनुशिष्टिरार्याणां नोरो क्रियते लोकेन तावत्कुतः सुखं कुतस्तरां च शमिति।

अकारि हिन्दुधर्मस्य व्याख्यानव्यार्थसंयुता।
चार्वीयं चारुदेवेन तां जुषन्तां मनीषिणः॥



X एवमते निषेधार्थ एव गांस्यते। ...
नष्टो नक्रा।

# ॥ मातुः वात्सल्यम् ॥

ले० वार्त्ताक राम नाथः शाला कदल ।

——:❀:——

वात्सल्य रसस्य शुद्ध मूर्तेर्मातुः स्वाभाविकस्नेहस्य सादृश्यं जगत्यस्मिन् (यत्र केवलं स्वार्थ एव प्रधानं वस्तु ), सम्यक्तयान्वेषणेनास्माभिर्नैव कुत्रापि प्राप्यते । अतः सत्यमुक्तं केनापि—(कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ) ये चान्ये मातृस्थानापन्नाः पितामह पितृव्यादयस्तेष्वप्यौचित्य विचारेणाऽथवा मर्यादापरिपालनस्य ध्यानेन स्नेहप्राचुर्यं दृश्यते, किन्तु पितापुत्रयोः स्नेहः केवलं वात्सल्यभावस्यैवाधारे तिष्ठति । अथानयोरपि मध्ये कस्य विशेषतः आदरणीयं सत्यं निस्वार्थञ्च प्रेम विद्यते, इत्येव विचारोऽद्य मल्लेखस्य मुख्योद्देश्यः ॥

जनाः प्रवदन्ति, यत् बालका लालनेन प्रेमातिशयेन चाऽनवस्थां भजन्ते, परं तत्र तत्व दृशा निरीक्ष्यतां, प्रत्येकस्याः साधुताया अंकुराः गुरीप्रत्या प्रेम्णैव बालकेषु संस्थाप्यन्ते । पश्चिमदेशीयः कोऽपि चतुर श्चित्रकारो लिखति, यत् मम मातुरेकवारं मदीयाननस्य चुम्बनेनाहं चित्रकार कर्मणि प्रावीण्यमलभे ॥

शिक्षयन्ति यावत् बालं, वृद्धजना गुरवश्च कतिपयसंवत्सरेषु पाठालये भयप्रदर्शनात्, शिक्षेम तावत् समग्रमेकस्मिन्नेव दिवसे वयः सुतवत्सलायाः मातुरकृत्रिम स्वाभाविकस्नेहेन सत्यस्वाभाविकाऽकृत्रिमप्रेम्नः प्रमाणं मातुः किमपि नातोधिकं भवितुमर्हति, यत् बालो रोदनपरवशः किं न स्यात्, मातुरुत्सङ्गं प्राप्यैव तूष्णीं स्थित्वा प्रमोदयुक्तो भवतीति ।

इत्थमेव यदि बालकेनाल्पकालं यावत् स्तन्यपानप्रवृत्तिर्नकृता, तर्हि मातुरपि स्तनौ दुग्धपूर्णौ भूत्वा दुग्धं बहिः स्रवन्तौ पीडितौ भवतः तथा तस्याः शरीरे पीडोत्पद्यते ।

पृथक् तावत् तिष्ठति पिता गर्भाधानानन्तरं बालस्य, परं जननी दशमासान् गर्भधारणक्लेशं, प्रसवकालीनपीडानुभवानन्तरं लालनपोषणादि चिन्ताचोद्वहति। नीरोगं प्रसन्नचेतसं बालं निरीक्ष्य चेतसो विकसनं, रोगिणं वैमनस्ययुक्तं च दृष्ट्वा स्वान्तमनि वैकल्यमित्यादिरूपः सर्वो दशाविपर्ययो मातरि एव दरीदृश्यते। पित्रोस्तारतम्यं नातोधिकं किमपि स्पष्टतयाधिगम्यते, पुत्रो यदि कर्हिचित् कुपुत्रो नीचश्च जायेत, तर्हि पिता कदापि तस्य सायुज्यं नैवादधाति, किन्तु गेहात्तं निष्कास्य पृथक् करोतीति। परं जननी प्रायः प्राणाधिकप्रियमपि पतिं परित्यज्य नीचमपि पुत्रमनुसरति।

लभ्यन्ते ऽस्यैवानेकोदाहरणानि नैव द्वित्राणि वा, अपि तु सहस्र संख्याकान्यपि देशेऽस्मिन् भारतवर्षे (यत्र पुरुषाणांबहुस्त्रीभिः परिणयविधिः कुकार्यं नैवास्तीति विदित्वा बहूनां विवाहः क्रियते) अनन्तरं च याभिर्बालकस्यात्यन्तकोमलावस्थायां पितुरभावे पेषणोपजीविकया पुत्रस्य पालनं कृत्वा, सर्वथा लेखन पाठनेन च योग्यता दशायां प्रापयित्वा वर्धिताः स्व पुत्राः, बभूवुः पुत्राः अप्येतादृशा बुद्धिशालिनः यत् न भवन्ति तादृशा युवानः सवर्था समृद्धिपूर्णेष्वपि कुलेषु। यदैव च महाकवेः श्रीहर्षस्य पराजितेन पित्रा लज्जया स्वशरीरस्य त्यागो विहितः आसीच्च तदानीं पंचवार्षिको हर्षः। एवं प्रवृते तदा हर्षस्य जननी चिन्तामणिनामधेयं महामन्त्रं तं जापयित्वा सरस्वतीदेव्याश्च कृपापात्रं विधायाऽत्यन्तोद्भटपण्डितमकरोत्। येन सा नन्तरं स्वपत्युः जयवतां पण्डितानां सम्यक्तया वैर्यनिर्यातनं कृतवती। श्रूयन्ते चैवं विधा अनेकाः कथाः पुराणेषु यत्र चमत्कारंप्राप्नोति मातुः वात्सल्यरसः। विद्यते मातुरेकवारं प्रोत्साहनं यथा पुत्रस्य मनसि प्रभावोत्पादकमुपकारि च न तथा पितुः शतश उपदेश ताडनादीनाम्। सुरुचिरित ऽभिधायाः सपत्न्यमातुर्वज्रपातसदृशैर्वाक् प्रहारैस्ताडितेन पितुरवज्ञयाऽवमानितेन सन्तापितेन च यदा पञ्च वार्षिकेण ध्रुव नाम्ना बालकेन ऽभावि, तदा सुनीत्याभिधायाः स्वमातुरेकवारं प्रोत्साहनं, तस्मै ध्रुव पदप्रप्तेर्हेतुरजनि।

न च केनापि भुवि नभोमण्डले वा तादृशमुच्चतरं रमणीयतरञ्च पदम् द्यायावदलङ्कृतम् ॥

प्रत्यभिकाङ्क्षया स्निह्यति पिता पुत्रम्। यदसौ वार्द्धक्ये, यदास्माभिरसमर्थैः स्थीयते, तदान्नादि वस्त्रादीनाञ्च समर्पणेन नः सेविष्यत। इत्यतो लिखनपाठनेन पालनपोषणेन च तैः स वर्ध्यते। परं नास्ति प्रत्ययभिकाङ्क्षायालेशोऽपि मातुरकृत्रिमोदारप्रेम्नः समलम्। अनुभवति चाम्बा यानि दुःखानि स्वप्राणाधिकप्रिय पुत्राय, तान्यनुस्मृत्यैव वात्सल्यरसः आविष्कारतां प्राप्नोत्यऽस्माकं चेतसि।

मातरि पितृवन्नास्ति कोऽपि वासना लेशः प्रत्युपकारस्य।

मन्यतां, सततं च तस्याः समीपस्था, मूर्तिमतीव दया, विपिने सर्वतश्च वर्षयत्यम्भो धारासारैः, परं जीर्णायां पर्णशालायां नास्ति कुत्राप्यावास योग्यमत्यल्पमपि स्थानम्, नच दारिद्र्यात् समीपे किमपि वस्त्रजातम्, यत्परिधाय झंझावातोत्पन्नभयंकरोत्पातेभ्यो भवेत् कापि रक्षा स्वात्मनस्तनयस्य च। परं पूज्याम्बा प्रलयकाले ऽस्मिन्नपि स्वदेहात् वस्त्रपटमवतार्य बालं च स्ववक्षस्थले कृत्वार्धेन तेन स्वात्मानमर्धेन च बालं प्रावृणोति। नास्ति स्वदेहरक्षणे प्राणानां सन्धारणे च लेशोऽपि चिन्तायाः, परं वृष्ट्या पुत्रस्य किमप्यनिष्टं न स्यादित्यत स्तया व्यग्रतया भूयते। या च रोगिणः पुत्रस्याऽस्वास्थ्ये नितरामुदासीना, शयनीयोपवर्तिनी, सास्वनयनाभ्यां सततं न निरीक्ष्यमाणा, आहोरात्रं निद्रा भोजनयोः चिन्तां परित्यज्य तस्य सुष्टुपरिचर्यासु सम्यक् संलग्ना, कदैष स्वस्थो भवेदित्येवं चिन्तयन्त्यास्ते। यो यथा वदति, तथैव क्रियते तया, स्व प्राणाः निर्गमने प्रवृत्ताः किं न स्युः. परं मनो वक्कर्मणा वा सज्जा सा पुत्रस्यैव स्वास्थ्यरक्षणे केवलं पूज्याम्बैव 'षा' यात्मजन्मनः स्नेहपारवश्यात् बहूनि दुःखान्यनुभवति, यानि नैव कदाऽपि स्वदेहे शक्यन्ते सोढुं पित्रा अत एव धीमद्भिर्विविच्यालङ्कृतानि पत्राणि पुस्तकानाम्, यत् मान्यास्ति शतगुणाधिका जननी पितुः सकाशात्।



॥ इति शम् ॥

# चन्द्र भागा

लेखको—पं० हरदत्त शर्म्मा संस्कृत मुख्याध्यपकः
श्री हरिसिंह हाई-स्कूल, जम्मू.

श्री रेवाखिल विश्वमङ्गलकरी सौभाग्य-सिद्धि-प्रदा।
श्रीमन्तः कुलभूषणा भुवि जनाः श्रीशं नमस्कुर्वते।
निःश्रीको न विराजतेऽत्रबलवान् भूपोऽपि विद्वानपि।
श्रीसम्पादकता सदा विजयते तस्माच्छ्रयामः श्रियम् ॥१॥

श्रियः श्रीमन्ति कानिचिदक्षराणि वाचितान्येव-
मे स्वान्तं नितान्तं निरस्त विषयान्तराभिज्ञं व्यदधन्त।

## अतः

घर्मेऽखनूराख्य पुरस्थितेन मनो विनोदाय मया गुरूणाम्।
अलेखि पद्यात्मक पत्रमेकं श्री पाठकेभ्यश्च पुनर्लिखामि ॥२॥

यत् कारुण्य परम्परैव सततं विद्यालवाभिज्ञता,
रागद्वेष मलाप हारि रुचिरं यद्दर्शन स्पर्शनम्।
यत् पुण्य स्मृतिरेव पावनकरी तन्मद्विधानाम्वलं,
श्री पितृव्य पदारविन्द ममितानन्दाय वन्दामहे ॥३॥

शमस्ति तत्रास्त्विवति लोकलेखः पत्रेषु तात प्रचुर प्रचारः।
भवत्स्वसौ लेखविधिः कथं स्याद् यतो विभेति स्वयमेव भीतिः ॥४॥
प्रातः समुत्थाय गृहात् पदातिः स्मरन् भवत् पुण्य पदार विन्दम्।
सुखेन चाहं दशनाद काले श्री चन्द्रभागा पुलिन स्थितोऽस्मि ॥५॥

## चन्द्र भागास्तवः

या देवी रौद्रनादा स जवन गमना शैल सम्पात चण्डी,
माद्यन्तं दुष्कलिं तं कवल यितुमिवोपात्त भीमावतारा,
दुष्ट व्रातापनुत्यै प्रवहति विचलत् काष्ठ संघं वहन्ती,
सा मां संसार भीतं त्रिभुवन जननी चन्द्रभागा पुनातु ॥६॥

यस्यास्तीरस्थितानां पुलकित वपुषां दर्शनानन्द भाजां,
घर्मेऽपि स्नातपीतामृतमय पयसां दन्तवीणाः कणन्ति,
यस्यां वा वस्त्रबद्धान् लघु जल निहितात् शीतलान्तस्थ वीजान्,
आम्रान् चूष्यन् तटस्थोऽप्यनुभवति जनो जीवनानन्द सारम् ॥७॥

शैलोद्धर्षण घोषणा कल कलै स्तीर प्रपन्नान् जनान्,
यच्छन्तीव निजामलं परिचयं वक्ति शृणुध्वं वचः,
स्नात प्रातरिहैव नित्य नियमेनास्मिन् मदीयाम्भसि,
निर्यास्यन्ति यतो वपुः पुलकित व्याजेन पापानि वः ॥८॥

क्षणे वियुक्तैः क्षण संगतै र्वा क्षण प्रयाणैः सुरदारुभिर्या।
तथा स्वरूपामिव देहभाजां वियोग संयोग कथां व्यनक्ति ॥९॥

यस्याःपुण्याम्बु श्रद्धो विष मिव विषयान् मन्यमानो मनस्वी,
हेयोपादेय शून्यो विकसित धिषणः क्षीण सङ्कल्प पाशः,
ब्रह्मैवेदं जगत् खल्विति सदनुभवन् ब्रह्मसायुज्यमेति,
सामा मम्बा भवाब्धे स्तट विकल मतिं प्राप्त पारं करोतु ॥१०

निपात्य कामादिरिपून् सदोजसा मनः समाधाय गताखिलेषणः।
गोपालबालेति जपन् मुदासदा कदाश्रये रम्य तटस्थलीं तव ॥११

संयाचे न धनोत्सुकस्त्रिभुवनस्यापीह राज्यं शिवे,
यल्लोकद्वयनाशनं तदपि मे वामासुखं नेप्सितम्।
किन्मूलित पाप ताप निचयं कृष्णेति दिव्यं वचः।
त्वत् पुण्ये पुलिने स्मरन् सुख मसूं स्त्यक्ष्यामि मातः कदा ॥१२॥

सर्वं नश्यतु मे पतन्त्वहरहो वज्रा इव व्यापदः,
भीतो नास्मि यमादपि प्रविचले देहो यियासु र्यदि,
मातः सम्प्रति केवलं चरणयो रेषा मभ्यर्थना,
भूयाल्लोचन गोचरो मम हरिर्गोपालबालः क्वचित् ॥१३॥

श्रीः

कीर्तिर्यातु रसातलं मम जगल्लज्जा कचिन्मज्जतु,
स्वैरं वैर मथातन्नोतु निपुणो दोष प्रवीणो जनः,
स्नेहः स्नेह वियुक्तदीपक इव स्वीये जने शाम्यतात्,
भूयाल्लोचन गोचरो मम हरिर्गोपाल बालः कचित् ॥१४॥

प्राशिभि तातङ्न न युज्यते

काम कापि चल व्रजाभिलषितं रे क्रोध यत्र कचित्,
स्यान्मे लोभ विमोहयोरपि परं दीर्घो वियोगोऽधुना,
चेतो निर्मलतां श्रयाथ सकलं जह्याशु तच्चापलम्,
भूयाल्लोचन गोचरो० ॥१५॥

शाकेन यो विदुर लोचन गोचरोऽभूद्-
भुक्तानि येन च शवरी बदरी फलानि।
कृत्ताण्य येन विभीषण भीष्णाभी-
स्तं भक्तवत्सलमहं शरणं व्रजामि ॥१६॥

नजोज्वलैः शीतल शीकरैर्या प्रयाति गाङ्गं सलिलं हसन्ती,
करोतु सामा मतुल प्रभावा श्रीकृष्ण पादाम्बुजभृङ्ग राजम् ॥१७॥

❀ इत्यलम् ❀

तया कयाचित् सुतयोग्य सेवया दया दयालोप्रणते विधेया।
स्वकीय मुक्ताक्षर शोभितं मुदा पत्रोत्तरं सत्वर मेवदेयम्॥१८॥



## विवाहवयो विवेचना (४)

निबन्धा—श्री दीनानाथ शर्म्मा शास्त्री मुलतानस्थः।

'यो अस्मभ्यमरातीयाद् यश्च नो द्वेषते जनः।
निन्दाद् यो अस्मान् धिप्साच्च सर्वं तं भस्मसा कुरु॥'

यजुः ११। ८०।

श्री पाठकैर्मम 'विवाहवयोविचारः' ४।२:३ 'विवाहवयोविमर्शः' ५।२-३ 'विवाहवयोविवेकः' ६।१-२ इति निबन्धा दृष्टाः स्युः। तत उत्तरं स्ना० महाशयस्यावशिष्टविषयनिराकरणे 'विवाहवयोविवेचना' इति निबन्धोऽवतार्यते।

गताङ्के मल्लेखे काश्चित् पङ्क्तयस्त्रुटिताः। ता इत्थम्—पृ० ३२ पं० ४ 'प्रेतं त्वाम्' 'मृतक शरीर जिसका नाम प्रेत है' सत्यार्थ० पृ० १५। अत एव १८।३।२ मन्त्रे 'प्रेत' स्य पर्यायः 'गतासुम्' इति। पृ० ४२ पं० ११ तोऽग्रे—'इत्थं ५६२ श्लोकमात्रं पराशरप्रोक्तधर्मशास्त्रवचनानि, अवशिष्टः २३ श्लोकास्तदीय × × ×। पृ० ५३ पं० २३ 'ब्राह्मणस्योपनीता' अत्र 'उपनीता' इति क्रिया सामान्यवाचकः, न तूपनयनस्य; अत एवाऽथर्ववेदे ५।१७।६ मन्त्रे 'उपनीता' इति न, किन्तु 'अपनीता' इत्येव पाठः।

हन्त! पक्षपातकलुषितदृक् श्रीमान् 'यः कश्चित्...स सर्वोभिहितो वेदे' २।७ इति प्रसिद्धं मनुं वेदविरुद्धमुक्त्वाऽऽत्तिपति। परमस्माभिः 'द्वादशवा० ६।६४' इत्यस्य वैदिकताऽसकृत्साधिता, या श्रीस्नातकेनाऽस्पृष्टा। सोऽस्मिन्पद्ये (६।६४) विविधपरिवृत्तिं पुष्णन् 'त्र्यष्टवर्षः' 'अष्टवर्षः' इत्यत्रैव विश्रान्तः। 'विनायकं प्रकुर्व्वाणो रचयामास वानरम्'। 'त्र्यष्टवर्षः' इत्यत्र 'अष्टवर्ष' पाठो मुद्रकभ्रमाद्भवति न पाठभेदवशात्। यथा मल्लेखे ४।२ पृ० १० पं० १६ मुद्रकप्रमादान्मुद्रितम्। 'त्र्य' इति। वर्ण्यां प्राचीनकालाऽङ्कयमानेन 'त्र' कारेण मिलतिः तन्मूलिकैवा-

शुद्धिः, नतु तथा मूलपाठः; तेन भवद्व्याजमात्रमत्र । परन्तु 'द्वादशवार्षिकीमि' ति प्रकृते न किञ्चित्पर्यवर्तिष्टेति सिद्धाऽस्य प्राचीनता।

अग्रे स डा० भगवान्दासं (?) मत्वपेक्षयाऽधिकं वैदिकं मन्यते, बत !। श्रीस्नातको यदि शैथिल्यात्स्वपक्षं साधयितुमनलं तर्हि मनुं भगवान्दासापेक्षया मूर्खं कथं साधयति ? हन्त !! 'अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते'। 'द्विदशवार्षिकी' मिति तत्कल्पितः पाठः; न कापि स मनोरुक्तः। यदि मनोः २० वर्षीया विवाहोभीष्टोऽभविष्यत्तर्हि स 'हृद्यां विंशतिवार्षिकी' मित्यलेखिष्यद् यत्र च्छन्दोभङ्गोपि नासीन्न च सन्देहः; तेन 'द्विदश' इति कल्पनामात्रम् । एवम् 'अष्टिवर्षा' मित्यपि । नहि मनुनाऽप्रतीतदोषः स्थाप्यते जातु संख्यायाम् । अतः स्वपक्षशैथिल्यान्मनुग्रन्थे दुराक्रमणमात्रं सिद्धम्। अयं सुप्रसिद्धश्लोकः सर्वत्रानेनैव (द्वादशवार्षि०) रूपेणोद्धृतो नान्यथा। श्रीमताप्ययं स्वयं सुप्रसिद्धो मतः, एतत्खण्डने ऽशक्तत्वाच्चाऽस्मत्पक्षः साधितः।

श्रीरामशास्त्रिमतपरीक्षा ।—अग्रे श्रीमान् श्रीरामशास्त्रिणं प्रमाणयति । स्ना० म० सद्दृशामीदृशीं दुश्चेष्टां निरीक्ष्य विस्मयामहे। किं भवान् म० म० रामशास्त्रिणं म०म० शिवदत्तञ्च प्रमाणीकरोति? एवं चेत्तर्हि उभाभ्यामेव 'द्वादशवार्षिकी' मित्येवपाठो मतो न 'द्विदशवार्षिकीम्' 'अष्टिवर्षा' मिति, किं भवानेतयोर्मतं संस्यते ? अस्यैव प० रामशास्त्रिमतस्य प० शिवदत्तकृतं खण्डनं श्रूयताम्—"अष्टवर्षाशब्दे एकशेषाङ्गीकारस्तु राममिश्राणां प्रौढिवादेनैव, एकशेषसूत्रस्थभाष्यविरोधात्" इति दुर्गाचार्यटीकितनिरुक्ते ३।१५।१ टिप्पण्यां द्रष्टव्यम् । परं मम त्वियमाशा-यदधुना पूर्वप्रमाणितोपि प० शिवदत्तोऽप्रमाणो मूर्खश्च सेत्स्यति स्नातकदृष्टौ । "संख्याया अर्थासम्प्रत्ययादन्यपदार्थत्वाच्चाऽनेकशेषः। संख्याया अर्थासम्प्रत्ययादेकशेषो न भविष्यति, अन्यपदार्थत्वाच्च संख्याया एकशेषो न भविष्यति" इत्येकशेषसूत्रस्थभाष्यमपि कदाचिदप्रमाणी कुर्याच्छ्रीमान् !

अहमप्यत्र मीमांसे–'अष्टवर्षा' अत्र 'अष्टौ च अष्टौ च इत्यष्टौ। इति १६ वर्षाणि प० राममिश्रैः स्वीकृतानि। किं श्रीमानेतत्प्रमाणयति ? यद्येवं तर्हि 'बालेति...वर्षाणि षोडशे' ति भवदुद्धृत भा० प्र० मतानुसारं तु बालाविवाहत्वाद्भवत्पक्षो १७-२४निरस्तः। अथ च श्रीमतैकशेषस्वीकृत्या ६० वर्षीयवृद्धायापि २४ वर्षाकन्या देया स्याद्, यतः स वक्ष्यति; यत्–'त्रिंशद्वर्षो... द्वादशवार्षिकीम्' ९।९४ इति मनुवचः, अत्र चैकशेषः, त्रिंशच्च त्रिंशच्चेति त्रिंशत्' अर्थात् ६० वर्षः। द्वादश च द्वादशचेति द्वादश अर्थात् २४ वर्षा वहेत्। पुनः स ६० वर्षो वक्ष्यति यदहं वृद्धोपि न मन्तव्यः, किन्तु युवा; यतोहं 'जनिकामोस्मि। 'जनिकाम' स्य 'श्रीः' ४।१ पत्रे १६ पृष्ठे, ४१४ संख्यायाः २५ पृ० विद्यावाचस्पतिवैदिकधर्मप्रचारक श्री ध० दे० सिद्धान्तालङ्कारैर्युवार्थः कृतः; तेनाहं विवाह्य इति। किं श्रीमानेकशेषेणोसमर्थं मंस्यते ?। यदि श्रीमता कस्माच्चित् ५०० रूप्यकाणि ऋणत्वेनात्तानि स्युर्लेखित्वा; तर्हि स उत्तमर्ण एकशेषेण सहस्ररूप्यकाणि दातुं भवन्त मभियुञ्जीत यदि; किं श्रीमान् मन्येत ?। धन्या दुनियापुरीयप्रथमस्नातकाः !

इत्थं श्रीरामशास्त्रिणं प्रमाणयन्नपि श्रीस्नातकोधुनैव तमप्रमाणं मंस्यते-इति श्रूयताम्। प० राममिश्रो ऽप्यनृतुमतीविवाहपक्षपाती आसीत्। तदैव तु तेनाग्रे 'त्रिंशद्वर्षः षोडशाब्दां भार्यां विन्देत नग्निकामिति 'उद्वाहतत्त्वे धृतं म० भा० प्रमाणमुपन्यस्तम्। स्वपक्षसिद्धिहर्षुलस्य स्ना० म० स्येतो दृष्टिरेव न गता; अन्यथा स श्रीरा०शा० नामापि नाग्रहीष्यत्। अत्र 'षोडशवर्षाम्' इत्यस्य भेदकं 'नग्निका' इति वर्त्तते। नग्निकाऽनागतार्त्तवा भवति, द्रष्टव्यो ऽमरकोषः २।६।८। प० राममिश्रीयो ऽयमाशयो यत् क्वचिद्देशे महाभारतसमये १६ वर्षान्तमपि स्त्रियो नग्निका बभूवुः; तासामपि विवाहो भवितुं शक्यः। विवाह ऋतुकालात्प्राक् शास्त्रीयः; ऋतुकालश्चायुर्वेदेन १२ वर्षान्ते सिद्धान्तितः। यत्र क्वचन १६ वर्षतोऽग्रे स्यादृतुकालः; तत्र तस्मात् प्राक् १६ वर्षेऽपि कन्या विवाह्येत्येव नग्निकाविशेषणादातुः म० भा० कारस्य तत्प्रमाणोपस्थापक श्रीरा० मि० स्यचा-

ऽऽशयः; अत एव तेन 'द्वादशवार्षिकीम्' अत्रैकशेषो न मतः। अथ चेदं विशिष्टशास्त्रम्, नियमाश्च सामान्यशास्त्रं मत्वा निर्मीयन्ते नग्निकात्वस्या परं श्रीस्नातकः १६ वर्षशब्दमात्रदर्शनेन प्रसन्नो ऽस्मत्सिद्धान्तीयं 'नग्निका' विशेषणोपेतमपि, बालावस्थात्वात्स्वपक्षविघातकमपि च वचः प्रमाणत्वेनोपन्यास्थत्। तेन तत्पक्षोत्रापि निरस्तः, प्रतिज्ञासंन्यासनिग्रहस्थानमिदमेव भवति।

यस्मात् श्रीरघुनन्दभट्टसंगृहीताद् उद्वाहतत्त्वात् 'त्रिंशद्वर्षः षोडशाब्दां भार्यां विन्देत नग्निकाम्' इति श्लोक उद्धृतः श्रीस्नातकेन; तस्यैव महाभारत श्लोकस्य शेषभागस्तत्र—'अतोऽप्रवृत्ते रजसि कन्यां दद्यात् पिता सकृत्। महादोषः स्पृशेदेन मन्यथैष विधिः सताम्' इति वर्त्तते। तदग्रे 'नग्निकाऽनागतार्त्तवा' इत्यपि लिखितम्। तत्रैवोद्वाहतत्त्वे—'कन्या द्वादश वर्षाणि याऽप्रदत्ता गृहे वसेत्। ब्रह्महत्या पितुस्तस्याः' इति यमवचः, 'पितुर्गेहेतु या कन्या रजः पश्यत्यसंस्कृता।...साकन्या वृषलीस्मृता' 'यस्तु तां वरयेत्कन्यां... तं विद्याद् वृषलीपतिम्' इत्यत्रिकश्यपयोर्वचनम्। अग्रे—'यत्तु मनुवचनं 'काममामरणात्तिष्ठे द्' इति, तन्मनूक्तगुणहीन सद्भावमात्रविषयकम्। अत एव गुणवतेऽष्टवर्ष-न्यूनाऽपि देयेत्याह—'उत्कृष्टायाऽभिरूपाय...अप्राप्तामपि तां कन्यां तस्मै दद्याद् यथाविधि' अप्राप्ताम् अप्राप्तविवाहप्रशस्तकालाम्।" इत्यादीनि बहूनि प्रमाणानि सन्ति। तानि श्रीरघुनन्दन भट्टाचार्य विरचितस्मृतितत्त्वस्य द्वितीभागे 'उद्वाहतत्वे' १२३-१२४ पृष्ठयोर्द्रष्टव्यानि, तत्रैव 'अष्टवर्षा भवेद्गौरी' त्याद्यपि दृश्यते। इति स्नातकमहोदयाऽभिमत श्रीराममिश्रप्रमाणित ग्रन्थादेवास्मत्पक्ष सिद्धिः स्नातकपक्षस्य च निरस्तिर्जाता। स्ना० महाशयेनावशिष्टपाठं मुक्त्वा स्वपारम्परिकप्रकृतिश्चरितार्थिता। तत्रैव १२७ पृष्ठे-'अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ' इति स्पष्टम्। 'इत्याश्चर्यकारिणीं व्याख्यामकार्षुः' परमधुना श्रीरामशास्त्रिणः स्ना० पक्षविघातकं प्रमाणमुपातिष्ठिपन्निति श्रीस्नातकः स्वयं निर्णेतृत्वमवलम्बेत। ह्यवा १२ वर्षेपि भवति।

अधुनाग्रे विविच्यते-'त्रीणि वर्षाण्युदीक्षेत' ६।६० इति न विधिवाक्यम्, किन्तु कन्याऽऽपत्कालिकम् । अत एतदग्रे 'अदीयमाना भर्तारं' ६।६१ अत्र 'अदीयमाने' ति पदं सङ्गच्छते । अतः ६।६० श्लोके कुल्लूकः-पित्रादिभिर्गुणवद्वरायाऽदीयमाना कन्या' इति व्याचष्टे । बृहत्पराशरस्मृतावप्युक्तम्-पिता पितामहो भ्राता माता मातामहोऽपि च । कन्यादाः स्युः क्रमेणैते पूर्वाभावे परः परः' ४।२७ अधिकारी यदा न स्यात्तदाख्याय नृपस्य सा । तद्गिराथ स्वयं गम्यं कन्यापि वरयेद्वरम्' ४।२८ । मनु ६।६० अनुसारमप्यापदि १६ वर्षे विवाहः सिद्धयति भवन्मते । १६ वर्षावस्था च भवदुद्धृतभा० प्र० वचोनुसारं बालावस्था, तदाऽयं भवद्विरुद्धहेतुः, यतोऽयं १७-२४ वर्षाया भवदभिमतं विवाहं खण्डयति । अत्र भवानपसिद्धान्तनिग्रहस्थाने निगृहीतः ।

महाभारतीयः 'त्रीणि वर्षाण्युदीक्षेत' इति श्लोकोऽप्युक्तमनुपद्यानुवाद एव । यतो मनोर्बहुश्लोकाः प्रायोऽनूदितास्तत्र । अत्र च श्लोके 'अतोऽन्यथा...प्रजापतेः' इति प्रजापतिपदं मनुमवबोधयति, तस्मिन्नेवाऽध्याये 'मनुरेव प्रशंसति' ४४ । २३ इति मनुनाम स्पष्टम् । अतोस्य प्राग्वत्समाधिः । विवाहविधिवाक्येतु तत्रैव ( भवदुद्धृतश्लोकत एकश्लोकव्यवधाने ) 'त्रिंशद्वर्षो दशवर्षां भार्यां विन्देत नग्निकाम्' अनु० ४४।१४ इति पद्यं प्राप्यते, यन्मया ४।२ संख्यायामुद्धृतं, यद्भवानस्पार्क्षीन्न न । महाभारतगृह्ये ण भवताऽयंश्लोकोपि प्रमाणत्वेनाऽवश्यस्वीकर्त्तव्यः स्यात् । अयञ्च मानवसिद्धान्तं समर्थयते 'नग्निका' मिति दर्शनात् । अथ च भवदुद्धृतपद्यद्वयं १६ वर्षे (भवदनुसारं बाल्ये) विवाहं सूचयति पित्रादिदातुरभावे । 'अतोऽन्यथा वर्तमाना भवेद्वाच्या प्रजापतेः' ४०।१७ इति भवदुद्धृतश्लोकश्च पितृरहितायाः १६ वर्षादूर्ध्वं ( १७-२४ वर्षे ) विवाहस्य निन्द्यतामाचष्टे प्रजापतिमते । तेन स्वपक्षखण्डकमेव भवता श्लोकद्वयमुद्धृतम् । वस्तुत इदं कन्यायाः स्वयं भर्त्रर्जनप्रतिपादकत्वात्तत्पित्रभावरूपापत्कालसूचकम् यतः पितरि सति महाभारतकारः कन्यास्वातन्त्र्यं

निषेधति । तथा च 'नाहमीशात्मनो राजन्! कन्या पितृमती ह्यहम् । मयि चेदस्ति ते प्रीतिर्याचस्व पितरं प्रति' आदि० १७४।२० नचाहमीशादेहस्य तस्मान्नृपतिसत्तम ! समीपं नोपगच्छामि नस्वतन्त्राहियोषितः' १७४।२२ तेनेदमापत्कालिकत्वादपवादशास्त्रम्, तेन नोत्सर्गस्य निवृत्तिः। पितृकर्तृकदानञ्च ऋतुकालात्पूर्वं भवतीत्यसकृदुक्तम् ।

अग्रे श्रीमान् मा० गृ० सूत्रे १।१०।१५ स्थितं 'रेतोऽहमस्मि' इति मन्त्र मुपन्यस्यति । अत्र भवन्मतेपि तात्कालिकताऽभावादस्मत्पक्षे न कोपि दोष आपतति । अग्रे भवान् 'द्वादशरात्रं ब्रह्मचर्यं चरतः' इति मा० गृ० सूत्रमुद्धरति, परं श्रीमताऽत्र जनता प्रतार्यते तत्पूर्वपाठं त्यक्त्वा। तत्राङ्कितं–'संवत्सरं ब्रह्मचर्यं चरतो द्वादशरात्रं वा' १।१४।१४ भवता 'संवत्सरम्' इति पाठः कथंत्यक्तः ? [ त्रिरात्रमेकरात्रं वा' ] इति तत्र कोष्ठकबद्धः पाठो यः प्रक्षिप्तः । त्रिरात्रपक्षेपि ब्रह्मचर्यमित्यस्य मैथुनाभावमात्रं नाऽर्थः; प्रत्युतान्येपि नियमा भवन्ति—अत्र गोभिलसूत्राणि द्रष्टव्यानि । अन्यथावेदा रम्भसंस्कारे ६७ पृष्ठे 'ब्रह्मचारी तीन दिन तक भूमि में शयन करे...तीन दिन तक क्षारलवणरहित पदार्थ का भोजन ब्रह्मचारी किया करे' इति ३ दिवसपर्यन्तं ब्रह्मचर्यं प्रदर्शितम्, तर्हि किमस्य भावोऽग्रे श्रीमता खट्वारूढताया मैथुनस्य वा गृह्येत ? किञ्च-भवदभीष्टं मानवगृह्यसूत्रमत्र भवत्पक्षं विहन्तीति दृश्यताम्—"बन्धुमतीं कन्यामस्पृष्टमैथुनामुपयच्छेत...नग्निकां श्रेष्ठाम्" १।७।८ नग्निकाम्-अनागतार्तवाम् । इति भवत्सम्मतेनैव मा० गृ० सूत्रेण भवत्पक्षः सर्व्वथैव खण्डितः । तद् गृह्यसूत्रं संवत्सरादौ ब्रह्मचर्यं निर्दिशतीत्युक्तम् । मैथुनन्तु तद् ऋतुकाल आचष्टे–'एतेन धर्मेण ऋतावृतौ संनिपातयेत्' १।१४।२०।

अग्रे श्रीमान् विषसम्पृक्तान्नत्वेन स्वर्षिणोक्तस्य पुराणस्यश्लोकौ प्रमाणीकृत्योद्धरति । तत्र भवता चातुरी कृता। पूर्वश्लोकः 'अत ऊर्ध्वं द्वादशाहानी' ति त्यक्तः । तस्याऽयंभावः–यदि ३० वर्षीयो वरः १२ वर्षां कन्यामादत्ते, तर्हि १२ दिनं संयमं कुर्यात् । यदि १६ वर्षां विन्देत्तर्हि

षड्रात्रम् । २० वर्षाया लाभेत्र्यहम् । अत ऊर्ध्वं २४-२८-३२-३६ प्रभृति-वर्षीयस्त्रीप्राप्तावहोरात्रमेव संयमं कुर्याद् । अत्र १२ वर्षीयविवाहोपि सूच्यते य भवत्पक्षविहन्ता । शिष्टमत्र याऽधिकतोक्ता, तत्रेदं ज्ञेयं यन्नेदं विधि-वाक्यं । चोदनालक्षणार्थाभावात्' । विधि वाक्ये 'यदि' इत्यादिशिथिलता न भवति । तेनैतत्तु शास्त्रविरुद्धं विवाहं स्वैरं कुर्वाणस्य कृते संयम-नियमो दर्शितो नतु तादृग्विवाहविधिः, तेन भवत्पक्षस्य न साधकमिदम् । अथ च 'तयोः ( स्मृति पुराणयोः ) द्वैधे स्मृतिर्वरा' व्यास० १।४ इति प्राची व्यवस्था ।

**यौवनविवेकः** ।—अग्रे भवदुद्धृता मानवश्लोकाः परीक्ष्यन्ते । मनुः—'द्वादशवार्षिकीम्' ६।६४ इति १२ वर्षाया विवाहं वक्ति, सैव तन्मते यौवनावस्था ; तेन न कोपि दोषः । 'पञ्चविंशे ततो वर्षे पुमान्नारी तु षोडशे । समत्वागतवीर्यौ तौ' सुश्रु० सू० ३५।१३ इति श्रीमताप्युद्धृतेन वचसा १६–२५ वर्षयोरुभयोः समवीर्यतोक्ता । 'षोडशसप्तत्योरन्तरे मध्यमं वयः । तस्य विकल्पो वृद्धिर्यौवनं सम्पूर्णता हानिरिति । तत्र आविंशतेः ( षोडशादारभ्य २० पर्यन्तं ) वृद्धिः । आत्रिंशतो ( २१ तः ३० पर्यन्तं ) यौवनम् । आचत्वारिंशतः ( ३१ तः ४० यावत् ) सर्व-धात्विन्द्रियबलसंपूर्णता । अत ऊर्ध्वम् ( ४१ तः ) ईषत्परिहाणिर्यावत्सप्तति-रिति' सुश्रु० सू० ३५।२९ इति सुश्रुतवचनेन पुरुषस्य २१ तः ३० पर्यन्तं यौवनं मतम् । २५ वर्षीयपुरुष, १६ वर्षीयस्त्रियोरुक्तवाक्यात्समवीर्यता । २५ वर्षाणि पुरुषस्य यौवनमध्यावस्था ( २१ त आरभ्य ) आत्रिंशतो यौवनम् ३५।२९ इति सुश्रुतोक्तेः । तेन स्त्रिया अपि १६ वर्षावस्था, यौवनस्य मध्यमावस्था । यथाचोक्तप्रमाणेन पुंसो यौवनं २१ तः आ-रभ्यते, तद्गणनया स्त्रीयौवनमपि १२ वर्षत आरभ्यते । इति सर्वत्र यौवनपदे दृष्टे व्य वस्था ज्ञेया ।

अथ च लघुवयस्यपि युव शब्दः प्रयुज्यते, तथा च 'युवासुवासाः' इति ऋग्भवदृषिणाप्युपनेयबालककृते उपनयनवेदारम्भसंस्कारयोः पठ्यते

आश्व० १।२०।८ पार० २।२।६ मानवगृ १।२२।८ इत्यादिगृह्यसूत्राधारेण। उपनयनञ्च द्विजमात्रस्य भवत्स्वामिनोपि मतम्। तेषामुपनयनं गर्भात ८-११-१२ वर्षेषु क्रमशो भवद्भिरपीष्टम्, गृह्यसूत्रगृह्यत्वाद्भवतोपि च स्याद्। वाच्यं किमियमवस्था यौवनस्य ? यदि न; तर्हि यथा 'युवा' इति लब्ध्वस्थाकबालककृतेपि प्रयुक्तमुपनयनविनियुक्ते मन्त्रे; तथा वैवाहिक- 'युव' पदेऽपि १२ वर्षावस्थायां न दोषः। एवं 'सभेयो युवास्य यजमानस्य वीरो जायताम्' यजुः २२।२२ अत्र यजमानगृहे युवबालकोत्पत्तिः प्रार्थिता। तर्हि किं भवान् २१-३० पारिभाषिकं यौवनं गृह्णीयात् ? मैवम्, अत एवात्र शतपथे उक्तम्-'एष वै सभेयो युवा यः प्रथमवयसी, तस्मात्प्रथमवयसी स्त्रीणां प्रियोभावुकः' १३।१।६।८। एवं श्रुतौ स्मृतौ क्वचिद्विवाहे दृष्टो यौवन शब्दः प्रथमवयोवचन एव, न पारिभाषिकः। अथ च युवति शब्दः सामान्यस्त्रीवाचकोपि भवतीति भानुजिदीक्षितकृताऽमरकोषटीकायां भानुदिप्रसायां द्रष्टव्यम्। अथ च बालात्वेपि युवतिशब्दः प्रयुज्यते, यतः-'यु मिश्रणाऽमिश्रणयो' रिति धातुना युवशब्दो निष्पद्यते तत्र यदि मिश्रणार्थे पारिभाषकं यौवनं मन्येत; तर्हि अमिश्रणार्थे बाल्य कालिकं यौगिकं यौवनमपि ग्रहीतुं शक्यम्। एवं वेदमन्त्रेष्वपि युवति शब्दस्य मिश्रयन्तीमिति यौगिकार्थोपि भवति, नाऽवस्थाविशेषवाचकता। तत एव 'युवतिं न शर्याम्' ऋ० ८।८।३६ इति मन्त्रस्य निरुक्ते १०।२६।१ युवतिमित्यस्य प्रयुवतीमिव (लक्ष्येण मिश्रीभवन्तीमिव) इत्यर्थः स्वीकृतः; एवं नाऽत्र अवस्थावाचकता स्थिता। 'बालोपि यौवनं प्राप्तो मानुषेषु विशांपते!' महा० आदि० १५७।३५ इति घटोत्कचकृते बाल्येऽपि यौवनं दर्शितम्। अथ च युवतिरित्यस्य १७-२४ वर्षावस्थामात्रमर्थो भवेद् यदि तर्हि 'दूध रोकने के लिए स्तन के छिद्र पर उस औषधि का लेप करे, जिस से दूध स्रवित (?) न हो, ऐसा करने से दूसरे महीने में पुनरपि युवति हो जाती है' सत्या० पृ० १५ अत्रत्यं भवदृषिलिखितं युवतिपदमनुपपन्नं स्यात्। किं सार्वदिकप्रसवेष्वेवं करणेन १७-२४ वर्षावस्था पुनः २ स्यात् ?

ऋतुकालात्प्रागपि यौवनं कथ्यते, अत एव मा० गृ० सूत्रे 'नग्निकां श्रेष्ठाम्' १।७।८ इत्यस्य विशेषणं 'यवीयसी' मिति दृश्यते, नग्निका ऋतुकालात्प्राक्तनी अवस्था। यदि 'यवीयसीं' इत्यस्य मनु० ६।५७।-१०८-११२ महाभारत आदि० १८५।२ बाल्मीकि० २६।१७ इत्याद्यनुसारं स्वल्पवयस्का-इत्यर्थो मन्यते, योऽत्र वस्तुतोऽभिप्रेतः; तर्हि लघ्ववस्थायामपि यौवनमुपपन्नम्। अत एव 'ददर्श यौवनं प्राप्ता ऋतुं सा चाऽन्वचिन्तयत्' महा० आदि० ८२।६ अत्र शर्म्मिष्ठाया ऋतुकालात् प्रागेव यौवनं दर्शितम्। 'षड्वर्ष एव बालः स (भरतः) कण्वाश्रमपदं प्रति। सिंहव्याघ्रान् वराहांश्च महिषांश्च गजांस्तथा। ववन्ध वृक्षे बलवानाश्रमस्य समीपतः' महा० आदि० ७४।६ तं कुमारमृषिर्दृष्ट्वा कर्म चास्याऽतिमानुषम्। समयो यौवराज्यायेत्यब्रवीच्च शकुन्तलाम्' ७४।६ अत्र षड्वर्षीयस्यैव बालस्य यौवराज्यार्हतोक्ता। तेन सिद्ध्यति यद्यौवनं सर्व्वत्र पारिभाषिकं नभवति, अन्यथा षड्वर्षावस्थायां तत्त्वं कुतः ? आदिपर्वणि ७६।१४ पूर्ववयाः कचः. ७६।२४ पद्ये 'युवा' प्रोक्तः। अत एव तैत्तिरीयोपनिषदि ८।१ शाङ्करभाष्ये 'युवा' इत्यस्य— प्रथमवयाः इति व्याख्या। शर्म्मिष्ठाया ऋतुकालात् प्राग्यौवनारम्भप्रतिपादने सिद्ध्यति, यन्मानुषीणां द्वादशवर्षस्य यौवनकालः; तदन्ते एव ऋतुदर्शनात्; अत एव १२ वर्षाया विवाहो भवदनुसारमपि सिद्धः ; तत्र यौवनत्वात्।

अत एव 'वयस्थया तया राजन्' महा० विराट् ७२।४ 'येयं कुमारी सुश्रोणी भागनी ते यवीयसी विराट्० ३६।२१ इति १२ वर्षाया उत्तरायाः कृते 'वयस्था' 'यवीयसी' त्यादिशब्दः प्रयुक्तः।

एवं यदि 'जनिकाम' पदेन यौवनं बोध्यते भवता; तर्हि १५-१६-१७-१८-१९ वर्षाः पुरुषा अपि जनिकामा दृष्टाः। ते किं युवानो मंस्यन्ते श्रीमता नो वा ? यदि आम्, तर्हि वेदे 'युवे' तिदर्शनात् तद्विवाहो वैदिको भविष्यति नो वा ?। यदि कथ्येत १८-१९ वर्षीया जनिकामा अपि न युवानः, तर्हि 'जनिकाम' पदेन वार्थव्यञ्जनं भवतोऽशुद्धं जातम्।

एवं 'पतिकामादिपदेनापि यौवनप्रदर्शनं भवतः परास्तम् । यदि १५-१६-१७ १८ वर्षीयाणामपि पुंसां यौवनं श्रीमता मन्येतायुर्वेदविरुद्धमपि, तथा ११-१२ वर्षाणां कन्यानामपि तन्मन्तव्यं स्यात् । अन्यथा-'युवा सुवासाः' इति प्रतीकेन २१-३० वर्षे एव यज्ञोपवीतं स्वीकर्तव्यं भवेत्, तदा ८-११-१२ वर्षाणामुपनयनं स्मृत्याद्युक्तं वेदविरुद्धं भवेद्भवन्न्यायात् ॥ अथ च यदि भवान् वेदादिषु पारिभाषिकयौवनाग्रही स्थास्यति, तर्हि २५ वर्षे एव पुरुषविवाहं कथञ्चिदपि साधयितुमनलम्भूष्णुः । अथ च तदा श्रीमता ३५-४०-४८ वर्षेषु स्वर्षिसम्मत ˘ पुरुषविवाह ˘ खण्डनीयो भविष्यति, अथवा तस्याऽवैदिकता मन्तव्या भविष्यतीति हृढंचेत्तु भवान् । यदि नैवं कर्तुमुद्यतः, तर्हि भवन्मतेपि वेदादिके पारिभाषिकयौवनाऽसत्त्वात् स्मृत्युल्लिखिता १२ वर्षावस्थाऽवश्यं स्वीकार्या भवेद्भवता । इदं वाच्यं यद्-वेदादिके पुरुषस्य स्त्रियाश्च भवन्मते यद् यौवनं वर्णितं तत्पारिभाषिकं यौगिकं वा ? यदि पारिभाषिकं तर्हि पुंसः १६-२५ यौवनं पारिभाषिकम् ? २१-३० वा यदि द्वितीयं तर्हि 'आषोडशाद् वृद्धिरापञ्चविंशतेर्यौवनं' ( यस्य स्वामिनाऽशुद्धोर्थः कृतः ) इति भवद्धेरुद्धृतः पाठः खण्डितः स्यात् । यदि प्राक्तनं यौवनं पारिभाषिकम्; तर्हि १७-१८-१६ प्रभृतिवर्षेषु पुंविवाहं किं वैदिकं मंस्यते भवान् ? यद्येवम्—तर्हि यत् स्वामिना २५ वर्षतः पूर्वं विवाहनिषेधः कृतः, ततोऽग्रिमकालादारभ्य ४८ वर्षपर्यन्तं यो विवाहो मतः; सोऽवैदिको भविष्यति; यतः २५ त आरभ्य ४० पर्यन्तंसम्पूर्णतावस्था, ४० तोऽग्रे ४८ प्रभृतिस्तु परिहाण्यवस्था । यदि कथ्येत वेदादिके पुंसो यौवनं पारिभाषिकं न गृह्यते, किन्त्वायुर्वेदप्रोक्ताद्भिन्नमपि; तथैव स्त्रीयौवनकृतेपि ज्ञेयम् । तर्हि १२ वर्षाकन्याविवाहनिषेधं कर्तुमशक्तो भवान् ॥ 'युवतयः सयोनीरेकं गर्भं दधिरे' ऋ० ३।१।६ अस्यार्थे भवत्सधर्मणा 'वैदिकसम्पत्ति' कारेण ७४४ पृष्ठे युवतित्वे गर्भधारणं निर्दिष्टम् अधुना वाच्यं यद् १२-१३-१४ वर्षा अपि कन्या गर्भं धारयन्त्यो यदि दृष्टाः; ता युवतयः सन्ति नो वा ? ( दधिरे-इति लिट् ) यदि न, तर्हि ता गर्भवत्यो बभूवुरेव कथम्; तेन स्पष्टं यद्-वेदे युवतिशब्दः पारिभाषिको नास्ति । तेन १२ वर्षवतीनामपियौवनत्वं सिद्धं वेदमते ।

तेन 'अभ्यङ्गाङ्गीं' इत्यादि मानववचांसि श्रीमदुद्धृतानि प्रयासमात्रफलकानि । हंसवारणगामिन्या व्याप्तिः १७-२४ वर्षेषु न भवति, किन्तु ततः प्रागपि पश्चादपि । अथ चैतदादिकानि कन्यानां लक्षणविशेषसूचकानि; एषां कन्याऽवस्थायां न तात्पर्यम् । तदवस्था तु मनु० ६।६४ सिद्धान्तिता श्लोके । मनुना च १२ वर्षावस्था विवाहस्य मता तेनेतरावस्थानां बाधः संवृत्तः । तस्यैव पोषकं 'तनुलोमकेशदशनां मृद्वङ्गीम्' इति विशेषणद्वयम् । १७-२४ वर्षा तनुलोमकेशदशना मृद्वङ्गी च न भवति ॥

'स्त्रियम्' अत्रापि भवद्दत्ता रेखा व्यर्था । 'अयुजानि स्त्रीणाम्' आश्व० १।१५।६ अयुजाक्षरमाकारान्तं स्त्रियै' पार० १।१७।३ तथा 'स्त्रियों का विषम नाम रखें, परन्तु स्त्रियों के इस प्रकार के नाम कभी न रखें; जो स्त्री हो तो एक तीन वा पांच अक्षर का नाम रखे' इत्यादि नाम करण प्रकरणोल्लिखितभवत्स्वामि प्रमाणात्, स्त्रीणां सुखोद्यमक्रूरं' म० २।३३ ' युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु' ३।४८ इत्यादि मानवप्रमाणाच्च एकादशादिदिन जाताया बालाया नामाऽपि 'स्त्री' त्युक्तम्; किं भवांस्तां युवतिं मंस्यते ? तेन 'मृद्वङ्गीमुद्वहेत्स्त्रियम्' अत्र मनुस्मृतिस्थस्त्रीशब्दे भवद्दत्ता रेखाव्यर्था ॥ ३।५ श्लोके च 'दारकर्मण्यमैथुनी' अत्र 'दारकर्मणि मैथुने' इत्ययमेव पाठो दृष्टः, तेन न भवदिष्टसिद्धिः । 'अमैथुनी' इति पाठेपि न दोषः; तस्याऽयं भावःयत्केनचिद्दुष्टेनोपभुक्ता न स्यात् । अद्यत्वे वृत्तपत्रेषु ११-१२ वर्षाणामतो न्यूनवयस्कानामपि कन्यानां मुपभुक्ततासमाचाराः प्रकाश्यन्ते । अतः क्षतयोनित्वशङ्काकारणाद् अमैथुनी- अक्षतयोनिरेव प्रशस्तामता; तेन न भवदिष्ट सिद्धिः ।

'बाल्ये पितुर्वशे तिष्ठे त्पाणि ग्राहस्य यौवने' 'पितारक्षति कौमारे भर्त्ता रक्षति यौवने' अत्रापि मनुमते १२वर्षाऽपि यौवनवती मन्यते इति सम्यक् साधितमस्माभिः; यतस्तेन १२ वर्षे एव विवाहो वैधो मतः । अथ च विवाहे जाते ऽपि स्त्रियाः प्रायः पैतृककुलपरिचयकारणेन पितुर्गृहे गमनागमनवशात्तद्रक्षाभारोपि पितर्येवापतति । तत ऋतुकाले जाते तस्याः

पतिकामत्वात्पतिकुलपर्याप्तपरिचयवशाच्च पतिगृहे प्रायः स्थितिर्भवति। तदा तत्त्राणभारः पत्यावेव, ऋतुप्राप्तिश्च पूर्णयौवनचिह्नं भवति। इति मनुश्लोकव्यवस्था ।। एतेन द्विरागमनप्रथापि सूच्यते। यतः १२ वर्षे विवाहे जातेपि बाला पतिगृहप्रवेशमात्रं कृत्वा ततः पुनर्ऋतुकालागम-पर्यन्तं पितृगृहे तिष्ठति। ऋतुकाले च निकटे सा पितृगृहतः पतिगृहं याति। अस्य वेदे बीजमपि लभ्यते--'उशतीः +कन्यला इमाः पितृलोकात् पतिं याति' अ० १४।२।५२। विवाहकाण्डे विवाहस्य तत्सम्बद्धद्विरागमनचतुर्थीकर्म-गर्भाधानानाञ्च मन्त्राः सम्मिलिताः सन्ति। अत्र-'कन्यला' शब्दो विवाहितत्वसूचकः, यतः सा विवाहे कन्यात्वनाशाद् 'वृषल' शब्दवत् 'कन्यला' इत्याख्यायते, न तु कन्या। सा च पितृरक्षायां तिष्ठति। ततः सा ऋतुकालनैकट्याद् 'उशती' भूत्वा 'पितृगृहतः पतिगृहं याति। यत ऋतुमती सा 'नरकामां...ऋतुमतीमिति' शा० ३।७ ८ इति उशती वृषस्यन्ती च ('वृषण्यन्तीव कन्यला' अ० ५।५।३) भवति। उशतीत्वं 'जायेव पत्ये उशती सुवासाः' ऋ० १०।७१।४ इति सुवासस्त्वे 'ऋतुस्नातत्वे' भवति। 'मलवद्वासाः' आपस्त० गृ० ३।८।१२ महाभाष्ये २।३।६२ इति शब्द ऋतुमतीवाचकः; तद्विरुद्धः 'सुवासाः' इतिशब्द ऋतुस्नातात्वबोधकः। विवाहे जाते पितृगृहे ऋतुमतीत्वे पित्रादीनां न दोषो भवति इति विवाहरहितत्वे निन्दार्थवादसूचनेन स्मृतिभिः सङ्केत्यते; इतश्च ऋतुमतीत्वे जातेऽपि तत्स्नानोत्तरं पित्रादिस्तां पतिगृहे प्रहिणोति चेत् तेन न कोऽपि दोषः परापतति। इत्युभयथापि(द्विरागमन प्रथास्वीकाराऽस्वीकारयोः) मनुश्लोकव्यवस्थाऽस्मदनुकूलैव। 'परन्तु ( इस पुरुष के ) पच्चीस वर्ष के पहिले इस की वधू का द्विरागमन न कराना' श्रीमद्दयानन्द

---

+अत्र 'कन्यलाः' इति पाठः; ५।३ संख्याः ३२ पृष्ठे मल्लेखे तु अत्र 'कन्यकाः' इति पाठः प्रूफशोधकोपेक्षावशान्मुद्रितः। एवं तत्रैव ४५ पृष्ठे 'एषु कतमस्मिन' इति प्रकाशनीये 'एषु कतरस्मिन्' इति मुद्रितम्। एवमन्यत्र।

प्रकाशे ३४७ पृष्ठे इति भवदृषिवाक्यं तेन तन्मतेपि अल्पवयस्कताविवाहे द्विरागमनप्रथाया युक्तता द्योत्यते । अथ च मनुश्लोके द्वादशवर्षे उक्तदिशा यौवनस्वीकारादस्मत्पक्षे न कोऽपि दोषः परापतति ।

रजस्वलाविवाहनिषेधः । एवं तु स्मृतिषु रजस्वलाविवाहनिषेधः स्पष्टशब्दैर्निर्दिष्ट इति वयमितः स्वतन्त्रे लेखे प्रदर्शयितास्मः । परं ब्राह्म दैवार्षप्राजापत्याख्यविवाहेष्वपि रजस्वलाविवाहनिषेधः स्पष्टमुक्तः । श्री-स्नातकेन श्रूयताम्—विवाहानां कृते मनुनोक्तम् 'अनिन्दितैः स्त्रीविवाहैः तस्मान्निन्द्यान् विवर्जयेत्' ३।४२ निन्दितास्त्वासुरगान्धर्वराक्षसपैशाचाः, अनिन्दितास्तु ब्राह्मादयः । अत्र मनोः ३।३६-४०-४१ वचांसि ४।२ 'श्री' संख्यायां मल्लेखे पश्यन्तु । संस्कारविधावप्येषामनुवादे उक्तम् 'इन चार विवाहों से बाकी रहे चार आसुरगान्धर्वराक्षस और पैशाच इन चार दुष्ट विवाहों से उत्पन्न सन्तान निन्दितकर्मकर्ता मिथ्यावादी, वेदधर्म के द्वेषी, बडे नीच स्वभाव वाले होते हैं. इस लिये मनुष्यों को योग्य है कि-जिन निन्दित (आसुरगान्धर्वराक्षस पैशाच) विवाहों से नीच प्रजा होती है उन का त्याग और जिन उत्तम विवाहों से (ब्राह्मदैव आर्षप्राजापत्य ये चार विवाह उत्तम हैं १२ श्लोकानुवादे स्वामी) उत्तमप्रजा होती है, उन का वर्ताव किया करें' पृ० १२७ ।

ब्राह्मादयः कथमनिन्दिता आसुरादयश्च कथं निन्दिता इति प्रश्ने एतदुत्तरं यद्-ब्राह्मादिषु कन्यायाः पितृकर्तृकं दानं भवति इतरेषु तु स्वैरिता भवति, तथा च 'आहूय, दानं कन्याया ब्राह्मः' ३।२७, 'अलङ्कृत्य सुतादानं दैवं' ३।२८ 'कन्याप्रदानं विधिवद् आर्षः' ३।२९ 'कन्याप्रदान मभ्यर्च्य प्राजापत्यः' ३।३० अत्र सर्वत्र कन्यादानम् कन्यादानञ्च पिता स्वस्वामित्वे एव कर्तुं शक्तः । स्वामित्वञ्च तस्य तस्या मृतुकालात्पूर्वमेव । अत उक्तं-'पित्रे न दद्याच्छुल्कं तु कन्या मृतुमतीं हरन् । स हि स्वाम्यादतिक्रामेद् ऋतूनां प्रतिरोधनात्'

मनु० ९।९३ इति ऋतुमतीत्वे जाते स कन्यादानाधिकारी न तिष्ठति, यतस्तेन कथं कन्याया ऋतुकाल उपेक्षित इति स स्वामित्वाच्च्याव्यते। कन्यादानाभावे च ब्राह्मदैवार्षप्राजापत्यनामकः कोपि विवाहो न वक्तुं शक्यः; तल्लक्षणस्य दानरूपस्याऽदर्शनात्। तेन ब्राह्मादिषु चतुर्षु विवाहेषु कन्यादानविधित्वादेषु रजस्वलाविवाह निषेधः स्पष्टं सिद्ध इति श्रीस्नातकेन विभाव्यम्। आसुरे यद्यपि कन्यादानं तथापि तत्र स्वाच्छन्द्यकारणान्निन्द्यता । गान्धर्वस्य मैथुन्य-( मनु० ३ । २३ ) काममात्रमूलत्वात् ( 'तमसो लक्षणं कामः' मनु० १२।३८ 'तमोगुण का लक्षण काम' सत्यार्थ प्र० पृ० १५६ ) 'सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः' महा० आदि० ७३।२७ इति निर्मन्त्रत्वाच्च निन्द्यता। परं 'गम्यं त्वभावे दातृणां कन्या कुर्यात् स्वयं वरम्' याज्ञ० आचार० ६४ इत्यत्रापदि तच्चारितार्थ्यम् । अग्रे राक्षसपैशाचविवाहौ तु स्पष्टमधमौ; यत एव वैधं कन्यादानं न भवति । भवत्प्रमाणित बृहत्पराशरस्मृतौ तु 'दानं कार्यं विधिस्त्वयम्' ४।७ इति स्पष्टं लिखितम्। दानञ्चर्तुकालात्प्राग्भवतीत्यसकृत्साधितम् । अतो यदि तत्र यौवनं सूच्यतेऽपि तर्हि द्वादशवर्षारब्धम्, नतु ऋतुमतीत्वोत्तरकालिकम्, तत्र पितृस्वाम्यनिषेधस्योक्तत्वात्। सहधर्माचरणं किं भवान्मैथुनं मन्यते ? अन्यथा सहधर्माचरणं १२ वर्षे कथं न सम्भवि ?।

स्वयंवरादिके ब्राह्मणस्य नाऽधिकारः । —'षडानुपूर्व्या विप्रस्य' ३।२३ इति यो मानवश्लोको भवतोक्तः; तद्बाधकं वचनमग्रिमम् 'चतुरो ब्राह्मणस्याद्यान् ( ब्राह्मदैवार्षप्राजापत्यान् ) प्रशस्तान् कवयो विदुः' मनु० ३।२४। 'गन्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य' मनु० ३।२६। 'धर्म्याश्चत्वार एव हि' बृहत्परा० ४।१२ । 'प्रशस्तांश्चतुरः पूर्वान् ब्राह्मणस्योपधारय' महा० आदि० ७३।१० 'गान्धर्वराक्षसौ क्षत्रे' आदि ७३।१३ 'क्षत्रियस्य हि गान्धर्वो विवाहः' ७३।२७। 'एभ्यो धर्म्यास्तु चत्वारः पूर्वं ये परिकीर्त्तिताः। गान्धर्वो राक्षसश्चैव क्षत्रियस्यतु

शस्यते' शङ्ख० ४।३ 'तेषां चत्वारः पूर्वे ब्राह्मणस्य' बौधायन० ११ १० तेष्वपि पूर्वः पूर्वः श्रेयान्' ११।११ उत्तरेषामुत्तरोत्तरः पापीयान्' ११।१२ अत्रापि षष्ठ सप्तमौ ( गान्धर्वराक्षसौ ) क्षत्रधर्मानुगतौ' बौधा० ११।१३ येन ब्राह्मणेनैतद्विरुद्धमितिहासे कृतम्, स एव वचनीयः। महाभारते कियत्स्पष्टमुक्तं–'नच विप्रेष्वधीकारो विद्यते वरणं प्रति। स्वयंवरः क्षत्रियाणामितीयं प्रथिता श्रुतिः' आदि० १६१।७ स्वयंवरं तु राजन्याः प्रशंसन्त्युपयान्ति च। प्रमथ्य तु हृतामाहुर्ज्यायसीं धर्मवादिनः' आदि० १०२।१६ 'स्वयंवरस्तु त्रिविधो विद्वद्भिः परिकीर्त्तितः। राज्ञां विवाहयोग्यो वै नान्येषां कथितः किल' देवीभाग० ३।१८।४१ 'स्वयंवरः क्षत्रियाणां विवाहः पुरुषर्षभ !' महा० आदि० २२१।२१ इति भगवतः श्रीकृष्णस्योक्तिः' श्रीमानपि तदुक्तिं प्रमाणयति ४।४ संख्यायाम्। तेन श्रीस्नातकस्य पक्षः समूलमुच्छिन्नः।

पुराणेतिहासयोः स्वयंवरे मतम्।–श्रीस्नातकेन पुराणेतिहासात्स्वयंवरः साधितः। परं तयोः स्वयंवरविषये किं मतमिति श्रूयताम्। देवीभागवतस्य ३ स्कन्धे २० अध्याये शशिकलानाम्नी कन्या स्वपितरं स्वं स्वयंवरसमागमन प्रेरणार्थं निषेधति—'तं तथा भाषमाणं वै पितरं मितभाषिणी। उवाच वचनं बाला ललितं धर्मसंयुतम्। ६१। नाहं दृष्टिपथे राज्ञां गमिष्यामि पितः! किल। कामुकानां नरेशानां गच्छन्त्यन्याश्च योषितः।६२। धर्मशास्त्रे श्रुतं तात! मयेदं वचनं किल। एक एव वरो नार्या निरीक्ष्यः स्यान्मयाऽपरः। सतीत्वं निर्गतं तस्या या प्रयाति बहूनथ। सङ्कल्पयन्ति ते सर्वे दृष्ट्वा मे भवतादिति। ६४। स्वयंवरे स्रजं धृत्वा यदागच्छति मण्डपे। सा काम्या सा तदाजाता कुलटेवापरा वधूः। ६५। वारस्त्री विपणीं गत्वा यथा वीक्ष्य नरान् स्थितान्। गुणागुणप रज्ञानं करोति निजमानसे। ६६ नैकभावा यथा वैश्या वृथा पश्यति

कामुकम्। तथाहं मण्डपे गत्वाकुर्वे वारस्त्रिया कृतम ? । ६७। सामान्या प्रथमं गत्वा कृत्वा संकल्पितं बहु। वृणोति चैकं तद्वद्वै वृणोमि कथम-द्य वै ? । ६६ । हन्त ! पुराणेन स्वयंवरः कथमत्र निन्दितः ? ।

इतिहासे श्रूयताम्- 'माभूत् सकालो दुर्मेधाः पितरं सत्यवादि-नम। अवमन्य स्वधर्मेण स्वयंवरमुपास्महे!' बाल्मी० बाल० ३२।२१। कन्याः कथयन्ति- पिता हि प्रभुरस्माकं दैवतं परमञ्च सः। यस्य नो (ऽस्मान्) दास्यति पिता स नो (ऽस्माकं) भर्ता भविष्यति' ३२।२२ हन्त! कीदृङ् मार्मिकसम्मतिरितिहासस्य स्वयंवरनिन्दने। अत एव श्रीकृष्णेनोक्तम्-'स्वयंवरः क्षत्रियाणां विवाहः पुरुषर्षभ ! स च संशयितः पार्थ ! स्वभावस्याऽनिमित्ततः' आदि २२१।२१।

सीतायास्तु स्वयंवर आसीदेव न, तद्विवाहो धनुर्भङ्गकाधीन आसीत। द्रौपद्या अपि नासीत्, सापि लक्ष्यवेधकाधीनासीत; तत्पितु-श्चार्जुनायैव दित्सासीत्, तथा च-'यज्ञसेनस्यकामस्तु पाण्डवाय किरि-टने। कृष्णां दद्यामिति सदा नचैतद्विवृणोति सः' आदि० १८७।८ अयं हि कामोद्रुपदस्य राज्ञो हृदि स्थितो नित्यमनिन्दिताङ्गाः ! यदर्जुनो वै पृथुदीर्घबाहुर्धर्मेण विन्देत सुतां ममैताम' १६५।१६ एतेन सिद्ध्यति यत्कन्येच्छानुसारिता न भवति स्म किन्तु पित्रिच्छानुसारिता। यतः- 'स्त्रियों को प्रिय वह होता है, जो स्त्री भोग में फंसा हो' इति भवदपि-वचः सत्यार्थ० पृ० २३४। दमयन्त्या अपि नासीत्स्वयंवरो यतः साऽदृष्ट-तायामेव मनसा प्रागेव नल मवृणोत्; तथा च महाभारते-'तयो(र्नलद-मयन्तयो)रदृष्टः कामोभूच्छृण्वतोः सततं गुणान्। अन्योन्यं प्रति कौन्-तेय ! व्यवर्धयत हृच्छयः' वन० ५३ १७ तेन तस्या अपि स्वयंवर आड-म्बरमात्र फलक आसीन्न वास्तवः। इत्थं स्वयंवरस्य 'अस्वतन्त्रास्त्री' वसिष्ठ० ५।१ 'नास्ति स्त्रीणां स्वतन्त्रता' बृहत्पर० ४।५७ स्वातन्त्र्येण विनश्यन्ति कुलजा अपि योषितः। न स्वतन्त्र्यमतस्तासां प्रजापतिरक-ल्पयत्' बृहत्परा० ४।५८ 'न स्त्रीस्वतन्त्र्यं विद्यते' बौधायन० २।२।५० इति स्वातन्त्र्यस्य च निन्दितत्वात् वैयर्थ्यं स्वयंवरे।

सुश्रुतविवेकः ।—'अथास्मै पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमावहेत्' शा० १०।५३ अत्र सर्व्वग्रन्थेषु इत्येव पाठोस्ति युक्तश्च । यतोत्र सर्वस्मृतिकृतामैकमत्यम् । सुश्रुते स्मृतिपुराणानुकूल्यं सर्वत्रेच्यते, अतस्तत्र 'धूर्त्तपरिकल्पितः' इतिकथनं स्ना० महाशयस्य साहसिक्यम् । तन्मते १२ वर्षाविवाहादेष्टा मनुरपि धूर्त्तः परशरोऽपि, एवं नग्निकाविवाहादेष्टारो वेद बृहद्यमाङ्गिरोगौतमवसिष्ठदेवलयाज्ञवल्क्यबौधायनव्यासहारीतमानवगृह्यसूत्रकारगोभिलगदाधरवृद्धवाग्भटसुश्रुतचरकनिर्णयसिन्धुधर्मसिन्धुकारस्मृतितत्त्वपराशरमाधवीयमदनपारिजातकर्तृप्रभृतयो धूर्त्ताः; अधूर्त्तः केवलं पुरुषार्थं प्रकाशकारः । हन्त ! भवतां पार्श्वे यदाऽन्यखण्डनं कर्तुं बलं न भवति; तर्ह्यन्यदीयप्रमाणं प्रक्षिप्तं धूर्त्तपरिकल्पितं वा— इत्येवामनन्ति-इदमेव भवतां ब्रह्मास्त्रम्, इदमनुचितम् । कस्मिन्नपि सुश्रुते 'षोडशवर्षाम्' इति पाठान्तरमपि न दृश्यते. तेन स्ना० महाशयस्य कल्पनैव । शिष्टमवशिष्ट 'ऊनषोडशवर्षायाम्' इत्यग्रिमेण श्लोकेन सह विरोधप्रश्नः; सोपि तुच्छः । तत्समाधिर्मया ४।३ अङ्के दर्शितो यः श्रीमता स्पृष्टोपि न । विवाहकालो गर्भाधानकालश्च विभिन्नकालिकौभवतः । विवाहकाल ऋतुकालात्प्राक्तनः, गर्भाधानकालस्तु ऋतुकालकालिकः । तेनैव द्राह्यायणगृह्यसूत्रेऽपि—'ऊर्ध्वं त्रिरात्राच्च तसृभिराज्यं जुहुयात्' ।१।४।१२ इति चतुर्थेऽहनि होमविशेषो दर्शितो गृह्यसूत्रान्तरवद् । गर्भाधानं त्वृतुकालप्राप्तावेव; तेनैव तत्रोक्तम् 'ऋतुकाले दक्षिणेन पाणिनोपस्थमालभेत विष्णुर्योनिं कल्पयत्विति समाप्तायाम्' १।४।१५ 'संभवेद् गर्भं धेहीति' १।४।१६ ऋतुकालश्च १२ वर्षादूर्ध्वं भवतीति गर्भाधानमपि तदैव । विवाहस्त्वृतुकालात्प्राक् सिद्धः । सनातनधर्म्मो विवाहसमकालमेव सपदि मैथुनं न शास्ति, किन्तु रजःकाले मैथुनयोग्यतायामेव । अतो द्राह्या० गृ० सूत्रे उक्तम् नाऽजातलोम्न्योपहासमिच्छेत्' ३।१।३३ अत्र रुद्रस्कन्दस्य वृत्तिः— विवाहादूर्ध्वं मैथुनप्रसक्तौ असमर्थया मैथुनं तदर्थाञ्च चेष्टां न कुर्य्यादित्यर्थः ।

चतुर्थ्यां परात्रे ( रात्रेः पश्चिमे यामे इति हरिहरः पार० १।११

'अन्तिमे प्रहरे इति गदाधरः, चतुर्थ्यां रात्रौ रत्रेरपरभागे यद्वा चतुर्थी-तिथिसम्बन्धिरात्र्यपरभागे—इति विश्वानथः, अर्थाद् ब्राह्ममुहूर्त्ते ) क्रिय-मारणं चतुर्थीकर्म्म विवाहसंस्कारस्य तत्पूर्णतानिष्पादकसेकसङ्गम। गर्भाधानसंस्कारस्तद्भिन्नः स्वतन्त्रश्चेति मया ५।२-३ संख्यायां साधितम्। तत्र स्त्रीपुंसयो × स्सर्वसमक्षं संवेशनमात्रं ( लेटना ) भवति न मैथुनम् एतत्त्वद्यत्वेऽप्यस्मद्देशे दृश्यते, कदाचिद्दुनियापुरे न स्यात्। यदि 'संवेशन' 'सङ्गमन' शब्दैर्भवान् मैथुनमध्यवस्यति; तदयुक्तम्—अन्यथा 'भार्यां प्रेतेन सह संवेशयेत्' सायरा० अ० १८।३।१ प्रेतेन सह संविष्टां तामभिमन्त्र्योत्थापयेत्' साय० अ० १८।३।२। 'प्राक्शिरा वधूः संविशति' गोभि० २।६।१०-१२ ( पुंसवनसंस्कारे वध्वाः संवेशनम् ) 'दक्षिणः पितरोत्तरामाता एवमवशिष्टानां ज्येष्ठो ज्येष्ठोऽनन्तरः संविश-न्ति' आपस्तम्बगृ० ७।१६।६-१०-११-१२। 'अथास्यै ब्रह्मचारिण-मुपस्थे अवेशयति' मानवगृ० १।१४।८ ( अत्रवध्वाअङ्के पतिगृहप्रवेश समये बालः स्थाप्यते )। 'अग्रः संवेशः' द्राह्या० गृ० इति वृत्तिनः कृते। 'संगच्छस्व पितृभिः' अ० १८।३।५८ 'येना संगच्छ' अ० ७।१३ (१२)।१ 'सङ्गमनं' अ० १८।३।१६ 'सङ्गमेषु' अ० २०।१२२।३ इत्या-दिषु किं भवान् मैथुनार्थं ग्रहीष्यति ?। श्रीमता किमपि प्रमाणमीदृङ् नोपस्थापितं यत्र चतुर्थीकर्मणि गर्भाधानमनिवार्यं स्यात्। सम्पादक-महाशयेन यानि भवत्प्रमाणानि न प्रकाशितानि ( इति तस्य ५।२ टिप्पण्या प्रतीयते ) तान्यपि लेख्यानि, येन वयं पश्येम यत्—तैर-स्माकं किं खण्ड्यते। ब्राह्ममुहूर्त्ते क्रियमाणे चतुर्थीकर्म्मणि कदापि मैथुनं भवितुं नार्हति, इति साधितचरमस्माभिः ५।२-३ अङ्कयोः। तेन सुश्रुतस्य वैवाहिकगर्भाधान पक्षयोर्नैविरोधः।

सुश्रुतपक्षे २५-१६ वर्षयोरनुपातः कदापि न सूचितः, अन्यथा 'ऊन-अप्राप्त' शब्दौ विरुद्धावभविष्यताम्। एतदनुपातन्यूनाधिकताया-

---

× स्त्रीपुंसयोः। 'अचतुरविचतुरे' नि निपातः।

मपि सन्ततयो भवन्त्येव; अन्यथा तद्भिन्नानुपातवद्वयस्कतायां कापि सन्ततयोभवेयुरेव न । एवं तु भवता १४-१८ वर्षविवाहादेष्टुश्शारदाविलस्य विरोधो विधेयः । भवदृषिसम्मतेषु १८-३०, २०-३५, २०-४०, २४-४८ ( सत्या० पृ० ४८ ) इति विवाहेष्वप्युक्तानुपाताभावात्तन्मतमपि खण्ड्यम् । यद्ययमनुपातोऽनिवार्यो ऽभविष्यत्; तर्हि या उत्तरा ऽर्जुनाय दीयमानासीत् सा तत्पुत्रायाभिमन्यवे कथं दत्ता ? अथचाभिमन्यवे योग्या सार्जुनाय कथं दीयमानासीत्; तेन नास्य नववर्षानुपातस्य नान्तरीयकता । तेन विवाहावस्था द्वादशवर्षीयैव युक्ता सुश्रुतस्य । अत एव वृद्धवाग्भटेनाप्युक्तम् —'पुमानेकविंशतिवर्षः कन्यां द्वादशवर्षदेशीयामुद्वहेत्' । तेनाऽस्मत्पक्षः सबलः सिद्धः ।

सं० १९४७ मुद्रिते पुरुषार्थप्रकाशाभिधे ग्रन्थे 'षोडशवर्षा' इति पाठ उद्धृत इतीयं कल्पनापि भवतोऽप्रामाणिकी । यतस्तस्मात्प्रागेवोत्पन्नेन स्वा० दयानन्देन 'सत्यार्थप्रकाशसंस्कारविध्योः' 'ऊनषोडशवर्षाया' मित्युद्धृत्यापि 'अथास्मै... षोडशवर्षां पत्नीम्' इति पाठः क्वापि नोद्धृतः । तेन स्पष्टंयत्तत्र 'द्वादशवर्षा' मित्येव पाठ आसीदतः स्वपक्षक्षयभिया नोद्धृतः; अन्यथा स स्वपक्षपोषकमुक्त पद्यद्वयसत्रीचीनं प्रत्युत तदव्यवहितम् 'अथास्मै' इति सूत्रमवश्यमुद्धरिष्यत् । तेन सिद्धं यद्—विश्वेश्वरानन्देन केनचिद्भवन्मतीयेन कृत्रिमतया स पाठः कल्पितः ( यथा-भवता विद्यमानेपि 'द्वादशवर्षाम्' इति प्रत्यक्षपाठे 'श्री' ५।१ पृ० ३७ 'षोडशवर्षा' इति पाठः प्रसह्य प्रक्षिप्तः ) इति स एव धूर्त आख्यातुमर्हः । आह्निकसूत्रावल्यां 'द्वादशवर्षाम्' इति रूपेणैवोद्धृतं धन्वन्तरिनाम्ना; एवमन्यस्मिन् प्राचीनवैद्यकपुस्तकेऽपि स एव पाठ उद्धृतः । अथच प्रत्यक्षे किं प्रमाणान्तरेण । भवान् प्राचीनहस्तलिखित (१९४७ तः प्राङ्) मुद्रितपुस्तकान्येवपश्यतु; यत्र 'द्वादशवर्षाम्' इत्येव पाठः ।। 'षोडशवर्षाम्' इति पाठे स्वीकृतेपि श्रीस्नातकपक्षस्यैव हानिः भक्षितेपि लशुने न शान्तो व्याधिः यतस्तेन तत्प्रतिज्ञातः १७-२४

वर्षावस्था विवाहः खण्ड्यते । तदुद्धृत भाव प्र० प्रमाणानुसारञ्च १६ पर्यन्तं बाल्यावस्था सिद्धा । तर्हि तत्सम्मतयुवत्वविवाहखण्डकमेव सिद्धमिदं प्रमाणम् । आश्चर्यं श्रीमान् परपक्षखण्डनलुब्धः 'पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः' न्या० ५।२।५ 'सिद्धान्तमभ्युपेत्य-ऽनियमात्कथाप्रसङ्गो ऽपसिद्धान्तः' न्या० ५।२।२३ इति निग्रहस्थाने + अपि न पश्यति ( 'निग्रहस्थानं खलु पराजयप्राप्तिः' न्यायभा० १।२।१६ अन्यस्मिँश्च कदा ऽप्युपयोक्तुमशक्यां वितण्डाञ्च ( ४।४ अङ्के ) आरोप्य 'निरनुयोज्याऽनुयोग' मपि करोति, चित्रम् ! अतः सिद्धं यद्- 'अथास्मै....द्वादशवर्षां पत्नीमावहेत् शा० १०।५३ अयमेव सुश्रुते प्राचीन पाठः । अद्यापि स एव दृश्यते' प्रत्यक्षे किं प्रमाणान्तरेण ।

चरकसंहितायामुक्तं 'नर्ते वै षोडशाद्वर्षात् सप्तत्याः परतो न च । आयुष्कामो नरः स्त्रीभिः संयोगं कर्त्तुमर्हति' चिकित्सि० २।४० चतुर्थ पादे । अत्रायुर्वेदेन १६ वर्षापूर्वं ७० वर्षात्परं पुमान्स्त्रीसङ्गार्थं निषिद्धः । एवं यदि न्यूनान्न्यूनं १६ वर्षवयस्कः तरुणः स्त्रीसङ्गार्थम् आदिष्टश्चरकेण; तर्हि 'वेदानधीत्य वेदौ वा वेदं वापि यथा क्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत्' मनु० ३।२ 'तदर्धिकं, पादिकं वा, ग्रहणान्ति कमेव वा म० ३।१ 'ग्रहणान्तं वा, जीवितस्याऽस्थिरत्वात्' बौधाय० २।४ इति १६ वर्षे समाप्तपादिकब्रह्मचर्याय— ( पादिकब्रह्मचर्यं ८ वर्षात् ९ वर्ष-पर्यन्त भवद्दषिणापि ३ समु० २५ पृष्ठे मनु० ३।१ व्याख्याने मतं, तद्गणनया १७ वर्षवयस्कस्य ब्रह्मचर्यसमाप्तिर्भविष्यति; तर्हि मनु० ३।२ ( सत्यार्थ० चतुर्थसमुल्लासारम्भे ) अनुसारं गृहस्थाश्रमावेशे तस्मै '१७ वर्षाय' किं १७-२४ वर्षां पत्नीं दास्यन्ति भवन्तः ? एवञ्चे द्धन्याः ! एवं वेदादपि सिद्ध्यति, यत्- २५ वर्षतः प्रागपि पुंसो विवाहो भवति, तथा च- अ० १४।१।४४ आनुसारं वध्वाः श्वश्रूश्वशुरयोरुपर्यपि राज्यकरणं निर्दिष्टम् । यदि केवलमात्रं २५ वर्षे भवेत् पुंविवाहः; तर्हि न्यूना-

+निग्रहस्थाने अपि । द्विवचनत्वात् प्रगृह्यत्वेनाऽसन्धिः ।

न्यूनं वर्षद्वये तत्पुत्रो जायेत, पिता तदा २७ वर्षीयः स्यात् । तदा स पुत्रं गुरुकुले पठनाय प्रेषयेत् ; पुत्रश्च २५वर्षपर्यन्तं तत्र तिष्ठेत्; तस्मिन्समये तत्पिता वानप्रस्थाश्रमे भवेत्सपत्नीकः; तदा स २६ वर्षीयः पुत्रविवाहं कुर्यात्तदा तत्पितुर्गृहस्थाश्रमेऽभावेन तत्पत्न्याः श्वशुराऽभावादुक्तवेदकथनं व्यर्थं स्यात् ; इयं कथा ऽधमब्रह्मचर्य्ये ( २५ वर्षे ) विवाहो ४८ वर्षब्रह्मचर्य्ये तु किं वाच्यम् , तेन स्पष्टं यद् वेदमते १८-१९-२० वर्षेऽपि पुंविवाहो भवितुं शक्यः; तदा तत्पितुरपि गृहस्थाश्रमे सत्वादुक्त वेदमन्त्रस्य सार्थक्यम् । एवं यदि १८ १९ प्रभृतिवर्षेपि वेदसम्मतो जातो विवाहः पुंसः; तर्हि सा यौवनावस्था भवति नो वेत्यस्योत्तरदायित्वमपि श्रीमति; अथ च स १८-१९ वर्षीयः किं १७-२४ वर्षीयां परिणयेत्कन्याम् तदा भवत्सम्मतस्याऽनुपातस्य का गतिर्भवेदित्यस्योत्तरदायित्वमपि श्रीमति । 'ऊनषोडशवर्षाया' मिति गर्भभिधायिश्लोके 'एकोनत्रिंशत् त्रिंशद्वा' इति पाठोभविष्यत्' इयं कल्पनाऽस्माभिः ४।३ अङ्के खण्डिता; या श्रीमता स्पृष्टापि न ।

अधुना मया 'ऊनषोडशवर्षायाम् इति पाठस्यैवा ऽनार्षत्वे भवदग्रे उपपत्तयः स्थाप्यन्ते । 'ऊनषोडशवर्षायां' यद्यप्ययं पाठः कियतश्चिरकालात्प्रचलितो दृश्यते; परं स सुश्रुतसम्मतो नास्ति; अतोयं न सुश्रुतस्य पाठ इति वक्तुं शक्यते, किन्तु 'ऊनद्वादशवर्षायामप्राप्तः पञ्चविंशतिम् । यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते । जातो वा न चिरञ्जीवेज्जीवेद्वा दुर्बलेन्द्रियः । तस्मादत्यन्तबालायां गर्भाधानं न कारयेत्' १०।५४-५५ इत्येव युक्तः प्राचीनः सुश्रुतसम्मतश्च पाठः । यतः प्राचीन हस्तलिखितपुस्तकेषु 'ऊनद्वादशवर्षायाम' इत्येव पाठ उपलब्धः—इति निर्णयसागरयन्त्रालयमुद्रिताया डल्हणाचार्यटीकिताया: सुश्रुतसंहितायाष्टिप्पण्यां द्रष्टव्यम् । तत्राङ्कितम्—"ऊनद्वादशवर्षायाम् इति हस्तलिखितपुस्तकेषु पाठ उपलभ्यते' । तेनोक्तगद्यसूत्रेणेदं पद्यसूत्रं सामानाधिकरण्यं धत्ते ॥ 'ऊनषोडशवर्षाया' मिति पदन्तु

सुश्रुतविरुद्धम्, यतः स १२ वर्षान्ते ऋतुकालं वक्ति न षोडशान्ते; गर्भाधानस्य च ऋतुना सम्बन्ध इति सर्वसम्मतम्— इत्यन्यत् कारणम्। तृतीयं तु श्रूयताम्— पञ्चविंशे ततो वर्षे पुमान्, नारी तु षोडशे। समत्वागतवीर्यौ तौ, सूत्र० ३५।१३ इति वचसा १६-२५ वर्षयोः समं वीर्यं भवति। उभयोर्वीर्यसाम्ये तु तत्र 'शुक्रबाहुल्यात्पुमान्, आर्त्तवबाहुल्यात् स्त्री, साम्यादुभयोर्नपुंसकम्' सु० शारी० ३।५ द्वाभ्यां समेन नपुंसको भवति' निरु० १४६ 'पुमान् पुंसोधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः। समेऽपुमान् पुंस्त्रियौ वा, मनु० ३।४९ 'रक्तेन कन्यामधिकेन, पुत्रं शुक्रेण' चरक० शारीर० २।१२ 'बीजात्समांशादुपतप्तबीजात् स्त्रीपुंसलिङ्गी भवति द्विरेताः' २।१८। 'नपुंसकं तयोः साम्ये' भावप्र० पूर्वख० गर्भप्र० ४० श्लो० इति नपुंसकस्योत्पत्तिर्जायते। तर्हि १६ वर्षास्त्रियाः २५ वर्षीयपुरुषस्य च सू० ३५।१३ इति समवीर्य्यतायां गर्भं कारयित्वा नपुंसकोत्पत्तिः कस्य पितुरिष्टा स्यात्? समवीर्या स्त्री कदापि न विवाह्या भवति किन्तु स्वापेक्षया हीनवीर्यैव; यतः समवीर्यतायां सन्ततिसम्भवो न जायते, क्लीबोत्पत्तिर्वा भवतीति लोकसिद्धम्। तेन 'ऊनषोडशवर्षायाम्' इति पाठो न युक्तः; अत एव भवद्भिरप्याचष्टे—'२५ वर्ष का पुरुष और १६ वर्ष की स्त्री दोनों तुल्यसामर्थ्यवाले होते हैं, इस [ तुल्यसामर्थ्य के ] कारण इस अवस्था में जो विवाह करना है, वह अधमविवाह है' संस्कार वि० पृ० १०३-१०४। तेन स पाठः कथमपि न युक्तः, किन्तु ऊनद्वादशवर्षा'मित्येव युक्तः, इतश्च स एव हस्तलिखितप्राचीनपुस्तकेषूपलब्ध इति प्रागुक्तम्। तस्या च वयसोऽन्ते ऋतुमतीत्वे जाते सति पुंसः स्त्र्यपेक्षयाऽधिकशुक्रवत्त्वात्पुत्रोत्पत्तिर्ध्रुवं भवेत्। रजस्वलात्वमेव तदा गर्भाशयस्य गर्भाधानत्वयोग्यतां पिशुनयति। रजो वीर्यं वा बहिस्तदा ऽऽयाति; यदा तदाभ्यन्तरिकपूर्तिं कुर्यात; ततोऽधिकतयाऽवशिष्टं बहिरागच्छेत

भवद्भिः ३ समुल्लासे लिखितम्– 'जब साङ्गोपाङ्ग शरीरस्थ सकल धातु पुष्ट' होके पूर्णता को प्राप्त होते हैं, तदनन्तर जो धातु बढ़ता है वह शरीर में नहीं रहता, पृ० २६ एवं रजोवहिरागमनं साधयति यद्गर्भाशयो वृद्धि गतः; रजस्वलात्वं गर्भकरणे प्रकृतेरिङ्कितम्, अतः सुश्रुते—'नारीणां रजसि च उपचीयमाने शनैः शनैः स्तनगर्भाशययोन्यभिवृद्धिर्भवति' सूत्र० १४।१८। यदि भवन्तः प्रागुक्ताऽपेक्षयाधिकन्यूनावस्थां स्त्रियं निधास्यन्ति; तदा भवत्सम्मतानुपातस्य व्याकोपः स्यात्।

अथ च 'ऊनषोडशवर्षायाम्' इति पदं 'तस्मादत्यन्तबालायां गर्भाधानं न कारयेत्' १०।५५ इति स्त्राऽन्तिमखण्डेनापि विरुध्यते– इति तुरीयं कारणमस्याऽनार्षत्वे। यत् 'ऊनषोडशवर्षा (१२-१३-१४-१५) स्त्री बाला कथञ्चिन्मन्येतापि; परमत्यन्तबाला न वभति। 'ऊनद्वादशवर्षायामिति' पाठे तु 'तस्मादत्यन्तबालायां... न कारयेत्' इत्युपसंहारवाक्येनापि सङ्गतिर्जायते, 'येनोपक्रम्यते येन चोपसंह्रियते स एव वाक्यार्थः' इति हि न्यायः। यतो गर्भाधाने द्वादशवर्षा दूनैव स्त्री अत्यन्तबाला वक्तुं शक्या; नतूनषोडशवर्षा। तेनद्वादशवर्षादधस्तन्या एवाऽत्यन्तबालात्वाद्गर्भाधाननिषेधः; तत्रापि विवाह मात्रस्य न निषेधः; यतो विवाहो गर्भाधानञ्च भिन्नभिन्नौ संस्कारौ। विवाहकाल एव धर्मो गर्भाधानं नादिशति, किन्त्वृतुकाले। अत आयुर्वेदः—' आर्त्तवस्रावदिवसाद् ऋतुः षोडशरात्रयः। गर्भग्रहणयोग्यस्तु स एव समयः स्मृतः भावप्रका० पूर्वख० गर्भप्र० २ श्लो०। ऋतावृतौ स्त्रियं गच्छेत्स्त्रोच्छया वा वरंस्मरन्' बृहत्पराश० ४ ३६ 'ता अब्रुवन् ऋतौ प्रजां विन्दामहै' वसिष्ठ० ५।८॥ अष्टवर्षादिस्मृतिसम्मतविवाहेऽपि सनातनधर्मः 'कृते वाहे वस्तव्यं वर्षैस्तु ब्रह्मचारिणा' इत ब्रह्मचर्यमाचष्टे। अत एवा ऽन्तरिकबाह्यसाक्षिवशाद् 'ऊनद्वादशवर्षायामप्राप्तः पञ्चविंशतिम्। यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते' अयमेव सङ्गतः पाठः। एतेन पूर्वसूत्रस्याऽपि सामानाधिकरण्यम्। १२ वर्षोत्तरं गर्भकारणरजःकालप्रतिपादक (सूत्र० १४। ६) सुश्रुतवचनेनापि एकवाक्यता। यत्

ऊन षोडशवर्षाणां स्त्रीणां गर्भः कुक्षिस्थो न विपद्यते; तत्सम्भावना द्वादशवर्षान्न्यूनतायां गर्भाधाने सति सम्भवति । ऊनषोडशवर्षाणां स्त्रीणां जाता बालकाः पितुः २०--२५ वर्षनिकटत्वे चिरञ्जीविता दृष्टाः दुर्बलेन्द्रिया अपि न दृष्टाः । १५ वर्षीयाणां १४ वर्षीयाणां तु जीविताः स्वस्था दृढाश्च बालका बाहुल्येन दृश्यन्त एव । १३ वर्षीयासूत्पन्ना अपि अनल्पाः १२ वर्षास्वृतुमतीषु जाताः सन्ततयोऽपि मया दृष्टाः। मदभिजने वत्प्रतिवेशिनी एका १२ वर्षीया विवाहिता सती गर्भिणी जाता १३ शे वर्षे सा सुतमसूत । अधुना तस्या द्वितीयः प्रसवोपि जातः । एवं तत्रैवैकामन्यामपीदृशीं जाने । मुल्तानेपि प० चूडामणिशास्त्रिणां गृहपार्श्वेऽप्येका १२-१३ वर्षीया प्रासोष्ट । एवं सुपरिगवेषणेनेदृश्यो ऽनल्पाः प्राप्येरन् । इतिहासे उत्तरा १२ वर्षीयासीत् , तत्पुत्रः परीक्षिज्जातः; तद्वीर्यपरिचयः श्रीमतोपि स्यात् । अथ च यदि तादृक् पुत्रः कुक्षिस्थ एव विपद्येत, जातो वा न चिरञ्जीवेद्; अत्रापि कर्म्मपरम्परा कारणम् , न तु १६ वर्षगर्भाधानाऽकरणस्य । किं १६ वर्षाणां स्त्रीणां कुक्षिस्था न विपद्यन्ते कदाचिद् बालाः ? जाता वा न म्रियन्ते ? दुर्बला वा न दृष्टाः ? तस्मादकारणमेतत् । तेन 'शास्त्रिमहोदयानां कथनमायुर्वेदविरुद्धं प्रत्यक्षविरुद्धञ्च' इति श्रीस्नातकस्य तर्को निर्मूलो जगत्परिचयहीनश्च । अथ च दुर्जनतोषन्यायेन कथञ्चिन्मन्येतापि मतभेदो गर्भाधाने; परमेतेन विवाहविषये तु कथं मतभेद उपपद्येत? विवाहस्य ऋतुकाले बहुत्र निन्दितत्वादिति स्वतन्त्रे लेखेऽस्माभिरुपोद्बल्येत । ऋतुकालात्प्राक्विवाहमात्रे न कापि कस्यापि हानिः; तदा यद्यसंयमाशङ्का, तर्ह्य विवाहेऽपि तादवस्थ्यमद्यत्वेऽक्षिलक्षीक्रियत एव। गर्भाधानं कामं भवन्तः २४ वर्षमपि त्यक्त्वा ४८ वर्षे कारयन्तु स्वैरम्; नाऽयं विषयो ऽस्मदीयविचारस्य; परं प्रकृतस्य विवाहसंस्कारस्य स्मृत्यादिसम्मत एव नियम ऋतुकालात्प्राङ्मन्तव्यः स्यात् । यतो भिन्नभिन्नाविमौ संस्कारौ । विवाहेन तर्हि गर्भाधानरहितेन को लाभ इत्यत्र पर्याप्तं विशदयितुं शक्यते; परं विस्तरभिया त्यज्यते ॥

# संस्कृत साहित्य परिषदः
## श्रियश्च नियमाः

…यः:—
परिषदोऽस्याः संस्कृतभाषार्यसभ्यता प्रचारात्मकः केवलमेक एव

…शुल्कः—
श्रीनगराद्बहिः सपादरूप्यकम् १।)
श्रीनगरीयेभ्यः परिषत्सदस्येभ्यस्तु रूप्यकैका १)

…स्याः—
संस्कृतभाषानुरागिणः पत्रादिव्यवहारेणापि सदस्या भवन्ति ।

…ल्यम्—
श्री पत्रिका तु मूल्यं विनैव प्रेष्यते । केवलं प्रापणप्रभृति सपादरूप्यकम् ।

…षसूचना—
पत्रिका प्रकाशने ऽत्यधिकव्ययकारणेन संस्कृतोद्धार प्रणयिनो जन्मभूमिभाषा प्रचार कटिबद्धा महानुभावाः साहाय्यार्थं सविनयं प्रार्थ्यन्ते । कृपया ते दानरूपेण निम्नाङ्कितेन संकेतेन धनं वितरेयुः

प्रकाशनसमयः—
त्रैमासिकमिदं पत्रं सौरीयेषु आषाढाश्विनपौषचैत्र मासेषु क्रमशो निर्गच्छति । पत्रप्रकाशनमासानन्तरं पत्रानुपलब्धौ सूचनया पुनरपि प्राप्यते पत्रम् । मासानन्तरं तु न प्राप्यते ।

…व्यवहाराः—
निम्नांकितेन संकेतेन विधेय इति ।

…चैत्र १९९४ }
…आषाढ १९९५ }

कुलभूषणः
परिषन्मन्त्री, श्रीयः संचालकश्च
सुनवारबाग श्रीनगर, (कश्मीर)

# विशेषसूचना

ऐषमेऽनेहसि कारणैरनिवार्यैः पत्रिकेयं त्र्यङ्कमयी प्रका
आशासे च यद्विक्रमीये १९९५ तमेऽब्दे आश्विन मासे समय एव प्र
श्यं गच्छेदियं पत्रिका । वर्षाभ्यां व्यतीताभ्यां बहूनां सदस्यानां पा
च शुल्कधनमप्राप्तमेव, कृपया धनदानेन श्री पत्रिकायाः सा
विदधतु संस्कृत भाषारसिकाः ।

महानयं खेदस्य गोचरो यत् कश्मीरेषु मुद्रायण प्रबन्धः
नास्ति येन महती हानिरेव जायते । तथापि प्रयतामहे यत् श्रीन
मुद्रणालयस्य सुष्टु: प्रबन्धो भवेत् येन पत्रिका प्राप्तौ एतादृशो वि
म्बो न स्यात् ।

'का नाम हिन्दुता–कथं चेयमुपकरोति लोकस्य' इति लेख
युत पं० चारुदेवमहाशयेनातीते मार्चमासे श्री पत्रिकायां प्रका
मस्मदन्तिकं लवपुरे प्रेषित आसीत् यश्चास्माभिः सधन्यवादं स्वीकृ
लेखो ऽयमप्रेल मासे मुद्रणालये प्रेषितश्चास्माभिरङ्के चास्मिन् प्र
शितोऽप्यस्ति । मई मासे लेखोऽयमस्माभिः काशीतः प्रकाशिते 'सु
पत्रेऽन्तर्गतो दृष्टः । रीतिरियं विरुद्धैव यतो लेख स्त्वेकस्मिन्नेव
प्रकाश्यते न तु पत्रयोः पत्रेषु वा । 'सुप्रभात' पत्रं पूर्वं निर्गतं पर
ऽयं 'सुप्रभात' पत्रस्य प्रकाशनात्पूर्वमेवास्मिन् पत्रे मुद्रित आसीत्।

आशासे तल्लेखकमहानुभावा भविष्ये यांल्लेखान् अस्मत्
प्रकाशनाय प्रेषयेयुस्तानन्यस्य समीपे मुद्रणालये वान्यस्मिन् पु
प्रकाशनाय न कदाचिदपि कृपया प्रेषयेयुरिति ।

सम्पादकः ॥

❀ ओ३म् ❀

वर्ष ८
सं० ३, ४

Vol 8
No. 3 & 4

काश्मीरमण्डलान्तर्वर्तिश्रीनगरस्थायाः

# संस्कृतसाहित्यपरिषद्-
## त्रैमासिकी
## पत्रिका

# श्रीः

QUARTERLY JOURNAL OF THE
## Sanskrit Sahitya Parishad
SRINAGAR ( Kasmir )

वार्षिकं मूल्यम् 
२।)

पौषचैत्रयोः
१९९६

# विषयसूचिः ।





सूचना—सर्वे लेखाः प्रायो लेखकमहानुभावानां भाषामतानुसारेणैव प्रकाशिताः । अतस्तेषामुत्तरदायिनस्त एव नतु सम्पादकाः ।



उन्मिष्याज्ञनताहितार्थपरमा श्री-सूक्तभाजां रुचिः,
सद्धर्मे विनये तमोऽपहनने विद्याप्रचारे शुभे।
न्याय्याचारविचारसाररुचिरा नीतिः सदा वर्धतां,
श्रौती चापि सरस्वती वितनुतां वृद्धिं समाजेऽमलाम्॥

[ विश्वबन्धोः ]

## सुर-सरस्वती-समुन्नतेरावश्यकत्वम्

ले०—श्रीविद्यानिधिशास्त्री व्याकरणाचार्यः

विज्ञाः! या सुरभारती पुराऽखिलस्यापि भूमण्डलस्यालङ्करणी चालङ्करणी चाजनिष्ट, कष्टमद्य तदीयां दशामुत्प्रेक्षमाणानामस्मद्देशीयानां महानुभावानां वैदेशिकानामपि चैकेषां तद्भावभावितानां हृदयमनुराग-वैसादृश्याद् भूयो विदूयते। एतादृशीं क्षोदीयसीं दशां प्राप्तैषा दिव्या भाषा या पुराण्येव द्योतयन्त्यपि पुराण्येव संवृत्ता। अशरण्याऽरण्यानीवागण्या व्यपदेशयति नो बन्धुताः। किं कुर्मः, बलवान् खल्वयं व्यामोहो नियतेर्यदनियतं नियम्यते नियतं चानियम्यते। उक्तं च महाकविभिः—

नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण। इति

नैकविधं प्रकृतेर्दृष्टम्, अदृष्टं तु केन दृष्टम्। एवं प्रतिक्षणं चलाचलेषु भावेषु युगव्यापारपारवश्यात् सुरभारत्याः साम्प्रतं क्षोदः कथमिवासाम्प्रतं न स्यात्।

यां भाषामधीयानः खलु दुर्जनोऽपि सज्जनायते, कटुरपि विकटः कपटी पटूभवन्नकटुर्भवति । व्यवहारवर्त्मनि वर्तमानः सन्नासन्नमिव परमार्थमाकलयते, यथाध्यात्मयोगो दृढभूमिः क्रियते । भूतप्रपञ्चान् प्रसाधितेष्टकर्तव्याः पुमांसः कथङ्कारमन्तर्हितं परमात्मानं पश्येयुरिति या बोधयति चित्तवतः कर्तॄन् । तत्रैतत्तु सुकरतरकं निश्चितं भाति यथाऽनया वाचा देहेन्द्रियसंघाततदतिरिक्तचेतनरूपस्य लोकद्वय-स्योपाकारि चोपकारिष्यते चोपकर्तुं शक्यते च न तथा परया कयापि दैशिक्या वैदेशिक्या वा वाचेति । अतिमात्रं चित्रं सौहित्यं जनयद् यस्याः साहित्यं गलत्कलिमलं सकलकलमलं भुवस्तलमलं-करोति । तथाहि—यस्यां प्रध्वंसितखेदा वेदाः, प्रकृतिपुरुषान्यता-ख्यातिमुपदिशन्त्य उपनिषदः, कर्तव्याकर्तव्यविवेकभूमयः स्मृतयः, पदसाधुत्वान्वाख्यानाभरणानि व्याकरणानि, लोकयात्रानिदर्शनानि दर्शनानि, स्फुटं प्रकटीकृतोद्भटोद्भटनटचाटुपटुनाट्यानि नाट्यानि, दिव्यदिव्यानि भव्यभव्यानि मधुरमधुराणि च काव्यानि, स्वयं स्वयम्भुवो विकासं लेभिरे । सा भाषा वर्तमाने काले जरतीव योषि-दवधीरणां सहते, साधिक्षेपमुपहासविषयीभवतीति किमतः परं दौर्भाग्यं स्यात् । तस्मादस्माकं कार्यं यदेतस्याः समुन्नतेरभ्युपायां-श्चिन्तयेम । यया कयापि दिशोन्नतिः शक्यते कर्तुं तां दिशमाश्रयेम । अत्र विषये यद्यपि बहवो विप्रतिपद्येरन्, अयं मार्गो ज्यायान्, एष वा, असौ वेति । तथापि यः कश्चनापि पन्थाः श्रेयसे स्यात् तस्यापवादो न स्यादिति मन्ये । मम तु मनसि दृढं निहिता ये प्राञ्चो विचारास्त एवात्र प्रतिपाद्यन्ते । येन कृततीर्थः साधुः स्यादवहितो मार्गः ।

तत्र पूर्वं तावद् भारतानामस्माकं भारतत्वमावश्यकम् । लुप्त-प्रायशोभारता अपि भारता भारता एवेत्यसन्देहात् । प्रतिक्षणं प्रतिकार्यं च भारतभारत्येकपक्षपातिन्यो धन्या नो भावना द्रढीयस्यः स्युः । सर्वथापि जातिदेशकालसमयानवच्छेदेनैव भारतीं भारतीं प्रवर्तमानां वयं पश्येम न कुतोप्यवच्छिन्नाम् । एतन्महाव्रतमनुसन्दधाना मानावधानास्पदं सपद्येव भविष्याम इति न आश्वासः । यः स्वयमेव स्वां भाषां योग्यतां स्थितिं वाऽकिञ्चित्करां मन्वानस्ततोऽपत्रपते, न केवलम-

पत्रपते प्रत्युत ह्रीत: स्वमेवात्मानमधिक्षिपति-कोऽहम्, किमेतया भाषया करोमि या लोकेऽस्मिन्नुपहसनीयतां भजते, यया च द्वारीभूतयाहमपि न्यक्क्रिये, तामेतां निर्लयिनीमिवाहिरञ्जसापवृञ्ज इति, सोपि मन्ये पतित: स्यात्। दृश्यतां यदि स्वयमेव स्वरूपमन्यथा मन्येत तर्हि तत्केन कथं पश्येत्, तत्केन कथं शृणुयात्, तत्केन कथं पृच्छेत्। अत एष एवाभ्युपाय: स्वरूपपरामर्शस्य यथा स्वेनैव स्वं पश्येत्, स्वेनैव स्वं शृणुयात्, स्वेनैव स्वं पृच्छेत्। सुरसरस्वत्यामधीती भवन् भवाननणुप्रमाण: कुतो बिभेति ?

मा भेर्मा संविक्था:। यजु: ६, ३५;

इत्याह भगवान् वेद:, यं त्वमुपास्से । द्वितीयाद्वै भयं भवति। यश्च सुरभारतीरसलम्पटोऽद्वैतमिवाकलयन् लोकातिक्रान्तचमत्कारसारभू: समपादितस्य कुतो भयम्। स तु दैव्यां वाच: प्रेयान्। इतरे तस्माद् बिभीयुर्नाम, स न कदापि कुतोपि भयमुद्वेजनं वा लब्धुमलम्भूष्णुरिति साम्रेडमभ्यस्यमाने सर्वत्र लोके वेदे च व्युत्पत्तिं लभमान: प्रेक्षावतां सरणिं शरणीकुर्वन् मसृणं प्रगुणीभवति पुमान्। एवं चैवंप्रायाभिर्भावनाभि: स्वाभिमानभराक्रान्तं सत् स्वान्तं नितान्तं तान्तमपि शान्तं भवति। किं बहुना, देशान्तरेषु बाला: प्रथमत एव स्वदेशानुरागं प्रत्यभिमुखीक्रियन्ते। जापानाभिधानो जनपदोऽत्र निदर्शनम्। तदीयैराधिकरणिकैर्मातृभूमिं प्रीणयितुं नववयस: कुमारा आदावेवानुयुज्यन्ते। के यूयम्? का भवतां जन्मभू:? का च भाषा भवतामभ्यासपदवीमदवीयोऽध्यारूढा? कया शिक्षया व्यवहरतां सतां वश्चेतश्चेतस्ततो न परिप्लवते? इत्येवमादिभि: प्रश्न-प्रतिवचनै: स्वदेशं प्रत्यनुरागो दृढीक्रियमाणो 'यन्नवे भाजने लग्न: संस्कारो नान्यथा भवेत्' इति न्यायेन तत्प्रत्यनीकान् भावानधरीकरोति। अत एव प्रायेण सर्वेऽपि वैदेशिका: स्वतन्त्रमात्मानं धन्यं मन्यन्ते। स्वकीययैव च भाषया प्रवृत्तिमनुरुन्धाना लक्ष्यन्ते। आङ्गलीया वाक् काटवमजहत्यपि तद्देशजानां पाटवमभिव्यनक्ति। तै: खलु स्वस्यामेतस्यामवमायामपि भाषायां सर्वोऽस्माकं ग्रन्थराशिराशु विकाशीकृत्य स्वदेश: कशीक्रियते। वयं च मन्दभागधेया: पुस्तमपि

गीर्वाणवाणीवीणारणनमनुरणन्तोपि निरुत्साहा वाहा इव हाहाकारं कारं कारं वारंवारं कृपणाः क्षपाः क्षपयामः। निरुद्यमाः किंकर्तव्य-मूढा इवात्माभिमानशून्याः स्मः। एष प्रथमः कल्पः समुन्नतेर्यदुतोन्नता वयं, नावनताः, प्रयतिष्यामहे चौत्तराधर्येण भृशमुन्नेतु-मित्येवंजातीयकानां भावनानामात्मन्यभिनिवेश इति, स चास्माकं नास्तीति दुःखाकरम्।

अथापरः—सकलोऽप्यस्मदीयो व्यवहारो दैव्या वाचैवानुषक्तः स्यात्। तद्यथा विपण्यां पण्यविक्रयं कुर्वाणो बाण इव स्वरसरसवतीं सुरसरस्वतीमुदीरयेद्गीरः, तथैव चानन्दमसन्दं विन्देत स्वच्छन्दः। क्रेता चापि पण्यवस्तूनि वास्तुनि वस्तुतः प्रस्तुतां संस्तुतां च स्तुतां तामेताम्। एवमुभयोरेकधैव व्यवहारेण हारेणेव विमलीक्रियते हृदयम्। अकुतोभयमुभयं च वर्तमानं मानमदम्भं लम्भयेदितरेतरम्। तयोस्तावदेव चिरं यावन्नाभाषेते प्रक्रान्ताभाषणौ तु विचक्षणौ क्षणं विलक्षणौ निपुणं विपणिमुच्चकुर्यातामित्येवं भावयन्तः समेप्यन्योन्यं परं श्रेयः प्राप्नुयुः। एतेन ब्रह्मक्षत्रयोर्व्यवहारोपि व्याख्यातः। तत्राप्येकधैव व्यवहारेण मिथोभयमपनेयम्। यदेवं मार्गः स्पष्टं प्रकाशितः स्यात् तदा ग्रन्थप्रकाशनपत्रिकाप्रवर्तनप्रभृतिषु व्यवहारेषु सौकर्यमैश्वर्याद् भवति। आवेदनमन्तरेणापि सर्वः स्वार्थं परार्थमेव मन्यमानो भाषामेनामुत्कर्षयितुं किं न विदध्यात्। अद्य तु किं ब्रूमः, स्वयं परस्माद् भीताः सन्तो वार्तामेव तावन्न पृच्छन्ति। वार्त्ताप्यार्त्ता सती सतीव परपुरुषशङ्किता कलङ्किता भवति। यस्य च द्रव्यमेव नास्ति स कुतोऽविगुणानपि गुणान् सक्रिया अपि क्रियाश्च ग्रन्थ-ग्रन्थिषु पत्रपात्रेषु वा निक्षिपेदित्यधिक्षिप्तः कष्टमनिष्टं प्रतीष्टः स नेष्ट-मीष्टे द्रष्टुमपि किं पुनः स्प्रष्टुम्। व्यवहारनैकल्याभाव एवात्र हेतुः तत्र च भाषावैकल्यं प्रधानं हेतुः।

एतदहोभाग्यं यत् क्वचित्त्वनुष्ठीयमानः प्रयत्नो दृश्यते। सन्ति हि गुरुकुलानि विपुलानि, पाठशालाश्च विशालाः। यत्राविरतं सुरभारती-रतिरता दृश्यन्ते जनताः। तेषामनाहार्येण व्यवहार्येण च प्रक्रमेण

क्रमेण साहायकानुष्ठानमप्यवश्यमेवेष्टव्यम्। राजकीयपरीक्षोपयुक्तेषु संस्कृतग्रन्थेषु टीकाटिप्पण्यादिपरिष्कारोऽपि विदुषां प्रतिवत्सरं संसरति। वाराणस्यां 'सुप्रभात-सूर्योदय-ज्योतिष्मती' प्रभृतीनि, कलिकातायां 'संस्कृतसाहित्यपरिषत्' इत्येवमादीनि, जयपुरे संस्कृत रत्नाकरादीनि च संस्कृतपत्राणि मित्राणीव प्रीणयन्ति सुरगवीप्रणयिनः। एतासु चान्यासु चैवंविधास्वभियुक्तासु पत्रिकासु सैषा काश्मीर-प्रान्तान्तर्भूतश्रीनगरान्निःसरन्ती 'श्री' नाम्नी पत्रिकाप्यन्यतमा चकास्ति। एतदर्थमेतान् महानुभावान् धन्यान् मन्यामहे ये संस्कृत-पत्राणां सम्पादनभारनिर्वहणे समाहितयत्नास्तत्रैव चानिशं निषण्णा न जातु श्रमं जानते।

अपरोऽप्येवंभूतः प्रकृते व्यतिकरश्चतुरचेतसां चेतसि चमत्कार-माधत्ते— पञ्चनदेऽस्मिन्नत्यभिनिविष्टबुद्धिमानवबहुले प्रान्ते तत्रापि लवपुरसदृशे पाश्चात्यभाषाप्रकाशाभिलाषाधीयमानयत्ने सुभगम्मन्ये पुरे सुरसरस्वतीसमाजमभिनिर्वर्तयतां महामान्यानां धन्यानां प्राच्य-पाश्चात्योभयविद्याविद्युदुद्योतद्योतितस्वान्तानां शान्तानां लब्ध-प्रतिष्ठानां वेदैकनिष्ठानां तत्प्रवणतयैव सकलमहो व्याप्रियमाणानां श्रीलश्रीपण्डितविश्वबन्धुशास्त्रिणां पण्डितमण्डलीमुच्चैर्मण्डयितुं बद्धपरिकराणां भूयानभियोग इति। कस्य न सचेतसो हृदयमावर्जयेद् यदि सरस्वतीसमाज एष सततमुन्नतः सन् सर्वाभीष्टां देवगिर-मपीष्टामुन्नमयितुमिति। वयं तु पश्यामो यदेवंप्रायाधारैव सुर-भारतीधारा मङ्गलोल्लासप्राग्भारा। पर्यवसाने केवलमिदं सूचयामः—वेद एव सर्वजगज्जीवातुः स एव शरणं त्रिलोक्याः। विशेषेण तु मरणधर्मणां प्राणिनाम्। स एव च सुरभारतीरससागरः। तदुद्धरण एव भूयानुद्योग आरम्भणीयः। ये च वेदैकशरणा निष्कारणका महात्मानस्तदनुसरणमेवामरणमाभरणमस्य जीवि-तस्याश्रयणीयमिति दिक्।



# गीर्वाणवाणीजननीदशा

रचयिता—श्रीरामप्रसाद भट्टशास्त्री

नीरागानपि या यतीन् बहुरसाञ्छृङ्गारभावैर्नवैः,
क्लीबान् वीरतमांश्चकार नितरां वीरेण रागेण या।
कारुण्येन शिलोच्चयानपि पुरा याऽरोदयन्निर्भरम्,
वाणी सैव निराकृता प्रतिदिनं शोकाकुला रोदिति ॥१॥

स्वातन्त्र्यं यदि काम्यते जहि तदा जाड्यं स्ववाचं प्रति,
जाड्येनैव हि मानिनामवनतिः कामं विजाता चिरात्।
तिष्ठन्ते परवाक्षु ये चलधियो लम्बालकास्ते सखे!
†नागो वाऽहितया स्वदेशवचसां मा भूः प्रकृत्या भिये ॥२॥

भूमी सर्वरसान्विता, धनयुतं गेहं, सुखं कान्तिमद्,
बुद्धिर्लोकविमोहिनी नयपरा, भाषापि रम्या गुणैः।
भार्या भर्तृपदानुगा, सविनयाः पुत्रा, हितैषी नृपः,
यत्रैतानि भवन्ति, तत्र कतमो निर्द्वन्द्वतां नेच्छति? ॥३॥

‡मन्दाक्षमेतन्महदस्ति वीराः!
रात्रिन्दिवं यत्र जनाः क्षुधार्ताः।
साहित्यसङ्गीतधियां कवीनाम्,
वाचोपि रम्याः क्व पदं लभन्ताम्? ॥४॥

स्वाधीनतायज्ञहुताशनेऽस्मिन्,
सम्भूय सर्वैरभिमानवर्जम्।
दुःखानि सञ्चिन्त्य गुरूणि भूमेः,
प्राणाहुतिः सर्वसुखाय देया ॥५॥

---

† सर्पःऽइव। ‡ लज्जा।

प्रायमुपविष्टा इत्येवालम्।
अथ प्रायमुपवेक्ष्यामीति श्रीरामायणे

# ऋषिप्रवीरादि-सिद्धानां जीवनचारित्रम्

( ले०—श्रीशिवनाथ शर्मशास्त्री साहित्यभूषणः, श्रीनगरम् )

गताङ्कादवशिष्टो भागः

+

आज्ञया सुप्ताः। मध्यरात्रे वितस्तातटे यत्र पूर्वं सुहृदर्थे प्रायोपवेशनेनोपविष्टावास्ताम्, तत्रैव ऋषिप्रवीरबोधितौ तेन सह स्वात्मानं ददृशतुर्मुमुदतुश्च। गृहगतश्च ऋषिप्रवीरो मात्रावलोकितो यथापूर्वं क्रीडनादिकं प्रारेभे। कतिचिद् दिनान्यनन्तरं न केनापि प्रतिबोधितः स्वयमेव विद्यापठनाय प्रवृत्तः पाठशालां जगाम।

पाठशालोपस्थितिदिनात्प्रभृति प्रत्यहं निशान्ते श्रीनगरस्थ-प्रद्युम्नपीठ (शारिकापर्वत) प्रक्रमार्थं जगाम। बृहत्कालानन्तरं श्रीराजराजेश्वरी जगदम्बा दर्शनं दत्त्वा शशास। 'ऋषिप्रवीर! अनया तपश्चर्यया प्रसन्नास्मि, अतः श्वः प्रातःकाले मम द्वारे गणेशस्थले यस्तवाभिमुखमागच्छति, तद्द्वारेणैव तव निस्तारोऽस्ति'। इत्युक्त्वान्तर्दधे। प्रातश्च देवीप्रदक्षिणायागच्छन् बाछबरनीनामस्थाने मार्जारमेकमग्नौ पचन्तं नग्नं सिद्धादेशं ददर्श, मनसा च संकुचितेनाचिन्तयत्। अहो किमसावेव मम निस्तारकोऽस्ति। स्वयं च वर्णाश्रममर्यादायां कटिबद्ध आसीदृषिः, अतो हेतोस्तं सिद्धमदृष्ट्वैव शारिकादेवीपादान्तिकमुपगम्य तत्र पूजां विधायाशरीरवाचं शुश्राव। भो वत्स! त्वदर्थं तव गुरुः प्रतीक्षमाण आसीद् न गतोऽसि तन्निकटे। अधुना श्वो यस्तवाभिमुखो भविष्यति नग्नो वा मलिनो वा निःसंशयं स सेव्य इति। द्वितीयेऽह्नि यथानिर्दिष्टे स्थाने स एव मिलितः, परं मनोवैक्लव्यान्नोपगत ऋषिणा। स यथापूर्वं देवीस्थानं जगाम। तामपूजयत्। तथैवाशरीरिणीं वाचं श्रुतवान्। तृतीये दिने वर्णाश्रममर्यादासंरक्षणपरस्यैवमेव संपन्नम्। तस्मिन्दिने ऋषिर्देवीपरिक्रमणाय गतः। इतश्च सोऽवधूतः (कृष्णाकारः) ऋषिप्रवीरगृहं गत्वा तन्मातरमकथयत् 'भद्रे! ऋषेर्धूमपानपात्रं (हुक्का) दीयताम्' तया तु शीघ्रं पार्श्वे स्थापितम्। कृष्णाकारो विजयासवं (गांजा) पीत्वा

ऋषिमातरमुवाच । 'आगतायर्षय इदं दातव्यम्' इति कथयित्वा चलितः । आगत ऋषिर्यथावृत्तं मात्राभिहितः कृष्णाकारपीतावशेषं पीत्वा जातदृष्टिः स्वां जननीमकथयत् । 'मातः ! अद्यप्रभृति मम वने चतुर्दश वर्षाणि तपः करणीयमस्ति' । सा तु—'वत्स ! मातरि जीवन्त्यां पुत्रस्तत्सेवां तपश्चर्यां हित्वा नैव वनं गन्तुं शक्नोति, जाति-धर्म-नीत्याचारविरुद्धमिदम् । त्वयि वनं गते कथं निर्वाहो भविष्यति मम, इत्यतो न युज्यत एवं कर्तुम्' । श्रुत्वैतन्मातृवाक्यं तदाज्ञानुचारी ऋषिर्हस्तपादुके काष्ठनिर्मिते संपाद्य हस्ताङ्गुष्ठोपरि स्थितश्चतुर्दश वर्षाणि गृहे तपश्चरणाय प्रवृत्तः । तपःकालेऽस्य चतुःशताधिकं सहस्रं सेवकानां संलग्नम् । येषां द्वौ सेवकौ (ऐत-नानाख्यौ) प्रधानावास्ताम् । तद्द्वारेणैव गृहकार्यादिकं समभूत् । तपस्यत ऋषिप्रवीरस्यैकदा माता प्राह, 'वत्स ! भवान् गृहस्थोऽस्ति, गृहिणी भवदीयतपश्चरणेनातीव निर्विण्णा आश्वासनीया', इत्थं वहुवारं मातुरनुरोधेनाकथयत् । 'मातः ! अद्य रात्रौ सा मत्पार्श्वमागच्छतु' । तथानुष्ठिते सा अर्धरात्रवेलायां पतिदेवकुट्यामागत्य पतिशरीराङ्गा-णीतस्ततो विच्छिन्नानि दृष्ट्वा बहिरेव रात्रिमतिवाह्य प्रातः स्नानान्तरं श्वश्रूपार्श्वं सेवार्थं समागता पृष्टाचानया न किमपि पूर्वदृष्टं निवेदितम् । एतस्मिन्नवसरे स्वकुटीतो निर्गत्य ऋषिप्रवीरः स्नानार्थं नदीमवतीर्णः । तं दृष्ट्वा भार्या सजीवेव संपन्ना । श्वश्रूः स्नुषाचरित्रं सर्वं संस्मृत्य जानाति स्म, न भर्ता दृष्टो भवेदनया । द्वितीयदिनेऽपि मात्रा प्रेरितः पत्नीमाजुहाव रात्रा वृषिः । पतिदेवपार्श्वे उपगतायास्तस्याः पतिर-वोचत् । 'भद्रे ! धूम्रपानं कारय' । श्रवणानन्तरं तया सज्जीकृतं धूम्र-पानभाण्डं (हुक्का) पुरः स्थापयित्वा हस्ताभ्यां गृहीतम् । पति-सेवापरा धूम्रपान-भाण्डादुत्थितमङ्गारं हस्ते पतितं नागणयत् । पतिश्च तस्या असाधारणीं भक्तिं दृष्ट्वा तुतोष । अस्मिन्नेव समये सा गर्भिणी संजाता । गते च काले नवमे मासि शुक्लाश्वयुज-तृतीयायाम-भुक्त-मूलनक्षत्रे पुत्रं प्रसूतवती । दैवज्ञैः कुण्डलिकासंपादनकाले परस्परं संमन्त्र्य सिद्धान्तितं, यदसौ शिशुर्द्वादशवर्षं यावन्न दर्शनार्हः पितुः । शिशुपितामही तं शिशुं दैवज्ञानुमत्या लहरं (लाइ)

प्रस्थापितवती। सोऽपि तत्रैव कृषीवलैः संवर्धितश्चतुर्दश वर्षाणि यापयामास। इतश्च ऋषिप्रवीरस्यापि तपस्याकालो व्यतीतः। तदनन्तरं स्वकुटीं विसृज्य निर्गत ऋषिः सेवकगणेन सार्धमितस्ततो बभ्राम। काले गते गङ्गाष्टम्यां प्राप्तायां गङ्गास्नानार्थं प्रार्थितः प्रोवाच। 'मातः! वृद्धासि हरमुकुटगङ्गाप्रदेशं गन्तुमसमर्थासि अतोऽहं तस्मिन दिने भवत्स्नानायात्रैवागन्तुं गङ्गां प्रार्थयिष्यामी'ति। तथेति मात्रा कथितो गङ्गाष्टमीं प्रतिपालयन्नास्ते। गङ्गाष्टमीदिवसस्य मध्याह्नकाले ऋषिप्रवीरगृहस्यैशानदिग्भागेऽकस्मादुदभूज्जलम्, तद् दृष्ट्वा स मातरं व्यजिज्ञपत्। 'मातः! आगतेयं त्रिभुवनपाविनी गङ्गा भवदर्थे'। मात्रैतच्छ्रुत्वा स्नातं, तद् गङ्गास्थानमद्यापि तत्रास्ति। एकदा प्रथमसेवकस्य (एतस्य) माता कालवशाद्विपन्ना। मृतां मातरं गृहे विसृज्य रुदन्नागतः स्वामिपार्श्वे, उवाच च। 'हा हतोऽस्मि माता मृता, नाहं क्षणमपि तया विना जीवामी'ति श्रुत्वा विमृश्य प्राह 'आगच्छ सत्वरं, मातरं ममाज्ञया चतुर्दशवार'मुत्तिष्ठे'ति विज्ञापय'। तथानुष्ठिते सा प्रत्युज्जीव्य चतुर्दश वर्षाणि जीवलोकसुखं बुभुजे। इतश्च स गृहान्निष्कासितः शिशुर्ग्रामे पञ्चदशवर्षीयः संजातः। लोके च महान् कोलाहलोऽभवत्। 'पश्यतु सिद्धस्यास्य पुत्रो ग्रामवासी पञ्चदशवर्षीयः कृषीवल इवाशिक्षितः सदाचारो व्रात्यः संजातः। नचाधुना व्रात्यस्तोमयागं विना यज्ञोपवीतधारणार्हः' इत्थं देशव्यापिन्यां संजातायां निन्दायामेकदा ऋषिप्रवीरः सुय्यपुर (सपोर)-वासिनं कुलपुरोहितमाहूय सविनयमपृच्छत्। 'भो देव! पुत्रानयन-मुहूर्तं यज्ञोपवीतमुहूर्तं च पञ्चाङ्गशुद्धं कथय'। तेन विचार्यान्य-दिने पुत्रानयनमुहूर्तम्, अष्टमे दिवसे च यज्ञोपवीतधारणमुहूर्तं निर्दिष्टम्। द्वितीयदिने हि पुत्रं समानीय यज्ञोपवीतोत्सवसामग्री-संभारानयनाय प्रवृत्तः सेवकवर्गः। ग्रामवासित्वात्पुत्रोऽतिपुष्टाङ्गः कृष्णवर्णश्च साक्षान् म्लेच्छ इव दृश्यते स्म। यज्ञोपवीतोत्सवदिने निमन्त्रितैर्ब्राह्मणैः परस्परं मन्त्रितं, 'नासावीदृश्याकृत्या यथा-शास्त्रं ब्रह्मकर्मणि नियुज्यते, किं कुर्मः?'। ऋषिप्रवीरोऽपि दिव्यदृष्ट्या तेषां भावं जानाति स्म। प्रवृत्ते महोत्सवे मेखलासंस्कारकाले ऋषिप्रवीर सेवकानकथयत्। 'एनमादाय नदीं गच्छत, कृतस्नानं यज्ञशालां प्रवेशयत्। ... तत्र या वा घटना भविष्यति

तामप्यावेदयत, तथानुष्ठिते नद्यां स्नानकालेऽस्य पुत्रस्य चर्ममांसमस्थीनि च विभिन्नानि संभूय नामावशेषः पुत्रो बभूव। दृष्ट्वैतच्चकिताः सेवकाः सभयं स्वामिनिकटे यावत्प्राप्तास्तावदृषिप्रवीरः प्राह। 'न भेत्तव्यं, प्रागुपनयनात् कामचार-कामवाद-कामभक्ष्यमिति शास्त्रसिद्धमपि यद्यस्ति, तथापि ब्राह्मदीक्षायां संकोचयुक्त-भूदेवशङ्कापनोदार्थं कामभक्षण-संभूतं मांसादिकं विगलितम्। अधुना ब्रह्मचर्योचितं वेषमाधाय समेष्यति। युष्माभिर्नदीं गत्वा मदाज्ञया चतुर्दशवारं 'रहनवाब' नाम्नाऽऽह्वातव्यः'। तथा कृते नदीतः सुन्दरवपुरष्टवर्षदेशीयः रहनवाबनामा पुत्रः यथाविधि स्नानादिकं कृत्वा वाससी परिधाय यज्ञशालामागतो ब्राह्मणैः सह वेदमध्यैत। तस्मिन्नेव दिने कोऽप्यागत्य "मया स्वकन्या अस्मै दत्ते"ति व्यजिज्ञपत् स्वामिनम्। द्वितीये मासे तथैव विवाहोऽपि संपन्नः। गते च कियति काले, ऋषिप्रवीरस्य जननी स्वर्याता। तदा पुत्रेण प्रथमतपस्याफलं तस्यै दत्तम्। प्रतिज्ञातं च 'देशेऽस्मिन्नद्य या स्त्री मरिष्यति साप्यनयैव सह वैकुण्ठगामिनी भविष्यतीति'। पुनर्वैदिकेन विधिना स्वमातुरन्त्येष्टिक्रियां, दशोदकक्रियां, और्ध्वदैहिकमासिककृत्यं, दीपदानं, सांवत्सरिकं सपिण्डनं च चकार। जगति संख्यातीतसिद्धिदर्शनादतीव प्रसिद्धः सिद्धो बभूव। एकदा च श्रीनगरे (बुहरीकदल)-नामके स्थाने रात्रावग्निरकस्मादुदभूत्। द्वादशसहस्राणि गृहाणि भस्मसाच्चकार, न च शशाम। तदा ऋषिप्रवीरः स्वतपस्यापादुकामेकां **'पीरपण्डित पादशाह हरदुजहां मुशकिल आसान'** इत्युक्त्वा निचिक्षेप। पादुकानिक्षेपानन्तरमेवाग्निः शशाम। द्वितीयामवशिष्टां पादुकामधुनापि ऋषिप्रवीरस्थाने पूजयन्ति मनुजाः। महासिद्धाः स्वजन्मनि अलौकिकं कार्यजातं कृत्वा षष्टितमे वर्षे वैशाखकृष्णपञ्चम्यां नश्वरं देहं परित्यज्य निर्वाणं गताः। तस्मिन्नेव दिने प्रत्यब्दं समहोत्सवं श्राद्धं च कुर्वन्ति तद्वंश्याः। नवम्यस्ति तदीयाधुना वंशपरंपरा। चतुर्थीं यावद् वाक्सिद्धिरासीदस्य कुलस्य। श्रीनगरस्थजनाः स्वकीयकामतापूर्त्यै चतुर्दशपणरूपमुपयाचितं तत्स्थाने दत्त्वाद्यापि पूर्णमनोरथा भवन्तीति तेनैव तत्रत्यानां निर्वाहोऽपि भवति। नमोनमस्तपस्विभ्यः।

विस्ताररूपेण ऋषिप्रवीरचरितनामकं पुस्तकं मुद्रयित्वोपहारीकरोमि पुरावृत्ताभिलाषुकाणां पुरस्तादिति लेखकः॥

अथ गुरुदुर्लभः।

# संस्कृतज्ञानां सामयिकं कर्तव्यम्

( ले०—विद्याभास्करः श्रीअमरनाथशास्त्री व्याकरणाचार्यः, लवपुरम् )

अयि भारते सुरभारती-भव्यभवन-निर्माणविशेषज्ञा विद्वांसः! सुविदितचरमेव समेषां सुरसरस्वती-चरणरजोजुषां विदुषां वैदिकसंस्कृतिरक्षणसक्षणानां भवतामनुक्षणं क्षयं नीयमानमात्मजीवनमिति। प्रतिग्रामं प्रतिनगरं प्रतोलीषु परित आहिण्डमाना वृत्तिवैकल्यं रोरुद्यमानाः स्वीयं जीवनसर्वस्वं वराटिकाभिरङ्गुलिपर्वगण्याभिः क्षपयन्तो वेदराशिमिरिणे वपन्तोऽपि भूयांसो भ्रातरोऽक्षिलक्ष्यीक्रियन्त एव। शास्त्रिपरीक्षणमहोदधिसन्तरणनिपुणा अपि केचन संस्कृतज्ञकैवर्ताः सुचारुवृत्तिसम्प्रयोगे पङ्गुत्वमेवाकलयन्ति। इदमेव जीवनवैषम्यं न जाने कियतः श्रोत्रियवंशान् कालकवलितांशानन्वतिष्ठिपत्। शेषांश्चापि कण्ठेग्राहं ग्रहीतुमीष्ट एव। नगरेषु क्वचन लोचनगोचरीक्रियमाणोऽपि श्रौतस्मार्तप्रयोगो ग्रामेषु स्मृतिशेषतां नीतः खलु। क्रोशदशकान्तरालेष्वपि नहि कुत्रचित् पण्डितनामापि श्रूयते। ये चापि वर्षीयांसोऽतिनीतजीवनाधिकांशा विधिशेषरूपा अद्य कथं कथमपि निर्वहन्ति भारतीयसंस्कृतिप्रचारधुरं धौरेयास्तेऽपि निरपेक्षमितो गन्तार एव। ततः केनायं निर्वोढव्यः सुमहान् कार्यभार इत्येवायं विचारवीथिं नेष्यमाणः कल्प इति। प्रथमं तु नानुकूल्यं समेषां वृत्तिनिर्बन्धे समुदेति। विशेषतः सम्प्रति योरोपीयसंग्रामोऽस्माकं गीर्वाणवाणीविदां दैन्यायालं हेतुः संवृत्तः। दैशिकं वातावरणमपि जातीयकालुष्यम्लानं संस्कृतिरक्षणाय नातिपर्याप्तम्। परतश्चेतस्तु संस्कृतविदां न जाने कियदनौत्सुक्यं, कियती भिदा, कीदृशोऽहम्भावो यत् सोदर्यो भ्राताऽपि भ्रात्रे द्रुह्यति। अन्योन्यं सम्भाषणमपि हन्त!! अहमहमिकयाऽऽच्छन्नं वृत्तम्। यावत्स्वपि संस्कृतभाषाकेन्द्रेषु वाराणसीप्रभृतिषु पण्डितम्मन्यानामिदमेव प्रकृतिवैषम्यं काममुदरम्भरित्वं साधयेत्, संस्कृतिरक्षायास्तु सुगमश्चारुः पन्था दवीयानेव सम्पद्यते। ग्रामेषु च हन्तकारसङ्ग्रहकुशलानामितरेतरमसामञ्जस्यमालोकमालोकं हृदयं निर्दयं भवति। वराकाणां तेषां

वाणिज्यं नाम हन्तकारवृत्तिः। तद्रक्षणा एव जीवनमतिवाहयन्ति। 'को नाम वेदः, किन्नामानः कियन्तश्च ते' इतीमे प्रश्नास्तेषां यावज्जीवमुत्तरणायालं भवन्ति। इति निबिडतमे तमसि मग्नानां दयनीयानामेषामुद्धाराय कः साधुतमः पन्था इत्यपि विदुषां सुचिन्त्यो विषयः। भारतेऽपि वर्षे यावन्तः सम्प्रदायास्ते सम्प्रति विपद्व्याघ्रीसमाघ्राता इवानुदिनं स्वात्मरक्षोपायसाधने व्याकुला एव प्रतीयन्ते। द्रव्यभूयिष्ठव्ययेनापि ते यथोचितसन्मानं प्रतिपद्येरन्नित्येव तेषामसिधाराव्रतम्। चिरन्तनमनोमालिन्यमपि परतः कृत्वा ते मन्त्रणागोष्ठीं निभृतं प्रकुर्वाणा अद्य दृष्टिपथमवतरन्ति। कियताचित् कालेन च पारयन्ति सङ्कटसमुद्रम्। प्रगाढं सुप्तानामस्मादृशां च सुरसरस्वतीश्रद्धाऽऽप्लावितहृदयानां वैदिकः कालोऽद्य श्रुतिपदवीं प्रयातः। ततो ब्राह्मणकालः समायातः परागतश्च। तमनु कियन्तः समुन्नतिकाला एभिर्विजयासमर्पितजीवनसर्वस्वैः सम्प्राप्ताः पद्भ्यां प्रत्याहताश्च। ततो भोजराजीयकालोऽपि सम्प्राप्तः। समुन्मिषितमिव गीर्वाणवाणीगौरवं समजनि। पण्डितमण्डलेनापि क्रियते कालाय बद्धः परिकरः। साक्षात्कृतश्च स्वप्नायित आनन्दः। भोजराजे दिवं गते निःस्नेहदीपदशाप्रान्त इव संस्कृतगरिमापि तज्ज्ञस्नेहमनवलोकयन्नस्तं गतः। इदानीं भूयोऽपि स्वतोजागरूकं संस्कृतमहिमानं कल्पयन्तो महान्त इमे न स्वप्नदारिद्र्यं जहति। अस्मिन् खलु विंशतिशतीके करतमे समये, यदा चार्थसम्बन्धमात्रमुद्दिश्य पितरावप्यनुपालयतस्तनुजनुषं चिराय प्रसुप्तानामेषां योगक्षेमं कश्चिन्तयेत्? कश्चैतेषां शयानानामेव मुखे मोदकाञ्जलिमर्पयेत्? कथमिमे जागरूकाः सन्तः स्वात्मरक्षाप्रश्नं स्वयमेव साधयन्तु? कुतो वा मृतप्रायेष्वात्मसु जीवसञ्चारः? अस्माभिर्मरणमेव समालिङ्गनीयमाहोस्वित् ससन्मानं जीवातवे कर्तव्यः कश्चन यत्न इत्यनेकेषां जटिलप्रश्नानां मूर्तिमती पङ्क्तिः पुरतः समुत्तिष्ठते। ततः किं कर्तव्यम्? कर्तव्यो यत्नः। हिमाचलतलमारभ्यापूर्वापरपारावाराद् वारमेकं संस्कृतज्ञा हृदयस्थेमानमवष्टभ्य संस्कृतमहिमानं बहुमानं सम्पादयन्ताम्। इतरेतरमिथ्यावैमनस्यं न्यस्यन्तः सौमनस्यमलङ्कुर्वताम्। आत्ताधिकारा

[अग्रे १५ पृष्ठे द्रष्टव्यम्]

# अस्मदीया भाषा ।

[ले०—प्यारेलाल शर्मा, शास्त्री, एम. ए., एम. ओ. एल., लवपुरम् ।]

'राजनीतिकं दास्यं स्पष्टमेव । आध्यात्मिकः सांस्कृतिकश्च विजयो भारतस्येतिहासे न कदापि तथा पूर्णतां प्राप यथा त्रिटिशानां राज्ये । परमस्तीयं कष्टप्रदा परिभवजनयित्री च वार्ता, यतो हीदं वशीभवनं स्वेच्छया बभूव । कस्यचिद् दासस्य विजयस्तदा पूर्णतां प्राप्नोति यदा स स्वाङ्गेषु पतितां शृङ्खलां समालिङ्गति, बन्दीकर्तुः प्रकारानाचारांश्चानुकर्तुमारभते ।'

महात्मा गान्धी

भूयान् कालो व्यतीतः । फ्रांसदेशस्य 'अल्सेस' 'लॉरेन'-नामकौ प्रदेशौ जर्मनराज्यस्य वशवर्तिनावास्ताम् । जर्मनराष्ट्रेण फ्रैञ्चभाषां समुन्मूल्य तत्र जर्मनभाषायाः प्रचारः कृत आसीत् । एकदा जर्मनसम्राज्ञी कञ्चिद् विद्यालयं निरीक्षितुमगच्छत् । तत्र चैकस्या दशवर्षीया बालिकाया मुखात् स्वकृतप्रश्नानामुत्तराण्याकर्ण्य नितरां संतोषमलभत । बालिकाञ्च कञ्चिद् वरं प्रार्थयितुं समादिदेश । सा बालिका— वयं तस्याः पादौ स्पृशामः—प्रत्यवदत, 'मदीया भाषा मम परावर्त्यताम् ।'

कुत्र गता साम्प्रतमस्मदीयानां भारतीयानां भाषा ? हिन्दीभाषामवगणय्य—गीर्वाणवाण्यास्तु दूरे कथा—आङ्गलभाषया व्यवहरणोऽस्माभिर्गौरवमनुभूयते । पुस्तकानि संस्कृतभाषया हिन्दीभाषया वा लिख्यन्ते परं तेषां भूमिका आङ्गलभाषया । शोकप्रस्तावाः पठ्यन्ते कस्मिंश्चित् संस्कृतभाषाभक्ते दिवं गते, परं प्रस्तावे संस्कृतस्य हिन्दीभाषाया वा लेशोऽपि न भवति—सर्वमपि प्रभुभाषयैव संपाद्यते । हिन्दीभाषाभाषिणां सम्मुखे हिन्दीभाषयैव द्वारीभूतया चेदेतादृशाः प्रस्तावाः पठ्येरन् , तदा किं शोकस्य गरिमा न्यूनतामुपेयात् ?

नास्माकमस्ति आङ्गलभाषयाऽणीयानपि द्रोहः । वर्तमानयुगे जीवता पुरुषेणाऽस्या भाषाया ज्ञानमनिवार्यम् । संसारे सर्वभाषापेक्षया प्रायोऽस्या एव भाषिणोऽधिकाः सन्ति । भूमण्डलस्याधिका पत्रपत्रिकाणां संख्यास्यामेव भाषायाम्, इदं कथ्यते, प्रकाश्यते । इत्यस्ति स्वस्थानेऽस्या अपि महत्त्वम् । अत्र त्वस्माभिः केवलमिदमेवाभ्यर्थ्यते यत् स्वकीयमातृभाषायाः स्थानमस्यै न प्रदेयम् । यानि कार्याणि वयं हिन्दीभाषया कर्तुं शक्नुमः, तानि कथं न तया कुर्वीमहि ? किं नास्तीदमपमानजनकं यदस्मदीया भारतीया विद्वांसः स्वविचारान् स्वकीयमातृभाषया प्रकटीकर्तुं न तथा क्षमा यथाऽऽङ्गलभाषया । परस्परमालपन्तोऽपि वयं विदेशस्य भाषामेव प्रयुञ्ज्महे । राजपथेषु पर्यटन्तो भारतीया युवान आङ्गलभाषया परस्परं संभाषमाणाः कृतकृत्यमात्मानं मन्यन्ते । हिन्दीभाषायाः शब्दान् जानाना अप्युपहासार्थं विकृतानुच्चारयन्ति । स्वस्खलनमपि मण्डनमिव मन्वते । तेषामेतादृशीं प्रवृत्तिं दृष्ट्वाऽऽङ्गलभाषाया भारतीयशिक्षणालयेष्वारम्भं कुर्वतो लार्डमैकालेमहोदयस्याऽधोलिखिताः शब्दा हठात् स्मृतिपथमुपयान्ति—

'आङ्गलभाषायाः शिक्षा, एतादृशीं जनश्रेणीं जनयिष्यति या वर्णेन रुधिरेण च भारतीया सत्यपि रुच्या, आचारेण, सम्मत्या मस्तिष्केण चाङ्गली भविष्यति ।'

प्रायो विंशतिवर्षाणि पूर्वं सावरकरमहोदयो लण्डने, एकस्या आङ्गलमहिलाया गृहे अन्यैः कतिचन भारतीयैः सह प्रतिवसति स्म । तत्र परस्परमप्यालपतां तेषां माध्यममाङ्गलभाषैव बभूव । एकदा गृहस्वामिनी श्रीसावरकरमेकान्ते नीत्वाऽपृच्छत्, 'किं भवतां देशस्य नास्ति कापि भाषा यद् यूयं परस्परमपि मिलन्त आङ्गलभाषयैवालपथ ।' इमे शब्दास्तस्य हृदये प्रविष्टाः । स्वदेशाभिमानिना तेन तस्मिन्नेव दिने मित्रमण्डलेन सह संमन्त्र्य स्वकीयमातृभाषयैव व्यवहरणस्य निश्चयः कृतः ।

अनेनोदाहरणेन स्फुटं प्रतीयते यदाङ्गलदेशीया अपि परभाषायामालपतोऽस्मान् हीनदृष्ट्या वीक्षन्ते अस्मासु घृणां चातन्वन्ति ।

अस्माभिरेवाङ्गलेभ्य एतत्कथनस्यावसरः प्रदीयते यत्तैर्न केवलं भारतवर्षस्य भूमिरेव, अपि तु भाषावेषाभ्यां सह भारतीयानां हृदयान्यपि विजितानि ।

इदानीमस्माकं विद्यालयेषु शिक्षणस्य माध्यममपि आङ्गलभाषया-ऽऽयत्तीकृतम् । भगवद्गीतातुलसीरामायणसदृशानि धार्मिकपुस्तका-न्यपि, अनयैव भाषया द्वारीभूतया बालिकाभ्यः पाठ्यन्ते । वेदमन्त्रा अपि परवाण्यां व्याख्यायन्तेऽनूद्यन्ते च । किमस्माभिस्तूष्णीमेव स्थातव्यम् ? अस्मद्देशस्य भाषा किमुपेक्षितैव कालं यापयिष्यति ? किं वयं सदैव जगतोऽनुचितपरिभवं भक्ष्यामः ? स्वायत्तशासनस्य लोकस्य परभाषायां प्रवीणता गौरवानुभवश्च भूषणम्, इतरस्य तु विडम्बनैव ।

—⟡—

[ १२ पृष्ठतोऽग्रे ]

लब्धातिमात्रप्रतिष्ठा विशिष्टा विद्वांसः कार्षापणमोहं संत्यजन्तः संस्कृतज्ञसाधारणं समुन्निनीषन्तु । उच्चनीचकृतमलीकदम्भमम्भसि मज्जयन्तः पुनरपि गीर्वाणवाणीविदां तदेव सुवर्णयुगं समुपेयादिति लक्ष्य एवाक्षिनिपातं विदधताम् । परं नैष स्वप्नायितो विचारः सङ्घटनमन्तरेण क्रियापरिणाममभिरामं प्राप्नुयात् । सङ्घटनकार्यं च क्रियापेक्षम् । विशेषतः सौमनस्यापेक्षम् । यदि संस्कृतज्ञसाधारणाः प्रतिजानीयादद्यप्रभृति कस्याश्चिदपि संस्कृतपत्रिकाया ग्रहीता भविष्यामीति, शतशः पत्रिकाः स्थाने स्थाने प्राकाश्यमासादयेयुः । अनया सरण्या सङ्घटनकार्यं प्रबलं सच्छासकवर्गस्याप्यक्षिणी स्फारयेत् । यत्र क्वचिच्च विश्वविद्यालयेषु, कालेजेषु, अन्यत्र विद्या-लयेषु पाठशालासु चान्तेवासिनो गीर्वाणगिरैवाध्यापिताः स्युः । चलाचलिकायामुत्थितासिकायामशितपीतिकायां च संस्कृतगौरवमेव विदुषां जीवनलक्ष्यं भवेच्चेत् कुतो नाद्यैव स्यात्तेषां दैन्यदारिद्र्य-नाशं इति ।

+ उन्मीलयेदित्यर्थे विवक्षितः ।

# स्त्रीशिक्षा

( ले०—निरंजनो हुण्डू, श्रीनगरम् )

## सभ्याः ?

शोकास्पदमेतद् यद् यस्मिन् देशे शंकराचार्यमपि शास्त्रार्थे पराजयन्त्यो विदुष्यः स्त्रिय आसन्, स एवाद्य मूर्खतायाः केन्द्रीभूतोऽस्ति । स्त्रीशिक्षाभाव एवात्र कारणं मुख्यम् । नास्ति हि स्त्रीशिक्षाया आवश्यकतेति प्रश्ने तु—

विवाहपद्धत्यनुसारेण हि स्त्रियै गृहस्थरूपस्य राज्यस्य मंत्रित्वाधिपत्यं दीयते । गृहस्थप्रवर्तकत्वादस्याः राज्यप्रवर्तकत्वान्मंत्रिणश्च । न च मंत्र्यशिक्षितो भवति कश्चित्, तस्य राज्यप्रवर्तनासमर्थत्वात् । परन्तु वर्ततेऽन्यायस्य परा काष्ठा यदस्माकं गृहेषु मंत्रिणः (स्त्रियः) निरक्षराः सन्ति । अशिक्षितत्वात् तासां गृहस्थावनतिरेव न चोन्नतिः संभाव्या । अपरं च—

स्त्रीणामशिक्षितत्वात् 'कथं बालकानां पालनं पोषणं च कर्तव्यं, कस्मिंश्च काले कैः कैः भक्ष्यविशेषैर्बालकाः परिवर्धनीयाः' इत्यादि सम्यग् ज्ञानं न भवति तासाम् । सम्यगपरिपालितानां बालकानां निर्बलत्वादधीरत्वादशूरत्वाच्च जातिनाशस्तु सिद्ध एव । अन्यच्च—

'यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेदित्युक्त्या बाल्यावस्थायामेव मातुरुपदेशदानेन पुत्राः पश्चादुच्चस्थानभागिनो भवन्तीति । यथा—ध्रुवादयः । परन्त्वस्मदीया मातरः शिक्षाऽभावादुपदेशदानासमर्था भवन्ति ।

गृहस्थायव्ययादिविषयेऽप्यदत्तध्याना भवन्त्यशिक्षिताः स्त्रियः । अपरिचिताश्च भवन्ति ता धर्मेण । शिक्षाऽभावात् । किं च पत्यभावे ( विधवात्वे ) साधुतयाऽशिक्षिता नारी न शक्नोति निर्वृत्तिं कर्तुमपि तु परपिण्डोपजीविन्येव भवति । परपिण्डोपजीवितत्वाच्च—
'..............परपिण्डोपजीवी च षडेते दुःखभागिनः' इत्युक्त्या हि साऽऽजन्म दुःखभागिन्येव भवतीति ।

इत्येवं स्त्रीशिक्षाऽभावादापाततः सत्स्वप्येतेषु दोषेष्वस्मदीयाः स्त्रिय आलस्यग्रस्ता निद्राप्रिया यापयन्ति दिनानि निरर्थकम् । अतो मया सप्रश्रयं प्रार्थ्यन्ते सर्वे जनाः, यत् ते स्वस्त्रीभ्यो, बालिकाभ्यो, मातृभ्यश्च साधुशिक्षां प्रदाय तासु पुनर्जीवनं संचारयन्तु ।। इति ।।

# समराङ्गणसूत्रधारे,

## आधुनिकयन्त्रनिर्माणप्रकारः ।

( ले०—विजयचन्द्रशर्म्मा शास्त्री, व्याकरणाचार्यः, बी० ए०, लवपुरम् )

कदायमद्भुतो ग्रन्थो महाराजेन श्रीभोजराजेन विरचित उताऽन्येनैव केनचिद्वैज्ञानिकेन विदुषा स्वयं विरच्य तदीयनाम्ना तदा प्राकाश्यमुपनीत इति नाद्याऽहं भवतां पुरतो विनिवेदयितुमुपस्थितः । ऐतिहासिकानामयं प्रश्नस्त एव चेमं सम्यगुत्तरयितुं क्षमा इति नायं मदीयो विषयः । के के विषयाश्चाऽत्र लेखकेनोपनिबद्धा इत्यपि स्वल्पेऽस्मिन् काले सम्यक्प्रतिपादयितुमशक्यम् । अद्य त्वहमिदानीमुपलब्धेष्वनुपलब्धेषु चाधुनिकवैज्ञानिकनिर्मितयन्त्रेषु कियन्ति भारतीयप्राचीनसंस्कृतसाहित्ये समुपवर्णितान्युपलभ्यन्ते कियन्ति वा नोपलभ्यन्ते, कथं वा तेषां निर्माणप्रकारोऽस्मत्पूर्वजैरुद्भावित इत्येवाऽतः पुस्तकात् कांश्चिच्छ्लोकानुद्धृत्योपदर्शयितुं समीहे ।

अद्य जीवनस्य प्रत्येकस्मिन् विभागे पाश्चात्यानां प्रशस्यां समुन्नतिं दर्शं दर्शं नूनमेव समेषामेव चेतांसि मोदमुपयन्ति । न विज्ञानमवशेषयति सांसारिकं कमपि जीवनप्रकोष्ठम् । न केवलं भूमिरेवाऽपि तु जलव्याकाशावपि परिमापितौ । वर्षेणैकेन समाप्यं कृत्यमेकेनैव दिवसेन परिसमाप्यते । मानवानां शतेन सहस्रेण वा कार्यं कार्यमनायासेनाऽल्पीयस्येव काले सहर्षं समाप्तिमुपनीयते । लन्दन उच्चारिताश्शब्दास्तत्क्षणमेवाऽत्र श्रूयन्त इति सर्वमेव न किमु चमत्कृतिमवधत्ते दर्शकानां श्रोतॄणाञ्च मनःसु ? सत्यं, सर्वमपि सत्यं, परं हन्त ! वयं भारतीया इदानीन्तनां वैदेशिकीं विज्ञानसमुन्नतिमवलोक्य, एवं चाकचक्यमुपयामो यत् 'संस्कृतसाहित्ये न किमप्यस्ति, न च कदाचित् किमप्यासीत्, न वा किमपि भवितुं शक्यम् । अतोऽध्ययनेऽप्येतस्य केवलं समयाकरणमेवेति हेयमेवेदं सर्वथा वर्तते' इत्यादिदुःशब्दैः संस्कृतसाहित्यमवहेलयन्त आत्मानमपि विस्मरामः । वर्षसहस्रेणाऽस्माकमृषिप्रवरैरन्यैश्चापि वैज्ञानिकै-

विद्वद्भिः स्वानुभवेन सम्पादितस्य सर्वस्याऽपि कृत्यस्याऽवहेलनां कुर्मो न च कदापि स्मरामो यद्देशान्तरादागतैर्विधर्मिभिः स्वधर्मप्रचारणोच्छयाऽस्मदीयसंस्कृत्युन्मूलनेच्छया चाऽस्माकं सर्वमपि साहित्यजातं विनाशितम्। तत्र चास्माकं कियन्ति महानर्घरत्नानि विनष्टानीति न कोऽप्यनुमातुं पारयते। अस्मदीयाः पूर्वजा विज्ञानमन्तरैव जीवनं यापयामासुरिति न वयं विश्वसितुं शक्नुमः। स एवाऽयं भारतो यत्र विज्ञानप्रवर्तकः प्लेटो (Plato) महोदयोऽपि दर्शनमध्येतुं समाजगाम (and even that he found his way to the bank of the Ganges and learned the mystic meditation of the Hindus. The story of Philosophy by Durant)। नेदमेवाऽपि पुरा भारते महान्तो विश्वविद्यालया अपि तादृशा आसन् यादृशाश्चेदानीं कस्यचिद् मनस्यपि नायान्ति, का कथा वस्तुतो दर्शने तेषामिह भारते विदेशे वा। नूनं सन्ति भारते बहवो विश्वविद्यालया विदेशेऽपि च आक्सफोर्डकैम्ब्रिजप्रभृतयोऽनेके सन्ति, परमस्ति किमु नालन्दा-विश्वविद्यालयसदृश एकोऽपि यत्रोच्चैःकक्षास्थाः, न केवलं भारतीया एवापि तु चीनजापानेत्यादिदेशान्तरतोऽप्यागता द्वादशसहस्रसंख्याकाश्छात्राः (graduates and Postgraduates) तत्तद्विभागे निश्शुल्कं प्रत्यहं शिक्षां लेभिरे।

अहोभाग्यं! यद्यपीदानीं सर्वं पूर्वतनं साहित्यं सर्वथा दुर्लभं प्राप्तुं परश्वाऽहर्निशं प्रयतमाना अन्वेषिणो नूनं धन्याः। यतस्ते नामावशेषानपि ग्रन्थान् महतोऽपि कष्टानविगणयन्तोऽन्विष्य जनतायाः पुरस्तादुपस्थापयन्ति। नूनमेवाऽन्यतमोऽयं ग्रन्थः 'समराङ्गणसूत्रधारः' संस्कृतसाहित्ये, आधुनिकवैज्ञानिकदृष्ट्या वर्तते। यदि वयं वैज्ञानिकदृष्ट्या राजनीतिकदृष्ट्या वा पश्यामस्तदा तु नूनमेव राज्ये न किमप्यपेक्षितं वस्तुजातं विद्यते यदत्र नोपवर्णितं स्यात्। तत्रोत्तमाधमपुराणां मानं, तेषां सामान्यविधिस्तत्रापि चोत्तमेषु विशेषविधिः तेषु महारथ्याविधानं, वप्रविधानं, परिखाविधानं, पुरे राजवेश्मनिवेशनस्थानं, दुर्गे तन्निवेशनस्थानं, चतुश्शालविधानमित्या-

दीनि यथावदुपलभ्यन्ते । अद्य च यन्त्रनिर्माणप्रकारस्यैव मुख्यत्वेन तदुद्दिश्यैव किञ्चिद्वक्तुमपेक्ष्यते । सत्यमेवात्र यन्त्रवर्णनं चमत्काराधायकं वर्तते । गजयन्त्र-व्योमचारिविहङ्गयन्त्राकाशगामिदारुमयविमानयन्त्र-द्वारपालयन्त्र-योधयन्त्रादीनि सर्वाणि विस्तरशः प्रतिपादितानि । यन्त्रहस्तिनः प्रदीयमानभूरिवारिपानं, यन्त्रशुकानां तालगत्या गाननर्तनादीनि, वापीकूपादितः क्षेत्रेषु यन्त्रेण जलानयनापनयनवैचित्र्यं, कृत्रिमाणां गजादिरूपाणां यथेच्छं निर्गमनधावनयुद्धकरणादिकाश्चेष्टाः, स्वनोद्गारियन्त्रद्वयघटना, पटहमुरजादिस्वनोद्गारियन्त्राणां तत्त्वमित्यादि ।

अन्यान्यपि बहूनि यन्त्राणि समुपवर्णितान्यत्रोपलभ्यन्ते, तत्रैतेषां केषाञ्चिन्निर्माणप्रकारोऽप्युदाहरणार्थं ग्रन्थकारशब्दैरेवोच्यते ।

व्योमचारिविहङ्गमयन्त्रम्—

लघुदारुमयं महाविहङ्गं दृढसुश्लिष्टतनुं विधाय तस्य।
उदरे रसयन्त्रमादधीत ज्वलनाधारमधोऽस्य चाग्निपूर्णम् ॥
तत्रारूढः पूरुषस्तस्य पक्षद्वन्द्वोच्चालप्रोज्झितेनानिलेन ।
सुप्तस्यान्तः पारदस्यास्य शक्त्या चित्रं कुर्वन्नम्बरे याति दूरम् ॥
इत्थमेव सुरमन्दिरतुल्यं सञ्चलत्यलघुदारुविमानम् ।
आदधीत विधिना चतुरोऽन्तस्तस्य पारदभृतान् दृढकुम्भान् ॥

द्वारपालयन्त्रम्—

दृग्ग्रीवातलहस्तप्रकोष्ठबाहूरुहस्तशाखादि ।
सच्छिद्रं वपुरखिलं तत्सन्धिषु खण्डशो घटयेत् ॥
श्लिष्टं कीलकविधिना दारुमयं सृष्टचर्मणा गुप्तम् ।
पुंसोऽथवा युवत्या रूपं कृत्वातिरमणीयम् ॥
रन्ध्रगतैः प्रत्यङ्गं विधिना नाराचसङ्गतैः सूत्रैः ।
ग्रीवाचलनप्रसरणाकुञ्चनादीनि विदधाति ॥

इदमेव च यन्त्रम्—

पुंसो दारुजमूर्ध्वं रूपं कृत्वा निकेतनद्वारि ।
तत्करयोजितदण्डं निरुणद्धि प्रविशतां वर्त्म ॥

अन्यच्च—

खड्गहस्तमथ मुद्गरहस्तं कुन्तहस्तमथवा यदि तत्स्यात् ।
तन्निहन्ति विशतो निशि चौरान् द्वारि संवृतमुखं प्रसभेन ॥

इत्यादि— ।

सर्वस्मिन् सत्यप्यत्राऽस्माकमभ्यासाऽभावात् सदप्यसदिवाभाति । अतः केवलमभ्यास एवापेक्ष्यते । तथा चोक्तं ग्रन्थकारेणैव—

पारम्पर्यं कौशलं सोपदेशं शास्त्राभ्यासो वास्तुकर्मोद्यमोधीः ।
सामग्रीयं निर्मला यस्य सोऽस्मिंश्चित्राण्येवं वेत्ति यन्त्राणि कर्तुम् ॥

अन्यच्चाग्रे—

'सर्वाण्येतानि प्रोक्तानि दृष्टान्यपि श्रुतान्यपी' त्यादिग्रन्थकारोक्तौ दर्शनक्रियायाः पार्थक्येनोपवर्णनात् समेषामप्येषां तदानीन्तना सत्ता निर्धारयितुं शक्यत इत्येतत्सर्वं काल्पनिकमित्यनुमानेनालम् ।

———

# मिड्समर नाइट्स ड्रीम (शेक्सपीयर)

## प्राक्कथनम् ।

अस्ति तावद् रूपकरचनासु कालिदास इव शेक्सपियरोऽपि सुप्रथितयशाः । विविधदेशभाषासु तद्रूपकाणामनुवादो जातः । गीर्वाणवाण्यामपि माद्राजदेशवास्तव्यः कश्चित् पण्डितस्तेषां गद्यानुवादं व्यधात् । गद्यत्वेन हि तस्यानुवादस्य न तत्र रूपकाणाम-साधारणी चमत्कृतिरनुभूयते । अनुवादेऽपि स्वतन्त्ररूपकरचना-चमत्कृतिश्चकास्यात्, मूलनाटककारस्य च स्व-कला-कौशलं (प्रकाममं शत एव) प्रकाशेतेत्युद्दिश्यास्मत्सुहृत् श्रुतिकान्तशर्मा शेक्स-पियरस्य रचनाकालस्य प्रथमभागे विनिर्मितेषु सुखान्तरूपके चरमं श्रेष्ठे च मध्य-ग्रीष्म-विभावरी-स्वप्नाख्यं रूपकं तावदनुवदितुं प्रारभत । तस्य हि प्रथमाङ्कस्य प्रथमं दृश्यं खल्वद्यास्माभिः स्वपाठ-केभ्य उपायनीक्रियते ।

सम्पादकः

( अनु०—श्रीश्रुतिकान्तशास्त्री एम० ए० एम० ओ० एल०, साहित्याचार्यः )

## प्रथमाङ्के प्रथमदृश्यस्य कथाकुञ्चिका ।

पुरा किल यूरोपखण्डे थीस्यसो नाम यवनाधिपतिः ऐथन्ज़ेति प्रथितायां पुरि शशास, यः अमेज़नेति प्रसिद्धं स्त्री-राज्यं विजित्य हिपोलिटां नाम तद्राज्ञीमुपयन्तुमनास्तां स्वान्तःपुरे प्रवेशयामास । तस्य राजधान्याम् ईज्यसो नाम कश्चिच्छ्रेष्ठी स्वदुहितरं हर्म्यां डीमीट्रियसेत्यभिधाय कस्मैचित् तरुणाय वाचा प्रायच्छत् । लिसाण्डरेत्याख्ये तत्रत्ये कस्मिंश्चिद् यूनि प्ररूढानुरागा हर्म्या तु यदा डीमीट्रियसं वरितुं निषिषेध तदा तां लिसाण्डरं चाभियोक्तु-कामस्तज्जनको नृपतिं थीस्यसमुपतस्थे । हिपोलिटया सार्द्धं धर्मासनमलंकुर्वाणस्थीस्यस ईज्यसस्य, हर्म्यायाः, लिसाण्डरस्य, डीमीट्रियसस्य चाभिधेयार्थं समाकर्ण्य पित्राज्ञातिक्रमणे कठोरदण्डं निर्धारयत ऐथन्यन-राज-धर्मान् स्मारयित्वा हर्म्यायै पुनर्विमर्शनाय त्रिचतुरदिनावकाशं प्रदाय ईज्यसडीमीट्रियसौ कस्मिंश्चित् स्वविवाह-

कर्मणि नियोक्तुं तावात्मना सहादाय राजसभाया निर्जगाम।

अथ निर्व्याजरागमार्गक्लेशान् दृणामनुस्मरन्तौ हर्म्यालिसाण्डरौ निशीथे द्वीपान्तरपलायनं सम्प्रधार्य यावत् ततः प्रतिनिवर्तेते तावद् डीमीट्रियसे स्निह्यन्ती हलीना नाम हर्म्या-सखी तत्र प्राप्नोति, तयोः सकाशात् तत्पलायनोदन्तं च शृणोति। हर्म्यालिसाण्डरनिर्गमनानन्तरं प्राक् तामनुरज्य साम्प्रतं हर्म्यायां जायमानानुरागं डीमीट्रियसमाक्रोशन्ती साऽपि डीमीट्रियसाय तयोः पलायनवृत्तान्तं बुबोधयिषुस्ततो निवर्तते।

### प्रथमाङ्कीयप्रथमदृश्यस्य पात्राणि।

थीस्यसः ( Theseus ) ऐथञ्ज़नृपतिः।

ईज्यसः ( Egeus ) हर्म्याया जनकः।

लिसाण्डरः ( Lysander ) हर्म्यायाः प्रणयी।

डीमीट्रियसः ( Demetrius ) हर्म्याया वाग्दत्तपतिः।

फ़िलॉस्ट्रेटः ( Philostrate ) थीस्यसस्यो—त्सवानां कार्यदर्शकः।

हिपोलिटा ( Hipolyta ) थीस्यसस्य भवित्री पत्नी।

हर्म्या ( Hermia ) ईज्यसस्य दुहिता।

हलीना ( Helena ) हर्म्या-सखी।

## अथ प्रथमोऽङ्कः।

### तत्राद्यं दृश्यम्।

ऐथञ्ज़पुरे थीस्यस-प्रासादः।

ततः प्रविशति थीस्यसः, हिपोलिटा, फ़िलाँस्ट्रेटः, परिवारश्च।

थीस्यसः—प्रिये हिपोलिटे! प्रत्यासीदतितरान्तावदस्माकं विवाहवेला। प्रसन्नचतुर्वासरी हि नवं कुमुदिनी-बन्धुं प्रसविष्यते। परं तिलशो ज्यानिमुपयन्नेष जरतो रजनी-जानिर्दुर्दर्श इव मां सत्यमिति प्रतिभाति। अयं हि भूमौ [दायादस्य] दायं चिरं प्रति-

सन्धाना विस्वामिका [काचिद्] भू-स्वामिनीव वा विजननीव वा मन्मनोरथसिद्धिरथ्यां प्रतिरुणद्धि ।

हिपोलिटा— ( वसन्ततिलका )

क्षिप्रं व्रजिष्यति चतुर्दिवसी निशात्वम्
स्वप्नो यथा व्यपगमिष्यति सोऽपि कालः ।
अस्मद्-विवाह-रजनीमिव लोकिताऽथ
व्योम्न्युद्गतं रजत-नूतन-चापमिन्दुः ॥ चाप इति पुंसि प्र

थीस्यसः—गम्यतान्तावत् फ़िलॉस्ट्रेट ! आदिश्यताञ्चैथन्यन-यौवन श्रेया महं विधातुम् । आलघोरामहतः सर्वोऽपि लोकः प्रमोदं वितनितुं प्रबोध्य विपत्तिरवसितिमुपनीयताम्; नहि वैवर्ण्य-व्यासङ्गोऽस्मत्समारम्भेण संवदति ।

[निष्क्रान्तः फ़िलॉस्ट्रेटः]

हिपोलिटे ! ( उपेन्द्रवज्रा )

कृपाण-वीर्येण कृतानुरागः
क्षतान्यनुष्ठाय च लब्ध-सख्यः ।
विवोढुमिच्छामि [परं प्रिये !] त्वां
महा-समारोह-विधि-क्रमेण ॥

[ततः प्रविशति ईज्यसः, हर्म्या, लिसाण्डरः, डीमीट्रयसश्च]

( अनुष्टुप् )

ईज्यसः—विजयस्व महाराज ! जगद्विश्रुत थीस्यस !

थीस्यसः—प्रियेज्यस ! कृतार्थोऽस्मि । का प्रवृत्तिस्त्वया सह ?

ईज्यसः—व्यथितः—मदपत्यं, मद्दुहितरं हर्म्यां प्रति साभ्यसूयोऽहमत्रभवन्तं सम्प्राप्तः ।
ननु सन्तिष्ठस्वाऽग्रतो डीमीट्रयस !
त्वयाऽहन्तां परिणाययिष्य इत्यस्मा अहं वाचं प्रायच्छं देव !
पुरस्तात् पद्यस्व लिसाण्डर !
देव ! एष च मद्दुहितुरधिहृदयं कामपि तान्त्रिक-क्रियामकृत ।

त्वं त्वं लिसाण्डर! अनुराग-निर्भरां कवितामगुष्यै विश्राणयन् मद्दुहित्रा सत्रा प्रणयलक्ष्म-विनिमयं व्यदधाः। ज्योत्स्नाभास्वरविभावरीषु च तद्वातायनोपकण्ठे कृतक-कण्ठेन कृत्रिम-प्रीति-पदान्यगासीः। अचूचुरश्च सुकुमार-तारुण्ये भृशं वशंवदयद्भिर्दूतै-[रिव] स्व-शिरोरुह-करवलयैरंगुलीयकैः क्रीडनकैः स्तुत्यत्युक्ति-भिर्दाक्षिण्यैरङ्गरागैः सुम-स्तवकैर्मधुरव्यञ्जनैश्च तत्प्रणय-भावनाः। दुर्नयाश्रयेण च ममात्मजाया हृदयं प्रसह्य व्यपहार्षीः। तस्यां मद्वचनस्थिततामनाश्रवत्वमनाययश्च।

( वसन्ततिलका )

सा ते पुरः प्रतिशृणोति न चेद् वरितुम्
डीमीट्रियसं वरतया वरणीयदेव!
सा विद्यते मम [सुते-]ति तदीय-दाने
हैथन्ज़-राजनियमान्मम तन्त्रता स्यात्॥

या[1] च खल्वस्मद्राजविधिमनुरुध्येदृक्प्रस्तावेष्वेनामस्मै भद्र-मुखाय वा मृत्युमुखाय वा सम्प्रदास्यति।

थीस्यसः—हर्म्ये! किन्न्वत्र प्रतिब्रवीषि? वराङ्गि!

शिष्या खल्वसि—( शरत्तिलका[2] )

भाव्यः सुते! तव पिता तव देवतावद्
यस्मात् त्वयाऽङ्ग-लतिका ललिता निकलिता।
त्वञ्चासि यस्य रचिता ननु [3]सिक्थ-मूर्तिर्
यस्याः कृतौ च विकृतौ खलु स प्रभविता॥

अभिजात-भद्रः खलु डीमीट्रियसः [इतिप्रत्यवैमि]

हर्म्या—लिसाण्डरश्चापि।

---

१—या तन्त्रता इत्यर्थः।

२—प्रथमतृतीयचरणयोस्तभजजगगाः, द्वितीयचतुर्थचरणयो-स्तभजजसाः।

३—मोम इति भाषायां प्रसिद्धः।

थीस्यसः—बाढम्, यथा-स्व-व्यक्ति तादृशः खलु सः। किन्त्वेवमद्धा त्वत्पितुरनभिमतत्वात् तस्येतरो भद्रतरो मान्यः।

हर्म्या—अहो यदि नाम मत्पिता मच्चक्षुषा चक्षीत!

थीस्यसः—मा स्मैवं [वत्से!] ननु तावकं चक्षुस्तस्य निश्चयमनुलोकितुमर्हति।

हर्म्या—क्षाम्यतु देवः –( वंशस्थम् )

अहं न जाने नितरां कयाऽधुना
कृताऽस्मि शक्त्या [सहसा] ससाहसा।
तथा च यद्यस्ति न वा ममोचितम्,
पुरो गुरूणां मनसः प्रकाशनम्॥
अथाऽधुनेदन्तु वुभुत्सितं मम
प्रक्ष्यते मे कतमोऽधमाधमः।
कठोरदण्डो यदि नो वृणे ध्रुवम्,
पतिं तु डीमीट्र्यसमीक्ष्यभूपते!

थीस्यसः—मृतिरथवा विरहितिः शाश्वती मनुष्यसमाजेन। वत्से हर्म्ये! अनुयुङ्क्ष्व तस्मात् स्वकामान्, वबुध्यस्व[1] स्वतारुण्यं, परीक्षस्व स्वान्ववायम्।

( द्रुतविलम्बितम् )

बत तवाऽभिमतं न तदस्ति चे-
दभिमतं जनकस्य यदस्ति ते।
विपरिधातुमथाऽर्हसि दुर्धरम्,
वन-तपश्चयिनीवर-चीवरम्॥
निगडिता भवितासि तदा सदा
क्वचिदनातपिनी व्रततीततौ।

---

१—भागुरिमतेन 'अव'स्य अकारलोपः।

भगिनिकेव[1] निवस्तुमथाऽफला
विफल-रूक्ष-विधु[2]-स्तुति-तत्परा ॥

( हरिगीतिका )

दिष्टपूर्वा योषिदिव[3] निजवासराणां नीतये
सन्ति बहुशस्ते जना धन्या मनो दमयन्ति ये।
लोक-दृष्ट्या सुत-सवं कुसुमं ततस्तूत्कृष्यते
वन-लतायां जायते यद् वर्तते मम्लायते[4] ॥

( अनुष्टुप् )

डीमीट्रियसः— अनुतप्य प्रिये ! हर्म्ये !
दीयतां च लिसाण्डर !
तव भग्नाधिकारस्तु
स्वत्वाय निश्चिताय मे ॥

लिसाण्डरः— डीमीट्रियस ! त्वया लब्धा
प्रीतिस्तस्याः पितुः किल ।
ममैवास्तां तु हर्म्यायाः
किं तमुद्वोढुमिच्छसि ?

---

१—ख्रीष्टसम्प्रदाये धृताजन्मब्रह्मचर्यव्रता भगिनीत्युच्यते ।

२—उक्तविधा भगिन्यश्चन्द्रदेवतायाः स्तुतिं प्रायशो जगुः; तासां ब्रह्मचारिणीत्वात् ताः प्रति चन्द्रदेवता विफला रूक्षा चेति अफला भगिनिकेति च वचनं नितरामुपपद्यते । ताः क्वचिल्लतादि-पिहितवाटेषु ख्रीष्टमन्दिरेषु जीवनं यापयामासुरित्यनार्तपिनी व्रततीततौ निगडितेत्यपि साधु सङ्गच्छते ।

३—उक्तपद्ये निर्दिष्टा भगिनिकेत्यर्थः ।

४—अतिशयेन म्लायतीत्यर्थः ।

( वंशस्थम् )

ईज्यसः— अधिक्षिपन् कर्णय-तां लिसाएडर !
न संशयः, स्नेहपदं ममायकम् ।
ततः सरागं निखिला स्वसम्पदा
स्वदारिका चास्य मया समर्प्यते ॥

( शिखरिणी )

लिसाएडरः—कुले भूमौ लक्ष्म्यामहमपि न तस्माल्लघुतरः,
परं हार्दं हर्म्यामभि तुलयते मां गुरुतरम् ।
इयं तन्वी प्रीता मयि तु मम गर्वस्य विषय-
स्तदा [ब्रूतां देवः] किमिति नहि तस्यै प्रतियतै ?
हलीनां [1]नैदारीमभवदनुरक्तो भृशमयम्,
शपे शीर्षणास्याहरदलममुष्याश्च हृदयम् ।
वराङ्गी सा चेयं चल-मलिनमेनं तु जुषते
यथा भक्तो युक्तः[2] प्रतिमितनिजेष्टं[3] सुभजते ॥

( हरिगीतिका )

हर्म्या—इत्थमेवाऽहं जनिष्ये देव ! वर्तिष्ये वरम्,
म्लानिमादास्ये च, दास्ये नाऽमुकस्य स्वं करम् ।
यस्य परिवृढता-धुरं प्रीतेरपात्रं मे परम्,
वोढुमुत्सहते मुहूर्तायाऽपि नहि मन्मानसम् ॥

थीस्यसः—[वत्से !] प्रतिगृहाण विम्रष्टुमवसरमाद्वितीयम्, यस्यामहं मद्दयिता चाजन्मसख्यबन्धनेन बन्द्धास्वहे । तस्मिंश्चाहि स्वपितृ-

---

१—निदारो नाम हलीनाया जनकः ।
२—समाहितमना इत्यर्थः ।
३—प्रतिमा सञ्जाता अस्य तत् प्रतिमितम् ।

वचनाकारित्वदोषात् प्राग्गौर्वियोक्तुं वा, तन्मनीषामनुसरन्ती डीमीट्रयसमुपयन्तुं वा, उपडायनावितर्दिकं[1] निर्जनजीवनयापनं तपस्यां चानवरतं विगातुं वा सज्जीबोभूहि ।

थीस्यसः—ननु विदितमस्तु खलु वो यदलं साम्प्रतं श्रवणेन । अपि च विषयेऽत्र डीमीट्रयसमहं किमपि ज्ञप्तुमना अभूवम्, परमनन्तकृतिव्यापृतिपरतन्त्रतया तद् व्यस्मार्षम् । भवतु, आगम्यतामीज्यसडीमीट्रयसौ ! द्वावेव रहसि किमप्यनुशासेलिमौ स्थस्तस्मान्मया सह गन्तुमर्हथः । अथ कल्याणि हर्म्ये ! सन्नह्यतामात्मा तथा यथा ते मनोरागवृत्तयस्त्वत्प्रसवितुर्मनीषामनुकूलायेरन् । अन्यथा सर्वथाऽस्मदनन्यथयितव्य[2] ऐथञ्ज-समयस्त्वां नामशेषतायै वा विविक्तजीवनयात्रायै वा सम्प्रदास्यति । नन्वेहि प्रिये हिपोलिटे ! किंरूपमत्र विभावयति नन्वत्र भवति ! प्रतिष्ठेथामीज्यसडीमीट्रयसौ ! [यतो हि] कस्मिंश्चित स्वविवाहकर्मणि युवां नियोक्तुकामः, अधियुष्मदं[3] स्तोकं गालोडयितुमनाश्चास्मि ।

ईज्यसः—कर्तव्य-कामचारोभयनाथवन्तावावामनुसरावो देवम् ।

( इति निष्क्रान्ताः सर्वे हर्म्यालिसाण्डरवर्जम् )

लिसाण्डरः— ( वंशस्थम् )

प्रिये ! कपोलौ तव पाण्डुरच्छवी
कथं द्रुतं म्लायति लोहिताम्बुजम् ?

हर्म्या— अवग्रहाद्; यो[4] यदि वृष्टिमिच्छति
प्रवर्षणेनाम्बकयोर्मदीययोः ॥

---

१—डायनानाम काचिद् देवी आसीत्, यस्या मन्दिरेषु प्रायेण 'भगिन्यः' न्यवसन् ।

२—'अन्यथा' इति नामधातुः ।

३—भय इत्यव्ययीभावात् भयन्ताद् वैकल्पिकष्टच्; यथा, उपसमिधम्, उपसमित् ।

४—अवग्रह इत्यर्थः ।

( अनुष्टुप् )

लिसाण्डरः— तावद् यावदहं जाने
यथाधीतं यथाश्रुतम् ।
मार्गो निर्व्याजरागस्य
जातुचिन्न समोऽभवत् ॥

( वसन्ततिलका )

एकत्र चेदकृत तं विषमं तु वर्णः[1]
हर्म्या— हा ! हा ! यदुत्तमकुला न कुलीनरक्ता ।
लिसाण्डरः—अन्यत्र तद् वय इमं विषमीचकार,
हर्म्या— धिग् धिग् वयोऽधिकजनस्य युवानुरागः ॥
लिसाण्डरः—आहोस्विदाश्रयदयं रुचिमाप्तनृणाम्
हर्म्या— कष्टं, प्रियस्य वरणं परकीयनेत्रैः ।
लिसाण्डरः—प्राध्वं[2] क्वचित् समभवद् वरणेऽथवा
चेज्जन्यं मृती रुगथवा व्यरुणत्तदेनम्[3] ।

( स्रग्धरा )

एतैर्निर्वर्तितोऽयं[4] ध्वनिरिव पलवान्, स्वप्नतुल्यश्च सूक्ष्म-
श्छाया वा क्षिप्रगामी, तमसि च तडितावत् क्षणस्थैर्यशाली ।
लोको वक्तुं न शक्तो भवति च खलु 'भो भोः प्रपश्ये'ति यावत्
तावद् विद्योत्य विष्वग् दिवमथ वसुधां चर्व्यते क्रूरतम्या[5] ॥

हन्त ! तादृगचिररोचिष्णवो रोचिष्मन्तः पदार्थाः खलु भवन्ति ।

---

१—ब्राह्मणादिवर्णव्यवस्था इत्यर्थः ।
२—आनुकूल्यम् इत्यर्थः ।
३—जन्यं, मृतिः, रुग् इत्येतैरित्यर्थः ।
४—निर्व्याजराग इत्यर्थः ।
५—रात्र्या इत्यर्थः ।

( शार्दूलविक्रीडितम् )

हर्म्या—यत् सत्प्रीतिजुषोः परीष्टिसमयः स्त्रीपुंसयोः शाश्वतो-
ऽदृष्टं वष्टि[1] तथैव चेदथ तयोर्, दध्वस्तदा धीरताम्।
रूढैषा हि परीच्चितिः प्रणयमन्वेति [प्रिय! श्रूयताम्],
श्वास-स्वप्न-मनोरथाऽश्रु-मतयस्तस्यानुबन्धा यथा ॥

लिसाण्डरः—प्रथमः कल्पः। ततो निशम्यतां हर्म्ये! अस्ति वसुमतीमती विपुलाऽऽयवती विधुरा स्वकौरसीयन्ती मां काचिन्मम पितृष्वसा। सा खल्वैथञ्जपुरात् षोडशक्रोशीविप्रकर्षे प्रतिवसति प्रभवति न यत्रैथन्यनविधानं ह्यस्मान् प्रसेतुम्। तदस्मि तद्गृहेषु त्वामहं परिणिनीषुः। हारिणि हर्म्ये! यद्यस्ति ते मयि ममता तदा श्वोऽध्यर्धनिशं निशान्तात् त्वत्पितुश्चौरचारं निष्क्रम्य सङ्गच्छस्व मया सह पत्तनात् क्रोशयुग्मकान्तरे कान्तारे तत्र यत्र ऋतुनी[2] प्रभातमेकं मानयितुमहमेकदा त्वया सह सहलीनया सम्मिलितः। तत्र तावदहं त्वामनुपालयन् स्थातास्मि।

हर्म्या—प्रिय लिसाण्डर! कुसुमशरस्य शरेण निशातेन शातकुम्भफलकेन द्रढीयसा धनुषा च, रत्याः कपोतिकानां[3] निर्मायया प्रकृत्या, प्रेयो-युगलाऽऽत्मानावेकत्र निबद्ध्य रतिं विवर्धयता [देवेन], कपट-प्रणयाभिनयिनमीन्यसं नावा पलायमानमालोक्य कार्थेजराज्ञीं दग्धुमुज्ज्वलितेन ज्वलनेन[4], सङ्ख्यया‌ऽत्रलाजनोदितशपथानतियद्भिः कृत्वाप्यद्यावधि पुरुषसमाजेनापालितैः

---

१—इच्छति इत्यर्थः।
२—वसन्त इत्यर्थः।
३—रतिः कपोतान् पालयति, निश्छलं च कपोतानां मन इति पाश्चात्यप्रसिद्धिः।
४—दिदो नाम्नी कार्थेजदेशराज्ञी ट्रापदेशवास्तव्यं कपटप्रणयिनम् ईनीसम् ( यो ह्यत्र ईन्यस इति संज्ञितः ) अनुरराज। यदा तु सा तं नावा इटलीदेशमभि पलायमानम् अपश्यत् तदा तद्वियोगम् असहमाना वह्नौ प्रविवेशेति पाश्चात्यपुराणम्।

सर्वैः शपथैः शपे तुभ्यं यन्नूनमहं त्वत्सङ्केतितपदे त्वया सह सङ्गन्ताह इति ।

लिसाण्डरः—प्रिये ! पालनीयं खलु वचः । प्रेक्षस्व तावत्तत्र । हलीनान्वेषा या खल्वित एवाभिवर्तते ।

[ततः प्रविशति हलीना]

हर्म्या—क्व नु लावण्यामृतचन्द्रिके हलीने ! हला शिवास्ते पन्थानः स्युः ।

हलीना—अप्यहमस्म्याहूता लावण्यामृतचन्द्रिक इति मा भूयोऽपि तत्पदं प्रयौक्षीः । डीमीट्रयसः खलु ते लावण्यामृतं पिपासति । सुखिनि सुभगे ! नेत्रे ते वटतारायेते[1], काले च परिणामद्रुगोधूमपादपे विकचद्धा[2]थार्नकुड्मलकदम्बके न तथा मधुरस्वरायतेऽजापालेभ्यो रुतं चकोरचक्रवालानां यथा गिरा भवत्याः । गदोऽस्ति किल सुग्रहः; हन्त वरोरु हर्म्ये ! यदि नाम रूपं सुग्रहं तावदभविष्यत्, न ते रूपमनादाय खल्वहमितोऽव्रजिष्यम् । [अहो] यदि नाम मम कर्णौ ते वाचमग्रहीष्येतां, मे नयने ते दृष्टिं मे रसज्ञा ते वाचो सरस-सङ्गीतम् !!! यद्यखिलाया इलाया प्रभ्व्यहमभविष्यं, ततो डीमीट्रयसवर्जं सर्वामपि तां मूल्यत्वेन त्वद्रूपपरिवृत्तये ते व्यतरिष्यम् । सखि ! शिक्षय मामपि स्व-विलोकन-विधिं कलां च तां यया त्वं डीमीट्रयस-हृदय-स्पन्दनमनुशास्सि ।

( शिखरिणी )

हर्म्या—दधेऽहं भ्रूभङ्गं तमभि, मयि सोऽथाऽभिरमते,

हलीना—तव भ्रूभङ्गो मे स्मितमपि कलां तामुपदिशेत् ।

हर्म्या—अमुं शाशप्येऽहं प्रणयमथ मे सोऽर्पयति ताम्

हलीना—अहो जायेतास्मिन् विनतिततिभिर्मे यदि रतिः ।

---

१—वटतारा, पथिकपथदेशिनी तारा ध्रुवाख्या तारेत्यर्थः । सा इव आचरत इति वटतारायेते ॥

२—हाथार्न इति प्रसिद्धं पुष्पं यूरोपखण्डे ।

हर्म्या—अहं द्रुह्याम्यस्मै परपरमसौ संलगति माम्
हलीना—अहं स्निह्याम्यस्मिन् परपरमसौ संत्यजति माम् ।
हर्म्या—हलीने ! दोषोऽयं भवति खलु तस्यैव ननु मे
हलीना—रुचस्तेऽयं मन्तुर्ननु मम भवेच्चेत् [सकृदहो] !
हर्म्या—हला [हलीने !] धेहि धैर्यम् । लिसाण्डरेण साकमहमितः पलायितुकामाऽस्मि, ततो न भूयस्तस्य दृष्टिपथं व्रजिष्यामि ।

(वंशस्थम्)

तदा यदाऽदृष्टचरो लिसाण्डरो-
ऽभवन्ममैथञ्ज़पुरं दिवोपमम् ।
प्रियस्य तन्मे किमदोऽस्ति वैभवं
यदेकनाकं नरकं चकार सः ।

लिसाण्डरः—हलीने ! इदमिदानीमस्मन्मनोगतं वेदितव्यम्—

(शार्दूलविक्रीडितम्)

शष्पं नूत्नदलैरलङ्कृतमलङ्कुर्वन् द्रवैर्मौक्तिकैः
शुभ्रं स्वं मुखमीक्षते खलु पुरा चन्द्रो यदाऽब्दर्पणे[1] ।
कालो यः प्रथितः पलायनकृतोः प्रच्छादको रागिणो-
रस्याः श्वो वसतेस्तदा नु निरिवो[2] द्वाभ्यां [ऽधुनाऽऽश्वस्यताम्]।

हर्म्या—

(मन्दाक्रान्ता)

यत्राऽऽम्लान-स्थलकमलिनी-षण्ड-खण्डेषु वन्या-
मुद्गारैः स्वैर्मधुरमधुरैः शून्ययन्त्यौ हृदी नौ ।
त्वं चाहं चाऽवनितलमधिष्ठातुमभ्यस्त आस्व,
श्वस्तत्राऽहं स्व-हृदयधनेनाऽऽलि ! सम्मेधिताहे ॥

---

१—जलरूपे मुकुर इत्यर्थः ।
२—निर्गच्छाव इत्यर्थः ।

( अनुष्टुप् )

'पृष्ठयन्ता[1]वथैथञ्ज़ं पुरयात्रः[2] पुरः पुरा ।
अन्वेष्टुं सुहृदो नव्यान् नव्यान् [भामिनि !] सङ्गिनः ॥
शमास्स्व स्निग्ध-खेलाऽऽलि ! ध्यायतां नौ शिवं त्वया ।
तव डीमीट्रियसस्तुभ्यं सौभाग्यं सम्प्रयच्छतात् ॥
लिसाण्डर ! वचो रक्ष्यं श्वो निशीथेऽस्तु पारणा ।
प्रणयाऽन्नमगृह्णतोरस्मदक्ष्णोः क्षणादतः ॥

लिसाण्डरः—अथाऽत्रापि सन्देहः प्रिये हर्म्ये ?

[ निष्क्रान्ता हर्म्या ]

नमस्ते हलीने ! यथा त्वं डीमीट्रियसे तथा डीमीट्रियसस्त्वयि रज्यताम् !

[ निष्क्रान्तो लिसाण्डरः ]

हलीना—कथं नु कश्चित् कस्मिंश्चिदन्यस्मिन् प्रहृष्टो भवितुमर्हति। सकलः किल लोकः पुरे मां तामिव वराङ्गीं कलयति। अथापि किं तेन ? डीमीट्रियसस्तु न तथा प्रतिपद्यते। स न खलु तद् वेदिष्यति यत् तं विहायेतरे विदन्ति। यथा च हर्म्यालोचनाभ्यामभिप्रीयमाणः स कृतस्खलनस्तथा तस्य गुणानभिष्टुवन्ती खल्वहमपि।

( वियोगिनी )

[प्रवदन्ति किलाऽत्र लौकिका]
'अतिहीनं लघु वाऽपि यत् पदम् ।
नयते रतिनायकस्त्विदं,
रमणीयाकृतिमत्त्वगौरवम्' ॥

---

१—पृष्ठेत्यतो नामधातुः ।
२—'पुर अग्रगमने' इति तुदादिगणीयो धातुः ।

हृदयेन न चक्षुषा [ सदा,
ननु लोके ] ह्यवलोकयत्यतः ।
मदनः कृतपतिमूर्तिकः,
प्रतिमायां नयने विनाऽर्पितः[१] ॥

न च नीतिमती[२] मती रतिपतेः खल्वस्ति ।

मदनः शिशुरुच्यतेऽस्य यत्,
त्वरमाणौ गरुतौ न वै दृशौ ।
रुचितान्यत्रचेष्यताऽमुना,
बहुशोऽभावि च वञ्चनाश्विना ।
अधिकेलि मृषाऽऽत्मना शप-
न्त्यतिक्रीडाप्रियबालका यथा ।
वितथं शपथं समालपन्
पृथुकाऽनङ्ग इहेच्यते तथा ।

( शार्दूलविक्रीडितम् )

यावन्नेत्रपथातिथिर्न खलु सा रम्या हि हर्म्याऽभवत्,
तावत् 'त्वन्मुखमञ्जुकञ्जमधुपो वर्वर्ति डीमीट्रूचसः ।'
इत्येवं शपथोपलान् मुहुरवर्षीदेष, ऊष्मा यदा,
हर्म्यातोऽधिगतस्तदाऽद्रवदयं, वृष्टिर्विलीना च सा ॥

विज्ञपयामि तावद् गत्वाऽस्य वरतनूहर्म्यापलायनोदन्तम् । ततः श्वस्तमस्विन्यां तामनुसरता तेनावश्यं गहनं प्रवेष्टव्यम् । यदि नामैतद्वृत्तान्तज्ञप्तिप्रत्युपकृतिं विन्दे, महार्घ्या खलु सा भवति । परमित्थं तत्र तमवलोक्य ततः प्रतिनिवर्तमानाया मम नाधेर्वृद्धि-मन्तरेण फलान्तरेण भवितव्यम् ।

[ इति निष्क्रान्ता सा ]

---

१—चित्र्यत इत्यर्थः ।
२—नयशालिनीत्यर्थः ।

# वैदिकवयोऽव्यवस्था

( ले०—श्रीधर्मदेवः, विद्यावाचस्पतिः )

(पूर्वतोऽनुवर्तते)

त्रिरात्रं ब्रह्मचर्यविधानं, तदनन्तरम् 'उपसंवेशनम्, संवेशनम्, उपगमनम्, संभवः' इत्याद्यनेकपदसूचितव्यवायाभ्यनुज्ञानं विवाह्यकन्याया युवतित्वे न मनागपि सन्देहमवशेषयति निष्पक्षपातविवेचकानां मनस्सु । अतएवाश्वलायनगृह्यसूत्रभाष्ये "अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च, तान् विवाहे प्रतीयात्" । "यत्तु समानं तद् वक्ष्यामः ।" इति सूत्रव्याख्यायां गार्ग्यनारायण एवं लिलेख । "जनपदादिधर्माणां वक्ष्यमाणधर्माणां च विरोधे सति वक्ष्यमाणमेव धर्मं कुर्यात् ।.........वैदेहेषु सद्य एव व्यवायो दृष्टः, गृह्ये तु 'ब्रह्मचारिणौ त्रिरात्रम्' इति ब्रह्मचर्यं विहितम्, तत्र गृह्योक्तमेव कुर्यान्न देशधर्ममिति सिद्धम् ।" "त्रिरात्रमुभयोरधःशय्या, ब्रह्मचर्यं, क्षारलवणवर्जनं च" इत्यापस्तम्बगृह्यसूत्रवचनव्याख्यायाम् "अतएवात्र सूत्रे शय्यैक्याद् दुर्वारमपि मैथुनम् अतिप्रयत्नेन वर्जनीयमित्येवमर्थस्तन्निषेधः" इति सुदर्शनाचार्यवचनमपि श्रीशास्त्रिमहोदयानां "संवेशनम्-शयनमात्रं न तु मैथुनार्थं शयनम्" इत्यादिकपोलकल्पनां सर्वथा खण्डयति । वाराणसीस्थहिन्दूविश्वविद्यालयप्राच्यविद्याविभागाध्यक्षैर्महामहोपाध्यायश्रीप्रमथनाथतर्कभूषणैर्वयोनिर्णायिकसमितेः पुरस्तात्साक्ष्यप्रदानकाले (११-१-२६) एतद्विषये यदुक्तं तदपि प्रसङ्गोपात्ततयोल्लिख्यते तादृशसुप्रख्यातनिष्पक्षपातविपश्चिच्छिरोमणिमतं प्रदर्शयितुम् । 'किं वैदिककाले बाल्यविवाहपद्धतिरासीत्, वेदाध्ययनेनास्मिन् विषये किमनुमातुं शक्यम् ? इति समितेः प्रश्नस्योत्तरे महामहोपाध्यायमहोदयैरेवमभिहितम् "वैदिककाले बाल्यविवाहपद्धतिः सर्वथाप्यज्ञातासीदिति ।" "(Early marriage during the Vedic period was unknown" Age of consent Committee Report P.58)

"सूत्रग्रन्थेभ्यो रजस्वलाविवाहसूचकवाक्यान्युद्धर्तुं शक्यन्ते किं भवद्भिः" इति समितेः प्रश्नोत्तरे श्रीप्रमथनाथतर्कभूषणैः 'तथाविधानि प्रमाणानि गृह्यसूत्रेषु बहूनि सन्ति यैः शारीरिकविकासोपेतानां रजस्वलाकन्यानां विवाहास्तदा क्रियन्ते स्मेत्युक्तं विज्ञायते। गोभिल इत्थं लिखति 'तावुभौ तत्प्रभृति त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौ सह शयाताम्।' तदनन्तरं तत्र सम्भवो (मैथुनम्) अनुज्ञातः। गृह्यसूत्रेभ्यो धर्मशास्त्रेभ्यश्चान्यान्यपि बहूनि तादृश-प्रमाणान्युदाहर्तुं शक्यन्ते मया, इति प्रत्यपादि ("There is ample authority in the Sutra period that marriages used to take place when the girls **were fully developed**, because Gobhil says that after marriage the husband and wife should sleep for three nights in Brahmacharya. After that they are permitted to co-habit. I can produce this kind of injunction from the Dharma Shastra.")

इत्थं च गोभिलगृह्यसूत्रे 'नग्निका तु श्रेष्ठा' इति पाठस्य समीचीनता यदि कथञ्चिदभ्युपगम्येतापि (यद्यपि श्रीसत्यव्रतसामाश्रमिसम्पादिते संस्कृतव्याख्यासमलंकृते गोभिलगृह्यसूत्रसंस्करणे, ठाकुरोपाख्येनो-दयनारायणसिंहेन सम्पादिते मुज़फ़्फ़रपुरस्थशास्त्रप्रकाशभवने प्रका-शिते हिन्दीभाषानुवादसहितगोभिलगृह्यसूत्रसंस्करणे च ("जिस कन्या का मासिकधर्म प्रकाश हो चुका हो ऐसी प्राप्तयौवना को अनग्निका कहते हैं। अनग्निका ही विवाहने योग्य होती है।" (ठाकुर उदय-नारायणसिंह कृत अनुवाद) अन्येषु च कतिपयसंस्करणेषु "अनग्निका तु श्रेष्ठा" इत्येव पाठः स्पष्टमुपलभ्यते तथापि त्रिरात्रब्रह्मचर्यविधा-नादिद्वारा (यद्विधानमष्टनववर्षीयबालिकाविषये सर्वथापि निरर्थ-कम्) नग्निकापदस्य हिरण्यकेशिगृह्यसूत्रव्याख्यायां मातृदत्तेन "नग्नयतिरपि परिपठितो वस्त्रविक्षेपणार्थः......तस्माद् वस्त्रविक्षेप-णार्हा नग्निका मैथुनार्हाइत्यर्थः। ब्रह्मचारिणीम् असंस्पृष्टमैथुनाम्" कृतव्याख्यानमेव समञ्जसमिति स्पष्टम्। न च तेनानृतुमत्या बालि-

काया विवाहः सिध्यति । "वयं द्वादशवर्षगृह्याः स्मः" मम सर्ववर्णा-कन्यानां द्वादशवर्ष एव विवाहे पक्षपातः" (श्रीः ४।३ पृ० १६) इत्याशयं प्रकाशयन्तः श्रीदीनानाथशास्त्रिणः 'नवमे नग्निका भवेत्' इति पराशरमाधवीयोद्धृतयमवचनम् अनुसृत्य नग्निकापदेन नवम-वर्षीयबालिकाविवाहं कथं स्वीकर्तुमर्हन्ति ?

यत् तु श्रीदीनानाथशास्त्रिभिः "ये चतुर्थरात्र्यामेव मैथुनपक्ष-पातिनस्ते गोभिलगृह्यसूत्रस्येदं स्पष्टं वचनं शृण्वन्तु 'ऊर्ध्वं त्रिरात्रात् संभव इत्येके' अत्र गोभिलेन 'एके' इति कथनेन तादृशमतवतां कृतेऽरुचिः सूचिता ।अग्रे स स्वमतं स्पष्टमाचष्टे –"यदर्तुमती भवत्यु-परतशोणिता तदा सम्भवकालः" अत्र तेन पूर्वोक्तमतस्य खण्डनं कृतम् उत्तरपक्षं प्रदर्श्याऽर्थात् चतुर्थनिशायां न मैथुनस्य कालः किन्तु त्रिरात्रादूर्ध्वं क्रियमाणचतुर्थीकर्मानन्तरं यदा सा ऋतुमती ततः स्नाता च भवेत् तदैव मैथुनकालो भवति न तु ततः पूर्वम् । अनेन स्पष्टं सिद्ध्यति यत् स ऋतुकालात् पूर्वमेव विवाहमाचष्टे ।" इत्येदलेखि तदप्यसमीचीनं भ्रान्तिमूलकं च । "ऊर्ध्वं त्रिरात्रात् सम्भवः" इति जैमिनीयगृह्यसूत्रमतम् । तस्मिन् मते गोभिलगृह्यमते च स्वल्पमेवान्तरं यदेतत्सूत्रद्वारा निर्दिष्टम् । स्पष्टीकरणार्थं सुप्रख्यात-विपश्चिद्वरश्रीसत्यव्रतसामाश्रमिव्याख्योद्धरणमेव पर्याप्तम् । अथा-तश्चतुर्थीकर्म" चतुर्थीरात्रिकर्तव्यं गर्भाधानमाह ........ऊर्ध्वं त्रिरात्रात्........तदा सम्भवकालः । ऊर्ध्वं त्रिरात्रात्-सम्प्रदान-रात्रितः, त्रिरात्रे ऽतीते संभवः—सम्भवति गर्भोऽस्मादिति संभवः । संगम इति केचिदाचार्या आहुः—एवं च विवाहात् प्राग् दृष्ट-रजस्काया ऋतुमत्या नवोढायाः पतिगृह आद्यर्तुप्रकाशन-मनपेक्ष्यैव तस्यां चतुर्थ्यामेव रात्रौ गर्भाधानाय संगमः कार्य इत्येवं केषांचिदाचार्याणां मतम् । गोभिलस्य स्वमते तु नवोढा पत्नी पतिगृहं समागत्य यदा पुनः ऋतुमती सती उपरतशोणिता भवेत् तदा तस्मिन्नेव पतिगृहागताद्यर्तुकाले सम्भवकालः । अत एव वक्ष्यति 'तृतीये मातुरसपिण्डा अनग्निका तु श्रेष्ठा' इति दारकर्मणि अनग्निकाया

एव प्राशस्त्यम् । इत्थं च जैमिन्याद्याचार्यमते गोभिलमते च नाममात्रं कतिपयदिनानामेवान्तरमिति स्पष्टं विज्ञायते । वस्तुतस्त्वेवंविधस्थलेषु कन्यायाः प्रथम ऋतुप्रकाशस्ततः पूर्वं सा ऋतुमतीति श्रीदीनानाथशास्त्रिणां कल्पना निराधारा । यत्तु श्रीदीनानाथशास्त्रिणः "संवेशनसमावेशनोपसंवेशनादिपदैर्न मैथुनमभीष्टं किन्तु शयनमात्राभिनयः, अन्यथा तस्मिन्नेव काले वध्वा अभिमन्त्रणार्थम् अन्यस्य वधूसमीपस्थितिः कथमिवाभविष्यत्" इत्यादि लिखन्ति तदपि निस्सारम् । अन्यस्य कस्यचिद् वधूसमीपस्थितिर्नानेकगृह्यसूत्रेषु क्वचिदपि वर्णिता । आपस्तम्बगृह्यसूत्रेऽपि नान्यद्वरो(?)पदेशात्मकमभिमन्त्रणं मुख्यरूपेण प्रतिपादितं किन्तु विकल्परूपेण यथा "शेषं समावेशने जपेद् अन्यो वैनाम (व) भिमन्त्रयेत ।" अत्र जपपक्ष एव मुख्यः, उपदेशात्मकोऽभिमन्त्रणपक्षस्तु वैकल्पिको गौणश्चेति स्पष्टम् । येषां मन्त्राणां जपोऽत्र विहितस्ते 'समावेशनं वध्वा सह मैथुनार्थं शयनमि' त्यत्र न स्वल्पमपि संशयं जहति । यथा "आरोहोरुमुपबर्हस्व बाहुं परिष्वजस्व जायां सुमनस्यमानः । तस्यां पुष्यतं मिथुनौ सयोनी बह्वीं प्रजां जनयन्तौ सरेतसा।.........तदेतौ मिथुनौ सयोनी प्रजयाऽमृतेनेह गच्छतम् ।.........शमूधो रोमशं हथो देवेषु कृणुतो दुवः ।"

श्रीहरदत्ताचार्यव्याख्या—अथ समावेशनकाले जपः । जपपक्षे तावदात्मन एवायमन्तरात्मनः प्रैषः । हे मदीयशरीरान्तरात्मन्! अस्या ऊरुम् आरोह । आरुह्य चात्मनो बाहू आलिङ्गनाय प्रसारय। हे जाये ! हे मदीयशरीरान्तरात्मन् ! युवां (पुष्यतम्) पुष्टौ भवतम् (मिथुनौ) मिथुनीभूतौ (सयोनी) सङ्गतोपस्थेन्द्रियौ । (बह्वीं प्रजां जनयन्तौ) अभिमन्त्रणपक्षे तस्यामित्यन्तं पत्युरभिमन्त्रणम् । शिष्टं द्वयोः । (ऊधः) ऊधःस्थानीयम् उभयोरुपस्थेन्द्रियम् (रोमशम्) संजातरोम (संहतम्) संश्लिष्टं कुरुतम् । इत्यादि अन्यो वेति। ब्राह्मण एनौ जायापती संगमिष्यन्तौ अनुवाकशेषेण अभिमन्त्रयेत ।

इत्थं च जपपक्ष एव मुख्यः स च मैथुनक्रियां 'सयोनी, मिथुनौ, शमूधो रोमशं हथः' इत्यादिद्वारा स्पष्टं द्योतयति । वैकल्पिकेऽभि-

मन्त्रणांपक्षेऽपि नहि समागमकाले ब्राह्मणस्याचार्यस्य वा तत्रोपस्थितिः किन्तु ततः पूर्वं मन्त्रद्वारा समागमक्रियोपदेशाय। एवं चैतद्द्वारा केवलं शयनाभिनयमात्रमेतदित्यभिधाय मैथुनोपदेशापलापप्रयत्नः श्रीशास्त्रिमहोदयानामनुचितः। अल्पवयस्कां बालिकामुद्दिश्योदीर्यमाणा एते मन्त्राः सर्वथापि निरर्थका भवन्ति। अत एव चतुर्थ्यामुच्चार्यमाणेषु मन्त्रेषु 'भूयोभूयः पुत्रकामे, अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्विये नाधमानाम्। उपमाम् उच्चा युवतिर्बभूयाः' इत्यादयो निर्देशा ये विवाह्यकन्यायाः समागमकामनां युवतित्वं च स्फुटं द्योतयन्ति। द्वादशवर्षीया ततोऽप्यल्पवयस्का वा ऋतुमती बाला युवतिर्भवतीति श्रीशास्त्रिणां कथनं तु न केवलं वेदमन्त्रोक्तैः 'सुबुधा, बुध्यमाना, उशतीः, मनसा दीध्यानाम्, स्वायां तनू ऋत्विये नाथमानाम्' इत्यादिभिर्विशेषणैः किन्तु पूर्वोक्तदिशा "षोडशवार्षिकं यावत् बाल्यं तावत्प्रवर्तते।" (हारीतसंहितायां शरीरस्थाने) "बालेति गीयते नारी यावद्वर्षाणि षोडश। ततस्तु तरुणी ज्ञेया द्वात्रिंशद्वत्सरावधि।" (भावप्रकाशे) आषोडशाद् भवेद् बाला त्रिंशता तरुणी मता। (शब्दकल्पद्रुमे) बाला—षोडशवर्षीया स्त्री—(राधाकृष्णदेवसम्पादिते शब्दकल्पद्रुमे) इत्यादिवचनैश्च विरुद्धत्वात्सर्वथाप्यप्रामाणिकम्। भावप्रकाशादिके यत्र क्वचिद् 'बाला स्त्री क्षीरभोजनम्' 'नित्यं बाला सेव्यमाना नित्यं वर्धयते बलम्।' इत्यादिनिर्देशैस्तत्र षोडशवर्षीयस्त्रिया एव ग्रहणं कर्तव्यम्।

'ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्' (अथर्व ११-७-१८) इत्यस्मिन् मन्त्रे कन्यानां ब्रह्मचर्यं तदनन्तरं च पतिवरणं व्यक्ततया प्रतिपादितमिति निष्पक्षपातविवेचकाः सर्वेऽप्यभ्युपगमिष्यन्ति किन्तु श्रीदीनानाथशास्त्रिभिस्तु यथाकथमपि सत्यापलापः कर्तव्य इति शपथ एव धृतः प्रतीयते। अत एव ते "सायणो ब्रह्मचर्यस्यान्वयं यूना सह मन्यते। कन्या, तेन ब्रह्मचर्येण युवत्वगुणोपेतं पतिं विन्दते। तत्र पत्युर्युवत्वे ब्रह्मचर्यं हेतुरूपेण दत्तम्।" "ब्रह्मचर्येण कन्या" इति भवत्प्रमाणे, उच्यते—तस्या ब्रह्मचर्यम् ऋतुकालप्राप्तिपर्यन्तं तिष्ठति

ततः प्रकृतिः स्वयमेव तासां ब्रह्मचर्याद् यापनं कारयति। तेन प्रकृतिकृतब्रह्मचर्याद् यापनात् प्रागेव (१२ वर्षे) ब्रह्मचर्यसमये सा युवानं पतिं विन्दते अतोऽत्रापि नास्मन्मतहानिः। अत्र ब्रह्मचर्यं वीर्यनिग्रहपर्यायभूतन्न तु वेदपाठद्योतकम्" इत्यादि लिखन्ति। श्रीशास्त्रिमहोदयानां विवेकशक्तिः कीदृशी कथं च न्याय्यं युक्तियुक्तं च तेषां वचनजातमिति तल्लेखेभ्यो ज्ञात्वा सर्वेऽपि विवेचका आश्चर्यपारावारमग्ना भविष्यन्ति। ये महानुभावाः पुरुषाणां शतपर्यन्तं विवाहानपि धर्मसम्मतान् बाल्ये सप्तमेऽष्टमे वापि वयसि श्रीशास्त्रिसदृशतथाकथितसनातनधर्माभिमानिप्रेरणया विवाहितानां कन्यानां सप्तपदीत एकदिवसानन्तरमपि वैधव्यमापन्नानां बालानां विवाहमधर्म्ममनुचितं मन्यन्ते धन्याऽतिश्लाघ्या च तेषां न्यायप्रियता। ये 'अस्य वर्तमानस्य सन्तानस्य धनस्य च नाशो मा भूत् तद्रक्षणं कुरु इति मृतकः प्रार्थ्यते' इत्यादिरूपेण मृतकं प्रति प्रार्थनां प्रतिपादयन्ति ते स्पष्टं विधवाविवाहप्रतिपादकमन्त्रार्थमविज्ञाय तथा कुर्वन्ति। "देवयानी १५०० वर्षेष्वतीतेष्वपि नासीदृतुमती तथा च बाल्यावस्थायामेव सा प्राप्तयौवनासीत्।" सगरस्य षष्टिसहस्रं रावणस्य च ततोऽपि बहुसंख्याकाः पुत्रा आसन् द्वादशवर्षीयापि प्राप्तरजस्का बालिका गर्भं दधीत चेन् न तत्र कोऽपि दोषः' इत्यादिकान् बुद्धिविरुद्धानयुक्तियुक्तान् विवेचकानां दृष्टावात्मनः वेदादिशास्त्राणि च पातयतो विचारान् प्रकाशयन्तो ये महानुभावा न संकोचमावहन्ति ते यदपि लिखेयुर्बाल्यविवाहगर्भाधानादिविषये तदेव स्वल्पम्। "आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः।" (मनुः)

केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः। युक्तिहीनविचारे तु धर्महानिः प्रजायते। (म० भा०) इत्याद्युक्तं ससारं वचनजातं मनसि सन्धार्य यद्येवंविधा महानुभावाः कार्यं कुर्युस्तदैव वरमन्यथा तेषां गीर्वाणवाण्यादिवैदुष्यं केवलं जनताया भ्रान्तिवर्धकं समाजविघातकं च भविष्यतीत्यत्र न संशीतिलेशोऽपि सम्भवति।

# 'पाञ्चनदविश्वविद्यालयीयसंस्कृतशिक्षाप्रणाली'

(ले०—संसारचन्द्रशर्म्मा मिश्रः श्रीरघुनाथचन्द्रसंस्कृतकालेजः, जम्मू )

अयि सुहृदयहृदयामोदकारिणोऽमरभारतीसमुपासकाः !

नास्त्यविदितं भवतां यदस्मिन्नेव प्राक्तने सुरभारतीमण्डितेऽमरकुलसमाकुले भारतवर्षे सुरभारत्याः कीदृशो नितान्तशुद्धप्रचार आसीत् । अस्या एव महोज्ज्वलप्रतापानलदग्धकापुरुषदुर्नीतिभङ्गतया प्रेमातिशया मानवप्रवृत्तिर्निर्बाधं विराजते स्म ।

एतन्माहात्म्यश्रवणाय भारतीपादसरोरुहानुरागविकसितात्मगौरवप्रवर्धनाय च सुदूरदेशदेशान्तरादन्यभाषाविचक्षणा बहुमानतोऽखिलजगदन्यभावादिन्द्रियाणि संयम्यात्रैव जीवनमर्पयन्ति स्म ।

अथ चान्येऽपीहत्यकाः सर्वतन्त्रस्वतन्त्रसुरभारतीसुरक्षका आत्मफलानुसारेणैव सरस्वत्याः साक्षात् कर्त्तार आर्यमुनयश्चिरस्थायिनीमस्याः स्थितिं प्रचक्रिरे ।

प्रियमान्याः ! साम्प्रतन्तेषामेव पूर्वमहाभागानां वंशजाः केवलं स्वख्यातिलाभसमुत्सुकाः सुरभारत्या एवानुकम्पया सुखमयजीवनसंचालकाः पाश्चात्यशिक्षासंमिश्रणेन किञ्चिदधिकं रमणीयानात्मनो मन्यमाना आन्तरिककपटरागार्चितशृगालवृत्तयो बाह्यतोऽगाधपाण्डित्यप्राचीनार्यपद्धतिरक्षादिविविधपुण्यतमानुष्ठानमात्रजीवनप्रदर्शकास्तस्या एव सुरभारत्या मिथ्याप्रचाराडम्बरं लोकसमक्षं बलात् स्थापयन्ति ।

अद्यावधि लोकह्रिया नैसर्गिकनम्रतया चास्मत्सुरभारतीसेवकसंघस्य नासीत् कठोरदृष्टिरेतेषां कुठाराघातविदारितसुरभारती वक्षसामुपरि । किन्त्वस्मिन्नूतने युगे सर्वेऽपि स्वपौरुषालम्बनैकमात्रसाहाय्यज्ञानिनः स्वकीयलाभालाभविमर्शकारिणो भारतीमातृरक्षणादत्तचेतसः सुरभारतीविनाशकदुष्टकिंपुरुषदलनसमर्थाः संस्कृतमातृसमुद्धारकाः किञ्चित्किञ्चिल्लब्धसंज्ञाः सुखशय्यां विसर्जयन्तो दृश्यन्ते ।

किन्तु महता दुःखेनाहमिदं वक्तुमत्याकुलो यद् यत्रास्मत्प्रान्ते नास्तीदृशी संस्कृतशिक्षाया दुर्दशा तत्रैवास्मिन्पञ्चनदप्रान्तेऽतिदयनीयां दशां संस्कृतस्यानुभवन्तो विद्वांसश्छात्राश्च नितरां समुत्सारितधैर्याः क्रन्दन एव समयं यापयन्ति। केवलं परीक्षादानाय कालेजादीनां स्थापने नैव संस्कृतस्योन्नतिसम्भवः, किन्तु बाह्याभ्यन्तरिकसुचारुपद्धतिनिर्माणपुरस्सरं नियमव्यवस्थाकरणेनैव वास्तविकी समुन्नतिः।

प्रतिवर्षमत्रत्याश्छात्राः पण्डिताश्च केवलं केन्द्रं समाश्रित्य परीक्षां दत्त्वैव स्वकार्यपूर्णतायां कृतकृत्याः स्वभवनं निवर्तन्ते। किन्तु यावतः समयात् परीक्षात्र संस्थापिता न कापि उन्नतिः संस्कृतसाहित्यस्य समजनि, इति सर्वे जानन्ति एव विपश्चितः।

अत्रत्या नियमास्तु विचित्रा एव। यान्छ्रुत्वैव हृदये महानुत्पातो जागर्ति। प्रथमन्तु संस्कृताध्येतारो निसर्गत एव पाश्चात्यशिक्षाशिक्षितप्राप्तनिर्वाणस्वरूप 'बुद्धू' पदवीं न त्यक्तुं कामयन्ते।

एतदेवाभिलक्ष्येह लवपुरे पञ्चापछात्रसंघनाम्ना एको विद्वन्मण्डलबहुमतो विद्यार्थिभिः संघः संस्थापितः। योऽत्रत्यसंस्कृतबोर्डसमक्षं संस्कृतपरीक्षार्थिनां कृते निर्मितनियमेषु कियन्तिचित् संशोधनानि स्थापितवान्।

किन्तु पश्यन्तु श्रीमन्तः! यादृशमुत्तरं छात्राणामुपकाराय बोर्डाधिकारिण आहुः पत्रेषु दृष्टं भवेच् श्रीमद्भिः। पुनश्च स्वाधिकारप्राप्तये बोर्डाधिकारिभिः सहाद्यापि लेखबद्धप्रश्नोत्तरं कृतं विद्यते।

अन्ते पूतकुलसुपुत्रास्ते विद्यार्थिनां किमपकारं करिष्यन्तीति न जाने। सर्वेषामपि अत्रत्यानां मनस्स्वेतज्ज्ञानाय महती जिज्ञासा वरिवर्त्ति। विद्याध्येतृषु ऐक्यशक्तिलाभाय प्रचारोऽपि विधीयतेऽधुना।

असावधानतया यदि मदान्धा अधिकारिणो न श्रोष्यन्ति छात्रवचस्तर्हि निःसहायानामस्माकं सर्वेषामपि पञ्चनदीयच्छात्राणां यथेच्छं कार्यावलम्बनं किमप्यवश्यं सुरभारतीसमुद्धाराय भविष्यतीति निश्चितमेव।

# मन्ये दुर्जनचित्तवृत्तिहरणे धाताऽपि भग्नोद्यमः

( ले०—पं० टिकलालः शास्त्री लवपुरीयः )

प्रियपाठकमहोदयाः !

कविशिरोमणेः श्रीभर्तृहरेर्निम्नाङ्कितं—"मन्ये दुर्जनचित्तवृत्तिहरणे धाताऽपि भग्नोद्यमः" इत्येतत् पद्यपादमवलम्ब्य किञ्चिद्युष्माकं मनोरञ्जनार्थं 'श्रिय:' चैत्राङ्केऽस्माभिरत्र भवतामग्रे समुपढौक्यते। आशासे पाठकानां विद्यार्थिनां च साहाय्यकरोऽयं लेखो भवेदिति। अस्तु।

कोऽयं खलु दुर्जनः ? सृष्टिनिर्माणकाले हि निखिलबलशाली सच्चिदानन्दघनः परमात्मा 'एकोऽपि बहु स्याम्' इति श्रुतिसमनुरूपं केवलोऽपि बहुत्वं लिप्सन् नानाविधा व्यक्तीर्व्यक्तीकृतवान्। तासु चानेकासु शशाङ्कबिम्ब इव जलेषु एकोऽप्यसौ प्रतिबिम्बवंशमाविर्भावयन् अनेकतामुपनतः। आधारनामधेयपृथक्त्वेन च स्वयमपि वह्निरिव गोष्ठीय-पर्वतीय-चत्वरीयरूपाभिर्बह्वीभिः स्त्रीनपुंसकनराख्याभिराख्याभिराख्येयश्च समभवत्। ततश्च जनजातस्य सकलजातिराजराजतां संविधित्सुस्तदुपभोगाश्रयं तत्कलेवरं घ्राणरसनादिभिः पञ्चज्ञानेन्द्रियैर्वाक्प्रभृतिभिः पञ्चकर्मेन्द्रियैर्मनसा च सन्नियोजितवान्। उत्पादयामास च गन्धरसरूपादीन् तत्तद्विषयान्। भाषण-निरीक्षण-गमनाद्यभिधानभाञ्जि च तत्तत्कर्माणि। कृपालुना च तेनेश्वरेण 'एतेषां स्व-स्व-विषयोपादाने यथाकामं दुरितनिर्वर्तिका प्रवृत्तिर्मा भूत्' इति विचिन्त्य, "देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्। ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते। अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्। स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते" इति श्रीभगवद्गीतापद्यात्मकं तद्विधेयं कायिक-वाचिक-तपोद्वयं वितन्यते स्म। स्मृति-सुख-दुःखादिप्रत्यक्षमस्य मनसः परद्रव्यदारहरणपरितापन-गोब्राह्मणहननादिनिन्दितविधिषु विधेयतया किल्बिषप्रसूर्वृत्तिर्नाविर्भवेत्—इति परिविमृश्य च "मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः। भावसंशुद्धिरित्येतत्तपो मानसमुच्यते" इत्यात्मकं तदघस्मरं मानसं तपश्च परिकल्पितवानसौ विधाता। जनजातौ च या

व्यक्तिस्तदुपदिष्टेन शरीर-वाङ्-मानसतपःस्वरूपेण पयसा सद्-सद्विषयोपभोगमसीपटलपरिमेचकितं निजेन्द्रियजातं प्रक्षालयति, न तस्याः कदापि हृदि गर्हितकार्यपरताजनितपापलवोऽपि लभतेऽवकाशम्। स्वान्तःशुद्धौ च तत्प्रेर्यमाणानीन्द्रियाणि कथमलम्भवेयुस्तद्विरुद्धमाचरितुम् ? इन्द्रियाणां मनसः शरीरस्य च सकलदोषपराङ्मुखतया तत्संबद्धा व्यक्तिर्जगति सज्जन इति व्यवह्रियते। तपःपयःप्रसिक्तायां च तस्य हृदयभूमौ अल्पीयसैव कालेनाङ्कुरायमाणं गुरूपदिष्टशिक्षाक्षरलक्षणमक्षरं बीजं जनयत्यचिरेणैव सच्चिदानन्दबोधसुधासिन्धुबिन्दुसन्तानजनितानल्पमाधुर्यं ज्ञानफलम्। परिपक्वे च तस्मिन् सज्जनो जीवोपाधिव्याधिमवधीर्य परमात्मस्वरूपां प्रकृतिमेति।

तदपरा तु या व्यक्तिरुक्ततपस्त्रयं स्वकल्याणासाधारणकारणमिति न गणयति। तत्तदिन्द्रियविषयोपभोगैकतानतया तस्याः सांसारिकाप्रशस्यव्यसनोपभोगोपार्जितदुरितोद्रेकावग्रहातिशुष्के मनःक्षेत्रेऽङ्कुरसम्पादनार्हताऽपि दवीयसी; गुर्वादिमुखपङ्कजनिक्षिप्तस्योपदेशबीजस्य कुतो ज्ञानफलप्रकल्पनशक्तिः। अनुद्दीप्ते च ज्ञानप्रदीपे कथङ्कारं मनःसदनस्थस्य ध्वान्तस्य शान्तिः। अनुपरतायां चाऽविद्यायां तत्प्रेरितः पुरुषोऽचिन्तयन् स्वां भाविनीमवस्थां दुष्कृतजन्यफलोपभोगं च, अन्यान्यप्युच्चावचानि समुपाचरन् दुश्चरितानि, 'दुर्जनोऽयम्' इति लोके लोकैर्व्यवह्रियते।

अविरलविहिताचिन्त्यदुष्कर्मानेकपापराशिशिलासमुच्चयपरिव्याप्तायां च तस्य हृदयोषरभूमौ पथ्योक्तिसमवधारणादिबीजस्यानवकाशतया नोद्भवन्ति दयासत्यशान्तिलवाः। एकस्मिन् जन्मनि समुपार्ज्य सुकृतेतरसंघं तत्फलेन दुष्कुले समुपाददज्जनिं "प्रकृतिर्दुस्त्यजा पुंसाम्" तथा "सतीव योषित् प्रकृतिश्च निश्चला पुमांसमभ्येति भवान्तरेष्वपि" इत्यादिनीतिनिपुणवचनचयस्य याथार्थ्यमुपपादयत्यसौ। पुनरपि हिंसादिक्रूरकर्माणि विदधद् नावदधाति सदाचारमार्गप्रवर्तकानि हितवचांसि।

अथवा तस्यापि दोषघोषणा न समुचिता। यतो विविधपापपरिपूरितेऽस्य मनसि न सम्भवति सत्पुरुषभाषितप्रवेशः। प्रकृतिजनिता विचित्रा चित्रपरम्परा चासंख्यातव्यमहिमा इति विदितमेव संख्यावताम्।

यथा हि—न जहाति कदापि पीयूषपयोजुषितालवालः कुङ्कुम-केसरकर्पूरपूरिताङ्कुरः पलाण्डुः स्वदौर्गन्ध्यम्। नावलोक्यते च पयः पिबन्नपि गतगरलः करालो व्यालः। आजन्मसलिललहरीभिः परिप्लाव्यमानोऽपि मीनगणो न भण्यते केनाऽपि गन्धविहीनः। एवमहर्निशं क्रूरकृतिकज्जलजलैः श्यामलिते दुर्मानुषमानसे कथमाविर्भवेयुः शिक्षाशील-सदाचारशालिनो मनोहारिणो निर्मलाः सदालापाः। दुर्जनचित्तवृत्तिर्वृतिरिव (?) दृढा लोहमयी दुर्लङ्घ्या, इत्यलं पल्लवितेन।

---

# * समस्या *

## आर्योऽस्मि भारतयुवाऽहमनार्यजेता

(रचयिता—मनोहरलाल 'गौड़' शास्त्री, व्याकरणाचार्यः, एम०ए० प्र० व० ओरिएण्टलकालेजः, लवपुरम्)

१

भीष्मादिपूर्वजमहाजनिरार्यवर्ते

वर्ते च शंकर-कुमारिल-बुद्धशुद्धे।

सौवर्णभूमिकणनिर्मितपुण्यदेह

आर्योऽस्मि भारतयुवाऽहमनार्यजेता॥

२

दुर्दान्तकर्दमदमाय सहस्ररश्मिः,

शातोऽशनिर्हृदयभेदककण्टकेभ्यः।

दीनार्तदुःखविपिनाय च दाववह्नि-

रार्योऽस्मि भारतयुवाऽहमनार्यजेता॥

३

दम्भान्धकार-निशि नैव मया व्यबोधि,

ह्येतन्ममाऽस्ति न परस्य ममैव चैतत्।

जातः प्रभातसमयोऽद्य ममाऽत्र लोके,

आर्योऽस्मि भारतयुवाऽहमनार्यजेता॥

४

शक्तोप्यशक्तवदहं पुरुषोऽबलेव,
जीवन्नहं मृतकवत्कथमित्थमासम्।
इत्यादिसंस्मरणतोऽद्य भृशं विलज्जे,
आर्योऽस्मि भारतयुवाऽहमनार्यजेता॥

५

हेमाभशस्यशबलां सुजलां विशालां,
लुण्ठैर्विलुण्ठितधनां निजराजधानीम्।
दृष्ट्वा समुच्छलति मे चिरसुप्तरक्तम्,
आर्योऽस्मि भारतयुवाऽहमनार्यजेता॥

६

निःसैन्यशस्त्रतुरगादिबलोऽस्मि किन्तु,
क्रौर्यं कृशानुमिव तच्छमयिष्य एव,
नैवासिना यदि तु शोणिततीव्रपूराद्
आर्योऽस्मि भारतयुवाऽहमनार्यजेता॥

७

रे रे पिशाच ! तव शोणितक्षुत्पिपासां
हत्वा न त्वां यदि निजाधिकमांसरक्तम्।
हत्वा निपात्य तव कुक्षिमहं क्षिणोमि,
आर्योऽस्मि भारतयुवाऽहमनार्यजेता॥

८

जानीहि मां शिवदधीचिसुतं दृढं त्वम्,
वह्नौ हुतात्मशरभङ्गऋषेश्च पुत्रम्।
दीपं प्रदीप्य असुजाऽपनये तमोऽहम्,
आर्योऽस्मि भारतयुवाऽहमनार्यजेता॥

---

# नवीनयुगारम्भः

( ले०—पं० गोविन्दराजदानशास्त्री, प्रभाकरः, *P. W.* कालेजः, जम्मू )

अतीतानागतवर्तमानकालानामन्यतम इवापूर्वो नूत्नोऽयं नवीन-युगारम्भो भारताद्वर्षाद्बहिः प्रचारितः केनापि बाबनामकेन ईरान-देशवास्तव्येन यूना घोषितोऽयं १८४४तमे वत्सरे। येन स ईरान-देशीयानां तिरस्कृतिपात्रत्वमभजदचिरेणैव च कालेन स्वात्मानं बलिसादकरोत्।

अब्दुलबहानामा कश्चन तच्छिष्यः स्वगुरोरुपदेशप्रचाराय कटिबद्धः सर्वत्र भ्राम्यन् कारावासञ्च चत्वारिंशद्धायनपर्यन्तं संसेव-मानः परं लोकं १८६२ संवत्सरेऽगात्। स च मनुष्यसंघस्यैकतां, स्वातन्त्र्येण तत्त्वविवेचनं, सर्वेषां धर्माणामेकमेव निदानं, तत्तत्सा-धनोपायं, धर्मेणैवैक्यसाधनं, विज्ञानविद्यायुक्तिभिर्धर्मसिद्धान्तकथनं, स्त्रीपुरुषयोः समानतां निष्पक्षपातेनाचरणं विश्वव्यापिनीं शान्ति शिक्षां च, परमेणैवार्थेनाध्यात्मिकोन्नत्यैव लौकिकविषयसुखसंसेवनं भाषाभेदराहित्यमन्तर्जातीयं न्यायप्रचारं चोपदिदेश।

सर्वत्र व्यापकमेनं धर्मं खृस्त-यहूदीय-बौद्ध-म्लेच्छ-जरदस्तु-थ्यूसा-फिस्ट-फ्रीमेसन-स्पिरिस्टादीनां सर्वेषामादर्शभूतं दार्शनिकं समाज-वादिनां सिद्धान्तस्वरूपं व्याचख्यौ। शुद्धेन मनसा प्रेमदयार्द्र-भावं शत्रुमित्रयोः सर्वत्रोद्घोषयांचकार। इदमेव ज्ञानम्। अयमेवा-ज्ञाननाशः। अत एव मोक्षः। अस्य विपर्ययेन बन्धः। नान्य उपायः। तस्मात्सर्वथा सदा सततं सर्वैरनुयायिभिरस्य धर्मस्य भवितव्यमिति तस्य राद्धान्तः।

वस्तुतो बहाईधर्मस्तु नान्यः कश्चनापूर्वो धर्मः। निखिलाना-मपि प्राचीनानां विभिन्नधर्माणामेकदेशावसायिभूतोऽयं सिद्धान्तः। श्रुतिस्मृतिसदाचारस्वपरप्रियविधानभूतस्य साक्षाच्चतुर्विधधर्मलक्षणस्यै-काङ्गिभावेनायमुपलक्षितो नूतनो धर्मविन्यासो बहाईमतानुयायिनाम्। विशालस्य विस्तीर्णस्य विश्वपरस्य भगवता मनुनोपदिष्टस्य दशविध-धर्मलक्षणस्य कथङ्कारमपि न तुलामारोहति कश्चनान्यो धर्मः।

शिवस्वामी—८५५तमादांगलीयाब्दादारभ्य ८८३हायनान्तं शिवस्वामिनामा कश्चनकविवरः परमैश्वर्यभाजो राजराजेश्वरस्यावन्तिवर्मणः समये काश्मीरानलंचकार । तथा च कल्हणकृतकश्मीरराजतरङ्गिण्याम्—

मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः ।
प्रथारत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः ॥

सोऽयं शिवस्वामी शिवभक्तः शैवागमानुयायी सन्नपि श्रीकप्फिणाभ्युदयाभिधं लीलावतीनरेशस्य कप्फिणस्य श्रावस्तीपतौ प्रसेनजिति विजयवर्णनात्मकमपूर्वं काव्यरत्नं रचयांचक्रे । महाकाव्यसरणिमनुसरन् स नगरपर्वतर्तुवनविहारजलक्रीडाप्रदोषचन्द्रोदयमधुपानसुरतप्रभातादिवर्णनैः, चारवाक्यसभाक्षोभनीतिप्रपंचयुद्धादिवर्णनैश्च सम्यगाभूषयाञ्चकार । नेयं कथा पौराणिकी रामायणादिसंबन्धिनी वा किन्तु ऐतिहासिकी बौद्धावदानभूता । अवदानशतके चाष्टाशीतितमेऽवदाने 'पूर्वस्मिञ्जनने विपश्यीबुद्धसमसामयिकः स कंचन विहारं निर्ममे । जन्मन्यन्यस्मिन् स वाराणस्यां प्रत्येकबुद्धसेवको ब्रह्मदत्तनृपाभिधः सर्वत्र ख्यातिमगात् । कश्यपबुद्धकाले जितेन्द्रियेन वीतरागेण तेनाभावि शाक्यमुनिबुद्धसमये च दाक्षिणात्यस्य कल्पनाम्नो नृपतेः पुत्रोऽभवत् । राज्यसिंहासनमवाप्य तेन श्रावस्त्यादिनगरषट्कानां समेऽपि राजानः समाक्रान्ताः । बुद्धमतानुयायिनस्ते बुद्धमेव शरणमगच्छन् । भगवान् बुद्धः स्वयमेव योगबलेन कप्फिणं वशीचकार । एवं च बुद्धवचनामृतावर्जितहृदयोऽसौ क्षात्रं धर्मं परित्यज्य भिक्षुत्वमापेदे, इति लवपुरीयराजकीयमहाविद्यालयप्रधानसंस्कृताचार्येण एम्० ए० बी० लिट्० इत्युपाधिधारिणा पंडितगौरीशंकरशर्मणा प्रकाशिते काश्मीरिकश्रीशिवस्वामिविनिर्मिते कप्फिणाभ्युदयाख्ये काव्ये प्रस्तावनायामुट्टङ्कितम् ।

काश्मीरिको महाकविर्भट्टार्कस्वाम्यात्मजः श्रीशिवस्वामी चायं ध्वन्यालोककर्तुरानन्दवर्धनाचार्यस्य हरविजयाभिधमहाकाव्यप्रणेतू रत्नाकरस्य सुभाषितसूक्तिप्रणयनपटोर्मुक्ताकणस्य च समसामयिको

विंशतिसर्गात्मकं चित्रबन्धगुम्फितं महाकाव्यमिदं श्रीचन्द्रमित्रबौद्धभिक्षोः प्रेरणयैव व्यातेने तथा च ४३ तमे विंशतिसर्गान्तर्गते श्लोके—

'विद्याशाली शीलशोभासुभिक्षो
भिक्ष्वाचार्यश्चन्द्रमित्राभिधोभूत् ।
बौद्धी बुद्धिर्यं श्रिता शुद्धिसौधं
सौधं साध्वी चन्द्रिकेवोच्चकार ॥
प्रेष्टाद्गोष्ठीधर्मधर्म्येण धर्म्यां
धीमन्मध्येऽध्येषणां प्राप्य तस्मात् ।
भट्टार्कस्वाम्यात्मजेन प्रणिन्ये
सूक्तिः सक्तश्रीशिवस्वामिनेयम् ॥'

सोऽयं—

'विदितबहुकथार्थश्चित्रकाव्योपदेष्टा
यमककविरगम्यश्चारुसंधानभाणी ।
अनुकृतरघुकारोऽभ्यस्तमेरठप्रचारो
जयतिकविरुदारोदण्डिदण्डः शिवाङ्कः ॥
यद्वाणीश्रुतिमात्रकेण सुधियां चेतश्चमत्कारिणी,
येनामुद्रि विरोधिनां मुखकुलं स्वोद्गारकौतूहलैः ।
तेनाज्ञानघनान्धकारपटलप्रक्षेपदीपांकुरं,
व्यातेने कृतिनां कृते स्वकृतिना काव्यं शिवस्वामिना ॥
मध्ये काश्मीरं शुद्धिमाह्लादकत्वं,
प्राप्तात्प्रालेयस्पर्धयेवाथ वृद्धिम् ।
काव्यात्क्लृप्तोऽस्मात् कल्पतां पुण्यराशिः,
प्राणिप्राणानां प्रीणन श्रीः शिवाय ॥

# राजनीतिकक्षेत्रे भारत-संस्कृतेरान्दोलनम्

सर्वत्र संसारे स्वस्वदेशस्य संस्कृतिर्देशेषु पाश्चात्येषु पूर्वेषु वा सदैव राजते स्म। इंगलैंड-जर्मनी-रूस-फ्रांस-इटली-प्रभृतयः पाश्चात्य-देशा अपि कालवशात् पूर्वस्मिन् समये विदेशीयैश्चक्रवर्तिभिः पराक्रमसम्पन्नैर्महाराजैः पराजिता अभूवन्। परं देशेष्वेतेषु तद्देशीयभाषा-नीति-रीति-व्यवहारादयः संस्कृतिश्च सदैव संरक्षिताभूत्। तथैव एशियामहादेशेऽपि विजयशालिभिः पुरुषैः पराजितदेशेषु स्वसभ्यता-प्रचाराय कृतयत्नैरपि पराजितजातीनां सभ्यता रक्षिता। अपि च कतिपयमुगलसम्राड्भिर्भारतवर्षीयाणामार्याणां सर्वप्रकारा आचारव्यवहाराः सम्मानिताः, स्वकार्येषु निजव्यवहारेषु च प्रयुक्ताः। अनेकशो जातयो बाह्यत आगत्य भारतवर्षम् आत्मसात्कृत्वा तत्र निवासं स्वीचक्रुः। भारतवर्षीया आंगलीं वेशभूषां, भाषां, कतिपयरीतिसंस्काराश्चं संमानितवन्तः।

## आर्यसंस्कृतिं प्रति मुस्लिमनेतॄणामाघातः—

परमिदानीं भारतवर्षेऽस्मिन्नस्माकं मुस्लिम-भ्रातरोऽद्भुतमेव व्याख्यानं स्वधर्मस्य स्वकर्तव्यानां स्वसभ्यतायाश्च कुर्वन्ति। भारतवर्षं न ते स्वदेशं मन्वते न चास्य भाषां वेषभूषां सभ्यतां च स्वदेशीयत्वेन स्वीकुर्वन्ति। तेषां स्वदेशास्तु टर्की-ईरान-अफ़गानस्तान-ईराकादि—मुस्लिमदेशाः सन्ति। ते भारतीय-हिंदूनां कृते कांश्चित् सहयोगभावान् न प्रकटयन्ति। अपि च ते पदे पदे तेभ्यो विद्रुह्यन्ति। तेषां नेता मिस्टरजिन्नाहः "राज्यद्वयेनात्र भारतेऽवश्यमेव भवितव्यं, मुस्लिम-राज्यं पञ्चषेषु प्रांतेषु हिंदूनां राज्यं चान्यत्र। परं यत्र हिंदु-राज्यं स्यात् तत्रत्या अपि महमदीया मुस्लिमराज्यस्यैव वश्याः सन्तो जातितो विशिष्टाः स्युः"। इत्येवं मुस्लिमजातेः पृथग् राज्य-स्थापनाय बलिष्ठं यत्नं करोत्यहर्निशम्। भारतवर्षस्य सभ्यतां कदाचिद् महमदीयाः स्वकीयत्वेनाङ्गीकुर्युरिति भीत्या आङ्गलराज्यपदाधिकारिणो वाईसराय-भारतमन्त्रि-प्रभृतयः सदैव "हिंदवः चातुर्वर्ण्य-

रक्षका जात्युपजातिषु च विभक्ताः, महमदीयाः समानाधिकार-प्रचारकाः अत एते भिन्ने जाती न कदाचिदेक-जाति-भावेन भारते वस्तुं शक्नुतः" । इति हिंदु-संस्कृतेर्विरोधभावान् युक्तीश्च श्रावयन्ति । अहो कीदृशोऽयमन्य-जातेर्विद्रोहः स्वजातेरहंकारोऽभिमानश्च । विषयुक्तानां भावानां विचाराणाञ्चेदृशानां प्रतीकारः शीघ्रं न चेत् क्रियेत तर्हि हिंदूनां भारते निवासो कठिनोऽसंभाव्यश्च भवेत् । भारते मुस्लिम-धर्मस्यानुयायिनः प्रायशः ६०-६५ प्रतिशतकं हिंदुधर्माद् लोभाद् बलाद् वा प्रच्याविताः सन्तो महमदमतं स्वीकुर्वन्तो दरीदृश्यन्ते । भारत-सभ्यतायां लालिताः पालिता बहिरन्तश्च भारतीय-संस्कृतिं धारयन्तः कथं विदेशीयसंस्कृतेः पोषका भवेयुः । स्वार्थपरायणा नेतारस्तेषां यदि सदैव "हिंदवः काफ़िरा अनेकेश्वर-पूजकाः, असमान-जात्युपजातिभावप्रचारका मुस्लिमविद्रोहिणो न कदापि सम्पर्क-सम्मेलनार्हाः" इत्येवंविधान् अनिष्टान् भावान् स्वव्याख्यानेषु स्व-लेखेषु च प्रकटयेयुर् धर्मशालासु (मस्जिदेषु) मुस्लिममौलवीयान् अपि तत्प्रचारे प्रयोजयेयुश्च तर्हि कथं स्वस्वधर्मे रक्षिताः पालिताश्चोभयधर्मानुयायिनः परस्परं प्रेम्णा निवसेयुर्भारतवर्षेऽस्मिन् ।

## सिंधु-प्रान्ते हिंदूनां महती दुर्दशा—

दुःखयति मनो, रोमाञ्चितं भवति शरीरं, विदीर्यते च हृदयं श्रुत्वा पापानामाततायिनां दुष्कर्मणां सूचनां सिंधु-प्रान्तस्य ग्रामेषु सक्खर-नगरे च । सिंधु-प्रान्तीय-राज्यसमाचार-पत्रस्य ( गवर्नमैंटग़ज़टे ) विवरणं भवति यत् कतिपयशतसंख्याका हिंदूनां गृहा भस्मसात्-कृताः । १६० हिंदवो घातिताः १० जीवन्त एवाग्निसात्कृताः, कतिपया आर्यजातेर्ललना निष्कासिता उपभुक्ता असम्मानिताः पीडिताश्चेति । वर्णनेनानेन पापानां कम्पते लेखनी । किमत्र निदानम् ? यां शिक्षा-मज्ञेषु मूर्खेषु तेषां धर्मनेतारः स्वधर्मस्थानेषु स्वसम्मेलनेषु च प्रचार-यन्ति सर्वसाधारणीं च कुर्वन्ति तस्याः शिक्षाया एव फलमिदम् । सिंधु-प्रान्तस्य प्रधानमन्त्री अलाबख़शः स्वयं सभ्यः पुरुषः देशहितैषी च दृश्यते परं मुस्लिमधर्मसाधारणानुयायिनां सिंधु-प्रांतीयानां ग्राम-

निवासिनां मतं त्विदं प्रतिभाति यद् हिंदवस्तेषां कन्दशाकवद् भोजनार्हा इति। अतः श्रीमता अलाबख्शेन सभ्यपुरुषेण तन्निरोधार्थं कृतेऽपि यत्ने महोपद्रवः सिंधुप्रांते हिंदूनां बहुसंख्यायां घातक एव समजनि दिसम्बर-मासे १६३६ खीष्टाब्दस्य।

## पश्चिमोत्तरहिंदूनां स्थितिः—

पूर्वमपि प्रान्तेऽस्मिन् शान्तिस्तु कथञ्चिदपि नासीत् परं वर्षादधिकः समयो व्यतीतो यदा "उप्पीफ़कीरस्य" भारते राज्येन सह विद्रोहः सञ्जातः। तस्मात् कालात् परशुपुर (Peshawar) बन्नु-कोहाट-डेराइस्मालख़ाननिवासिनां हिंदूनां दुरवस्था संवर्धिता। न कदापि तावत् सूर्योऽस्तं गच्छति यावत् कतिपयहिंदुस्त्रीपुरुषबालाश्च वज़ीरिभिः भट्टिभिः, अफ़रीदिभिरन्यैस्तद्देशीयम्लेच्छैश्च बलात् निष्कास्य नापह्रियन्ते। तेषां वराकाणां बन्दिनां मुक्तये ते प्रचुरं धनं मूल्यरूपेणेच्छन्ति। तेषां कतिपये हन्यन्ते येषां बान्धवाः सहस्रशो रूप्यकाणां दानेऽसमर्था भवन्ति। पुनः कीदृशी परिपक्वा स्थितिः ब्रिटिशराज्यस्य कीदृशश्च प्रभावः सीमाप्रान्तनिवासिनाम् आर्यललनाबालानामुपरि महाराजाधिराजचक्रवर्तिनः श्रीजार्जमहोदयस्य विक्रमशालिराजस्य।

## हिंदूनेतृणामितिकर्त्तव्यता—

न च विवादास्पदा समस्येयम्। भारतवर्षस्यान्यप्रान्तनिवासिनां हिंदूनां परं कर्तव्यं प्रथमो धर्मश्च यत् सीमाप्रांतीयानां हिंदूनां दुःखं दुरवस्था च तैः स्वकीयैव मन्तव्या। तेषां साहाय्यार्थं समितिरेका कार्या स्याद् हिंदुमहासभायाः शाखारूपा पृथग् वा, यस्याः कर्तव्यं दुःखिनां हिंदूनां सर्वप्रकारेण सहायता स्यात्। तेषां स्त्रीपुरुषबालानां दुर्दशा तया स्वकीयैव मन्तव्या। तनुमनोधनैस्तेभ्यः सान्त्वना सर्वप्रकारिका च सहानुभूतिः क्रियात्मकतया दर्शयितव्या। एतादृशी समितिः श्रूयते सीमाप्रांतपुरुषैः तत्र स्थापितास्ति यस्या यत्नेन रूप्यकाणां दानेन च बन्दिनां मोचनं भवति। परं पञ्चनददेशे न ज्ञायते यदेतादृशी समितिर् विद्यते न वा। स्वदेशस्य भारतवर्षस्य

सेवायै दुःखितपीडितमानुषसमाजस्य कृते सेनादलानि निर्मातव्यानि। आर्ययुवका युवत्यश्च सेनादलैः सेवासमितिभिः स्वात्मरक्षायै सर्वप्रकारकेष्वान्दोलनेषु भागं गृह्णीयु रित्यस्ति परमं कर्तव्यमाधुनिकमस्माकम्।

## संस्कृतज्ञानां कर्तव्य-विशेषः—

पाठकानां मनस्सु प्रश्नोऽयमुत्पद्यते यत् किमर्थं संस्कृतसमाजस्याग्रे मया सर्वमिदं व्याख्यातम्? किमस्ति तेषां वराकाणां हस्ते? अस्योत्तरमिदम्। जानन्ति विद्वांसः संस्कृतसमाजस्य शिरोमणयः यदिदानीमपि हिंदुसमाजे सन्ति बहवः भेदभावाः। यद्यपि वर्णाश्रमधर्मस्य दृढप्रचारकः पोषकश्च हिंदुसमाजः, तथापि चातुर्वर्ण्यरक्षणाव्याजेन न चास्माभिः वर्णाश्रमधर्मस्य मूलसिद्धान्तो विस्मर्तव्यः। न च चातुर्वर्ण्यस्य वेदस्मृतिशास्त्रभिन्नं क्वचिद् व्याख्यानं संमानार्हमस्मत्कृते विद्यते। न च शतशः भेदभावा उपजातीनां पृथक् पृथग् वर्णेषु वेदस्मृतिकृताः हिंदुबुद्धिधारिणां धर्मबुद्ध्या आवश्यकाः सन्ति। न चास्मत्कृते सर्वं यद् गीर्वाणवाण्यां लिखितं दृश्यते तदस्ति वेदवत् प्रमाणम्। अन्यच्च। यद्यपि सनातनधर्मानुयायिनां हिंदुसमाजस्य स्त्रीपुरुषाणां कतिपया देवता अर्चनयोग्याः तथापि एकस्यैवोंकारस्योपासना सर्वेषामप्यपरित्याज्या। यद्यपि साकारा भक्तिः कासुचिदवस्थासु बहूनां हिंदूनां मता तथापि निराकारपूजां वेदान् पुराणानि, एकेश्वरस्योपासनां च वैदिकसिद्धान्त एव मन्यन्ते सर्वे हिंदवः। यथा:—

ओमित्येतदक्षरमुद्गीथमुपासीत। (छान्दोग्य० १.)

प्रशासितारं सर्वेषामणीयांसमणोरपि॥  
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम्॥  
एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्॥  
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम्॥

(मनु० अ० १२ श्लो० १२२।१२३)

स ब्रह्मा स विष्णुः स रुद्रः स शिवः सोऽक्षरं स परमं स्वराट् । स इन्द्रः स कालाग्निः स चन्द्रमाः ॥७॥

( कैवल्योपनिषद् )

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यस्स सुपर्णो गरुत्मान् ॥
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥

( ऋ० मं० १।२२।१६४।४६॥ )

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ॥ स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ यजु० १३।४ ॥

सनातनधर्मार्यसमाज-ब्रह्मसमाज-सिखमतानुयायिनस्तु सर्वे आस्तिका दृढमीश्वरोपासकाश्च । आस्तिकानां पुरोहिताः संस्कृतज्ञा वेदशास्त्रस्नाता ब्राह्मणाः किमर्थं न परस्परं संघटनमुपदिशन्ति । परस्परं भेदभावान् दूरीकर्तुं हिंदुसमाजस्य विद्वांसः ब्राह्मणा उपदेशकाश्च घोरयत्नं करिष्यन्ति चेत् तर्हि सर्वेषां हिंदूनामैक्यं स्याद् इत्यस्ति मे मतिः । सिंहाः ( सिक्ख ) हिन्दुजातेः क्षत्रियाः तद्-विपत्तिदूरीकरणाय कृतप्रतिज्ञाः श्रीगुरुगोविंदसिंहस्य युद्धसेना-भूता इदानीं जातिं भिन्नां दर्शयन्ति । दुर्विपाको हिंदुधर्मस्य प्राचीनार्यसभ्यतायाश्च । सनातनहिंदूनामार्यसमाजमतधारिभिस्तु भेदः सिक्खेभ्योऽपि न्यूनतरः । उभये वेदमीश्वरकृतग्रन्थं मन्वते, एकेश्वरोपासनां परमं च धर्मं, गोब्राह्मणरक्षणं परमं च तस्य लक्षणं, भारतवर्षस्य प्राचीनगुरूणाम्, ऋषिमुनीनां कर्माणि नामापि च पूजार्हाणि, ब्राह्मणग्रन्थ-स्मृतिदर्शनेतिहासांश्च प्रमाणपुस्तकानि, भारतभूमिं, तत्रोत्पन्नांश्च स्थावरजङ्गमान् स्नेहपात्राणि, तक्षशिला (Taxila) हडप्पा मोहिंजोदारो (Mohinjodaro) प्रभृतिप्राचीन-सभ्यतादीपकस्थानानां वर्णनमेव रोमाञ्चकारि चानुभवन्ति । कथं न तर्हि यूयं तयोर्द्वयोः समाजयोः परस्परप्रेमप्रत्ययनायोपदेशं कुरुथ । ब्रह्मसमाजिनोऽप्यस्माकमङ्गम् । यद्यपि तेषां मतमार्यसमाजिभ्यो

भिन्नं हिंदुसनातनधर्मावलम्बिभिश्चानादृतं तथापि वेदाद् ऋते प्रायशः सर्वं ते हिंदुसमाजस्य सिद्धान्तं स्वीकुर्वन्ति। प्राचीनसमाजे तु नास्तिकानां बौद्धानां जैनानामप्यस्मिन्नेव गणनासीत्। किमर्थं नेदानीं स्यात्। आधुनिककालस्य देवसमाजिनामपि हिंदुत्वं कथं निराकृतं भवति। महाराजेनाशोकेन चातुर्वर्ण्यधर्मं परित्यज्यापि तत्कालीना आर्यधर्मानुयायिनो ब्राह्मणक्षत्रियवैश्यशूद्रा वर्णाश्रमधर्मावलम्बिनो नास्तिका बौद्धाश्च समदृष्ट्या पालिताः, सर्वे आर्या इति बुद्धयानुमिताश्च। तदनन्तरं पुनः बौद्धधर्मस्य गुप्तजातीयहिंदुराजैः पराजयेऽपि गुप्तराज्यपदाधिकारिभिर्बौद्धा अपि आर्यदृष्ट्या सम्मानिताः येनार्यधर्मस्य भङ्गो न भवेत्। स काल आर्यराजानामासीत्। आर्यधर्मस्यार्यसभ्यतायाश्च सूर्यो गगने उदेति स्म। तस्मिन् काले यद्यप्येतादृश ऐक्यभावो नासीन् तथापि एतादृशी हानिर्नोत्पन्ना। परं कालोऽयं महाकठिनो हिंदुधर्मस्यार्यसभ्यताया ह्रासस्य च विद्यते। न केवलं स्वदेशीयैर्मुसलमानैः कृस्तानैर्हिंदुधर्मो लाञ्छितो ह्रासितः पददलितः प्रत्युत विदेशीयैः, आंगलप्रभृतिभिरन्यमतानुयायिभिरपि गर्ते पातितः। यद्यस्मिन् समये भवतामालस्यं निद्रा वा न नष्टा स्यात् तर्हि विनाशः सर्वप्रकारकोऽग्रेऽवलोक्यते।

यत्र यत्र भवतां कार्यक्षेत्रं, गृहस्थेषु पाठशालासु महाविद्यालयेषु गुरुकुलेषु राजनीतिकक्षेत्रेषु, धर्मसभासु, क्रीड़ास्थानेषु, राजसभासु स्यात् तत्र श्रीमद्भिः हिंदुसमाजाय, अथवा सनातनार्यब्रह्मसमाजेभ्यो बौद्धजैनदेवसमाजसिंहसभाभ्यश्चार्यसंघटनबुद्धया, एकताभावानां प्रचारः कर्तव्यः। लेखेषु व्याख्यानेषु कथासु गीतिकवितासु वार्तालापेषु च सर्वदायमेवोपदेशः कार्यः येन हिंदुधर्मस्य सर्वेऽनुयायिन ऐक्यबुद्धया ऐक्यभावैश्च प्रेरिताः स्युः। यदा चापत्तिकालो धर्मे आपतेत् तदैव सर्वे संमिल्याततायिनामुपद्रवकारिणां प्रतीकारं कुर्युः। येन मुस्लिमनेतॄणां जिन्नाहप्रभृतीनां हिंदुधर्मे लाञ्छनप्रक्षेप्तॄणां हस्तेन आर्यधर्मस्य हिंदुसमाजस्य भारतीयसभ्यतायाश्च ह्रासो न भवेत्। कर्मण्यस्मिन् यदि महानुभावानां चित्तं स्यात् तर्हि तु सर्वं सुरक्षितं भवेत् नो चेत् कृतेऽपि यत्ने पश्चात् न किमपि भवेत्।

भवन्त एव धर्मस्य प्रचारका अग्रगामिनो हिंदुसमाजस्य गुरवश्च।
यूयं समेत्य प्रार्थनां कुरुथ यदिदानीं संकटे पतितास्ति प्राचीना जातिरियं प्रभो! उद्धरस्वेति भक्तानामाराधनया भगवतः प्रसादः संजायेत येन भगवतो वचनानि पुनः सत्यानि स्युः। भगवान् स्वयमेव रक्षार्थं विकटसमये आगच्छेत् कञ्चन वा प्रेषयेत्। यथा च—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत!
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगे युगे॥

## भारतवर्षस्य जन-संख्या—

साधारणतया हिंदुमात्रस्य संस्कृतज्ञानां च विशेषतया कर्तव्यं विद्यते यत् ते १९४१ खृष्टाब्दे अथवा १९९७ विक्रमाब्दे भारतवर्षे या संख्यागणना भविष्यति तदर्थे स्वस्वप्रान्तेषु इदानीमेव कार्यक्रमस्य प्रबन्धं विचारयन्त्विति। कस्य न विदितमिदं यत् प्रतिसंख्यागणनं हिंदुधर्मस्य क्रमशो ह्रासः प्रकाशितो भवति। अतीव शोचनीयावस्थेयं भारतीयहिंदूनां यत् क्रमशः कोटिशो मानवा हिंदुधर्मं त्यक्त्वान्यधर्मानुयायिनो जाताः। अवस्थेयं त्वहर्निशं शोकप्रदा। परमिदानीं समस्यैकान्यापि वर्तते। सा चेयम्, यत् संख्यागणनाकार्यकर्तारो यत्र तेषां सामर्थ्यं भवेत् हिन्दुधर्मानुयायिनामपि नामानि क्रिश्चनमुसलिमेत्यादिषु दर्शयन्ति येन तेषां संख्या वर्धिता भवेत् तेषाञ्च प्रान्तीयराजसभासु प्रतिनिधिसंख्या बहुतरा स्यात्। १९३१ खृष्टाब्दस्य जनसंख्यायामेतादृशा बहव उदाहरणात्मका दृष्टान्ताः समाचारपत्रेषु प्रकाशिता आसन्। धर्मरक्षकाणां ब्राह्मणानां संस्कृतज्ञानां धर्मनेतॄणां परमं कर्तव्यं यदन्यथाऽयथार्थरूपो ह्रासः तेषां धर्मस्य न दर्शितः स्यात् येन तेषां प्रतिनिधयो राजसभासु पूर्णतया नीताः स्युः।

## गतजन-संख्या-वर्णनम्—

१९३१ खृष्टवर्षस्य गणनायां भारतवर्षे ३५०,०००,००० (पञ्चत्रिंशत्

कोटिमिता ) मनुष्यसंख्यासीत्। प्रायशः पञ्चमो भागः सांसारिकमानुषसमाजस्य भारते निवसति। भारते ७००,००० ( सप्तलक्षमितः ) ग्रामसमूहो विद्यते। तेषु नगरेषु च ३५ कोटिमिता संख्यास्ति। पाश्चात्यानां मते भारतवर्षे, आर्याः ४००० ( चतुःसहस्र ) वर्षेभ्य आगताः, द्राविडजातीया ये भारते पूर्वमासन् तान् पराजित्यार्यराज्यं स्थापितवन्तः। जयशालिनामार्याणां भाषा संस्कृतमासीत् तेषां धर्मपुस्तकानि चत्वारो वेदा आसन्। द्राविडजातीया अपि आर्यपुरुषैः स्वधर्मे सम्मेलिताः। पश्चात् सर्वेषां तेषां हिंदुजातित्वेव नाम प्रसिद्धमभूत्। तत्कालीना आर्यजातिः, भारतवर्षस्य प्राचीनतरा जातयोऽपि च सर्वा एव 'हिंदवः' इति लोकैः कथिताः।

महमदीयानामाक्रमणेषु महमूदग़ज़नवीतः पूर्वं ( १००० खृष्टाब्दात् पूर्वं ) सर्वे भारतनिवासिनो हिंदव आर्याश्चासन्। महाराजाशोकानन्तरं हूण-तुरुष्क-इरानी-मंगोल-जातिभिराक्रमिता भारतभूः परं हिंदुधर्मस्य तेषां सम्मेलनेन वृद्धिरेव जाता विदेशीया अपि हिंदुधर्मं स्वीचक्रुः। परं मुसलिमसभ्यतासम्पर्केण मुसलिमराजानां बलात्कारेण च केचन भारतीया महमदीया अभूवन् केचन विदेशीया महमदीया आसन् येन महमदीयानां पृथग् जातेर्बीजमत्र शनैः शनैः महति वृक्षे विपरिणतम्।

भारतेऽद्यतने प्रायशः (सप्तकोटिसप्ततिलक्षमिताः) ७७,०००,००० महमदीया निवसन्ति, २३९,०००,००० हिंदवः। एते ७७,०००,००० मिता महमदीया न च विदेशीयाः परन्तु हिंदुधर्मं मोहाद् वा बलाद् वा परित्यज्य मुसलिमधर्मं गृहीतवन्तः। अद्यतना महमदीया आर्याणामेव तर्हि अपत्यभूता भारते विराजन्ते। कतिपयसहस्रपुरुषा विदेशेभ्य आगत्य प्रायशः ८ कोटिपरिमिता भवितुमर्हन्ति, २५ प्रतिशतमिदानीं भारते तेषां गणना, पञ्चनदबंगसिंधसीमाप्रान्तेषु काश्मीरेषु च क्रमशः ५६ प्रतिशतं, ५४ प्रतिशतं, ८० प्रतिशतं, ९० प्रतिशतं वा तेषां संख्या विद्यते। इदानीं तर्हि कथं न बहुतरा अस्मादपि भवेद् यदि हिंदुनेतारः गाढनिद्रां भजन्तस्तिष्ठेयुः।

खृष्टमतानुयायिनोऽपि हिंदुनेतॄणां कृपया भारते संवर्धताः। आंगलशासनकालात् पूर्वं कोऽपि खृष्टमतानुयायी नासीत्। वेद-

स्मृति-सत्यज्ञानाभावात् स्पृश्यास्पृश्यत्वप्रश्नस्यासम्भवव्याख्यया च लक्षशो हिंदवः खृष्टमते प्रवर्तिताः। तेषां गणनेदानीं ६०, ७० लक्षपरिमिता। दक्षिणभारते प्रचारं कुर्वन् एकदा कश्चन खृष्टोपदेशक आसीत् यः संस्कृतज्ञानं प्राप्य हिंदुरीतिनीतीः स्वीकृत्य गीतारामायणयोरुपदेशैः स्वमतभक्तानां संख्यां कतिपयसहस्रं यावत् वर्धयामास, सन्यासिनां वेशमपि च धारयामास। तैः सह भोजनपानादिव्यवहारञ्च कृतवान्। ततो वर्षानन्तरं स्वव्याख्याने स्वात्मानं प्रकटयामास। अकथयच्च "अहं खृष्टधर्मप्रचारको यूयं सर्वे हिंदवः, मया वर्षपर्यन्तं भोजनादिव्यवहारैः दूषिताः स्पृष्टाः सर्वे इदानीं खृष्टमतानुयायिनो जाताः, यतो युष्माकं धर्मे व्यवहारेणैतेन जातेर्निष्कासनं कुर्वीरन् पुरुषाः" सत्यमिदं, अविद्यायाः परा काष्ठा चेयं यत् ते सहस्रश एव स्त्रीपुरुषाः खृष्टमतमग्रहन्। अविद्याजालेन धनवेतनलाभलोभेन आधुनिकसभ्यताचाकचक्यललितललनाभिराकृष्यमाणा वा बहवोऽस्माकं भ्रातर ईसवीयधर्मं स्वीचक्रुः। येषां संख्या तत आरभ्य लक्षपरिमितेदानीं जाता।

किमिदानीमपि ज्ञायते न वा यत् संस्कृतज्ञविदुषां हिंदुधर्मस्याग्रगामिणां पण्डितानां परहितनिरतानां ब्राह्मणानां कर्मविशेषेण हिंदवोऽन्यमतानुयायिनो न भवेयुः। इदानीमपि यदि स्वकर्तव्यज्ञानं न स्यात् सम्यग् जागर्तिर्वा न भवेत् तर्हि कदेयं भविष्यति। भारतवर्षस्य ब्राह्मणो मनुवचनात् सर्वेषां गुरुः—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वंचरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥ म० २।२०॥

परमिदानीं स्वात्मजानां रक्षाकरणेऽप्यसमर्थाः। १९४१ ईसवीयवर्षे भारतवर्षस्य संख्यागणना दशवर्षानन्तरं पुनर्भविष्यति। पश्यन्तु भवन्तः, किमस्माकं कृते तत्र विधात्रा कृतं पुरुषकृतञ्च लिखितं विद्यते। परं भवत्विदानीं यद् भवितव्यं किमर्थं न विदुषां समाज एतादृशानां प्रश्नानां सम्यक् संवारः स्यात्। किमर्थं सरस्वतीसमाजस्य सदस्याः सरस्वत्यनुयायिनां रक्षणं न कुर्युः। अवश्यमेव कुर्युः स्वकर्तव्यं च पालयेयुरिति। कुलभूषणः।

## सम्पादकीयटिप्पण्यः

### संस्कृतसमाजे परस्परं प्रेम—

श्रीनगरलवपुरसंस्कृतसमाजयोः सम्बन्धः—दैवयोगेन लवपुरनिवासिनः श्रीमन्तः पण्डितविश्वबन्धु एम० ए० शास्त्रिमहोदयाः श्रीविश्वेश्वरानंदवैदिकान्वेषणकार्यालयस्वाध्यक्षाः बहुकालान् मम परिचिताः सन्ति । तेषां सत्सङ्गेन लवपुरीयसंस्कृतसमाजस्य कतिपयान्यमूल्यरत्नान्यपि लवपुरीयसरस्वतीसमाजस्य मासिकसम्मेलने परिचितानि जातानि । शीतर्तावत्र लवपुर एव निवास आसीन् मदीयो येनात्रत्यसरस्वतीसमाजस्याधिवेशनेष्वपि ममोपस्थिरासीत् । सर्वविद्यासंबंधिकेन्द्रभूते लवपुरे बहुभिर्विद्वद्भिस्तत्रासीत् सम्पर्कः । श्रीमद्भिः पं० विश्वबन्धुभिः काश्मीरिकसंस्कृतसाहित्यपरिषदस्तथा "श्री" पत्रिकाया अपि वर्णनं तत्राकारि येन लवपुरीयसज्जनाः सन्तुष्टा अभूवन् । महत्युदारता तेषां यत् तैः 'श्री"-पत्रिकापोषणार्थं सर्वप्रकारं साहाय्यमपि प्रतिज्ञातम् । विदुषामेतेषां लेखा अपि पत्रिकामिमामलकंरिष्यन्तीदानीम् । सर्वप्रकारेणान्यदपि साहाय्यं प्राप्तं भवेत् तेभ्यः । धन्यवादार्हा एते महानुभावा येषां संस्कृतरक्षायै प्रेम चिरकालादनवच्छिन्नं वर्तते । पं० विजयचन्द्रशास्त्रिभिः विशेषतया 'श्री' सम्बन्धिसाहय्यं प्रतिज्ञातम्, तदनुसारेणैवास्याङ्कस्य निर्माणेऽपि प्रयतितं यदर्थं तेषां धन्यवादाः । लवपुरीयसंस्कृतसमाजस्य परिचयार्थं संक्षेपेण समाजस्येतिहासमपि वर्ण्यते ।

### श्रीपाश्वनदसरस्वतीसमाजः—

विंशतिवर्षाणि पूर्वमस्य खलु समाजस्य जन्म सहृदयधौरेयाणां स्वनामधन्यानां केषाञ्चन विदुषां समुत्साहरसेनाङ्कुरितमिवाजनि । श्रूयते, यत्र वयमद्य दयानन्दब्राह्ममहाविद्यालयस्थानं प्रतिष्ठमानं पश्यामस्तत्र श्रीपण्डितभक्तरामशास्त्रिणः संस्कृतिप्रचारमभीष्टं सम्पादयितुं सह शिष्यवर्गेण कमप्यनवद्यं परिषद्योजनायत्नं प्रकुर्वाणा

अभूवन्। अन्येऽपि लवपुरमधिवसन्तो विद्वांसस्तथाविधं सन्ततप्रयत्नमकार्षुः। फलतः समुत्साहवारिणा भूयः सिञ्चितः समाजः स्वर्गीयश्रीरघुवरदयालमहोदयानां सनातनधर्मकालेजीयसर्वोच्चप्रिंसिपलपदभाजामनवरतप्रयासबहुलेन प्रतिष्ठां नीतः सर्वतः प्रथमं 'पाञ्चनदसंस्कृतसाहित्यपरिषद्' नाम्ना कुसुमितः समजनि। ततो मन्दं मन्दं लब्धप्रचारसञ्चारो मूलस्थान (मुलतान) विद्वत्परिषदा, अमृतसरःपण्डितसभया च परिबृंहित एष प्रकामं गौरवं नीतः। वारमेकं लवपुरे प्रिंसिपलमहोदयानां परिषत्पतित्वेऽस्य बृहदायोजनमधिवेशनं समपद्यत। स चासीत् प्राथमिकः गीर्वाणवाणीसमुदयमुपेयुषां पञ्चापप्रान्तीयविदुषां सुमहान् सम्मर्दः। तदारभ्य कदाचिदमृतसरसि, कदाचिच्चान्यत्र समाजस्य वार्षिकमहोत्सवारम्भाः प्रचक्रमिरे। दिवंगतेषु च प्रिंसिपलमहोदयेषु समाजकार्यमपि किञ्चिन्निमिषितमिव संवृत्तम्। ततः कियता कालेन 'पाञ्चनदविद्वत्परिषत्' कल्पेनायं भूयोऽपि संस्कृतिरक्षायै बद्धपरिकर इव प्रादुरासीत्। संघटनकार्यमपि पूर्वापेक्षया बद्धमूलं प्रावर्तत। आचार्यश्रीविश्वबन्धुमहानुभावानामन्येषां च विद्वद्वन्द्यानां सततवाहिसमुत्साहसलिलेन समेधमानप्रसरः पल्लवितश्च सम्पन्नः। श्रीनृसिंहदेवशास्त्रिणां सम्पादकत्वे, श्रीपरमेश्वरानन्दशास्त्रिमहानुभावानां च सहकारिसम्पादकत्वे 'उद्योत' पत्रिकाया अपि प्रकाशनं प्रारम्भि। कार्यं सुचारुपदवीमविन्दत। दुर्दैवकलनया चासमय एव वर्षमेकं कृतकृत्यान्पाञ्चनदसंस्कृतानुरागिणो जनान् सम्पाद्य व्यरमत्। समाजकार्यं तदुत्तरमपि समृद्धशरीरमासीत्। वत्सरेषु गच्छत्सु डी० ए० वी० कालेजीयस्वर्णजयन्तीमहोत्सवः सम्प्राप्तः। प्राप्तावसरैः समाजाधिकारिभिरपि गीर्वाणसंस्कृतिप्रतीकं भोजराजीयपरिषद्रूपं 'भोजदरबार' कार्यं समुपक्रान्तम्। प्रधानपदमलंकुर्वतामाचार्यश्रीविश्वबन्धुचरणानां, प्रधानमन्त्रिश्रीरामचन्द्र'कुशल'शास्त्रिमहोदयानामनवरतप्रयत्नेन च प्रायः समस्तैरेव लवपुरीयविद्वद्गणैः क्रियात्मकः सहयोगो व्यधायि 'दरबार' कार्यं च सुफलं संवृत्तम्। 'भोजदरबार'-समारम्भे स्मरणीयमिदमेव वृत्तमघटत यच्चिटिकाऽऽदानपुरस्सरं प्रवेशेनापि शतद्वयरूप्यकाणामागमोऽनायासं समपद्यत। ततः

पञ्जापगवर्नमेण्टद्वारा प्रारब्धायां प्रदर्शिन्यामपि भोजदरबारविध एव समारोहोऽमान्यत। गतसंवत्सरे कदाचिच्छास्त्रिविशारदपरीक्षोपयोगि-विशिष्टव्याख्यानप्रवन्धेन कदाचिद् एम० ए० बी० ए० परीक्षा-प्रविविक्षुसंस्कृतच्छात्राणामुपकारिव्याख्यानमालाप्रयोजितेन च समाजेन स्वीयं कार्यं सुखमनायि। इदानीं भूयः सुचारुकार्यं सरस्वती-समाजस्य सम्पद्यमानं विदुषामतिरोहितम्। पञ्चमासमितः कालो गच्छति, प्रतिमासमधिवेशनं सम्पद्यते। सम्प्रति च 'समाज' कार्य-कर्तृषु प्रधानपदभाजः श्रीविश्वबन्धुशास्त्रिमहोदयाः, प्रधानमन्त्रिणः श्रीरामचन्द्र 'कुशल' शास्त्रिमहानुभावाः, मन्त्री व्याकरणाचार्योऽमर-नाथः, सहकारिमन्त्रिणश्च श्रीप्यारेलालशास्त्रिणः सन्तीति। सर-स्वतीसमाजाधिवेशनं श्रीविश्वेश्वरानन्दवैदिकानुसन्धानपरिषदऽधि-वेशनसहकृतं सम्पद्यते। श्रीडाक्टरलक्ष्मणस्वरूपमहोदयैः, श्रीडाक्टर-सूर्यकान्तमहोदयैः श्रीपरमेश्वरानन्दशास्त्रिभिः श्रीराजारामशास्त्रिभिश्च मासिकाधिवेशनेषु सभापतिपदमलङ्कृतम्। वक्तॄणां निबन्ध-पाठकानां च विदुषां भूयांसो लवपुरीया एव पण्डिता भवन्तीति।

## श्रीविश्वेश्वरानन्दवैदिकान्वेषणसंस्थायाः साहाय्यम्—

विश्वेश्वरानन्दान्वेषणकार्यालयस्याध्यक्षाणां श्री पं० विश्वबंधूनां महती कृपा यत्ते कार्यकर्तारश्च कार्यालयस्य ये प्रायशः सर्वे संस्कृत-विद्वांसः, 'श्री' पत्रिका वृद्ध्यै साहाय्यं करिष्यन्ति। वैदिकहिंदु-संस्कृतिपोषणार्थं वेदशास्त्रस्मृतीतिहासदर्शनादीनां व्याख्यां सर्व-साधारणेभ्यः प्रचारार्थं बहुमूल्यं समयं दास्यन्ति, स्वलेखैः पत्रिकाञ्च भूषयिष्यन्ति। तेषां स्वकीयो यन्त्रालयश्च विद्यते यत्रेदानीं त्रैमासिकी पत्रिकेयं प्रकाशिता स्यात्। आशास्महे यदिदानीं सर्वप्रकारको मुद्रणप्रकाशनरूपः प्रबंधो भवेत्, येन काश्मीरिकसदस्या सं० सा० परिषदः श्रीनगरस्यान्यदेशवासिनश्च 'श्री' पत्रं दृष्ट्वा सन्तुष्टाः स्युः। श्रीविश्वेश्वरानंदवैदिकान्वेषणकार्यालयस्य अतिप्रसिद्धाः महत्यश्च कृतयः। महदिदं कार्यं यदर्थं कार्यालयोऽयं लब्ध-जन्माऽस्ति। वैदिकशब्दकोशनिर्माणार्थं भारतवर्षस्य विदुषां समितिरियमेषामध्यक्षः पण्डितविश्वबंधुः यस्य पुरुषार्थेण

सर्वमिदं सम्भूतम्। श्रीपण्डितवर्याणां महता प्रयत्नेन लवपुरे कतिपयवर्षेभ्यः पण्डितमण्डली संयुक्ताऽस्ति कर्मण्यस्मिन्। वृतान्तमस्यानुसन्धानकार्यालयस्य संक्षेपेणात्र दीयते।

## लवपुरस्थं विश्वेश्वरानन्दवैदिकानुसंधानसंस्थानम्—

'सरस्वती श्रुतिमहती महीयताम्' इत्युक्तसंकेतायाः तासां तासां विद्यानां मूलभूतायाः पुराकाले मुनीश्वराणां मननास्पदायमानाया भारतीमस्तकमण्डनायमानायाश्च सत्या अपि कालक्रमेण कलिकेलिकवलितकल्पाया भगवत्याः श्रुतेराधुनिके समये येन प्रकारेणाऽऽर्यसमाजस्य प्रवर्त्तकमहोदयेन भगवता दयानन्देन पुनरपि प्रचारे प्रयत्नोऽकारि, सुविदितचर एवासौ भवति सहृदयवराणाम्। तस्यैव महनीयकीर्त्तेर्वैदिक्या निष्ठया प्रभावितः सन् सुयोग्येन ब्रह्मचारिनित्यानन्दाभिधेन स्वशिष्येण सुयुक्तः स्वामि-विश्वेश्वरानन्दः सर्वप्रथमं १९६० तमे वैक्रमाब्दे काश्मीरेषु श्रीनगराद् अनतिदूरे गुलमर्गाख्ये सुरम्याधित्यकाप्रदेशेऽवतिष्ठमानः सम्प्रति वेदानां सम्यगवबोधाय वैदिकपदपदार्थसंकलनानुसंधानसुसज्जितः श्रौताभिधानकोषो नितरामनिवार्यतयाऽपेक्ष्यत इत्यनुभूय तदर्थं यावदावश्यकसामग्रीसम्पादने मतिं चकार। तत आरभ्य निरन्तरं यत्र तत्रैतस्य भगीरथाध्यवसायप्रायस्य कार्यस्य सम्पूर्त्त्यर्थं तेषां तेषां विद्यापात्राणां धनपात्राणां च साहाय्यमुपेयुषाऽपि भूरिमात्रं परिश्रमं वितेनुषाऽपि तेन कुत्राप्यन्यत्र स्वान्तसंतुष्टिप्रदायिनीमध्यवसितपारदर्शनाशारेखामपश्यताऽन्ततो वैक्रमाब्दे १९८० तमे लवपुरीमागतवता तत्रत्यैः सामाजिकाग्रगण्यैः स्वमित्रैश्च भारतीतत्त्वपरीक्षणचर्णैर्विद्वद्भिश्च बहुभिः सह बहुधोहापोहं कृतवता सर्वसाम्मत्येन सुमहान् कार्यभारोऽयं तदानीं दयानन्दब्राह्ममहाविद्यालयाचार्यपदाधिष्ठायिनः श्रीविश्वबन्धुशास्त्रिण उपरि निधेय इति निश्चिक्ये। यथा चापि स्वामिवर्य्यैस्तैः शास्त्रिमहाशयोऽसौ प्रेम्णाऽऽदरेण चैतस्मिन् विषयेऽभ्यर्थितो बभूव तथैवासावपि स्वमहाविद्यालयसंचालनप्रसङ्गेनानेकविधकार्यान्तरबाध्यमानोऽपि वैदिकविज्ञानाभ्युन्नयैकपरत्वादपह्नोतुमशक्नुवानः सन् वैदिककोषसम्पादनभारमतिमहान्तं यथाकथमप्यङ्गीचकार। एवं

तावत् तेषां स्वामिवराणां स्मृतिसमवस्थापकस्य चतुर्दिग्व्यापिन्यास्तदीयकीर्त्तेः प्रसारकस्य च वैदिककोषनिर्माणायोजनदृष्टमुख्यार्थस्य समारब्धतद्विषयककार्यकलापस्य श्रीविश्वेश्वरानन्दवैदिकानुसंधानसंस्थानस्य सप्तदशस्य संवत्सरस्य शुभोपक्रमोऽयं वासन्तिको भवति।

अस्मिन् वैदिकानुसंधानालये वेदवेदाङ्गेष्वधीतिनश्चिराभ्यस्तानेकशास्त्रनिष्णाता उपत्रिंशाः सुनिपुणा विद्वांसोऽतिपरिश्रमसाध्ये पारस्परिकपरामर्शप्रक्रियाविशेषयुक्त्या भूयिष्ठेन प्रयत्नेनावधानोपाश्रयेण च प्रतिपदयथावत्संनिवेशस्खलितापाकरणप्रत्येकसमर्पितप्रातिस्विकसमग्रदर्शनशक्तौ संहिताब्राह्मणोपनिषद्वेदाङ्गानुबद्धचतुर्मुख्यव्यूहविभक्ते चाश्रुतपूर्ववैदिककोषनिर्माणपुण्यकर्मणि दैनंदिनमभियुज्येरन्निति ध्यायं ध्यायं चित्रीयते चेतो निशामं निशामं पवित्रतामिव चात्मन आतन्वाते चक्षुषी। का तावदसौ विशिष्टा प्रक्रिया यया समुदितानां विदुषामेषां वेदसेवोत्तमलाभसौभाग्यजुषामन्योन्येन सहयुक्ता कृतिपरम्परा सिद्धिमुपैति कथंकारं च विषयविभागोपविभागकल्पनं भवति क्रियतां ग्रन्थानां च मुख्याधारतया वा साधनतया वा संग्रहश्च सदुपयोगश्च क्रियत इत्येषां नैकेषाम-परेषां च सूचनालाभमनुपदमुदीयमानानां विषयाणां सम्पादकीयटिप्पणोचितमात्रातिक्रान्तविस्तरभयात् सम्यग् विवरणमिह कर्त्तुं नैव शक्येत। एतावतैव संकेतेन वयं सर्वेषां श्रुत्यनुरक्तानां च प्राचीनभाषाविज्ञानानुसंधाननिरतानां चाभ्यर्हितानामभियुक्तानां संस्थामेतां प्रति प्रीतिमुत्पादयेमेति मन्महे। अस्याः संस्थाया विषये चान्याननेकान् विषयानधिकृत्य चोक्तपूर्वैरनुसंधानैककर्मभिः पण्डितप्रकाण्डैः स्वीयाभिः साहित्यिकीभिः कृतिभिः श्रीपत्रिकाया अस्मादेवाङ्कात् प्रभृति श्रीवर्धनमुररीकृतं भवतीति भवेदेव सर्वेषां श्रीपाठकानामामोदविषयः। एवं पाञ्चनदसरस्वतीसमाजस्य च विश्वेश्वरानन्दवैदिकानुसंधानसंस्थानस्य च महार्घं सहयोगं लभमानेयं पत्रिका पूर्वतो विशिष्टतरां भारतीभव्यभावनां प्रसाधयेदित्याशास्महे।

कुलभूषणः

## सम्पादकसमितिः

पं० कुलभूषणः डी. पी. एच (लण्डन) साहित्यालङ्कार (काशी)
पं० गोविन्दराजदानः शास्त्री, एम. ए. एम. ओ. एल.
पं० जगद्धरः "जाड्डू" शास्त्री, एम. ए. एम. ओ. एल.
पं० शिवनाथः शास्त्री साहित्य-भूषणः, साहित्यमणिः



# संस्कृतसाहित्यपरिषदः

## ध्येयश्च नियमाः

**उद्देश्यः—** १:

परिषदोऽस्याः संस्कृतभाषार्यसभ्यताप्रचारात्मकः केवलमेक एव

**प्राप्तिशुल्कः—** २

श्रीनगराद्बहिः सपादरूप्यकम् १।)

श्रीनगरीयेभ्यः पारिषदेभ्यस्तु रूप्यकमेकम् १)

**सदस्याः—**

संस्कृतभाषानुरागिणः पत्रशुल्कं प्रेष्य सदस्या भवन्ति ।

**साहाय्यम्—**

श्रीपत्रिकाप्रकाशने बहुधनमपेक्ष्यते मूल्यन्त्वस्या नाम मात्रमेव ।

**विशेषसूचना—**

पत्रिकाप्रकाशनेऽत्यधिकव्ययकारणेन संस्कृतोद्धारप्रणयिनो जन्मभूमिभाषाप्रचारकटिबद्धा महानुभावाः साहाय्यार्थं सविनयं प्रार्थ्यन्ते । कृपया ते दानरूपेण धनं वितरेयुः ।

**पत्रप्रकाशनसमयः—**

त्रैमासिकमिदं पत्रं सौरीयेषु आषाढाश्विनपौषचैत्रेषु क्रमशो निर्गच्छति । पत्रप्रकाशनसमयादनन्तरमपि पत्रानुपलब्धौ सूचनया पुनरपि प्राप्यते पत्रम् । मासादनन्तरं तु न प्राप्यते ।

प्राप्तिस्थानम्—श्रीकार्यालयः, सुन्वारबाग श्रीनगर (काश्मीर)

* ओ३म् *

वर्षम् ६
सं० ४

Vol 9
No. 4

कश्मीरमण्डलान्तर्वर्तिश्रीनगरस्थायाः

# संस्कृत-साहित्य परिषद्-

त्रैमासिकी

पत्रिका

श्रीः

QUARTERLY JOURNAL OF THE

# Sanskrit Sahitya Parishad

SRINAGAR ( Kashmir )



वार्षिकं मूल्यम् २।)

चैत्र १९९७ वि०



Printed by Pt. Raghunath Chandra Shastri, at the V. V. R. I. Press,
17, Maclagan Road, LAHORE.

# विषयसूची ।





सूचना—सर्वे लेखाः प्रायो लेखकमहानुभावानां भाषामतानुसारेणैव प्रकाशिताः । अतस्तेषामुत्तरदायिनस्त एव न तु सम्पादकाः ।

## ※ सम्पादकसमितिः ※

पं० डा. कुलभूषणः डी.पी. एच् (लण्डन) साहित्यालङ्कारः (काशी)

पं० गोविन्दराजदानः शास्त्री, एम. ए. एम. ओ. एल.

पं० जगद्धरः "जाडू" शास्त्री, एम. ए. एम. ओ. एल.

पं० शिवनाथः शास्त्री साहित्य-भूषणः, साहित्यमणिः



उन्मिष्याज्जनताहितार्थपरमा श्री-सूक्तभाजां रुचिः,
सद्धर्मे विनये तमोऽपहनने विद्याप्रचारे शुभे ।
न्याय्याचारविचारसाररुचिरा नीतिः सदा वर्धतां,
श्रौती चापि सरस्वती वितनुतां वृद्धिं समाजेऽमलाम् ॥

[ विश्वबन्धोः ]

# संस्कृतभाषा-प्रचारः

## संस्कृत-प्रचार-स्वरूप-प्रदर्शनो नाम द्वितीयः खण्डः

( गताङ्कीय-प्रथम-खण्डादग्रे )

[निबन्धारः—आचार्य-श्रीविश्वबन्धुशास्त्रिणः श्रीविश्वेश्वरानन्द-वैदिकानुसन्धानसंस्थानाऽध्यक्षाः]

१. तां तां धियमनुसंधाय गैर्वाणी वाणी सर्वत्र प्रचारयितव्या भवतीत्युपात्तम् । तस्मिंस्तावत् पुण्यतमे संस्कृत-प्रचारे ये नाम बद्धपरिकराः स्युस्ते केन प्रकारेणाऽऽत्मना संतायमानानां प्रयत्नवितानानां सल्लक्ष्य-संसिद्धिमनुमिमीरन्निति सम्प्रति भवति सांप्रतं तत्-स्वरूप-संकेतनम् । तथा हि दृश्यते लोके । अगतपूर्वमध्वानमश्नुवानो जनः साधु गच्छामि नासाध्विति प्रतिपदमात्मानं परिचित-परिपृच्छयाऽसंदेहपदवीमारोपमारोपमेव परिवर्धमानोत्साहतया सुत्तपदः समयेन पदवीयमेति । तथा च मन्त्रवर्णो भवति ।

"व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ।
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥"
यजुः-१६ । ३० ॥

एतच्चात्रोक्तं भवति । यदा कश्चिन्मातापितृतो वाऽऽचार्य्यतो वा स्वाध्यायतो वा यथावल्लब्धसंकेतः सन् व्रतविशेषमुपगृह्णीत तदर्थं दीक्षाविशेषं चोपाददीत, तदनुपदमेव दक्षिणा नामोदियाद् या सत्याऽऽत्मकपरमलक्ष्यसंप्राप्तेः परिपार्श्विनीव भवन्ती तत्-सन्निकर्षसूचनाय प्रभवेदिति ।

२. एवं तावदत्र यः सार्वसाधारण्यात्मको गुणः स प्राथम्यमुपैति । सर्वोऽप्यार्यवंश्यो भारतीयो जनः प्रभारतीप्राग्भारभवन-द्वाराऽपवारसारे संस्कृतसुधासारसारे सरसि सुपीती स्यात् । एतत्-प्रकारः खलु संस्कृत-प्रचारः सुविपुलां च सुदूरनिखातां च प्रतिष्ठां लम्भितः स्यात् । अद्यत्वेऽपि प्रत्यहं ग्रामे ग्रामे शिशुशिक्षणशालासु गीयमानाः श्रुतिसंगिरो गिरः श्रावं श्रावं न कस्याऽऽत्मनः सांस्कृतिकस्य पूर्वदायाद्यस्य संरक्षणे संवर्धने च संहितमनसो भारतीयस्य मोदभरो भ्रियेत ।

३. सर्वस्याऽऽत्मीयतां प्रति निकाममास्थाविशेषः प्रसिद्ध्यति । यथा लोकः साक्षादात्मनः समृद्धिमेवेच्छति नैवं व्यृद्धिम्, एवमसावात्मीयस्य व्यृद्धिं वारं वारं समृद्धिकाम एव भवति । यत आत्मीये सुख्यत्यात्मनः सुखं स्याद् आत्मीये च दुःख्यत्यात्मनो दुःखं स्यादितीव कृत्वाऽऽत्मवदात्मीयस्यापि प्रियकाम्ययैव लौकिकी प्रवृत्तिर्भवति । आर्षप्रातिभं चैतत् तत्त्वं भवति । श्रूयते हि,

"आत्मनस्तु कामाय सर्वं प्रिय भवतीति ।
( बृहद्. उप. २. ४. ५. )

एतदुक्तं भवति । यथा च यावच्च परत्र कश्चिदात्मभावमारोपयेत् तथा च तावच्च तत्र तस्य प्रीतिरुपजायेत । साक्षान्निज-क्षुत्तृषादिनिवृत्तिमतिरिच्यमानस्य यावज्जीवमात्मीयप्रवृत्त्यन्तरसर्वस्वस्य हार्दसम्बन्धभावनानुबन्धनिबन्धनत्वादिति ।

४. यदप्यस्मद्देशीयाः प्रधानपुरुषा उपदिशन्ति सर्वैरस्माभिः स्वदेशभक्तैर् भाव्यमिति, तत्राप्ययमेवाभिप्रायो भवति । सर्वैः समुचितानि साधनानि यथापेक्षमवलम्बमवलम्बमात्मनश्चात्मीयानां चात्मप्रकृत्यनुरोधिनी शारीरिकी चार्थिकी च सामाजिकी च सांस्कृतिकी चाभ्युन्नतिः साधनीयेति । यथा च खलु न कोऽप्यास्माकीनो भारतीप्रभावानुरञ्जितः सन् भारतीयेतिनामव्यवहारमप्यर्हेदिति, यथा च नाम न कोपि भारतीयो भारतीभित्तीयमानेष्विव सत्सु प्रभारत्याः संस्कारेष्वकृती सन् स्वनामधन्य इव भवेदिति चोभयं समवदधानैरवश्यं सर्वैरपि भारतीयैः स्वदेशभक्तिप्रथमपाठायमानमिव सदिदं संस्कृतभाषाध्ययनप्रचारणमभिरोचयितव्यमिति ।

५. संस्कृतसोपानारोहिणां च चेतोऽहर्निशमतिक्रमनीयया भावनयानुरञ्जितं च नितान्तमुत्कलोत्साहप्रवाहेणाऽऽप्लावितं च भवेत् । तेषां खल्वेषा धारणा स्यात् । इयमेव सा देवभाषा भवति यां बाभाषमाणाः परःसहस्राभ्योऽपि समाभ्यः पुरस्ताद् वरावृत्यमाना विश्वजनीना आस्माकीना अतिप्राचीनाः पूर्वपुरुषा विश्वतोमुखेनाऽऽत्मीयेनाऽनवच्छिन्नपरिश्रमसन्तानेन नीवृतमिमां रत्नखनीयन्तः सकललोकललामतां निन्युः । इयमेवापि सा सुसंस्कृता वाग् भवति यया ते ते पुण्यश्लोका जगतामीड्या आदिगुरवः परमसनातना महर्षयस्तथाविधमनन्तप्रातिभविज्ञानमणिमालाभिरलकृतं वाङ्मयमुपनिबबन्धुर्, यदुपजीवमुपजीवमिव खल्वनेकाभिश्चोत्तराभिश्च भारतीयाभिश्च देशान्तरीयाभिश्च भाषाभिरुपनिबाबध्यमानाऽनाद्यनन्ता साहित्यधारा सहस्रधारं प्रवहति, यस्यैव च प्रकामं पुण्यप्रतापप्रकर्षैरद्यत्वेऽप्यन्यथा स्वमन्दभाग्यादत्यन्तमवाचीनानामपि सतां भारतीयानां समस्तदेशीयेषु विज्ञानवैभवैकप्रमाणेषु विद्वन्मण्डलेषु नामग्रहो बोभवीति ।

६. अथेत्थमत्यन्तव्यापकतया परिग्राहयितुं समिष्यमाणः संस्कृतप्रचारः सर्वसाधारणसुलभव्यवहारामद्यत्वे लभ्यमानप्रचारां नूतनविद्याभ्यासप्रणालीं बाधमानस्तन्मात्रनैपुणीमुपजीव्य प्रवर्तमानां ननु लोकयात्रामेव विहन्यादित्यपि मा शङ्कि। नह्ययमुद्दिश्यमानः संस्कृताभ्यासस्तथा सर्वसाधारणयितुमिष्टो भवति यथाऽयं कथञ्चिदप्यद्यतनविद्यान्तराभ्यासप्रवृत्तिमन्तरियादिति । किन्तु यथाऽऽवश्यकाभ्यासान्तरेषु विघ्नविशेषो न भवति यथा चाभ्यासान्तरसकालतयैव संस्कृतेऽपि व्यवहार्यप्रवेशमात्रं संभवति, तथैव संध्यावन्दनादिधर्माचारान्तरशिक्षणवत् सर्वोऽपि जनः किञ्चित् किञ्चित् संस्कृतेऽपि परिचिती भवेद् इति प्रतिपिपादयिष्यते ।

७. अपि च तावदेवं-भूते याऽसौ देशान्तरीयाणां विदुषामुभयोर्भारतीयत्वस्य च संस्कृतवेदितृत्वस्य चाविनाभावस्येव प्रतीतिः प्रसिद्धा भवति, नेत उपरि तस्यां कोपि भारतीयः सन्नपराद्धो भूत्वा लज्जाऽवाङ्मुखतां प्राप्नुयात् ।

८. यदा चास्मद्देशीयानां चेतस्सूक्तपूर्वया दिशाऽऽर्यत्वस्य च भारतीयत्वस्य च गोपुरायमाणं संस्कृताभ्यासं प्रत्युत्साहो जागरूको भवेत्, तदा खलु ते ते सौकर्यविशेषकरणाश्चाभिनवशिक्षणप्रकारोपष्टम्भनाश्चाऽभ्यासक्रमा अपि प्रादुर्भवेयुः। तदापि यथाऽत्रान्तराभ्यसनीयविषयत्वेनापि संस्कृते स्वं मनः प्रतिसन्दधानश्छात्रवर्गः किञ्चित् किञ्चित् साङ्गोपाङ्गाया वेदविद्यायाश्च लौकिकसंस्कृतविद्यायाश्च मध्ये जातप्रवेशो भवेत्, तथा तं तं विषयमधिकृत्य स्वल्पसमयसाध्या नवनवाः पाठ्यग्रन्था अपि निर्मीयेरन् । अथाप्यनया विधया वर्धमानायाः संस्कृतशिक्षणाभिरुचेर्भूयःसमुपबृंहणप्रयोजकानि सामयिकसंवादपत्रादीनि च प्रकाश्येरन् ।

९. किञ्चैतदपरं संस्कृतप्रचाराऽऽभ्युदयिकं स्याद् यत् प्राचीनैः पण्डितप्रकाण्डैर्विरचितानां तस्मिंस्तस्मिन् विषये

व्युत्पत्तिविशेषकराणामपि सतामद्यत्वे कठिनकठिनानीतीव कृत्वा प्रायेणोपेक्ष्यमाणानां ग्रन्थरत्नानां पुनः परिशीलनं प्रथेतेति । एतत् खल्वत्र कियतेचित् संतोषाय प्रभवेद् यथा तत्र तत्र प्रदेशे प्रचलन्तीनां परीक्षाणां निमित्तेनोक्तविधानां केषांचिद् ग्रन्थानां प्रचारो भवतीति । अपि सहस्रशस्तद्व्यतिरिक्तानि ग्रन्थान्तराणि तथैव प्रचारार्हाणि सन्तीति त्वत्र बोद्धव्यं भवति । तत्तेषां समेषां यथा यथावत् पर्यायबद्धः प्रचारः संसिध्येत् तथा तस्यास्तस्याः परीक्षायाः कृते पाठ्यमर्यादकमहाभागैः स्वयं तस्यां तस्यां विद्यायां प्रवृद्धुर्कसाक्षादभ्यासैः सद्भिर्भाविभावं युक्तयुक्तान् ग्रन्थविशेषान् अन्वेषमन्वेषं च पाठनक्रमे प्रतिष्ठापयद्भिर् नूतन इव कश्चिदतिरमणीयः संस्कृतविद्यायाः प्रकर्षः साधनीयः ।

१०. अथ ये विद्वांसः प्रसिद्धपरीक्षाक्रमेण वा प्रवृद्धस्वतन्त्राभ्यासेन वा तस्मिंस्तस्मिन् विद्यास्थाने सुनिपुणां च सुपुष्टां च व्युत्पत्तिमादधीरंस्तैरवश्यं तं तं विषयमधिकृत्य भूयोप्यनुसंधानपरैर्भवितव्यम् । तेषां सौकर्य्यमुद्दिश्य च यत्र तत्र बृहन्तोऽनुसंधानालयाः संस्थाप्येरन् येषु प्रसिद्धानामाधारभूतानां ग्रन्थानां संग्रहादनन्तरं प्रातिस्विकीमार्थिकीं शक्तिमनुपात्य शनैः शनैस्तत्तद्विद्यास्थानविशेषीयो ग्रन्थरत्नराशिः समुद्भाव्येत ।

क्रमशः



अपि तु तन्मयतया वीक्षणं चक्षुरास्कृपूर्वे वा निभालनमित्यत्र स्वीनां प्रयोगः प्रकरणम्।

# गायत्रीमन्त्रस्य महत्ताया रहस्यम् ।


निबन्धा—श्री दीनानाथ शर्म्मा शास्त्री सारस्वतः ।

( स० ध० कालेजोपाध्यायः; मुलतान सिटी )


'ॐ भूर्भुवः स्वः, तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात्' अयं मन्त्रो जगत्-प्रसिद्धः। अयमथर्ववेदातिरिक्ते वेदत्रये प्राप्यते ।

अथर्व्ववेदस्य शौनकशाखात इतरस्यां कदाचिद् भवेच्छाखायाम्-इति सम्भाव्यते । ऋग्वेदस्य शाकलशाखायाम् ३।६२।१० दृश्यते, सामवेदस्य कौथुमशाखायामपि उत्तरार्चिके १३।४।३।१ निध्यायते। यजुर्वेदस्य वाजसनेयशाखायां ३।२५,२२।६, ३०।२, प्राप्यते । एवमन्यत्र शाखास्वपि कदाचिद् भवेन्नाम ।

अयं गायत्रीमन्त्र-सावित्रीमन्त्र-गुरुमन्त्रप्रभृति-नामभिः प्रसिद्धः। गायत्रीच्छन्दस्त्वेन गायत्रीनाम्ना प्रसिद्धोऽयम् । यद्यपि गायत्रीच्छन्दस्का मन्त्रा भूयिष्ठाः; तथापि 'प्रधानेन हि व्यपदेशा भवन्ती' ति न्यायात् प्रधानस्याऽस्यैव मन्त्रस्य उक्ताभिख्या प्रथिता। अथवा 'गायन्तं त्रायते' इति नैरुक्तेन निर्व्वचनेन यौगिकत्वात् प्रसिद्धः। सवितुरियम् ऋग्-इति सावित्रीनाम्नापि विश्रुतोऽयं मन्त्रः। उपनयनावसरे आचार्यपदभाग् गुरुरस्यैव उपदेशं करोती'ति गुरुमन्त्रनाम्नापि प्रसिद्धोऽयम्।

अत्र सवितुर्देवस्य प्रार्थना। सविता-सूर्य्यः। तेन 'अभिमानिव्यपदेशात्' वेदान्त० २।१।५ इति सूर्य्याभिमानी सूर्य्यमण्डलान्तर्गतो देवविशेषो यश्चेतनः, स गृह्यते । यथा जडानामपां चेतनो देवो वरुणो वेदे 'यासां† ( अपां ) राजा वरुणो याति मध्ये सत्यान् ते

† अप्-शब्दः स्त्रीभूम्नि ।

अवपश्यन् जनानाम्, ऋक्सं० ७।४९।३ [अत्र आपो देवताः] इति मन्त्रे सङ्केतितः; तथा जडस्य सूर्य्यमण्डलस्यापि चेतनो देवः 'योऽसावादित्ये पुरुषः सोऽसावहम्' इति यजुः ४०।१७ मन्त्रे सङ्केतितः ।

सूर्य्याद्यभिमानी देवोपि तत्तन्नाम्नैव प्रसिद्धः । यत् खलु वेदः सूर्य्याद्युपासनां शिक्षयति; तत्र तस्य तत्तेषां चैतन्यमभीष्टम् । काममेतदादयःपदार्था लौकिकव्यवहारे जडत्वेन प्रसिद्धाः स्युः; वस्तुतः सन्ति चेतनाः; अभिमानिदेवतावत्वात् । अत एव 'अभिमानिव्यपदेशस्तु' वेदा० २।१।५ इति ब्रह्मसूत्रस्य शाङ्करभाष्ये उक्तम्—"मृदाद्यभिमानिन्यो वागाद्यभिमानिन्यश्च चेतना देवता वदनसंवदनादिषु चेतनोचितेषु व्यवहारेषु व्यपदिश्यन्ते; न भूतेन्द्रियमात्रम् ।....अनुगताश्च सर्वत्र अभिमानिन्यश्चेतना देवता मन्त्रार्थवादेतिहास-पुराणादिभ्योऽवगम्यन्ते" इति । अत एव वेदे 'वरुणोऽपामधिपतिः' अथर्व० ५।२४।४ 'आपश्च, वरुणश्च राजा' अ० १५।२।६ 'इन्द्रो वै यज्ञस्य देवता' शतपथ ३।५।२।६ इत्याद्युक्तम् ।

एवं वेदान्तदर्शनस्य १।३।३३ सूत्रस्य भाष्येऽपि श्री स्वा० शङ्कराचार्य्येण एतद् विशदीकृतम्—"ज्योतिरादिविषया अपि आदित्यादयो देवतावचनाः शब्दाश्चेतनावन्तम् ऐश्वर्याद्युपेतं तं तं देवतात्मानं समर्पयन्ति; मन्त्रार्थवादादिषु तथा व्यवहारात् । अस्ति हि ऐश्वर्ययोगाद् देवतानां ज्योतिराद्यात्मभिश्च अवस्थातुम्; यथेष्टं च तं तं विग्रहं ग्रहीतुं सामर्थ्यम । तथाहि श्रूयते—मेधातिथिं ह काण्वायनमिन्द्रो मेषो भूत्वा जहार' षड्विंशब्राह्मणे १।१ स्मर्यते च-आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम ह इति । मृदादिस्वपि चेतना अधिष्ठातारोऽभ्युपगम्यन्ते—'मृदब्रवीद्, आपोऽब्रुवन्'—इत्यादिदर्शनात् । ज्योतिरादेस्तु भूतधातोरादित्यादिषु अचेतनत्वमभ्युपगम्यते । चेतनास्तु अधिष्ठातारो देवतात्मानो मन्त्रार्थवादादिव्यवहारादित्युक्तम्" (देवताऽधिकरणेऽष्टमे ।)

एतदभिप्रेत्य महाभाष्यकृता श्रीमता पतञ्जलिनाऽपि ३।१।७ सूत्रे तत्रत्यवार्तिकविवरणे प्रोक्तम्—'सर्वस्य वा चेतनावत्त्वात्, अत्र भाष्यम्—"अथवा सर्वं चेतनावत् । एवं ह्याह—'कंसकाः सर्पन्ति, शिरीषोऽयं स्वपिति, सुवर्चला आदित्यमनुपर्येति । 'आस्कन्द कपिलके'। त्युक्ते तृणमास्कन्दति । अयस्कान्तमयः सङ्क्रामति । ऋषिः [ वेदः ] †पठति'—शृणोत ग्रावणः" [ तै० सं० १।३।१३।१] [अस्यैव शेषभागोऽमुत्राऽयम् शृणोत्वग्निः समिधाहवं मे, शृण्वन्तु आपो धिषणाश्च देवीः । शृणोत ग्रावाणो विदुषोनु, यज्ञ ঞ্ছ शृणोतु देवः सविता हवं मे' । ] अत्र प्रदीपे कैयटः—

सर्वस्य वेति । आत्माऽद्वैतदर्शनेनेति भावः । ऋषिरिति । वेदः सर्वभावानां चैतन्यं प्रतिपादयतीत्यर्थः । वैचित्र्येण च पदार्थानामुपलम्भात् सर्वचेतनधर्मः सर्वत्र नोद्भावनीयः । अत्रैव उद्द्योते नागेशः—'वैचित्र्येणेति । चेतनेषु मनुष्येष्वपि नानाजातीयव्यवहारदर्शनादिति भावः । सर्वत्र परिणामदर्शनेन चेतनाधिष्ठानं विना च तदसम्भवात् सर्वस्य तदधिष्ठितत्वं ज्ञायते इति तात्पर्यम्' ।

वर्त्तमानविज्ञानमप्येतं सिद्धान्तं पुष्णाति । वैज्ञानिकै 'रेडियम' धातोर्विद्युत्कणिकापरीक्षणे कृते सति इदं ज्ञानमुपलब्धं यद्—'रेडियम' धातोरेकपरमाणुतः परस्सहस्रा विद्युत्कणिकाः प्रतिक्षणं प्रकटीभवन्ति । परिमाणे ते कणा एतावद्ध्रसिष्ठा भवन्ति यद्—एकसहस्रसङ्ख्यायां मिलितानामपि तेषां संयुक्तपरिमाणं गुरुत्वं वा 'हाईड्रोजन'स्य एकपरमाणुतुल्यमपि न भवति । एषां निस्सरणस्य वेगः प्रकाशवेगस्य ⅔ परिमाणको भवति । प्रकाशस्य वेग एकस्मिन् 'सैकिण्डे' १,८६;००० 'मील' मितः सिद्धः । सूर्यात् प्रायः सार्द्धनवकोटि । 'मील' तो दूरस्थितायां पृथिव्यां तत्प्रकाशोऽष्टसु 'मिनटेषु' प्राप्नोति । एतदादिकाऽपूर्व्ववार्ताः* निरीक्ष्य वैज्ञानिकानामियं धारणा संवृत्ता यत् चराचरजगति सारभूतं वस्तु किमपि न । अथ च

* वार्ता इति द्वितीया वहुवचनान्तम् ।

संसारे कोपि पदार्थो जड़ो नास्ति । जडत्वेन व्यपदिश्यमानानां पदार्थानां लघिष्ठपरमाणूनां दर्शनेन, तद्भङ्ग विधाय च सहस्रधाकरणेन विद्युत्कणिकातोऽतिरिक्तं न किमपि लभ्यते । तथापि तेषां सत्ता दृश्यते, नियमेन प्रतिक्षणं चलनप्रवृत्तिश्च । तेन वर्तमानवैज्ञानिकानां विचारे जडवस्तुष्वपि दैव्याः शक्त्या आभासदर्शनाज्जडेष्वपि चेतनसत्ता सिद्धा ।

वस्तुतोऽयं सिद्धान्तोऽस्त्यपि न्याय्यः+ । शास्त्रस्याऽप्ययमेव सिद्धान्तः । शास्त्रं परमात्मानम् अणौ अणौ व्याप्तं मन्यते । तद्भिन्नस्य कस्यापि वस्तुनः पारमार्थिकसत्ता नास्ति । ईश्वरश्च सच्चिदानन्द इति शब्देन चेतन एव । तर्हि समस्तं सांसारिकवस्तुजातं जडतया दृश्यमानमपि वस्तुतश्चेतनमेव । यत् खलु तत्र स्थूलतया चैतन्याव्यक्तिर्न दृश्यते, तत्र कारणं तेषु स्थूलतया इन्द्रियाणां मनसश्चाऽनभिव्यक्तिर्नाम । आत्मैव गृह्यताम् , अयं चेतनः । यदा अस्मिन् मरणादिसमये इन्द्रियाणि मनश्च अभिव्यक्तानि न भवन्ति, तदाऽयमपि चेष्टाशाली न ज्ञायते । प्रत्युत आत्मनि शरीरे विद्यमानेपि, तत्र सन्त्यपि इन्द्रियाणि कारणवशाद् न कार्यकारीणि, प्रत्युत निर्बलानि वा भवन्ति, तदा आत्मयुक्तशरीरत्वेपि चेष्टा न दृश्यते । यथा मूर्च्छिता अत्रोदाहर्तव्याः । अमूर्च्छिता अपि निर्बलेन्द्रियशक्तिका वा उदाहर्तव्याः । परमात्मा चेतनो मन्यते, परं तस्मिन् 'हरकत' पदवाच्यो व्यापारः कथं न दृश्यते ? । तत्रापि कारणं तस्य स्थूलेन्द्रियमनोभिः सह अयोगः । अत एव तस्य शब्दादयो व्यापाराः—स्थूला न भवन्ति । तेन सिद्धं यद्-जडवस्तु अपि वस्तुतश्चेतनमेव भवति । महिषपुरीषस्य जडपरमाणुषु यदा स्थूलतया विशिष्टशक्तिसंयोगो व्यक्तो भवति, तदा तत्पुरीषे कीटा व्यक्ता भवन्ति । यदि जडेषु चेतनशक्तिर्नाऽभविष्यत् सर्वथा, तर्हि कथम् अभावाद् भावोत्पत्तिरभूत् ? । या चेतनशक्तिः कीटेष्वस्ति, सा महिषपुरीषस्य जडपर-

---

+ न्याय्यः । अत्र अनपेतार्थे यत् प्रत्ययः । † एतेन कृष्णयजुर्वेदस्य ( तैत्तिरीय संहितायाः ) अपि वेदत्वं पिशुनितम् ।

माणुष्वपि आसीत्; परमिन्द्रियाद्यभिव्यक्त्यभावात् तच्चैतन्यशक्तिः स्वोपयोगं कर्तुं नाशकत्! इममेव सिद्धान्तमाश्रित्य स्व० जगदीशचन्द्रवसुना वृक्षेषु चेतनता स्वीकृता, एवं प्रस्तरेऽपि। एतदेव अभिप्रेत्य वर्तमानवैज्ञानिकाः सूर्य्येपि प्रसन्नताऽप्रसन्नतापरमाणून् मन्तुमारब्धाः, यदीयं विवरणं वयं 'सूर्य आत्मा' इति पृथग्लेखेन 'श्री' पत्रिकायां कर्तास्मः। इदानीमलं प्रसक्ताऽनुप्रसक्त्या। प्रकृतमनुसरामः।

सविता-सूर्य्य इति प्रागुक्तम्। सुवति–प्रेरयति कर्म्मणि लोकमिति सवितृपदव्युत्पत्तिः। केचित् सवितृशब्दं 'षुञ् प्रसवैश्वर्य्ययोः' इति धातुना निष्पादयन्ति, केचिच्च 'यश्चराचरं जगत् सुनोति सूते वा उत्पादयति, स सविता' इति व्युत्पाद्य, 'अभिषवः प्राणिगर्भविमोचनं च उत्पादनम्' इत्युक्त्वा षुञ् अभिषवे, षूङ् प्राणिगर्भविमोचने—इति धातुभ्यां च निष्पादयन्ति। तत्र विचारयामः—अत्र 'षुञ् प्रसवैश्वर्य्ययोः' इति धातोरुपन्यासस्तु प्रामादिकः, यतः 'षुञ्' धातुस्तु अभिषवे भवति। नचात्र तदर्थः। अभिषवः—स्नपनं पीडनं सुरासन्धानं च भवति। वेदाङ्गप्रकाशे आख्यातिके अस्य 'यन्त्र से रस खींचना, वा राज्याधिकार देना' इत्यर्थ एव स्वीकृतः, न तु उत्पादनस्य। इतश्च स धातुरनिड् भवति, 'सविता' इत्यत्र तु इट् प्रत्यक्षः। यश्च 'प्रसवैश्वर्य्ययोः, धातुः स षु' धातुर्नतु 'षुञ्'। सोपि न सेट्, किन्तु अनिट्। तत्रापि प्रसवोऽभ्यनुज्ञानार्थकः, नतु गर्भमोचनार्थपरः। तस्मात् 'षूङ् प्राणिगर्भविमोचने, इति आदादिकः, षूङ् प्राणिप्रसवे - इति दैवादिको वा धातुः कथञ्चित् सम्भवेत् तेषां मतेन। परं सोपि पक्षो न युक्तः। यतः सोपि धातुर्वेड् भवति। एतदादिकमन्त्रे सर्व्वत्र 'सविता' इति नित्येड् एव दृष्टः, न तु क्वचित् 'सोता' इति इड्रहितोपि प्रयोगः 'सूतवे' अथर्व० ५।२५।१० इतिवत्। अन्यथा वेट्कत्वस्य किं फलम्? न चापि तदर्थः सावित्रमन्त्रे दृष्टोपि। 'अनुसूतुं सवितवे' अथर्व० ६० ।१७।१ इत्यादौ उक्तधातूनां वेट्कता दर्शितैव, अर्थोपि च स एव। 'सविता' इति चोक्त-

मन्त्रे क्वापि न वेट्कता दर्शिता । न च व्यत्ययेन तत्सिद्धिः; सावित्र-वेदमन्त्रविरोधात् । केचिद् 'सविता' इत्यस्य वैकल्पिकरूपप्रदर्शनार्थं 'वि हि सोतोरसृक्षत' ऋ० १०।८६।१ इतिमन्त्रप्रदर्शनसाहसं कुर्वन्ति; तदपि न युक्तम्; यतोऽत्र'सवितृ' पदसमानोऽर्थः 'सोतोः' इत्यस्य नाऽभीष्टः, किन्तु 'सोमाभिषवं कर्तुम्' इत्येव, ततश्चाऽयं न वेट्कधातोर्वैकल्पिकप्रयोगः, किन्तु अनिटः सुनोतेरेवाऽयं प्रयोगः, इतश्चाऽत्र 'सवितृ' वद् न तृच्, किन्तु तोसुन् । एवं पूर्वोत्तरपक्षौ उभावेवात्र वेदविरुद्धौ ।

तस्मात् 'सवितृ' पदे 'षू प्रेरणे' इति तौदादिको धातुरेव इष्टो वेदस्य । स किल न अनिट्, नचापि वेट्, किन्तु सेट् । 'सुवति प्रेरयति कर्मणि लोकम्' इति च तदीया व्युत्पत्तिः । अयमेव धातुरयमेव चाऽर्थो वेदस्यापि अभीष्टः 'सवितृ' पदे । तथा च—'देव ! सवितः ! प्रसुव' यजुः ९।१ अत्र मन्त्रे सविता सम्बोधितः; तत्र तौदादिकः 'षू प्रेरणे' एव धातुः क्रियायां प्रयुक्तः । शविकरणत्वेन अपित् सार्व्वधातुकत्वाद् ङित्त्वम्; तेन च गुणनिषेधाद् उवङ् । एवं 'सविता नः सुवतु सर्वतातिम्' ऋ० १०।३६।१४ अत्रापि सुवतिरेव उपात्तः, न च सूतिर्न च सूयतिर्न वापि सुनोतिः । 'सवितः ! आसुव' अथर्व० २।२६।२ अत्रापि स एव तौदादिको धातुः प्रयुक्तः । 'विश्वानि देव ! सवितः ! दुरितानि परासुव । यद् भद्रं तन्न आसुव' यजुः ३०।३ अत्रापि स एव धातुर्विधिनिषेधयोरुपात्तः । केवलं स एव धातुः किम्; प्रत्युत वेदे सवितृपदे 'षू प्रेरणे' इति अर्थोपि तौदादिकस्यैव इष्टः । तथा च अस्मदीये प्रकृते सावित्रमन्त्रे एव मनाग् दृङ्निक्षेपो विधेयः 'तत् सवितुर्वरेण्यं भर्गो.....धियो यो नः प्रचोदयात्' अत्र यद्यपि क्रियायां सुवतिर्नोपात्तः तथापि तदीयः प्रेरणार्थः 'प्रचोदयात्' इति तत्समानार्थकधातुना प्रकाशितः । एवं च 'सूते, सुनोति वा' इति व्युत्पत्तयो वेदविरुद्धा एव सिद्धाः ।

ततश्च 'सुवति कर्मणि लोकम्' इति व्युत्पत्तेः पारिशेष्याद् वेद-सम्मतत्वाच्च युक्तता सिद्धा। तया च व्युत्पत्त्या सूर्य्यदेवस्य ग्रहणं स्वतः सिद्धम्; यतः स एव लोकं कर्म्मणि प्रेरयति। अत एवोक्तं शतपथ ब्राह्मणे—'असौ वै आदित्यो देवः सविता' ६।३।१।२० इति। 'सूर्यां यत् पत्ये शंसन्तीं मनसा सविताऽददात्' ऋ० १०।८५।६ इति मन्त्रे सूर्या सवितुर्दुहिता दर्शिता। 'युवो (अश्विनोः) रथं दुहिता सूर्यस्य' ऋ० १।११७।१३ 'ता वां (अश्विनोः) रथं वयमद्या हुवेम......अश्विना !...... यः सूर्यां वहति' अथर्व० २०।१४३।१ इत्यादौ च सूर्य्या खलु सूर्य्यस्य दुहिता दर्शिता। एवं सवितृसूर्य्ययोः पर्य्यायवाचकतापि* सिद्धा। एवं च सन्ध्यायां 'तच्चक्षुर्देवहितम्' इति यत्र सूर्य्योपस्थानं भवति, तत्रैव जपनमपि तदीयमेव भवति—'तत् सवितुर्वरेण्यम्' इत्यादिना। एवं सावित्रमन्त्रे सूर्य्यमण्डलाभिमानी देव एव उपासनाविषयः सिद्धः।

अतएव १।१।२० ब्रह्मसूत्रस्य शाङ्कर-भाष्येऽप्युक्तम्—'य एषोऽन्तरादित्य.......इति श्रूयमाणः पुरुषः परमेश्वर एव न संसारी। यदपि आधारश्रवणान्न परमेश्वर इति, अत्रोच्यते—स्वमहिम-प्रतिष्ठस्यापि आधारविशेषोपदेश उपासनार्थो भविष्यति। सर्व-गतत्वाद् ब्रह्मणो व्योमवत् सर्वान्तरत्वोपपत्तेः"। एवं सूर्य्यमण्डला-भिमानी देव एव उपास्यः सिद्धः सन्ध्यायाम्। तदैव प्रातः सन्ध्याव-सरे पूर्व्वाभिमुखं मुखं कर्त्तव्यंभवति, सायं च पश्चिमाभिमुखम्। अतएव षड्विंश ब्राह्मणे (स० प्र० ४ पृ० ५६ उद्धृते) उक्तम्—'तस्माद् अहोरात्रस्य संयोगे ब्राह्मणः सन्ध्यामुपासीत उद्यन्तमस्तं यान्तमादित्यमभिध्यायन्' ४।५ अतएव मन्त्रभागेऽप्युक्तम्—

---

* अत एव उपनयन समये 'देव ! सवितरेष ते ब्रह्मचारी' इति मन्त्रमाख्याप्य ब्रह्मचारी सूर्यसमक्षमेवाऽवस्थाप्यत। सूर्यस्यैव ब्रह्मचारित्वात् तस्मै सावित्र (सौर) मन्त्रदीक्षार्पणं युक्तमपि।

'उद्यते नम, उद्ायते नम. उदिताय नमः, अथर्व १७।१।२२ 'अस्तं यते नमोऽस्तमेष्यते नमोऽस्तमिताय नमः' अ० १७।१।२३ एतदेव मूलमभिप्रेत्य पुराणादिषु 'उत्तमा तारकोपेता, मध्यमा लुप्ततारका । अधमा सूर्यसहिता प्रातः सन्ध्या त्रिधा मता ।' उत्तमा सूर्यसहिता मध्यमा लुप्तभास्करा । अधमा तारकोपेता सायंसन्ध्या त्रिधा मता' इति उभयोः सन्ध्ययोस्त्रैविध्यमुक्तम् । अथवा उक्तमनयोरुभय-सन्ध्ययोरवधिः स्यात् । तत एव मनुनोक्तं सङ्गच्छते—'पूर्वां सन्ध्यां जपँस्तिष्ठेत् सावित्रीमाऽर्कदर्शनात् । पश्चिमां तु समासीनः सम्यग् ऋत्तविभावनात्' २।१०१ अलमप्रकृतविस्तरेण । प्रकृतमुपा-दीयताम् -

सावित्रमन्त्रस्य मुख्यताकारणमदृष्टत्वे तु यद् भवेत्; परं दृष्टेपि मुख्यता दृश्यते तदीया । तत्र मुख्यतायाम् अदसीयमहत्तायां वा कारणमेतन्मन्त्रे बुद्धिप्रार्थना । सूर्य्याद् बुद्धिप्रार्थना एतदर्थं यत्—स बुद्धेरधिष्ठातृदेवः । एतद्बुद्धिदातृत्वकारणादेव सूर्योदये चोराणां चौर्य्यप्रवृत्तिरपसरति, जाराणां च जारवृत्तिः । सूर्य्यादेव ईदृशी सूची वैज्ञानिकैर्निमिता, यदीयवेधेन कुलटास्त्रीषु सद्बुद्धिरुदेति (-तदीयवर्णनं वयमग्रिमे 'सूर्य आत्मा' इति निबन्धे कर्तास्मः । ) सामान्यजनानां च भयमपसरति । तदुदयेन च बुद्धिशुद्धिः कर्म्मसु प्रेरणाया च बुद्धिवृद्धिः प्रत्यत्ता ।

बुद्धिप्रार्थनयैव सर्व्वञ्चित् प्रार्थ्यते वृद्धकुमारीवरवृद्धान्धब्राह्मण-वरन्यायवत्—अतो गायत्री मन्त्रस्य धीदातृत्वेन सर्वदातृत्वात् तन्महत्ता स्पष्टा । एका वृद्धा कुमारी पतिपुत्रधान्यधेन्वादिक-मिच्छन्ती तपोऽतप्त । साक्षाद्भूतेन देवेन एकवरवरणार्थं प्रयुक्ता सती सा 'अहं स्वपुत्रं वहुक्षीरघृतमोदनं काञ्चनपात्रेऽश्नन्तं पश्यानि इति वरमवरिष्ट । इत्थं तया एकेनैव वरेण यौवनं, पतिः, पुत्रः, सुवर्णं, धान्यं, धेन्वादिकं च याचितम् । एवमेव एकस्य जन्मान्धस्य निर्धनस्य अविवाहितस्य च ब्राह्मणस्य कथा । एकवरप्राप्तिं देव-मुखाच्छ्रुत्वाऽसौ 'अहं स्वपौत्रं राजसिंहासनमधिष्ठितमवलुलोक-

अप्रकृतविवाहस्येति तु साध्वीयः स्यात्
विवाहो नाम कन्याया भवति, वरस्य

यिषामि† इति वरं वरमववरत्‡। तेन एकेन वरेण स्वचक्षुषी, धनं, यौवनं, विवाहो भार्य्या, पुत्रपौत्रादिसन्ततिश्च अयाचि।

एषैव दशाऽस्ति बुद्धिप्रार्थनायाः। अस्मदीयकार्य्याणि यानि न सिध्यन्ति. वैपरीत्यं वा कलयन्ति तत्र मुख्यं कारणं भवति बुद्धेर्वैपरीत्यम्। अत एव प्रसिद्धमिदम्—'विनाशकाले विपरीत-बुद्धिः'। महाभारतेऽप्युक्तम्—'यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम्। बुद्धिं तस्यापकर्षन्ति सोऽवाचीनानि पश्यति' उद्योग-पर्व्वणि ३४।८१। बुद्धिवैपरीत्ये एव तु पापानि भवन्ति। तेन, व्यतिरेकेण बुद्धिमाहात्म्यं फलितम्।

अत एव साङ्ख्यदर्शने २।१३ सूत्रस्य विज्ञानभिक्षुभाष्ये प्रोक्तम्—'अस्याश्च बुद्धेर्महत्त्वं स्वेतरसकलकार्यव्यापकत्वाद् महैश्वर्य्याच्च मन्तव्यम्'। महाभारते उद्योगपर्व्वण्युक्तम्—'येन त्वेतानि सर्वाणि सङ्गृहीतानि भारत! यद् बलानां बलं श्रेष्ठं तत्प्रज्ञाबलमुच्यते' ३७।५५। एकस्मिन् गजे एको बालक अरूढोऽङ्कुशद्वारेण तं यथेष्टमितस्ततो गमयति स्म। हस्तिनो गले च बद्धा घण्टा नदति स्म। तं शब्दं श्रुत्वा कश्चित् कविरुत्प्रेक्षाञ्चक्रे यद्—अयं घण्टा-नादो नास्ति, किन्तु हस्तिनो मुखादेते शब्दा निस्सरन्ति यद्—'मतिरेव बलाद् गरीयसी तदभावे करिणामियं दशा'। 'इयं दशा' इत्यस्याऽयमर्थो यद्—एको बुद्धिमान् बालकोपि बलवन्तं यथेष्ट-मितस्ततश्चालयति।

इत्थं यदा बुद्धिमहत्ता सिद्धा, ततो बुद्धिप्रार्थकस्य मन्त्रस्य महत्त्वं तु स्वतः सिद्धम्। अत एव अस्य गायत्रीमन्त्रस्य फलं वेदमन्त्रेपि स्वयमुक्तम्—'आयुः, प्राणं, प्रजां पशुं, कीर्तिं, द्रविणं, ब्रह्मवर्चसं मह्यं दत्त्वा' अथर्व० १९।७१।१ इति वेदमातुर्गायत्र्या एव एतत्फलम्। 'न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम्। स शूद्रवद्' मनु० २।१०३ अत्र सन्ध्याऽकर्तुः शूद्रसदृशता प्रोक्ता। तत्रापि एतद् रहस्यम्। सन्ध्यायाः सर्वस्वं सावित्री। सावित्र्यां च

†णयन्त सन्नन्तस्य लटि।

‡अववरत्। अग्लोपित्वान्न दीर्घ सन्वद्भावौ।

बुद्धिप्रार्थना । यः सन्ध्यां नोपासिष्यते; स गायत्रीराहित्याद्बुद्धेरभावेन स्वयं शूद्रसादृश्यं वहेत् ।*

एवं गायत्रीमन्त्रस्य महत्ता सिद्धा । तदैव तु यदि मृतककर्म्मणि जपनं कार्य्यते; तदपि गायत्र्याः; यदि च शुभकर्म्मणि जपनं कार्य्यते, तदापि गायत्र्याः । चिरायुष्मत्तार्थमपि गायत्रीमन्त्रस्य जपो विधाप्यते । तत्र बुद्धिवृद्ध्या स्वयं चिरायुर्जनकानि कार्य्याणि भवेयुः, शुभं च भवेत् । अत एवोक्तम्—'गायत्री वा इद ꣳ सर्व्वम्' छान्दोग्योपनिषदि ३।१२।१ 'सावित्र्यास्तु परं नास्ति' मनु० २।८३। एवं बुद्धिप्रार्थकत्वाद् गायत्रीमन्त्रस्य मुख्यता । अत एव द्विजैः ( 'स्तुता मया वरदा वेदमाता प्रचोदयन्तां पावमानी द्विजानाम्' अथर्व० १९।७१।१ इति वेदोक्त्या द्विजानामेवाऽस्यामधिकारः— ) सर्व्वदैवाऽस्य मन्त्रस्य जापः कर्त्तव्यः; तेन तेषां सर्व्वेऽभिलाषाः पूर्णास्युः । इतश्च बुद्धिमन्त्रे उपास्यो देवः सूर्य्यः । स च वेदेन 'सूर्य आत्मा जगतस्तस्थुषश्च' यजुः ७।४२ इत्येवं स्तुतः । सूर्य्यव्यायामेन शारीरिकस्वास्थ्यमपि सर्व्वविधं प्रत्यक्षम् । शारीरिकस्वास्थ्ये च मानसिकं स्वास्थ्यं प्रत्यात्मवेदनीयमेव । ततश्च 'स्वस्थे चित्ते बुद्धयः संस्फुरन्ति' इति बुद्धिविकासः स्पष्टः । एवं सूर्य्यसेवनमाध्यात्मिक-दृष्ट्या आधिभौतिकाधिदैविक-दृष्ट्या च लाभप्रदं सिद्धम् । तदैव सन्ध्यावन्दनमपि प्राञ्चो मुनयः सूर्य्यसमक्षमेव न्ययमयन् । एत-दादिकं वेदतोऽनुसन्धाय पाश्चात्यविपश्चितः सूर्य्यद्वारा बहूनां रोगाणां

---

* एव मनु० २।७६-७७-७८ अनुसारं वेदस्यापि सर्वस्वं गायत्री । तत एव वेदाऽध्ययनाऽभावेन गायत्रीराहित्यादेव मनुना वेदानध्ययनेपि २।१६८ शूद्रसदृशता प्रोक्ता । यद्यपि बुद्धिप्रार्थना लौकिकश्लोकेष्वपि सम्भ-विनी; तथापि वेदस्य नियतानुपूर्वीकत्वाद् नियतपदप्रयोगपरिपाटीकत्वात् तस्मिन् अनन्यसदृशी अपूर्व्वता; येन तत्र फलातिशय आशास्यते । अतो मन्त्रस्य पदान्यथात्वे कृते तन्मन्त्रत्वाऽभावात् तत्र सा शक्तिरपि न तिष्ठति ततः कुतः फलम् ।

x महतो ऽप्येनसो मासात् त्वचेवाहिर्विमुच्यते साधीयः स्यात् ।



चिकित्सां ससाफल्यं निष्पादितवन्तः । रोगकारणं बुद्धिनैयून्ये सति, मस्तिष्के मनसि च नैर्बल्यवशाद् बाह्याहारविहारे त्रुटिः, आभ्यन्तरिकाऽन्त्रादौ त्रुटिसद्भावश्च । एवं सर्व्वदृष्ट्या सावित्र्याः सवितुश्च महत्ता सिद्धा । एतत्कृते एव सूक्तं मनुना—'सहस्रकृत्वस्त्वभ्यस्य बहिरेतत् त्रिकं द्विजः । महतोऽप्येनसो मासात् त्वचेवाहिर्विमुच्यते' २।७६। इतः परं किं स्याददसीयमहत्त्वमिति विरम्यते ।

---

# अथ पदार्थविकासः ।

( निबन्द्धा श्रीचारुदेवशशास्त्री )

कोयं पदार्थविकासो नाम । उच्यते । न वयं वैशेषिकस्य सप्तपदार्थी विवरीतुं प्रवृत्ताः । शाब्दिका वयम्, यद्यपि व्यपदेशिवद्भावेन । तर्हि शब्दमेवाधिकृत्य किञ्चिद्ब्रूमः । पद/-वाच्यानामर्थानां क्रमिको विकास इहाभिप्रेतः । भवति हि शब्दार्थे निमित्तद्वयम्—प्रवृत्तिर्व्युत्पत्तिश्चेति । तयोश्चान्यत्वमसम्भेदो वा विदितो विदुषाम् । तत्र प्रवृत्तिनिमित्तमेव प्राधान्यमियर्ति । नहि व्युत्पत्तिलभ्यैरर्थैर्लोके व्यवहारः कचिदस्ति । न च शब्दा अर्थान्तरसङ्क्रमे व्युत्पत्तिमन्वायतन्ते । यत्र यत्र चार्थे लोके प्रयुज्यन्ते तत्र तत्र व्युत्पत्तिरङ्गभावं भजते, उपपत्तिं चाधत्ते । यथा गौरिति सास्नादिमन्तमर्थमाह प्रवृत्तिनिमित्तेन, व्युत्पत्तिश्चात्र गोपदार्थे गमनान्वयं दर्शयन्ती गोशब्दे शक्ततामुपपादयति । यथा वाऽश्वशब्दे चतुष्पाज्जातिविशेषवाचके 'अश्नुतेऽध्वानमिति' निरुक्तिरश्वे पदार्थेऽश्वशब्द उपपन्नो भवतीति साधु दर्शयति । एवं प्रवृत्तिनिमित्तलभ्योऽर्थो मुख्यः, व्युत्पत्तिश्च तत्रौपकारिकी । क्रियाशब्देष्वेव व्युत्पत्त्यर्थः प्रधानमित्यभ्युपगमः । यावच्चास्य मुख्यार्थस्य न जायते

बाधः, न तावदर्थान्तरमात्मानं लभते। अतः सर्वो वक्ष्यमाणः पदार्थविकासो मुख्यार्थबाधमाश्रित्यैव प्रवर्तते न चान्यथा।

अयं च पदार्थविकासः क्वचिदपि शास्त्रे नवे पुराणे वा प्रबन्धे नास्माभिर्दृष्टचरः। कामं तत्र तत्र लक्षणामुदाहरद्भिरालङ्कारिकैः श्रीमम्मटभट्टप्रभृतिभिः कुशलप्रवीणादयो द्वित्राः शब्दा वितत्य व्याख्याताः, क्वचिच्चान्यत्र काव्यनाटकादि व्याचक्षाणैर्मल्लिनाथादिभिरयं शब्दोऽस्मिन्नर्थे लाक्षणिकोऽयं गौण इत्युदाहारि, क्रमस्तु न क्वापि प्रादर्शि। कोऽत्र मुख्यार्थः, कथं चास्य बाधः, कथं चार्थान्तरसङ्क्रम इति प्रपञ्चस्तु सर्वत्र पर्यहारि। अनवकाशस्तत्र तत्र तादृशस्य प्रपञ्चस्येति चोद्येत। सत्यम्। अन्यत्राप्यवकाशो नास्ति। के ते प्रदेशा यत्र स विकासो मृग्यः। इदं तर्ह्यवश्याभ्युपेयं रूढार्थाभिधानेन प्रकृतिप्रत्ययार्थप्रदर्शनेन च कृतकृत्यंमन्याः प्रायेण प्रतिपत्तारः प्रतिपादयितारश्च।

संस्कृते वाङ्मये बहूनां पदानामेकार्थता कथं समजनीत्यत्रापि नोद्येमिरे प्राञ्चः, नोद्यच्छन्ते चार्वाञ्चः। अनवसर एष तद्विषयस्य व्युत्पादनस्य। कुशलाः* ह्यत्र प्रधानवक्तारः, उपसर्जनं वयम्। अतो मितेन सन्दर्भेण प्रतिज्ञातोऽर्थ उदाह्रियते।

दिङ्नागप्रणीतं कुन्दमालां नाम नाटकं परिष्कुर्वता मया कविनाऽसकृत्प्रयुक्ते निभृतशब्दे वाचाऽऽङ्गल्या यदवाचि तदेवेहार्थत उद्ध्रियते तावत्। तदालोचयन्तु सन्तः।

निभृतशब्दः साक्षात्प्रकृतिप्रत्यययोगेनोपसर्गयोगेन चाकण्ठपूर्णमर्थमाचष्टे। तथा च चिन्तया निभृत इति श्रीमद्भागवते प्रयोगः। यन्नाम निभृतम्भवति न तच्छब्दायते। सम्पूर्णकुम्भो न करोति शब्दमिति ह्याभणति लोकः। अतो निभृतं नीरवं प्रशान्तमित्यनर्थान्तरम्। भवन्ति चात्रार्थे कवीनां प्रयोगाः—

---

*लवपुरस्थ सरस्वतीसमाजो पवेशनेऽयं निबन्धो वाचितः। अत्र कुशला इति पदेन कुशलोपाह्वाः श्रीरामचन्द्रशास्त्रिणोऽभिप्रेताः।

कोयं निभृतं तपोवनमिदं ग्रामीकरोत्याज्ञयेति स्वप्ननाटके। निष्कम्पवृक्षं निभृतद्विरेफं .....काननमिति कुमारे। कारणेन खलु मया नैभृत्यमवलम्बितमिति च मालविकाग्निमित्रे। यस्माद्यः कश्चिदिह शब्दः श्रूयते स आघातजन्यं मारुतकम्पमन्तरेण नोदयते तस्माच्छब्दाभावः कम्पविरहे शक्यं लिङ्गमास्थातुम्। अतो नीरवमर्थमभिधाय निभृतशब्दो निष्कम्पमभिधत्ते। यथा—निष्कम्पचामरशिखा निभृतोर्ध्वकर्णा इति शाकुन्तले, अनिभृतकरेष्वाक्षिपत्सु प्रियेष्विति मेघदूते, वारिधीनिव युगान्तवायवः क्षोभयन्त्यनिभृता गुरूनपीति किराते, नानिभृतोग्निमुपासीतेति च चरके। निष्कम्पताया नीरवतायाश्च बाह्याया न दूरं विप्रकृष्यते शान्तिराभ्यन्तरी। कल्पते नाम बहिरङ्गप्रशमोऽन्तरङ्गप्रशमाय। अतो युज्यते यन्निभृतशब्दोन्तःशान्तं प्रश्रितमाचक्षीत। यथा निभृतात्मेत्यत्र।

मनोविषये सन्देहान्तगमनं संशयदोलानधिरोहणमेव वा कम्पाद्यभावः, तेन निभृतशब्दो दार्ढ्यं स्थैर्यं वा लक्षयति। यथा—तया व्याहृतसन्देशा सा बभौ निभृता प्रिय इति कुमारे। ततो नीरवनिष्कम्पार्थद्वयेन रहस्यार्थलब्धिः, यतो हि रहस्यं नाम नीरवताया निष्कम्पतायाश्च साहचर्यं न जहाति। सति चेष्टादिलेशे सति चारावलवे न जातु सन्तिष्ठते रहस्यम्, तैलबिन्दुरिव चाप्सु प्रसरति सद्यो लोके। प्रमाणयति चैतमर्थं निभृतमिति चिन्तनीयं शीघ्रमिति सुकरमिति शाकुन्तले कविकुलपतेरुक्तिः। रहस्यं च पुनर्गोप्यं तिरस्करणीयं च भवति, तेन निभृतशब्दः प्रच्छन्नतिरोहितादिना समानाभिधेयतां याति। यथा निभृतो भूत्वेति पञ्चतन्त्रे, नभसा निभृतेन्दुनेति रघौ।

परिपूर्णतारूपो मुख्यार्थ एव भूयोप्यर्थान्तरं संक्रामति। दृश्यते हि लोके परिपूर्णता गौरवाय भवति, गौरवं च प्राव-

एयाय । नमन्ति हि फलभरेण शाखिनः, विलम्बन्ते च नवाम्बुभिर्घनाः । तेन निभृतेन प्रणतोऽवनतकायो वोच्यते । यथा प्रणामनिभृता कुलवधूरिवेति मुद्राराक्षसे ।

अत्र बहूनामन्येषां व्याचिरव्यासितानां शब्दानां केचिदेव विक्रियन्ते । विशारदशब्दः कस्य च्छात्रस्योपाध्यायस्य वा नावगतः । अयं हि प्रगल्भापरपर्यायः । तत्पर्यायत्वे वक्तव्यो हेतुः । विशिष्टा शारदाऽस्येति व्युत्पत्तिरेव हेतुरिति चेन्न । शारदा हि भगवत्या विद्याधिष्ठात्र्या देवतायाः संज्ञा । तस्याः सामान्यविशेषादिभेदो नास्ति । तत्र विशेषणोपादानमपार्थम् ।

किञ्चात्रावयवभूतः शारदाशब्दो नोत्प्रेक्षितुं युज्यते । नामलिङ्गानुशासने शारदविशारदशब्दयोः साहचर्येण पाठात् । कथं तर्हि प्रागल्भ्यार्थप्रतीतिः । उच्यते । विगतं शारदत्वमभिनवत्वमस्येति व्युत्पत्तेः । शारदशब्दोऽत्र भावप्रधानः । शारदत्वेनात्राभिनवत्वं लक्ष्यते । शरदि भवं शारदम् । आगतायां हि शरदि वर्षर्तुना कृतं सलिलाविलत्वं गगनश्यामत्वं चापैति, प्रसीदन्त्यापः, अतियन्ति दुर्दिनानि । तेन सर्वं नवतामिवोपैति । प्रयुक्तश्चायं शब्दो भगवता सूत्रकारेणाप्यत्रार्थे 'शारदेऽनार्तवे' इत्यत्र । तत्र शारदशब्दोयं प्रत्यग्रवाची । सद्यो रज्जूद्धृतमुदकमनुपहतं रज्जुशारदमुच्यत इति काशिकायां जयादित्यः । द्वौ तु शारदौ—प्रत्यग्राप्रतिभौ—इति नानार्थवर्गेऽमरः । यस्य हि नवत्वं विनष्टं भवति स विशारदः प्रगल्भः प्रौढ इत्युच्यते । शास्त्रेऽधीतिन एवैतं व्यपदेशं भजन्ते न प्राधीताः ।

आलोच्यतां वा कृपणशब्दार्थः । कृपणः किंपचान उच्यते, तत्रार्थे ह्यस्य रूढिः । तत्केन हेतुना । कृपणः कृप्यते कृपाविषयीक्रियते इति व्युत्पत्तिलभ्योर्थः । सत्यं स कृपाभाजनं भवति यः सर्वस्यार्थस्येशानोपि नात्मनि प्रकुरुते न च बन्धुषु ।

प्रयुक्तपूर्वश्चायं शब्दो विशेषणमबाधितमुख्यार्थवृत्तिः। यथा यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः, यथा वा बुद्धौ शरणमन्विच्छ कृपणाः फलहेतव इति। पूर्वं विशेषणं भूत्वाऽयं पश्चात्केवलं विशेष्यार्थमर्पयति। एवं विशेषणानि विशेष्यतां यान्ति। तथा कस्मादिति बहुत्र कस्मात्कारणादित्यर्थे दृश्यते। अत्रापि विशेषणेन विशेष्यार्थस्य समर्पणम्। अकस्मादिति च सहसार्थे संगच्छते, अकारणादित्यर्थात्। स्मरन्ति च धर्मसूत्रकाराः— 'न रूढश्मश्रुरकस्मात्' इति तत्राकारणाद् वृद्धश्मश्रुर्न स्यादिति तदर्थः।

समीक्ष्यतां वा याप्यशब्दः। याप्ये पाशप् इत्यत्र पाणिनीये श्रूयतेऽयं निन्द्यार्थकश्च व्याख्यातः। मिथ्यावचने याप्यो दण्ड्यश्च साक्षीति गोतमधर्मसूत्रेपि निन्दार्थको दृष्टः। कथं तदर्थलाभः। यातेर्ण्यन्ताद् यति रूपम्। याप्यः प्रेष्य इति व्युत्पत्तिलभ्योऽर्थः। परं नात्रार्थे क्वचित्प्रयुक्तपूर्वोऽयं शब्दः। शिबिका याप्ययानं स्यादित्यत्रापि याप्यस्याशक्तस्य यानमिति स्वामी। गौणार्थे निन्द्य एव दृश्यन्ते प्रयोगाः। तत्कुतो निन्द्यार्थलब्धिः। त्रिविधा रोगा इति वैद्याः। सुखसाध्याः कृच्छ्रसाध्या असाध्याश्चेति। तत्राऽसाध्याः पुनर्द्विविधाः— याप्याः प्रत्याख्येयाश्चेति। यथा याप्यान्यर्शांसि। रोगो नाम सर्वोपि दुःखकरः। रुजति हि सः। परं याप्यो रोगः सुतमां दुःखकरः। न स साध्यते न च प्रत्याख्यायते। कदाचिन्मन्दतां याति कदाचित्तीव्रताम्। सततं चातुर उपचर्यते भेषजैः। मा जीवन्स जीवति दुःखाभिभूतः, निन्द्यश्च भवति। एवं योन्योपि दुश्चरितेन वा मौर्ख्येण वा ऽनैपुणेन वा हेतुना निन्द्यो भवति सोपि याप्य इत्युच्यते। याप्य इव याप्य इत्यौपमिकः प्रयोगः।

विविच्यतां वोपपूर्वस्येक्षतेरर्थः। अयं ह्यद्यत्वे पदार्थानवलोकने पदार्थपरिहारे वा व्यवह्रियते। तत्कुतः। निरुक्तकारेण

भगवता यास्केन बहुत्र तदेतेनोपेक्षितव्यमिति वाक् संदब्धा । उपेक्षितव्यं साधीयः परीक्षणीयमित्येवं च व्याकृता दुर्गेण । उपशब्दो हि सामीप्यं वक्ति । यो ह्युपेत्य पश्यति स साधीयः पश्यति । परं योऽत्यन्तमुपेत्य पश्यति स पश्यत्येव न । न हि वयं नेत्रस्थमञ्जनं पश्यामः । अत एवोपपूर्वं ईक्षतिरनवलोकनं पदार्थपरिहारं वार्थान्तरं सङ्क्रान्तः कालेन ।

एवं व्याक्रियमाणं शब्दजातं किमप्यपूर्वं रामणीयकं धत्ते । चार्वी ह्येषा शैली विपश्चिद्भिरवश्यं शीलनीया । न ह्येतत्समं प्रकारान्तरमस्ति । अस्माकं चेह बहु वक्तव्यमस्ति । कालान्तरे लब्धावसराः पुनरपीमं विषयमनुसरिष्याम इति विरमामः ॥

पदार्थानां विकासोयं नूत्नः सुमनसामिव ।
भवेन्मनोविनोदाय समेषां साहितीजुषाम् ॥

---

## कालिदासस्य शिवभक्तिः ।

( ले०—पं० बलजी नाथः शास्त्री )

अद्य त्वयं मे महानुत्सवो यदहं कविकुलगुरोः, कविताकामिनीविलासस्य, लोकोत्तरप्रतिभोद्भावितानुपमकाव्यरसतर्पिताखिलविद्वज्जनमानसस्य, अतिमनोहरशब्दार्थरचनारञ्जितसंस्कृतवाङ्मयस्य, महाकवेः कालिदासस्य विषये किमपि लिखितुं व्यवसितः । प्रथितैव सर्वस्मिन्नपि जगति कालिदासस्य कविताया रमणीयता । एतस्य पुरतः केषां जगतः कवीनां जिह्वा न जिह्रेति जल्पन्ती । केषां वा सहृदयानां हृदयान्येतस्य कवितायाः रसं समास्वाद्य न द्रवीभवन्ति । के वा सवासना अस्य काव्यं पठन्तः शृण्वन्तो वा सर्वेभ्योऽपि जीवलोकचिन्ताग्रामेभ्यः प्रमुक्ताः सन्तोऽपूर्वं कस्मिंश्चिन्निर्वृत्तिप्रदे

आह्लादसागरे सुचिरं न निमज्जिन्ति। तदेवमस्य प्रथितकीर्तेर्गुणगणवर्णनं पुनरुक्तदोषविहीनं न भविष्यतीति प्रकृतमेवानुसरन्तोऽस्य परिचयप्रदर्शपुरःसरं किमपि लिखामः।

बहुभिः पण्डितवरैः कालिदासमधिकृत्य बहवो निबन्धा लिखिताः, अस्येतिहासविषये च महदन्वेषणं कृतम्। तत्र कैश्चिदस्य जन्मस्थानस्य, कैश्चित् कालस्य, कैश्चिच्चाश्रयदातू राज्ञो विक्रमस्य विषये महती विवेचना कृता। वस्तुतस्तु इमे स्थानकालादयोऽस्य महाकवेर्महत्त्वं प्रवर्धयितुं विहन्तुं वा कथञ्चिदपि न अलम्। अत इयं बाह्यविवेचना नात्यन्तम् अपेक्षिता। भारतवर्षवास्तव्यो भारतवर्षस्योन्नतिकालिकश्च महाकविः कालिदास इत्येतदेव पर्याप्तम्। तद्वयमिदानीमस्य शिवपरायणां बुद्धिमेवाधिकृत्य किञ्चिल्लिखामः। यतो हि बुद्धेरुच्चता जनस्याप्युच्चतां द्योतयति।

न खलु विदुषामविदितमेतद् यदयं महाकविर्भगवतो महेश्वरस्यानन्यभक्तोऽभूदिति। यतो हि—त्रिष्वपि रूपकेषु रघुवंशे च मङ्गलं कुर्वन्नयं शिवमेव स्तौति। अन्यत्रापि च मेघदूतादौ स्वकीयमिष्टदेवं शिवं यथावसरं बहुधा स्मरति। शिवोपासकास्तु बहुविधा भवन्ति। तत्र केचित् केवलं शिवमुपासते, केचित् सशक्तिकं, केचिन्निर्गुणं, केचिच्च सगुणमिति। अयं पुनर्न्यक्कृतभेदप्रपञ्चस्य, शक्तिसम्पृक्तस्य, सगुणनिर्गुणोभयविधस्य, स्थावरजङ्गमादिविश्वमूर्तेः, काश्मीरकशैवागमप्रसिद्धस्य शिवस्योपासकः। तथा हि—रघुवंशे—

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥

इत्येवं स्तुवतानेन महाकविना शिवशक्त्योरेकीभावस्तयोर्जगत्कारणत्वं च प्रदर्शितम्। प्रत्यभिज्ञाशास्त्रे (काश्मीरकशैवशास्त्रे)—

"अनन्तशक्तिपरिपूर्णम्।" इत्यादौ,

भवतु मे प्रभुरसौ जनकोऽथ त्र्यम्बकोऽथ जननी च भवानी।

इत्यादौ चैवमेव प्रदर्शितमाचार्यैः। एवमेव शाकुन्तलेऽपि—

ममापि च क्षपयतु नीललोहितः ।
पुनर्भवं परिगतशक्तिरात्मभूः ॥

इत्यनेन भरतवाक्येन शैवागमप्रसिद्धं शिवस्य परिगतशक्तित्वं वर्णितम् । अनेनैव च प्रकारेण मालविकाग्निमित्रे—

एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः
कान्तासम्मिश्रदेहोऽप्यविषयमनसां यः परस्ताद्यतीनाम् ।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥

इति स्तुत्या शिवस्य शक्तिसम्मिश्रदेहत्वं प्रदर्शितम् । किञ्चैतस्मिन् श्लोके शिवस्यैव तामसवृत्त्यपनयनकर्तृत्वं प्रोक्तम् । एतेन च शिवस्य शैवशास्त्रप्रसिद्धानुग्रहशक्तिपातवशान्मोहापसारणकर्तृत्वमेवाभिप्रेतम् । प्रोक्तं चैवमेव शैवशास्त्रे—

शक्तिपातवशाद्देवि नीयते सद्गुरुं प्रति ।
पीयते भक्तिपीयूषं क्षीयते कर्मवासना ॥

इत्यनेनैव चाभिप्रायेण तुष्टुवे भगवानुत्पलदेवः—

प्रकटय निजमध्वानं स्थगयतरामखिललोकचरितानि ।
यावद्भवामि भगवंस्तव सपदि सदोदितो दासः ॥इति ।

किञ्च कालिदासस्यैतस्मिन् श्लोके शिवस्य शैवागमप्रसिद्धं विश्वरूपत्वमपि प्रतिपादितमस्ति । कुमारसम्भवेऽपि—

विभूषणोद्भासि पिनद्धभोगि वा
गजाजिनालम्बि दुकूलधारि वा ।
कपालि वा स्यादथवेन्दुशेखरं
न विश्वमूर्त्तेरवधार्यते वपुः ॥

इत्यत्र शिवस्य विश्वरूपत्वं प्रतिपादितम् । एवमेव च प्रोक्तं शाकुन्तले—

"या स्रष्टुः सृष्टिराद्या" इत्यादौ श्लोके। इममेव चार्थं शैवशास्त्राचार्यो भगवानुत्पलः—

अग्नीषोमरविब्रह्मविष्णुस्थावरजङ्गम-
स्वरूपबहुरूपाय नमः संविन्मयाय ते ॥

इत्यनेन पद्येन प्राह। आचार्याभिनवगुप्तपादाश्च—

सुरमानुषपशुपादपरूपत्वं तद्वदीशोऽपि। इत्यनेन पद्यांशेन प्राहुः। विक्रमोर्वश्यां च—

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोधसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निश्श्रेयसायास्तु वः॥

इत्येतस्यां स्तुतौ कविना शिवस्य न केवलं वेदान्तप्रसिद्धपरब्रह्मत्वमेव, सर्वव्यापकत्वमेव, सर्वाधीशत्वमेव, योगाभ्यासेन च मुमुक्षुजनोपास्यत्वमेव प्रदर्शितम्, अपि तु तस्य प्रत्यभिज्ञाशास्त्रप्रसिद्धं भक्तियोगसुलभत्वमपि प्रदर्शितम्। इदं शिवस्य भक्तियोगसुलभत्वमेव हि परः सिद्धान्तः शैवानाम्। तथा चोक्तं भगवता उत्पलदेवेन—

न योगो न तपो नार्चाक्रमः कोऽपि प्रणीयते।
अमाये शिवमार्गेऽस्मिन् भक्तिरेका प्रशस्यते ॥इति॥

प्रायशः शैवाचार्याः शिवस्यानुभवमात्रवेद्यत्वात्, शब्दैश्च प्रतिपादयितुमशक्यत्वात् स्तुत्यादौ—

कस्मैचिद् भवते नमः। गुह्याय स्वामिने नमः॥
योऽपि वा सोऽपि वा योऽसौ देवस्तस्मै नमोऽस्तु ते ॥

इत्येवं प्रकारकैः किंशब्दप्रयोगैः शिवस्यानिर्वचनीयतां प्रतिपादयन्ति। इमामेव शास्त्रीयां सरणिमनुसृत्यास्मत् कविः कुमारसम्भवे—

स्वयं विधाता तपसः फलानां केनापि कामेन तपश्चचार।

इत्यादौ शिवस्येच्छाया अनिर्वचनीयतां द्योतयन् किंशब्दमेव प्रयुनक्ति।

कुमारसम्भवे शिवपार्वत्योः सम्भोगशृङ्गारवर्णनं शैवागममजानन्तः केचिद्दोषकोट्यां गणयन्ति। परं शैवशास्त्रविदां मते सर्वमपि विश्वं शिवस्यैव स्वरूपं, शिवेनैव च स्वस्वातन्त्र्यमहिम्ना स्वेच्छानुसारं प्रतिभावितं, शिवस्यैव च सर्वप्रकारं भोग्यम्। उपभोगत्वसामान्यादत्र हासशोकहर्षसुखदुःखादीनामपि न वस्तुतः कश्चिद्भेदः। कथं तर्हि सम्भोगविप्रलम्भयोर्भेदः स्यात्। का चैवं वार्तैव सम्भोगशृङ्गारानौचित्यस्य। सर्वासामपि इच्छाकृतिप्रभृतीनां चेष्टानां शिवेच्छामयत्वान्न किमप्यनुचितमेतच्छास्त्रानुसारिणाम्। इममेव शैवमार्गमनुसरन्नयं महाकविः शिवस्य स्वतन्त्रेच्छात्वं द्योतयन्, अनौचित्यशङ्कामप्यकुर्वन् शिवशक्त्योः सम्भोगशृङ्गारं प्रकाममवर्णयत्। शैवागमविदः स्तोत्रकारा अपि शिवशक्त्योः सम्भोगशृङ्गारं वर्णयन्ति। का पुनर्वार्ता कालिदाससदृशानां शृङ्गारिककविकुलकण्ठीरवाणाम्। तेषां तु विश्वमेव शृङ्गारमयम्। भगवानुत्पलश्चापि शिवस्तोत्रेषु—

जयगौरीपरिष्वङ्ग योग्यसौभाग्यभाजन।

पानाशनप्रसाधन[1] सम्भुक्तसमस्तवविश्वया शिवया।

[2]प्रलयोत्सवसरभसया दृढमुपगूढं शिवं वन्दे॥

इत्यादिषु पद्येषु शिवगौर्योः सम्भोगशृङ्गारं वर्णयामास।

कालिदासेनात्मानमधिकृत्य क्वचिदपि किंचिदपि न प्रोक्तम्। तथापि प्रदर्शितप्रकारेषु काव्यदर्पणेष्वनिच्छतोऽप्यस्य महाकवेर्बुद्धिर्मनश्च स्पष्टं प्रतिबिम्बिते वर्तेते। एतेषां श्लोकानां साध्ववधारणेन स्पष्टं ज्ञायते यदयं महाकविः काश्मीरकशैवागमवेत्ता, तदागममार्गानुयायी चाभूत्। एतदागमविदश्च प्रायशः कश्मीरेष्वेवाभूवन्, सन्ति च। अतोऽयं महाकविः कश्मीरेष्वेव विद्यामलभत, कश्मीरेष्वेव च शिवचरणस्मरणेनास्य बुद्धेर्विकासः समभवदिति सम्भाव्यते। अन्धश्रद्धाप्रधाना

[1]प्रसाधनम्—अलङ्करणम्। [2]प्रलयः—सम्भोगः।

अपि केचिदीश्वरभक्ता भवन्ति । परन्त्वयं महाकविर्विगलितभेद-प्रपञ्चो, वेदान्तशास्त्रकल्पतरोरुच्चतमां काश्मीरकशिवाद्वैतवेदान्तशाखामधिश्रितोऽत्युच्चया दृष्ट्या भावजातं पश्यन् लोकोत्तरया प्रतिभया स्वातन्त्र्येण स्वकीयेषु काव्येषु वर्णयामास । किञ्चायं शिवस्य शिव-स्वरूपस्य शिवप्रियस्य शिवभोग्यस्य च पदार्थजातस्य सौन्दर्यवर्णनं विधायातिश्लाघ्यां सफलां च जीवनयात्रां निनाय । भक्तिसम्पदुल्लासेन च संसारान्ते निजनाथे शिवे लीनश्चिरं मोदते इति ज्ञायते उपरित-नैरस्य काव्यांशैः । पार्वतीपरमेश्वरविषयिण्यस्य महाकवेरनन्या भक्तिस्त्वधस्तनेषु मेघदूतपद्येष्वतितरां विद्योतते तत्र हि महाकालनाथं शिवमन्दिरमधिकृत्य अस्य कवेः मेघं प्रति यक्षमुखेनायमुपदेशः—

अप्यन्यस्मिन् जलधर महाकालमासाद्य काले
स्थातव्यं ते नयनविषयं यावदत्येति भानुः ।
कुर्वन् सन्ध्याबलिपटहतां शूलिनः श्लाघनीयाम्
आमन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥
पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजः प्रति नवजपापुष्परक्तं दधानः ।
नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥

एवमेव कनखलसमीपस्थं शिवचरणन्यासमधिकृत्य तदर्चनं मेघं प्रत्युपदिशति—

तत्र व्यक्तं दृशदि चरणन्यासमर्धेन्दुमौलेः
शश्वत् सिद्धैरुपचितबलिं भक्तिनम्रः परीयाः ।
यस्मिन् दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः
सङ्कल्पन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥

शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः
संसक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः।
निर्ह्रादस्ते मुरज इव चेत् कन्दरेषु ध्वनिः स्यात्
सङ्गीतार्थो ननु पशुपतेस्तत्र भावी समग्रः॥

अनेनैव प्रकारेणायं कविर्मेघाय मार्गं प्रदर्शयन्नप्रस्तुतानामपि शिवस्थानानां यथावसरं सातिशयं वर्णनं करोति। एतेनास्य शिवविषयिणी महती भक्तिर्ध्वन्यते। कथं शिवस्य सङ्गीतार्थः समग्रो भवेत्, कथं च गौर्यार्द्रनागाजिनेच्छा पूरिता भवेत्, कथं च गौर्या उद्वेगः शान्तो भवेदित्यादिचिन्ताभिर्व्याकुलितेवास्य बुद्धिः प्रतिभाति। शिवस्य पुत्रं स्कन्दं, स्कन्दस्य च मयूरमप्ययं कथञ्चिन्न विस्मरति, का पुनर्वार्ता शिवपार्वत्योः। गौर्याः शरीरमार्दवं, तस्या अबलात्वं, शिवपत्नीत्वाच्च तस्याः पर्वताद्यारोहणामारोहणासहत्वं च भुजङ्गत्रासादिकं च प्रति सविशेषचिन्तापर्याकुलोऽयमिति व्यज्यतेऽधस्तनेन मेघदूतस्थेनैव कैलासप्रसङ्गादुक्तेनातिमनोहारिणा पद्येन —

हित्वा तस्मिन् भुजगवलयं शम्भुना दत्तहस्ता
क्रीडाशैले यदि च विचरेत् पादचारेण गौरी।
भङ्गीभक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः
सोपानत्वं कुरु मणितटारोहणायाग्रयायी॥

तद् यत्र कुत्रचिदपि लब्धजन्मा, यत्र कुत्रचिदपि कृतवसतिः, यत्र कुत्रचिदपि समापितलोकयात्रः, यत् किञ्चित् कालिकः, यस्मात् कस्माच्चिदपि भूपतेर्लब्धपूजः, यः कश्चिदप्ययं कविकुलकण्ठीरवः कालिदासः काश्मीरकशैवशास्त्ररहस्यवेत्ता, तच्छास्त्रानुरागः, शिवचरणस्मरणपवित्रितात्मा, सन्ततानुष्ठितया शिवोपासनया सफलीकृतमर्त्यलोकसंसृतिः, सशक्तिकस्य शिवस्यानन्यभक्तोऽभूदित्यलं विस्तरेण॥

---

# परेमशस्तुतिगीतम्

[ले० कविरत्नं मायादत्तपाण्डेयः साहित्यवारिधिः चन्दौसी ]

प्रभो सर्वेश सर्वात्मन्, विभो विश्वेश विश्वात्मन्
निलीनं द्वारदेशे ते, निजं जानीहि मन्दं माम्

न कश्चिन्मे सहायोऽस्मिन्
नृलोकेऽन्योस्ति भो भगवन्
समायातं निजं दासं
न प्रत्याख्याहि मन्दं माम् ।

प्रभो सर्वेश सर्वात्मन्, विभो विश्वेश विश्वात्मन्

त्वमेवाऽऽराध्यदेवोऽसि
त्वमेवोपास्य एकोऽसि ।
ऋते त्वां नैव पश्यामः
शरण्यं शाश्वतं ध्येयम् ॥

प्रभो सर्वेश सर्वात्मन्, विभो विश्वेश विश्वात्मन्

त्वदीयैवास्ति लीलेयम्
त्वदीयैव प्रमीलेयम्
जगत्यामत्र कंसारे
मुरारे पाहि भीतं माम्

प्रभो सर्वेश सर्वात्मन्, विभो विश्वेश विश्वात्मन्

विदित्वा लोकतन्त्राणि
समानि स्वप्नरूपाणि
न पश्यामो ध्रुवं सारं
विसारं देव संसारम्

प्रभो सर्वेश सर्वात्मन्, विभो विश्वेश विश्वात्मन्

अतो ह्यालम्बनं जाने
प्रभो त्वां श्रीरमाजाने
मतिः स्याल्लोकसेवायाम्
रतिस्त्वन्नाम चर्चायाम् ।

प्रभो सर्वेश सर्वात्मन्, विभो विश्वेश विश्वात्मन्
निलीनं द्वारदेशे ते, निजं जानीहि मन्दं माम् ।

# वार्ता ।

( लें० पं० शिवनाथशर्मा शास्त्री, श्रीनगर )

हन्त! खल्वाधुनिके काले धर्ममर्मरहस्यविदंमन्यो लोकः परब्रह्म-परमात्मप्रीत्यर्थं विविधधर्ममर्यादापालकाञ्जनान् "वेदोऽखिलो धर्ममूलं" इति शासनाद् वेदमेव वा परस्परं मन्त्रनो योधयन् धर्ममर्यादा-संरक्षकत्वेन स्वात्मानं हिन्दुसंसारे प्रकाशयति समुद्घोषयति च ।

तन्नीतिसमुद्बोधकज्ञानविरहिता मूलैकसमुद्भासितधर्मवृक्ष-शाखासंलग्नाः स्वधर्मद्रुशाखान्तरसंश्रितानेकोदरान् शाखान्य-समुद्भूतफलचर्वणास्वादनिर्भरमानसान् काष्ठकुट्टका इव वृक्षशाखाः वाक्परशुभिर्यत्र तत्र छेदयन्तो द्रागेवेमं तरुं निःशाखं करिष्यन्तीति कलिविजृम्भितं विधेर्विलसितं हिन्दुदष्टकुफलं वा ।

न जाने कथं कया युक्त्या वा पूर्वसन्नद्धा मध्यविघट्टिताः पुनरपि संघट्टनं प्राप्नुयुरिम आर्यावर्तवास्तव्या आर्याः "सनातनस्त्वं पुरुषो मतो मे" इति वाक्यात्सनातनधर्मिजनाः ।

'स्वे स्वे धर्मण्यभिरतः संसिद्धिं लभते जनः" इति भगवच्छा-सनात्प्रधानं संघट्टनं शास्त्रीयस्वस्वधर्ममर्यादापरिपालनमेव । न च शास्त्रमूलतत्तद्धर्ममार्गाणां यत्र तत्र प्रौढवादेन खण्डनं संघट्टनहेतुः परब्रह्मप्रसन्नीकरणकारणं वा ।

यस्यां जातौ सनातनमर्यादागतो भोजनाद्याचारविचारः परं स्थिरः, स्वजातिप्रचलितशास्त्रीयधर्ममतपरिपालनं, स्वधर्ममतव्यति-रिक्तशास्त्रीयान्यधर्ममतानुयायिमहानुभावस्नेहः स्यात्सैव जातिस्तदेव गौरवं सैव सभ्यता तदेव पाण्डित्यं जलरेखावलयितमृत्पिण्डे स्वाभा-विकत्वात् कतिचन दिनकरगतागतपर्यन्तं प्रचलति स्थिरीभवति परिवर्धते ।

भातु नाम स्वाचार-स्वधर्म-स्वमर्यादात्यागेनान्यजातिसहभोजनेन सुरार्चनपरित्यागेन स्मृतिनिषिद्धपलाण्ड्वादिभक्षणेन चर्मणः

काष्ठवच्छुद्धिरिति संभावनया ब्रह्मवाद्वाक्विजृम्भनया स्वोन्नतिः स्वेच्छाचारिणां पूर्वे वयसि। नासौ साधुमार्गः। नापि सत्या तेषां संभावना। डिण्डिमघोषेणोच्चैर्घोषं करोमि, यत्तैर्डाक्टरमहाशयमपूज्य मिक्सचरमहौषधिमसेवित्वा पथ्यपरिभाषामपठित्वा न स्थातव्यं सुकरं भविष्यति। पूर्ववयसि बलवृद्धिकराणि कुक्कुटाण्डानि संसेव्यापि रुग्णा निर्बलाः पूर्णायुषं न पृथिव्यां स्थितिं भजन्त इति मामकीनविज्ञानसिद्धान्तः प्रत्यक्षप्रमाणं च। अतस्तैरुत्थायोत्थाय बोद्धव्यं यत्तेऽग्रयायिनमात्मानं मन्यमानाः पृष्ठयायिनो भवन्ति भविष्यन्ति च। "आचारादन्नदोषाच्च मृत्युर्लोकान् जिघांसतीति" विज्ञानचक्षुषां शासनं परमं प्रमाणमत्र।

तदेतद्विमृश्य पूर्णायुष्कामैः संसारे सर्वतः सुखाभिलाषुकैः केवलं सदाचारः स्वधर्मसरणिः "श्रेयान स्वधर्मः" इत्यादिभगवच्छासनेनाश्रयणीयतां नेयः। स्वधर्ममर्यादातत्परान् प्रत्येव भगवद्व्यासवचनम्-"यो यमर्थं प्रार्थयते यमर्थं घटते च यः। सोऽवश्यं तमवाप्नोति न चेच्छ्रान्तो निवर्तते॥" यदर्थं

प्रायशो धर्ममर्यादा संघट्टनमाचारश्च तत्तद्देशीयसंस्कृतभूदेवनिर्भरत्वान्नातिविषमकक्ष्यापिटकोपोद्धलितमासीत् परं विशेषतः संस्कृतज्ञा एव तत्र तावत्प्रारम्भेशूरा महत्त्वाकाङ्क्षिणः प्रतिष्ठैषिणः, किं बहुना वास्तविकगीर्वाणवाणीकोविदजननामाप्यनुच्चारयन्तो वयं पण्डिता इति पश्चिमविद्यागलितचेतनाशक्तीन् स्ववशमानयन्तोऽहंपूर्विकादिसद्गुणप्राचुर्या वृतति। तदद्य ते देशकृपया वा धर्मस्नेहेन वा संस्कृतसाहित्यानुरागेण वा स्वजात्युचितकार्यचमत्कारेण वा हन्त! अवैदाचारिजनगणस्वधर्मानुष्ठानमनोवाक्कायदानदृष्टिपातेन वा चिरागत-चिरसंरक्षित-चिरपरिचितान् स्वाभाविकान् प्रोक्तगुणान् हायं हायं निरभिमानिनः शान्ता अक्रुद्धा भवन्तु संघकार्यकर्तारः। ध्यायन्तु ते जगत्सुप्रभातम्—

बहवो यत्र नेतारः सर्वे पण्डितमानिनः।
सर्वे महत्त्वमिच्छन्ति तद्वृन्दमवसीदति॥

# नैतिक-महर्षिः ।

[ले०:—साहित्य-शिरोमणिः कर्णवीरनागेश्वररावः चीरपुरी (चीराला)]

(१) श्रीवृद्धिं सर्वदेशेषु, भुवः कर्तुमनारतम् ।
यतते ऽसौ महात्यागी, जीयादाचन्द्रतारकम् ॥

(२) मोह-मन्त्र-प्रभावेण, वशी करोति सज्जनान् ।
जातीयतत्त्वसिध्यर्थं, दीक्षा-दक्षः स एव हि ॥

(३) हव-कर्त्ता सदा भूत्वा, हविर्भागं ददाति सः ।
यः प्राप्नोति हविर्भागं, स एव देशनायकः ॥

(४) नराणाममरत्वाय, बलिदानं प्रशंसति ।
भीरुजनो भयं प्राप्य, यत्र तत्र पलायते ॥

(५) दस-तत्त्व-प्रबोधाय, स्वयं दासस्स एव हि ।
विद्याविनयसंशीलो, विश्वादर्शो महामुनिः ॥

(६) समदर्शी सदानंदो, धर्म-संस्थापकश्च हि ।
अंत्यजांश्च समुद्धर्तुं, प्रज्ञां कृत्वा विराजते ॥

(७) कर्मणा निजसामर्थ्यं, दर्शयित्वा प्रमोदते ।
महामोहतमःपुंजं, भस्मीकरोति सर्वदा ॥

(८) रक्षकः सर्वभूतानां, 'महात्मे' त्युच्यते सदा ।
अतो भारतदेशाय, अभूत्प्रतिनिधिस्स हि ॥

(९) महात्मा विरुदं प्राप्य, हिंसा-नीतिमभंगयत् ।
अहिंसानिरतो भूत्वा, शांति-स्वराज्यमिच्छति ॥

(१०) चंद्र-भाव-प्रभावेण, चंद्र-सत्त्वं प्रदर्श्यते ।
प्रेम-राज्य-विधातारम्, मन्यन्ते महिमान्विताः ॥

(११) दमत्व-शक्ति-तत्त्वज्ञः, संयमीन्द्रो, जितेन्द्रियः ।
ब्रह्म-तेजो-निधानस्सः, हिंसाकार्यं विनिंदति ॥

(१२) गां रक्षत स्वरक्षायै, भाषतेऽसौ मुहुर्मुहुः ।
आर्थिकीस्थितिसिध्यर्थं, धेनु-क्षेमं हि वांच्छति ॥

(१३) धीमान्नेता महाहोता, यज्ञपालो महामनाः ।
प्राणान् दत्त्वा मखार्थं तु, दर्शयितुं स इच्छति ॥

# भारतवर्षस्य 'पाकस्थान' विभागः[†]

नवीनभारतललामभूतस्य मातृशक्तेः पुनरुद्धाराय संस्थापितस्य कन्यागुरुकुलस्य सम्मानयोग्या आचार्या अध्यापिकास्तथा च प्रियाश्छात्राः ! बहवो वर्षा व्यतीता यदा प्रातःस्मरणीयस्य स्वर्गीयस्य भ्रातुराचार्यरामदेवस्य प्रेरणया देहलीप्रदेशे कदाचिन्मया कन्यागुरुकुलस्य वायुमण्डलमनुभूतम् । ततः प्रभृति प्रतिवर्षं मान्याया आचार्यायाः श्रीमत्या विद्यावत्या उद्योगेन या समुन्नतिर्गुरुकुले संभूता यद्यपि तां स्वचक्षुर्भ्यां द्रष्टुमसमर्थ आसम् तथापि तस्या ध्वनिः सर्वदा मम कर्णगोचरतामगात् गच्छति च । यद्यपि तत्रभवत्या आचार्याया विशेषकृपादृष्ट्याऽसकृत् महोत्सवानंदप्राप्तये निमन्त्रणं प्रापि तथाप्यतिदूरे कश्मीरेषु कृतनिवासेन मयात्रागमनायाद्य यावदशक्तिरेव दर्शिता । हृदये तु सर्वदाकांक्षासीत् यत् भारते प्रसिद्धेयं संस्थावश्यमेव कदाचित् द्रष्टव्या । यद्यपि वर्षेऽस्मिन्नपि कतिपयदिनेभ्यः कन्याविवाहयज्ञदीक्षादिकार्यविशेषेषु व्यग्रोऽस्मि तथापि तत्रभवत्या आचार्याया यदद्यात्रागन्तव्यमेवेति बलपूर्विकाज्ञा शिरसा धृता । परन्त्वत्र यो भार आचार्यया संस्कृतसम्मेलनस्य प्रधानपदवीदानेन ममोपरि संस्थापितोऽस्ति तेन त्वहं लज्जया स्वशरीरं निष्कासयितुमप्यक्षमः । पूर्वं तु ममायोग्यता मय्येव निहितासीत् परमिदानीं भवत्याः सम्मुखेऽपि प्रकटिता । यथा भारवाहकः स्वर्णात्मकं भारमनुभूय पीड़ितोऽपि हृष्टो भवति तथैवाहं लज्जितोऽपि 'अयोग्योऽस्मि' इति पश्यन्नपि च महत् संमानमिदं दृष्ट्वा शतशो धन्यवादान् वितरामि ।

---

([†]कन्यागुरुकुलदेहरादूनस्य महोत्सवे २८ दिसम्बर १९४० तमे दिवसे संस्कृतसम्मेलनस्य प्रधानमहोदयानां श्री पं॰कुलभूषणानामभिभाषणम् ।)

दैवयोगेन महोत्सवस्यास्य समयविभागोऽस्मिन् वर्षे मया न प्राप्तः। परश्वस्तने दिवस आर्यप्रतिनिधिसभापञ्चाम्बुदेशीयकार्यालयात् लवपुरे मया प्राप्तः समयविभागः। यस्मिन् सम्मेलनस्यास्य विषयः 'पाकस्थानस्य योजना' इति लिखित आसीत्। आचार्यया यस्मिन काले लवपुरे विषयोऽयं कथित आसीत् तस्मिन समये दोलायमानचित्त आसम्-किं केवलमयमेव विषयो भविष्यति अथवान्यस्मिन्नपि कस्मिंश्चिद्विषये वादविवादो भवेन् निबंधाश्च पठिता भवेयुरिति। तिरस्कृत्य पाकस्तानं मया किंचिद् 'भारती संस्कृतिः' इति शीर्षकेन विविच्य लिखितमासीत्। परमिदानीं पाकस्तानस्यैव योजनात्र दरिदृश्यते। अतोऽहं क्षमां याचे यदसज्ज एवाहमस्मि विषयस्यास्य विचाराय। केवलं यद् द्वित्रिपृष्ठं सहसा मया ह्यस्तने दिवसे प्रातरुत्थाय लिखितं। तत्तु निवेद्यते।

किमिदं पाकस्तानमस्ति ? भारतवर्षनाम्नो देशस्य 'आर्यावर्त' नामेतिहासे दृश्यते तदेव पश्चात् 'सिंधुस्थान' 'हिंदुस्थान' इति जातम्। भारत, हिंदु, आर्य इति नामान्यशुद्धान्ययोग्यानीति मत्वा कैश्चन मुसलमानैः स्वकीयभाविदेशस्य नाम 'पाकस्तान' इति धृतम्। द्वित्रिवर्षपूर्वं कस्यचिद्, विचारे स्वप्नेऽपि वा नासीत् यत् हिंदुमुसलिमैक्यसमस्याया उपायः भारतवर्षस्य विभिन्ना भागा भवेवितव्याः।

आसिंधुसभ्यताकालात् मौरवीयमहाराजचन्द्रगुप्तसमयं यावदपि देशोऽयमेक एव आसीत्। सिंधुसभ्यताया गौरवं मैसोपोटेमिया ईरान असीरिया देशेषु आसीत् यस्य भग्नावशेषाण्यमूल्यरत्नानि मोहञ्जो डेरो (सिंध प्रान्ते) हड़प्पा प्रदेशे (पञ्चाम्बु प्रान्ते) चेदानीमैतिहासिकानामाश्चर्यजनकान्यभूवन्। यद्यपि तत्कालीनो लिखितेतिहासो न वर्तते तथापि चित्रैर्वस्त्रैरन्यप्राप्तवस्तुतैश्च देशस्य विभिन्ना भागाः स्वतंत्रा राजानश्च न लक्ष्यन्ते। यदा डेरयसनामा ईरानदेशस्य सम्राड् भारतवर्षमाक्रम्यास्य

पश्चिमोत्तरभागे स्वराज्यं स्थापयित्वा सिंधुनद्याः पूर्वदेशं यावत् स्वकीयानध्यक्षान् न्ययुङ्क्त तदापि भारतवर्ष एकयैव शृङ्खलया बद्ध आसीत्। यवनदेशीयेनालेग्ज़ेंद्रेण खृष्टाब्दात् पूर्वं चतुर्थ्यां शताब्द्यां यदा भारतवर्षस्य पश्चिमोत्तरभागो व्यासनदीपर्यन्तं स्वायत्तीकृत-स्तदापि भारतभूरेकैवासीत्। यदा च सेलूक्सनाम यवनदेशीयो महाराजेन चन्द्रगुप्तेन विजित्य भारतवर्षात् बहिःर्निष्कासितस्तदापि नवीनैतिहासिकानां मतेन चन्द्रगुप्त भारतवर्षस्य प्रथमः सम्राडासीत्। तस्य पौत्रः महाराजोऽशोकस्तु सर्वस्मिन् संसारे चक्रवर्ती राजा प्रख्यातोऽभूत्। तत्काले तु भारतवर्षस्योत्तरपश्चिमस्य सीमा तुर्किस्तान अफ़ग़ानिस्तान तथा चीनपर्यन्तमासीत्। अन्यत्र पूर्वपश्चिमदक्षिणसमुद्रपर्यन्तं तस्य राज्यमासीत्। तदनन्तर १३०० वर्षपर्यन्तमथवैकसहस्रखृष्टाब्दपर्यन्तं भारतीया आर्यराजानोऽखिल-भारतवर्षस्य निष्कंटकं राज्यं चक्रिरे।

महमूदगज़नवीत आरभ्य मुग़लराज्यपर्यन्तमपि विदेशीयैः पीड़िते भारतदेशेऽपि विदेशीयानां साम्राज्यमासीत्। यद्यपि लोधी अफ़ग़ान, ख़िलजी, मुग़लेत्यादयो विदेशीया आसन् तथापि तैः कदाचित् भारतवर्षस्य विभिन्ना भागा हिंदूनां कृते त्वेको मुसलमानां कृते त्वन्य इति न विचारिता आसन्। हिंदवो मुसलमानाश्च भारतस्य सर्वप्रान्तेषु समं निवासं कृतवन्तः समं दुःखं सुखमनुभवन्तः सहस्रवर्षेभ्योऽत्र निवसन्ति। तदनन्तर-माङ्ग्लानां राज्ये तु राज्यस्य सर्वदैक्यमासीत्, न केवलं भारत-वर्षस्य परञ्च लङ्काद्वीपस्य ब्रह्मदेशस्य च भारतवर्षेण सह योग आसीत्। किमिदं कारणं किंवा प्रयोजनमिदानीं येन १५० वर्षीयाङ्गल-शासनादनन्तरं वयं हिंदवः मुसलमानाश्च भारते समं विवस्तुमक्षमाः।

भारतवर्ष आर्यावर्त हिंदुस्तान इति नामानि महतो देशस्यास्य पर्याप्तरूपेण साक्षिणो भूत्वा दर्शयन्ति यत् देशोऽयं हिंदूनामार्यसभ्य-तायाः केन्द्रो वर्तते। अस्माकं गृहे विदेशीया आगत्य रीतिं नीतिञ्च

भारतवर्षस्य स्वीकृत्यातीते समये यवनहूणशकजातयो भारतीय-सभ्यताया उपासिका बभूवुः। आर्यधर्मञ्च स्वीकृत्यास्माकमङ्गानीव संजाताः। भारतस्य पश्चिमोत्तरसीमाप्रान्तेभ्यः या या जातयोऽत्रागतास्तासु बह्वयऽत्रत्यानां सभ्यताया धर्मस्या चानुयायिन्यो भूत्वा भारतवर्षमेव स्वनिवासस्थानमकुर्वन्। परं महमदीयानामाक्रमणकालात् भारतनिवासिनः ७, ८ कोटिसंख्याका मुसलिममते प्रवृत्ताः। मुसलिमै राजभिर्हिंदून् राज्ञो विजित्य तेषां प्रजा मुसलिमधर्मे बलाद् वा लोभाद् वा धर्मप्रचाराद् वा प्रवेशिताः। पूर्वं त्वासीत् विदेशीयानां हिंदुमतग्रहणं यथोक्तं पूर्वं, परन्तु मुसलिमविजेतृणां सम्राजां कालादारभ्य हिंदव एव विजेतृणां धर्मे पातिताः। प्राचीनावस्था तु पूर्वाऽऽसीन् मध्यकालीना चोत्तरा। मुगलराजानां राज्यह्रतिकाले भारते क्वचिदेवावशिष्टं मुसलिमराज्यं परमन्यत्र दक्षिणदेशेषु मध्योत्तरप्रान्तेषु च महाराष्ट्रीयाणां राज्ञां राज्यं प्रादुर्बभूव। पञ्चालदेशस्तु शिष्याणां ( सिक्खानां ) हस्ते पतितोऽभूत्। एभिर्हिंदूराजैः पुनर् भारते हिंदूनां प्रतिष्ठा भारतवर्षस्य च गौरवं संस्थापयितुं प्रचुरः प्रयत्नः कृत आसीत्। यदाङ्गला अत्रागत्य सर्वं भारतवर्षं स्वाधीनं कृतवन्तस्तदा प्रभृति हिंदूनां भारतीयानामेषा नीतिरासीत् यत् मुसलमाना अप्यस्माकं देशनिवासिनो देशभ्रातरश्च। सर्वेषां भारतनिवासिनामधिकारः स्वस्वधर्मप्रचाराय विद्यते परं देशभक्तानामेकमेव देशमतं स्याद् येन पुनः स्वराज्यप्राप्तिर्भवेत्। हिंदुमुसलिमक्रिश्चनधर्माः स्वस्वानुयायिनां कृते पृथक् पृथक् मोक्षप्रदाः शान्तिदायका भवेयुर्नाम परं तेषां सर्वेषां यतो देशो भारतवर्ष एक एव विद्यते तेषां स्वराज्यं सर्वेषां भारतीयानां भवेत्। न च केवलं हिंदूनां मुसलमानानां वा परञ्च सर्वेषां विभिन्नमतानुयायिनां प्राचीनार्याणां नवीनभारतवासिनाञ्च। अस्मादधिको महत्तर उदारभूतो न्यायस्य पन्था को वान्योऽस्ति। मार्गोऽयं सर्वैः पूर्वं स्वीकृत आसीत्। अनेनैव मार्गेण मार्लेमिण्टो रीफ़ार्म्स माण्टेगो चेम्सफ़ोर्ड रीफ़ार्म्स (नवीनराज्यशासन-

प्रबन्धाः १६०७, १६२१ ईसवीयाः ) तथा च १६३५ वर्षस्य नवीनो गवर्णमैंट आफ़ इण्डिया ऐक्ट ( नवीना भारतराज्यस्य प्रबंधाः ) निर्मिताः । अनेनैव मार्गेणैतावन्तं सर्वत्र भारतप्रान्तेषु कांग्रेस-राज्यमभूत् । अथवा पाञ्चालदेशस्य वंगदेशस्य वा राज्यसभे नियुक्ते आस्ताम् ।

कोऽयमनुक्रोशो विधिर्नियम उपालम्भो वा पाकिस्तानस्य भिन्न-प्रान्तस्य भिन्नदेशस्य विभागविधानाय ? स्वार्थिनां केषांचिन् मुसलमानानां मतमिदं यस्य विचारः भवद्भिरत्र करणीयः। मया केवलमिदमेव निगद्य विरम्यते यदस्यां चर्चायां शोभनाः सन्तु ते पन्थानः ।

कुलभूषणः

---

# धर्मस्य तत्त्वं निहितं गुहायाम् ।

( ले० पं० गोविंदराजदानः शास्त्री, एम्. ए., जम्बू )

अयि ! निगमागमविमलहृदयमुषितकलुषा मानुषाः ! इह खलु कर्मभूमौ भारते निखिलसाधनाय धर्म एव समाश्रयणीय इति भारतीया आमनन्ति । तत्र कस्तावद् धर्म इति शंकायाम—

धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः ।
यत् स्याद् धारणसंयुक्तं स धर्म इति निश्चयः ॥

इति पूज्यपादश्रीभगवतो वेदव्यासस्य श्रीमहाभारते वचनेन धर्मो धारणात्मक इति राद्धान्तः। स तु मनुवचनात् 'आचारः परमो धर्म' उच्यते । 'चतुर्णामपि वर्णानामाचारो धर्मपालनम । आचार-भ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः ॥' स च द्विविधः श्रुतिसिद्धः श्रौतः स्मृतिभिरुपपादितश्च स्मार्त इत्युच्यते । 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म' इति ऋषीणां वचनम् । अतश्च धर्म स्वर्गापवर्गयोरुभयोरपि कारणं प्रवदन्ति । एवं क्रमोन्नतिमार्गस्वरूपः सत्त्वगुणवर्धकः

पुरुषार्थो धर्मः । धर्मसाधनरूपः पुरुषार्थो धर्मस्त्रिधा महर्षिभिर्वि- भक्तः—सनातनधर्मस्तपोधर्मो दानधर्मश्चेति । सनातनधर्मस्तु वैदिको वेदैरुपदिष्टो नित्यनैमित्तिकक्रियाद्यनुष्ठानरूपः स्मृतिभिरुपवर्णितः स्वाध्यायरूपो ज्ञानसम्बन्धीयः । तपोधर्मश्च योगोपासनादिविविधरूपः । नित्यनैमित्तिकयागयज्ञाद्यनुष्ठानरूपो दानधर्मः कथ्यते ।

मनुस्तु—श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥
श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥

२ अ० ९, १० श्लो०

अयं हि श्रुतिस्मृत्यनुगतः साधारणो धर्मः, यो हि हारीतेन 'अथातो धर्मं व्याख्यास्यामः । धर्मः श्रेयः समुद्दिष्टः श्रेयोऽभ्युदय- लक्षणम् । 'अस्य सम्यगनुष्ठानात् स्वर्गो मोक्षश्च जायते ॥ इति पूर्वोक्तमेवोपपादितम् ।

धारयते धारयति वा विश्वं, ध्रियते सन्मार्गतया वा लोकैरितिधर्मः । तल्लक्षणं तु—

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥—इति मनुः

तत्र सत्यं यथार्थभाषणम् । धारणं मनसा निश्चयो धृतिः । सर्वदा सन्तोषः सन्तुष्टं मनः परमसुखावहः । यतोहि—'सन्तोषं परमास्थाय सुखार्थी संयतो भवेत् । सन्तोषमूलं हि सुखं दुःखमूलं विपर्ययः' ॥ इति मनुः (४ अ० १२ श्लो०) स च दरिद्रो भवति यस्य तृष्णा विशाला । तथा—असन्तोषात् पतत्यधः । सत्यपि सामर्थ्ये क्षमत इति क्षमा । यस्मात् 'क्षमा खड्गं करे यस्य दुर्जनः किं करिष्यति' । 'अतृणे पतितो वह्निः स्वयमेवोपशाम्यति' । 'क्षमया रोचते लक्ष्मीः शौरी चान्द्री च यौगिकी' विकारहेतुविषयसन्निधानेऽप्यविक्रिया-

त्वं मनसो दमः। यद्वा—मनसो दमनं दमः। अथवा—शीतातपादिसहिष्णुता दमः। उतवा—

कुत्सितात् कर्मणो विप्र यच्च चित्तनिवारणम्।
स कीर्तितो दमः प्राज्ञैः समस्तैस्तत्त्वदर्शिभिः॥

'अथापि नोपसज्जेत स्त्रीषु स्त्रैणेषु चार्थवित्। विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यथा'॥ अन्यायेन परधनादिग्रहणं स्तेयं तद्भिन्नमस्तेयम्। यद्वा 'अदत्तादानरूपपरस्वहरणादिराहित्यमस्तेयमित्युच्यते। न्यायेनार्थार्जनं विधाय 'श्रद्धयेष्टं च पूर्तं च नित्यं कुर्यादतन्द्रितः। श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः'॥ शौचं द्विविधं बाह्यमाभ्यन्तरं चेति। यथाशास्त्रं मृज्जलाभ्यां देहशोधनं बाह्यम्। कामक्रोधादिराहित्यमान्तरम्। अथवा 'सत्यं शौचं मनः शौचं शौचमिन्द्रियनिग्रहः। सर्वभूतदया शौचं शौचं पंचविधं स्मृतम्'। इति—अथ च—

ज्ञानं तपोऽग्निराहारो मृन्मनोवार्युपाञ्जनम्।
वायुः कर्मार्ककालौ च शुद्धेः कर्तॄणि देहिनाम्॥ इतिमनुः

(५ अ १०५ श्लो०) विषयेभ्यश्चक्षुरादिवारणमिन्द्रियनिग्रहः।

अत एव—

श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पंचमी।
पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता॥
इन्द्रियाणां विचरतां विषयेष्वपहारिषु।
संयमे यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनाम्॥
न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥
इन्द्रियाणां प्रसंगेन दोषमृच्छत्यसंशयम्।
संनियम्य तु तान्येव ततः सिद्धिं नियच्छति॥ मनुः—

ध्यायति ध्यायते वा शास्त्रादितत्त्वज्ञानमनया इति धीः। तथा च 'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा। ऊहापोहार्थविज्ञानं तत्त्व-

ज्ञानं च धीगुणाः' ।। मनुरपि—'सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा । श्रुतिप्रमाणतो विद्वान् स्वधर्मे निविशेन्मनः' ।। इति । 'यस्य वाङ्मनसे शुद्धे सम्यग् गुप्ते च सर्वदा । स वै सर्वमवाप्नोति वेदान्तोपगतं फलम्'।। 'वेदनं विद्या' । 'विन्दते आत्मज्ञानमनया विद्या' । 'वेत्ति यथार्थान् पदार्थान अनया इति वा विद्या' । तथा च मनुः—

'सर्वेषामपि वर्णानामात्मज्ञानं परं स्मृतम । तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः' ।। 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चे'ति । 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति । 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' । इति । क्रोधहेतौ सत्यपि क्रोधानुत्पत्तिरक्रोधः । परैराक्रोशे ताडने कृते सति प्राप्तो यः क्रोधस्तस्य कालोपशमनमक्रोधः । तथा च भगवद् गीतासु—

'काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ।। शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् । कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ।।' क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् । सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ।।'

तस्मादीदृशो दशविधो दंभैर्विना यः क्रियते स धर्मः । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः । मूलं हि विष्णुर्देवानां यत्र धर्मः सनातनः । स्नानं सन्ध्या जपो होमस्वाध्यायौ देवतार्चनम् । यस्मिन्दिने न सेव्यन्ते वृथा स दिवसो नृणाम् ।। वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः । वेदो नारायणः साक्षात् स्वयंभूरिति शुश्रुम ।।'

---

## 'श्रीः'

( ले० पं० विश्वेश्वराचार्यः उज्जयिनी )

कंठे शंभोश्च विष्णोरुरसि सरसिजाज्जन्मनः पानपात्रे
कासारस्यांबुजें ऽङ्के जलनिधिजनुषः सप्त-सप्तेश्च दीप्तौ ।
नाना-रूपैः स्थिता या वन-भव-भवना श्रीपुरे चैव भूमेः
शस्यां विज्ञानदात्रीं विबुध-जननुतां नौम्यजस्रं श्रियं ताम् ।।

× कतिषु चिदंशेष्विति व्यासेनैव वक्तव्यम् ।

## परिषद्वृत्तम् ।

### भाद्रपदमासाधिवेशनम् ।

१७शे प्रविष्टे मासिकाधिवेशनं सायं पञ्चवादनसमये समजनि। परिषत्प्रधानवर्य्यस्यानुपस्थितिर्दुःसहाप्यन्यसभ्यमहानुभावानां पूर्णोपस्थित्या परिषदुपप्रधानवर्य्योपस्थानकृपया सुसहा जाता। उपमन्त्रिणा च निश्चितकालातिक्रम एवास्मिन्नधिवेशने कृत आसीत्। भारतीयाः स्वनामधन्या विद्वांसः केचन कश्मीरयात्रायै अत्र समागताः परिषन्मण्डपं स्वोपस्थित्या अलंचक्रुरित्यतो जनसमवायः सुतरामासीत्। प्रधानवर्य्यानुपस्थितिनिधानत्वादुपप्रधानवर्य्यैरेव परिषत्कार्यं समागत-भारतीयविद्वत्स्वागतपुरःसरं समारब्धम्। श्रीमता साहित्यालंकार पं० कुलभूषण डी. पी. एच., इत्यादिविरुदावलिभूषितेन परिषन्मन्त्रिणा नियमितान्तरङ्गसभाकार्यं द्वितीयाधिवेशनान्तं स्थगितम्।

ततो विद्यावारिधि पं० शिवनाथ शास्त्रि साहित्यभूषणादिविविधोपाधिमद्भिः प्रत्नतत्त्वनिर्धारणजागरूकैः "बौद्धधर्मस्य उत्थानं पतनं च" इमं विषयमवलम्ब्य पुरावृत्तपरिशीलनक्षीरसागरसारसारं व्याख्यानं साधुतरयुक्तियुक्ततरं दत्तम्। भारतीयैश्च समागतैः पण्डितैर्व्याख्यानस्यास्य कतिचिदंशेषु रूढिवादेन स्वस्वमीमांसाकरणानन्तरं प्रशस्तिरेव कृता। समये लेखरूपमियादिदं व्याख्यानं श्रीपत्रके। सायं सभाविसर्जनञ्च समभूत्ससन्तोषमिति।

परिषदुपमन्त्री।

### आश्विनमासाधिवेशनम् ।

मासस्यास्य षष्ठे प्रविष्टे परिषदधिवेशनं सायं षड्वादनवेलायां श्रीप्रतापकालेजमहाशालायां समजनि। उपस्थितिश्च महाधिवेशनतो न्यूना नासीत्। यत्र स्वनामधन्या "राजधर्मालङ्कार श्रीमान दीवान बहादुर गोपालस्वामी आयंगर सी. एस. आई., " सी. आई. ई, श्रीमान् सर राजा दयाकृष्णकौलः सी. आई ई., श्रीमान् हरीकृष्ण कौलः .................. " व्रजलाल नेहरूः, महाराजकृष्णादरः

महोदयाः तथा कालेजस्य सर्वे उपाध्यायाः (प्रोफेसरा) विद्यार्थिनः परिषदधिकारिणश्च सहान्यान्यश्रीनगरस्य महानुभावैः संवलिता उपस्थिता आसन्।

प्रथमं परिषन्मन्त्रिवर्य्यैः साहित्यालङ्कार पं० कुलभूषणमहोदयैः संप्रार्थिता जनैश्चानुमोदिताः श्री सर राजा दयाकृष्णकौलमहोदयाः सामयिकपरिषत्प्रधानपदमलंचक्रुः। तदनुज्ञया परिषन्मन्त्रिभिः संस्कृतेन परिषद्वृत्तं संक्षेपेणोक्त्वा कार्यक्रमसङ्केतश्च कथितः।

तदनु अधिवेशनप्रधानैर्ब्रह्मचारिणां श्रीअरोगन्ती नृसिंहमूर्ति-महानुभावानां साधु परिचयदानानन्तरं योगविषये व्याख्यानदानाय ते प्रचोदिताः।

ततो नृसिंहमूर्तिमहोदयाः प्रवृत्ता व्याख्यानदानाय। पूर्वं शास्त्रीय-मर्यादया ध्यानादियोगप्रकाराणां प्रभावमुपवर्ण्य ततस्ते सर्वजनसुबोध-नार्थं हिन्दी भाषायां चमत्कारकारि व्याख्यानमष्टघंटासमयान्तं व्याख्यातवन्तः श्रोतृजनैस्तालिकाभिः सत्कृताश्च।

अधिवेशनप्रधानमहोदयेनोपस्थिता जनाः संस्कृतसाहित्य-परिषदधिकारिणः श्रीनृसिंहमूर्तिस्वामिनश्च स्वकीयाभिर्मधुरोक्तिभि-र्धन्यवाददानेन सन्तोषिताः, परिषत्प्रधानवर्य्येण च सहाधिवेशन-प्रधानेन सर्वा परिषत् धन्यवादपुरःसरं संमानिता संभाविता च।

ब्रह्मचारिमहोदयेन स्वशिक्षादीक्षिताः केचन बाला आत्मा जनसमक्षं नेति-धौतिकर्म दर्शयामासुः। येनातिसंहृष्टा जना बभूवुः। तदनु परिषन्मन्त्रिणा सधन्यवादं सभा विसर्जिता।

परिषदुपमन्त्री।

## मार्गशीर्षाधिवेशनकृत्यम्।

मासस्यास्य दशमे प्रविष्टे मध्याह्नोत्तरचतुर्वादनकाले परिषदोऽस्याः मासिकमधिवेशनं श्रीनगरस्थ-ब्राह्मणमहामण्डलभवने समभूत्। उपस्थितिश्च हिन्दुजनताप्रत्यासन्नस्थानस्थित्या शोभनाऽऽसीत्। प्रथमं परिषत्प्रधानवर्य्यैः सभाप्रारम्भं विधाय कथितं, यत् शीतकालेऽत्रैव

प्रतिमासं परिषदधिवेशनं भविष्यतीति तावदयं निश्चयो यावत्परिषन्मन्त्रिणः साहित्यालंकाराः पं० कुलभूषणाः सुखेन कश्मीरं न प्रत्यागमिष्यन्ति । ततो निरञ्जनहण्डू इत्यनेन 'काश्मीरिकाः कतिचन पण्डितंमन्याः, इति शीर्षकं लेखं पठितम् । पं० मुकन्दरामशास्त्री पूर्वपठितलेखस्य कांश्चिदंशान् व्याख्यया समुद्भाव्य 'संस्कृतभाषाप्रचारः श्रेयोनिधानम्' इत्यमुमं विषयं व्याख्यातवान् । तदनु पं० गोविन्दभट्टशास्त्रिणा श्रीपत्रिकाप्रचारादिकमुक्त्वा 'संस्कृतविद्या कथं स्यात्सार्वजनीना' इति विस्तरेण प्रोक्तम् । ततश्च विद्यावारिधिः पं० शिवनाथशास्त्री प्राक्तनं परिषदोऽस्याः कार्यजातं निवेदयित्वा 'वार्ता' इति शीर्षकं लेखं पठितवान् । परिषत्प्रधानवर्यैरागतान् सभ्यान् धन्यवादैः सन्तोषयित्वा सभाविसर्जनं कृतम् ।

परिषदुपमन्त्री ॥

---

# श्रियो नियमाः

**उद्देश्यम्—**

परिषदोऽस्याः संस्कृतभाषार्थसभ्यताप्रचारात्मकं केवलमेकमेव ।

**प्राप्तिशुल्कम्—**

श्रीनगराद्बहिः सपादरूप्यकम् १।)

श्रीनगरीयेभ्यः पारिषदेभ्यस्तु रूप्यकमेकम् १)

**पत्रप्रकाशनसमयः—**

त्रैमासिकमिदं पत्रं सौरीयेषु आषाढाश्विनपौषचैत्रेषु क्रमशो निर्गच्छति । पत्रप्रकाशनसमयादनन्तरमपि पत्रानुपलब्धौ सूचनया पुनरपि प्राप्यते पत्रम् । मासादनन्तरं तु न प्राप्यते ।

**प्राप्तिस्थानम्—**

डा० पं० कुलभूषणाः सम्पादकः 'श्रीः' श्रीकार्यालयः, सुन्वारबाग श्रीनगर (काश्मीर) ।

